आनन्दाश्रमसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः ९७

# श्रीमज्जैमिनिप्रणीते मीमांसादर्शने

आदित आरभ्य द्वितीयाध्यायप्रथमपादान्तः प्रथमो भागः

तत्र च प्रथमस्तर्कपादः ।

मीमांसाकण्ठीरवमीमांसारत्नेत्याद्युपपदवीभूषितश्रीवैद्यनाथशास्त्रि-
प्रणीतप्रभाभिधव्याख्यासमेतशाबरभाष्योपेतः ।

द्वितीयपादप्रभृति

श्रीकुमारिलभट्टविरचिततन्त्रवार्तिकाख्यव्याख्यासहितशाबरभाष्यसमेतश्च ।

स चायं भागः पुण्यपत्तनीयमीमांसाविद्यालयाध्यापकपदाधिष्ठितैः
'मीमांसाविद्वान्' पदभाग्भिर्गुरुवर्यवैद्यनाथशास्त्रिचरणान्ते-
वासिभिस्तीर्थहल्लीग्रामाभिजनसुब्बाशास्त्रिभिः संशोधित-
ष्टिप्पण्यादिना समलंकृतश्च ।

स च

बी. ए. इत्युपपदधारिभिः

## विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा प्रकाशितः ।

शालिवाहनशकाब्दाः १८५०

खिस्ताब्दाः १९२९



मूल्यं सार्धाः पञ्च रूपकाः ( ५।८ ) ।

# सूचनम् ।

आवेदने चतुर्थपृष्ठे विंशतितमपङ्क्तौ ' प्रथमपादे श्लोकवार्तिकं ' इत्यस्याग्रे ततो निवीतान्तमित्यादिनिवीतोत्तरस्येत्येतदन्तस्य ग्रन्थस्य स्थाने ' ततस्तृतीयाध्यायान्तं तन्त्रवार्तिकं तदुत्तरं च टुप्टीकेति नाम्ना प्रसिद्धम् । तृतीयाध्यायोत्तरवार्तिकस्य ' इति ग्रन्थो वाच्य इति ज्ञेयम् ।

# प्रकाशयितुरावेदनम् ।

---

अहो नु खलु भोः प्राचीनसंस्कृतविद्यारसिकाः प्रथितयशसो विद्व-
द्वजा आनन्दाश्रमसंस्थाप्रकाशितसंस्कृतग्रन्थावलीग्राहकमाननीयमहाशयाश्च
त्वन्तु तत्रभवन्तो भवन्तो हृद्यमावेदनीयं यद्वस्मन्मनोगतमेव स्यादिति
र्कयामि ।

सुप्रथितमेवैतत्समस्तेऽस्मिन्भारते वर्षेऽकूपारपारंगतेष्वाङ्ग्लादिदेशेषु च
यच्छ्रीमति पुण्यपत्तने प्राचीनार्वाचीनादिनिखिलविद्याना केन्द्रस्थानापन्ने,
मुद्रणद्वारा प्राचीनसंस्कृतशास्त्रीयगहनग्रन्थोद्धारिण्यानन्दाश्रमसंस्था वर्ततेऽ-
स्तीति ।

सयैतया संस्थयैतर्हि पूर्वमीमांसाशास्त्रे तन्त्रवार्तिकसंवलितशाबरभाष्यसमेत-
जैमिनीयसूत्राणामादित आरभ्य द्वितीयाध्यायगतप्रथमपादान्तो भागः
स्वकीयमुद्रणालये मुद्रयित्वा प्रकाश्यते । द्वितीयभागोऽप्यनयैव रीत्याऽचिरा-
देव प्राकाश्यं नीयेत ।

यदा चाहं संवत्सरद्वयात्प्रागेतत्संस्थामुद्रितसर्वदर्शनसंग्रहस्य द्वितीयं संस्क-
रणमकार्षं तदा तदन्तर्गतमीमांसादर्शनस्य यथावदवबोधार्थं पूर्वमीमांसीय-
निबन्धानां समालोचनं मम नाभाप्तमभूत् । तदैव च शाबरभाष्यादिनिबन्धानां
महत्ता धर्माधर्मादिशास्त्रीयपदार्थनिर्णयविषयेऽत्यन्तोपयुक्तता चावेक्ष्यैतत्संस्था-
संप्रदायानुरोधेनैतन्मुद्रणे मनीषामभान्त्सम् ।

यद्यप्यन्यत्र काश्यादौ शाबरभाष्यं मुद्रितमिति श्रूयते तथाऽपि तत्र
कुमारिलसरस्वतीसंदर्भादर्शनान्न तद्दर्शनं प्रयागीयत्रिवेणीसमेददर्शनमिव वि
दुषां स्वान्त आनन्दवल्लोलानुल्लासयति । किंच तत्तादृशमपीदानीं सुदुर्लभं
समजनि । यतो नैकमप्यवशिष्यते पुस्तकमिति मत्युत्तरयन्ति तत्पुस्तकालय
कार्यनिर्वाहकाः । ततश्च साधनाभावादेव ततो निवर्तन्ते बद्धपरिकरा अप्य
विपश्चो दिदृक्षवश्च विद्वांसः । तदेतस्यामापत्तौ प्राचीनशास्त्रीयग्रन्थोद्धारणैक
ध्येयामानन्दाश्रमसंस्थामन्तरेण केवाऽऽशाऽऽस्थेया तादृक्पुस्तकलाभे । इ
भिसंधिना वारं वारं मार्गेव मह्यं समसूसुचन्नस्मत्संस्थास्थपुस्तकजिघृक्षुमहाश
माननीयाः पण्डितप्रवराश्चैतन्मुद्रणे । तेनेयं संस्थैतन्मुद्रणे प्रावर्तिष्ट ।

अयातिक्रामत्सु कियत्स्वपि वासरेषु कदाचिच्छ्रीयुतमीमांसाविद्यालयकार्यधूर्वहाग्रेसरैरेतत्संस्थया प्रविवर्तयिष्यमाणेतद्ग्रन्थमुद्रणे संशोधितपुस्तकप्रदानेन साहाय्यकमाचरितुं स्वेच्छा प्रादर्शि । तमिमं सुयोगं मन्यमानोऽहं मनसि निरचैषम् । येन तदिच्छाऽपि संभाविता स्यात्, ग्राहकमहाशयसूचनाऽप्याद्दता स्यात्, मन्मनीषाऽपि पूर्णा स्यादिति ।

ततश्च तैः सतन्त्रवार्तिकटिप्पणेन समीकृत्य समर्पितं शाबरभाष्यपुस्तकमादाय श्रीमत्सच्चिदानन्दचरणयोः संमुद्य प्रकाशितोऽयं भागः । तत्राऽऽदौ प्रतिपुटं जैमिनिमुनिप्रणीतं सूत्रं तदधोभागे तद्व्याख्यानभूतं शबरस्वामिविरचितं भाष्यं तदधोभागे च मीमांसाकण्ठीरववैद्यनाथशास्त्रिकृतं प्रभाभिधं तद्व्याख्यानं, एतच्चाभिनवं सत्प्रथमाध्यायगतप्रथमपादसमाप्तिपर्यन्तमेव । तदग्रे च भागसमाप्तिपर्यन्तं तावतः शाबरभाष्यस्य व्याख्यानरूपं कुमारिलभट्टप्रणीतं तन्त्रवार्तिकं निवेशितम् । एवंरीत्या पुस्तकमारचितम् । तदिदं पुस्तकं कृतसंस्करणमपि स्थले स्थले प्रमादस्खलनेन मुद्रणादिदोषबाहुल्येन चाध्येतॄणां दुर्ज्ञेयं स्यादिति विभाव्य तत्परिमार्जनार्थमानन्दाश्रमस्थपण्डितैरप्यतीवावहिततया प्रयतितमिति नेदं विस्मरणार्हम् ।

अस्य च शास्त्रस्य मुख्यतया मीमांस्यो धर्मः । अत एव ' अथातो धर्मजिज्ञासा ' इति सूत्रे प्रथमतो धर्मजिज्ञासोपदेशः श्रूयते ।

अथ चक्रनेमिक्रमेण नीचैर्दशामुपगतवत्युच्चैःकाले प्रवृत्ते च ह्राससमये मन्दतामुपेयुषि च भारतवासिनां प्रतिभावैभवे लुप्तप्राये च शास्त्राध्ययनाध्यापनप्रचारे प्रवृद्धे चाज्ञानान्धतमसे तमोगुणरूषिततया याथार्थ्यबिम्बोद्ग्रहणासमर्थे च मनुजमानसमुकुरे नामशेषेषु च वर्णाश्रमोचिताचारेषु त्रिविधसंतापदहनोत्थितधूमैस्तिरस्कृतेषु च यज्ञीयधूमेषु अस्तगिरिशिखरावलम्बिनि च त्रयीप्रामाण्यसहस्रांशावुदिते च नास्तिकघूकारवे ग्लायमाने च तत्रभवति भगवति सनातने वैदिके धर्मे मन्ये तत्संरक्षणार्थं भगवानेव जैमिनिमुनिरूपेणावततार लोकहितकारी ।

अनेन चाथातो धर्मेत्यारभ्यान्वाहार्ये चेत्यन्तं द्वादशाध्यायात्मकं सूत्रं प्रणीय तत्र वेदवाक्यार्थविषयकसंशयापाकारकाः सहस्रं न्याया अधिकरणापरपर्यायाः प्रदर्शिताः । सूत्रं च शास्त्रीयगभीरबह्वर्थप्रतिपादकः संक्षिप्ताक्षरः शब्दसंदर्भविशेष इत्याचक्षते सूत्रलक्षणविदोऽभियुक्ताः ।

सोऽयं जैमिनिमहर्षिः कदा कां वा भुवं स्वजनुषाऽलंचकारेत्येतद्विषये न किंचित्स्पष्टं प्रमाणमुपलभ्यते । नापि वा तद्विचारेणेतर्हि किंचित्प्रयोजनम् । यतो

ईश्वरवत्स मुनिवरः प्रमाणत्वेन मान्य इति प्रथितं सर्वत्र । तथाऽपि पार्थसारथिमिश्रविरचितशास्त्रदीपिकाया युक्तिस्नेहप्रपूरण्याख्यायां टीकायां मीमांसाया गुरुशिष्यपरम्परया प्रवृत्तिप्रप्रदर्शने 'ब्रह्मा प्रजापतये मीमांसां प्रोवाच, सोऽपीन्द्राय, सोऽप्यग्नये, स च वासिष्ठाय, सोऽपि पराशराय, पराशरः कृष्णद्वैपायनाय, सोऽपि जैमिनये, सोऽपि स्वोपदेशादनन्तरमिमं न्यायं ग्रन्थे निबद्धवान्' इत्युक्तत्वाज्जैमिनेः कृष्णद्वैपायनशिष्यत्वात्कृष्णद्वैपायनस्य च स्वनाम्नैव श्रीकृष्णावतारसमकालिकसत्तावत्त्वेन प्रतीयमानत्वाच्छ्रीकृष्णस्य च 'द्वापरे रामकृष्णौ च' इत्यभियुक्तोक्तेर्द्वापरयुगप्रभवत्वेन प्रसिद्धत्वात्कलियुगारम्भात्प्रागद्वापरयुगान्तेऽयं जैमिनिमुनिरासीदित्यनुमीयते । इत्थं महाभागोऽयं जैमिनिमहर्षिर्यस्य साक्षान्नारायणावताराद्वेदव्यासाद्ब्रह्मसूत्रप्रणेतुर्बादरायणादियं मीमांसा संप्राप्ता ।

अत्रायं प्रश्नः पुरतः प्रादुर्भवति । किमनेन जैमिनिना बादरायणप्रणीतचतुरध्यायात्मकब्रह्मसूत्रादनन्तरमिदं धर्ममीमांसासूत्रं प्राणाय्युताहो तत्प्रागेवेति । तत्र तादृशकालनिर्णायकं स्पष्टं प्रमाणं सूक्ष्मया दृष्ट्या गवेषयन्नपि नालप्स्यहम् । तथाऽपि गुरूपदेशादनन्तरं द्रागेव लघीयसि काले धर्ममीमांसासूत्रं प्राणैषीदिति नावशिष्टविवादम् । तदानीं च ब्रह्मसूत्रसद्भावः कल्पयितुमशक्यः । दृढतरप्रमाणाभावात् । यदि तु 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' (जै० सू० १।१।५) इति सूत्रे बादरायणमतोल्लेखाद्धर्ममीमांसासूत्रात्प्राग्ब्रह्मसूत्रसद्भावः कल्प्यत इति ब्रूपे चेद्धन्तैवं 'मध्वादिष्वसंभवादनधिकारं जैमिनिः' (ब्र० सू० १।३।८) इति सूत्रे बादरायणेनापि जैमिनिमतोल्लेखकरणाद्ब्रह्मसूत्रात्प्राग्धर्मसूत्रसद्भावकल्पने किमपराद्धं मया । किंच यदि मीमांसायाः स्वशिष्यायोपदेशात्प्रागेव ब्रह्मसूत्रं प्रणिनाय बादरायणस्तर्हि तत्प्रणयने तदैव च धर्ममीमांसासूत्रप्रणयने तस्य को हेतुरित्यप्रतिसमाधेयोऽनुयोगस्तव गले पतति । तस्माद्ब्रह्मसूत्राविर्भावात्प्रागेव धर्ममीमांसासूत्रं लब्धात्मकमभूदिति तर्कयामि ।

युज्यते चैतत् । ब्रह्मा प्रजापतये मीमांसां प्रोवाचेत्युपक्रमे मीमांसाया एकवचनान्तत्वेनोल्लेखाद्ब्रह्माणमारभ्य कृष्णद्वैपायनापरपर्यायबादरायणं यावदियं मीमांसा कर्मकाण्डज्ञानकाण्डेतदुभयात्मकवेदवाक्यानां परस्पराविरोधेन तात्पर्यमभिदधती सती स्वात्मानमभेदेन प्रकाशयन्ती जगत्यां प्रचलिताऽऽसीत् । तादृशीमेव च तां बादरायणः स्वशिष्याय जैमिनय उपादिक्षत् । तदनु जैमिनिरपि स्वग्रन्थे तामुपनिबबन्ध । परं स्वयातो धर्मजिज्ञासेतिप्रतिज्ञानुरोधात् 'आम्ना

यस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्० ' (जै० सू० १ । २ । १) इति सूत्रेण कर्मकाण्डस्यैव मुख्यत्वं न ज्ञानकाण्डस्य । ज्ञानकाण्डं तु कर्मकाण्डस्यैवोपोद्बलकं तदङ्गभूतमिति तात्पर्यमभिदधती सा भिन्नमिव स्वात्मानं प्रदर्शयन्ती स्थिता । अत्राथ लोकास्तदेव सत्यत्वेनाग्रहीषुः । तमिमं लोकग्रहं निराकुर्वन्भगवान्बादरायणो जैमिनिप्रतिपादितन्यायानुसारेणैव ज्ञानकाण्डस्य मुख्यत्वं प्रस्थापयन् ब्रह्मसूत्रप्रणयने प्रावृत्त इत्येव कल्पनां युक्तिमतीमुत्पश्यामः। ततश्च जैमिनिसूत्रानन्तरमेव ब्रह्मसूत्रं स्वात्मानमाससाद । ततःप्रभृत्येव च मीमांसाया द्वैविध्यं समभूत् । अत एव कर्तृभेदाद्विषयभेदाद्वा व्याकरणन्यायादिशास्त्राणामिव मीमांसयोर्नैकशास्त्रत्वम् । अत एव च धर्मब्रह्ममीमांसयोः पूर्वोत्तरत्वं विशेषणमप्यर्थत इव कालतोऽपि स्वरसत उपपद्यत इत्यवधेयम् ।

अथातिक्रान्ते बहीयस्यनेहसि मन्दमतीनां जनानां केवलसूत्राक्षरैर्देशान्तरीयकालान्तरीयातीन्द्रियादिदुरूहार्थकवेदवाक्यानां सम्यगवबोधो न जायेतेत्यालोच्य सूत्रव्याख्यानरूपं सुविस्तृतं सुलभावबोधं सरलार्थं च भाष्यमारचयाम्बभूव शबरस्वामी। भाष्यलक्षणं च 'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ' । अयं च शबरस्वामी शालिवाहनशकाब्दारम्भात्प्राक्तनशतद्वयात्पूर्वमासीदित्यैतिह्यविदो जना वदन्ति ।

तदनु नयनाष्टरस ( ६८२ ) परिमिते शकाब्दे कुमारिलभट्टस्तन्त्रवार्तिकं नाम शाबरभाष्यव्याख्यानमचीकरत्। वार्तिकलक्षणं च 'उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते । तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः ' इति । तत्र प्रथमपादे श्लोकवार्तिकं ततो निवीतान्त (तृतीयाध्यायतृतीयपादान्तं) तन्त्रवार्तिकं तदग्रे च टुप्टीकेति नाम्ना प्रसिद्धम् । निवीतोत्तरवार्तिकस्य चानुष्टुप्छन्दोवद्तिसंक्षिप्ताक्षरतया तादृशार्थसूचकानुष्टुप्टीकेति नाम वदन्तो जना अनुष्टुप्टीकेति नाम्नोऽपि संक्षिप्ताक्षरतां संपादयितुमिव टुप्टीकेति व्यवहर्तुं प्रारप्सतेति केचित् । अन्ये तु ' टुप् ' इत्यल्पार्थेऽव्ययम् । टुप्, इति टीका टुप्टीकेति वदन्तीत्येवं संप्रदायतोऽवगम्यते ।

तस्यास्य भट्टकुमारिलस्य मतमनुसृत्यैव पार्थसारथिना शास्त्रदीपिका विरचिता। ' कुमारिलमतेनाहं करिष्ये शास्त्रदीपिकाम् ' इति ग्रन्थारम्भे स्वयमेवोक्तत्वात् ।

स्मृतस्योपेक्षानर्हत्वमितिन्यायेनात्र प्रसङ्गसंगत्या किंचिदुच्यते— एवं हि

श्रूयते । गुरुगृहे मीमांसामधीयानस्य कस्यचिच्छात्त्रस्य पाठ्यत्वेन मवाप्तिवायां तदानींतन्यां कस्यांचिज्जैमिनीयसूत्रव्याख्यायामासीत्पाठः । तत्र च—'अत्रापि नोक्तं तत्र तु नोक्तमिति द्विरुक्तम्' इति ग्रन्थं दृष्ट्वा गुरुः परं व्यस्मेष्ट । किमिदम्—अत्रापि नोक्तं तत्र तु नोक्तमिति कथं द्विरुच्येत । नहि द्विवारमनुक्त्या द्विरुक्तिसंभव इति । ततश्च कियन्तमपि कालं सुनिपुणं निभालयन्नपि न तस्य ग्रन्थस्य तात्पर्यमवगतवान् । सति चैवं कार्यान्तरानुरोधाद्गृहाद्बहिरगाद्बहिः क्वापि गुरुः । छात्रेण च अत्र—अपिना—अपिशब्देन अयमर्थ उक्तः, तत्र—तुना—तुशब्देन उक्त इति द्विरुक्त इति पदविभागं तदर्थयोजनां च विलिख्य गुरुभार्यायै तत्समर्प्य प्रायायि । गुरुस्तु पुनः सायं गृहमाययौ । पत्नी स्वागतं पतिमालोच्य तूर्णीमेव तमर्पयांचकार छात्रलिखितं पदविभागमर्थसमन्वयं च । तद्वीक्ष्य भृशं तुतोष गुरुः शिष्यस्य तत्तादृशीं शास्त्रव्युत्पत्तिं सरलचित्ततां चावधार्येति । सेयमाऽऽख्यायिका कुमारिलविषयिणीति कश्चिदवादीत्' । तदेतत्सर्वमसारं केवलं निर्मूलसंगिरणमेवेति प्रतिभाति । तादृशप्रमाणानुपलम्भात् । प्रत्युत सर्वदर्शनसंग्रहान्तर्गते जैमिनिदर्शने दर्शनाङ्कुराभिधायां टीकायाम् 'गुरुमतम्' इति प्रतीकमुपादाय इदमेव प्रभाकरमतमित्युच्यते । प्रभाकरस्य गुरुनामप्राप्तौ कारणं त्वित्थं श्रूयत इत्युपक्रम्यैतादृश्येवाऽऽख्यायिकोपन्यस्ता । अग्रे च 'केनायं पदच्छेदः कृत इति गुरुणा पृष्टे प्रभाकरेणेतीतरे शिष्या जगदुः । ततो गुरुः प्रभाकरं त्वमेव गुरुरित्युक्त्वा गुरुनाम्नाऽऽहूतवान्' इत्युक्तत्वात्तादृगाख्यायिकायाः प्रामाणिकैः प्रभाकरपरत्वेन प्रतिपन्नत्वस्य स्पष्टं प्रतीयमानत्वाच्चेति । सोऽयं कुमारिलभट्टो वेदोदिताग्निहोत्रादिकर्मविरोधिसुगतादिमतसमुच्छेदार्थं मानवरूपेणाग्निभूर्गुहदेव एवाऽऽविरभवदिति कवयो मन्यन्ते । वर्णयन्ति च तदनुगुणां कुमारिलशब्दव्युत्पत्तिम् । कौ पृथिव्यां मारयति दुष्टान्समुच्छिनत्तीति कुमारो गुहदेवः । स गुहदेवः स्वामिमतया विचरतेऽस्येति कुमारिलः । पिच्छादेराकृतिगणत्वादिलच् । कुमारावतार इति यावत् । अत्रार्थे—

> इत्यूचिवांसमथ भट्टकुमारिलं त-
> मीषद्विकस्वरमुखाम्बुजमाह मौनी ।
> श्रुत्यर्थकर्मविमुखान्सुगताचिहन्तुं
> जातं गुहं भुवि भवन्तमहं नु जाने ॥

इति माधवीयशंकरविजय एव साक्षीति नैवतिरोहितं तत्परिशीलनशालिनाम् ।

अत्र युक्तायुक्तं सद्भिर्विचार्य ग्राह्यं न यस्यचिदंशस्यापूर्णतया बोधने ममाभिनिवेश इत्यास्तां तावत् ।

वरैतैस्त्रिभिः पूर्वमीमांसासंप्रदायप्रवर्तकैराचार्यैः स्वोपवर्णितन्यायैः कुतर्कावलम्बनेन विवदमानानां जनानां मतिकालुष्यमपगमय्य तत्राऽऽदर्श इव मूर्तिमान् धर्मः प्रकटीकृतः । सांप्रतं च सर्वेऽपि जनाः स्वस्वमत्यनुसारेण धर्मं प्रति विवदमाना दृश्यन्ते। तेषां मनसि त्रिवेणीसंगम इवायं त्रिवाणीसंगमस्तत्रावगाहनमात्रेणैव धर्मं प्रकटीं कुर्यादित्याशासे। तदेवमतिमहत्त्वमापन्नस्यास्य ग्रन्थस्य संस्करणं विद्वद्द्वारा संपादितमपि दृग्दोषेण वाऽनवधानतया वा सीसकाक्षरसंयोजकप्रमादाद्वा संभूतानां स्खलनस्थलानामावेदनेन मामनुगृह्णन्तु दयालवः साधवो विद्वांसः । येन प्रयतिष्ये द्वितीयसंस्करणवेलायां तत्परिमार्जनायेति साञ्जलिबन्धं सप्रणयं सविनयं च भूयो भूय आवेदयते प्रकाशकः—

पुण्यपत्तने
पौषवद्यचतुर्थ्यां
भौमवासरे श. १८९०

आपटेकुलोद्भवो गणेशात्मजो विनायकरायः—
( आनन्दाश्रमस्थ मॅनेजिंग ट्रस्टी )



॥ श्रीशंकरः शरणम् ॥

# मीमांसाविद्यालयीयनिवेदनम् ।

प्रियपण्डिताः ! वितीर्यतामत्र मनागवधानं, यत्प्राचां विद्वन्मूर्धन्यानां द्वे किल मीमांस्ये समभूतां कर्म च ब्रह्म चेति । जायमानो हि जन्तुमान् किमिदं जगत्सर्वं तस्मादिदं प्रावर्तिष्ट ? किंचात्र पारमार्थिकमिति जिज्ञासते । जिज्ञासमानश्चैवमेतत्तत्त्वमवबोद्धुं कानि पुनः साधनान्यनुष्ठातव्यानि ? कया पुनरितिकर्तव्यतया ? कस्य चाधिकारिण ? इति चावश्यमवबुभुत्सते । तदेतद्यथावद्विबोधयितुं भुवस्तलमवतीर्य भगवान्कृष्णद्वैपायनो भगवाञ्जैमिनिराचार्यश्च पुरुषमतिदूरूहाणि कर्मब्रह्मविषयकाणि तत्त्वानि मन्दमतिभ्यो ज्ञानसाधनं च ज्ञेयं च विशदय्य स्कद्यकाष्ठी निर्माय कर्मब्रह्ममीमांसे नाम गभीरतमे शास्त्रे । तत्र च सांप्रतं विवशायां प्राच्यविद्यायामर्धंत एव जरठा मातेव भगवती कर्ममीमांसा कथं कथमपि प्राणान् धारयन्ती पुत्रेष्वस्मासु सप्रत्याशं चक्षुर्निक्षिपन्ती क्वापि कोणे जीवितसंशयमापन्नैव निर्लीयत इति नैतत्तिरोहितं प्रेक्षावताम् । आर्याः ! प्रायः सर्वोऽपि भारतीयो जनोऽध्वरमीमांसाधर्ममीमांसेत्यादिशब्दानपि नैवाऽऽकर्णयत्याकर्णयन्नपि वा नैव तत्रत्यं तत्त्वजातमनुसंधत्ते । कियन्तो वा तत्रत्या दुरूहतमा न्यायाः सर्वशास्त्रेषूपकुर्वन्ति कियन्ति चाधिकरणानि वेदार्थज्ञानरत्नं सुस्पष्टं स्फोरयन्तीत्येतन्निपुणमतिर्जैमिनीयतन्त्रमनुशीलयन्नेवावगन्तुं प्रभवेन्नान्यथा । तस्य चास्य शास्त्रस्य सुमधुरपदविन्यासभासुरमपि निगूढार्थं प्रसन्नमपि गभीरतरं भाष्यरत्नं प्राणैषीद्भगवाञ्छबरस्वामी । यच्चाद्यत्वेऽखिलार्यावर्तीयविश्वविद्यालयीयकलाशालासु ' एम्. ए. ' इति कक्षायामध्ययनार्थं विद्वद्भिर्न्यवेशि । तच्च भाष्यं न मन्दमतीन्प्रतिभायादिति श्रीमान्कुमारिलो लोकानुद्दिधीर्षुर्व्याचख्यौ वार्तिकग्रन्थरत्नेन । तच्च वार्तिकं श्लोकवार्तिकं तन्त्रवार्तिकं टुप्टीका चेति त्रेधा व्यभजत् । एतेन च भागत्रयेण सनाथितं शाबरभाष्यं न क्वाप्येतावता संमुद्रितमिति सकलविद्वज्जनोपकृतये सव्याख्यं समग्रं मुद्रापयितव्यमिति अस्ति नो बलवती वाञ्छा ? तत्रायं प्रथमो भागो दिष्ट्या सांप्रतं प्रकाश्यं नीयते ।

तत्र च प्रथमपादव्याख्याभूतं श्लोकवार्तिकमतिविस्तृतं सांप्रतमन्यत्र प्रकाश्यमानं प्राऽऽकल्प्य सरलां शुद्धां सुबोधां सहृदयहृदयहारिणीं च ' बेंगलूर ' पुरस्थश्रीशृङ्गगिरिजगद्गुरुप्रतिष्ठापितशंकरमठपाठशालामीमांसाशास्त्राध्यापकपदमलंकुर्वाणैः श्रीमत्पूज्यपादमीमांसाकण्ठीरवश्रीवैद्यनाथशास्त्रिवर्यैर्मीमांसाविद्यालयकार्यकारिसमितिप्रार्थनामङ्गीकृत्य अचिरादेव प्रणीतां प्रभानाम्नीं टीकामस्मिन्ग्रन्थे प्राचीकशाम । सर्वथा दुरुत्तरः खल्वस्माकं श्रीपूज्यपादशास्त्रिचरणानामुपकारभरः । स एव चायं तर्कपादापरपर्यायः प्रथमः

पादः श्लोकवार्तिकेनाप्यापाततो दुर्विज्ञेयार्थजटिलो विना च सरलतमां व्याख्यां न च्छात्राणामपि जिज्ञासूनां बुद्धिमधिरोहतीति सर्वथा धन्यवादार्हाः शास्त्रिचरणाः।

एतत्पुस्तकसंशोधने यथाभाष्यं वार्तिकसंयोजने च यः परः प्रयासोऽन्वभावि पुण्यपत्तनस्थमीमांसाविद्यालयाध्यापकपदमधितिष्ठद्भिर्मीमांसाशास्त्रविद्भिः श्रीतीर्थहल्लीसुब्बाशास्त्रिभिस्तेन तेषामुपकृतीः शिरसा वहामः।

यया चेदमुपक्रान्तं पुस्तकसंशोधनकार्यं श्रीमत्या प्राचीनशास्त्राध्ययनाध्यापनकार्यगृहीतदीक्षया शिक्षणप्रसारकमण्डलीप्रतिष्ठापितमीमांसाविद्यालयकार्यकारिसमित्या, तस्या उपकारमरं न वयमाजीवितं विस्मरिष्यामः समुपहरामश्च तस्यै भूयसो धन्यवादान्।

सत्यप्येवं साधनसमुदये यदि संमुद्रणाय आनन्दाश्रमे नावास्यतावकाशस्तर्हि सर्वथा मोघ एवायं प्रयासः समभविष्यदिति नूनं श्रीमद्भ्यः सर्वश्रेयोमाग्भ्यः सुगृहीतनामधेयेभ्यः ' विनायकराव आपटे ' महोदयेभ्यो भूयसः प्रशस्तिवादान्वितरामः।

अस्य चाऽऽदर्शपुस्तकं मोहमयीस्थराजकीय ( एल्फिन्स्टन् कालेज ) कलाशालासंस्कृतप्रधानाध्यापकैः ' एम्. ए. ' पदविभूषितैः गजेन्द्रगडकरोपाह्वैरश्वत्थामाचार्यमहोदयैः तथा पुण्यपत्तनस्थभाण्डारकरप्राच्यविद्यासंशोधनमन्दिराधिकारिभिश्च वितीर्णमिति तेभ्योऽपि सुबहु धारयामहे।

यदन्तरेतन्निवेदनं न समापयितुं शक्नुमस्तदिदम्—

मीमांसाशास्त्रप्रमेयं जिज्ञासुभिर्यथा सुविज्ञेयं भवेत्तथाऽस्य ग्रन्थस्योपोद्घातलेखनेनोपकृता वयं श्री ६ पूज्यपाद महामहोपाध्यायपदवीभूषितैविग्रहैश्चतुरतन्त्रेष्वप्रतिहतप्रकटितपाण्डित्यैः प्रथितविद्यासौहार्दैः पण्डितप्रकाण्डैर्चिन्नस्वामिशास्त्रिभिस्तेमेनममीषामुपकारमरं न वयमाजीवितं विस्मरिष्यामः समुपहरामश्च तेभ्यो भूयसो धन्यवादान्।

नूनमेऽस्मिन्प्रयत्ने समुद्भूताः मानुष्यकसुलभाश्च्युतयः क्षम्यन्तां पोष्यतां चैतत्पुस्तकमंभावनेनाऽऽस्माकीन उत्साहोऽवशिष्टभाष्यवार्तिकसंशोधन इति संप्रार्थ्य विद्वन्मुकुटमणीन्विरमामः।

विद्वद्वशंवदौ

| पुण्यपत्तनीयमीमांसाविद्यालय | किञ्जवडेकरोपाह्वरामचन्द्रात्मजवामनशास्त्री<br>ढेवजरोपाह्वबळवन्तात्मजमादिनवरशर्मा एम्. ए.<br>मीमांसाविद्यालयकार्यकारिसमितिकार्यवाहाध्यक्षौ। |
| --- | --- |

# उपोद्घातः ।

---

श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारत्यभिधान्यतीन्द्रान् ।
श्रीशंकराचार्यपरावतारान् विद्यातपोज्ञाननिधीन्नमामः ॥

इह खल्वनवद्यविद्याविद्योतिन आर्यावर्तस्य कलामभूतेषु षट्सु दर्शनेषु पूर्वमीमांसाशास्त्रमेव महता प्रयत्नेनोपचरितव्यमित्याचक्षते भट्टपादप्रभृतयः प्राञ्चो दार्शनिकाः । इतरेषु दर्शनेषु जगत्तत्त्वं प्रतिपादयत्स्वपि पुरुषाणामनुष्ठानेनाभ्युदयं निःश्रेयसं च संपादयन्तं वेदोदितं धर्मं साकल्येन न्यायतो यथास्वं निर्णीय लोकानुद्धर्तुं नान्यत्तन्त्रं प्रवर्तते विना मीमांसाशास्त्रम् । वेदाद्धि निर्णेयो धर्मः । तस्य च वेदस्य याथार्थ्येनार्थो न मितंपचमतिभिरवगन्तुं पार्यतेऽनवलम्ब्य मीमांसाशास्त्रनिर्दिष्टान्न्यायान् । तेषु च न्यायेष्वज्ञातेषु दुर्ज्ञातेषु वा न यथावद्वेदार्थोऽवबुध्यत इति धर्मं किंचित्संप्रतिपद्यमानो महान्तं प्रत्यवायमासादयेदिति प्रयत्नेन किलोपचरितव्या भगवती प्राची मीमांसा ।

यद्यपि काचिद्दर्शनेषु 'अथातो धर्मं व्याख्यास्यामः' इत्यादित एव प्रतिज्ञानाद्धर्मनिरूपणमेव प्राधान्येन क्रियमाणमिवोपलभ्यते, तथाऽप्यापादचूडं निरीक्षितेषु तेषु द्रव्यगुणादीनां आगताना पदार्थानामुद्देशो लक्षणं, परीक्षा, गुणाः, क्रिया चेत्यादिकमेव, भौतिकं विषयजातं निरूपितं न पुनरध्यात्मशोधनाय वेदप्रणिहितो धर्म इतिकर्तव्यतादिभिः सम्यग्विवेचित इति सर्वथा धर्ममनुविधित्सुभिः श्रीमती मीमांसैव शरणीकरणीया । अमुमेवार्थमुपनिबध्नन्ति भट्टपादाः—

धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥

अस्य च धर्ममीमांसाशास्त्रस्य जैमिनीयदर्शनत्वप्रथया स्पष्टमेव सर्वैर्विज्ञायते जैमिनिर्महामुनिरेतच्छास्त्रं प्रणिनायेति । स चायं जैमिनिर्भगवतो वेदव्यासात्सामवेदमधिजगायेति तच्छिष्यत्वेनापि प्रथते । शिष्यस्यापि सतो जैमिनेर्मतं 'परं जैमिनिर्मुख्यत्वात्' 'धर्मं जैमिनिरत एव' इत्यादिषूल्लिखन् बादरायणः स्पष्टमेवाऽऽचष्टे संप्रतिपन्नत्वं जैमिनेः ।

जैमिनिप्रणीतानि सूत्राणि निगूढार्थानि शब्दतः संक्षिप्तान्यप्यर्थतो गभीराणि न बुद्धिमुपारोहन्तीति यः किल करुणया भाष्यं प्रणिनाय सोऽयं शबरस्वाम्यसाधारण्या वचनधोरण्या लोकोत्तरयाऽर्थप्रतिपादनशैल्या सर्वानपि तत्तत्तन्त्रभाष्यकाराचार्यानतिशेते । किं भूयसा ! भाष्यप्रणयनपद्धतावेष एव मार्गदेशक इत्यपि वचनं नात्युक्तिकोटिमधिरोहति । शारीरकमीमांसाभाष्यकृतो भगवत्पादा आचार्या अपि

स्वीयभाष्ये बहुत्र शाबरीमेव छायामनुसस्रुरिति नैतदविदितं भाष्यद्वयमनुशीलयताम्। तथा किंचिदत्रोदाहरामः—

**शाबरभाष्यम्।**

'तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः । न चेह किंचिद् वृत्तमुपलभ्यते। भवितव्यं तु तेन यस्मिन् सत्यनन्तरं धर्मजिज्ञासाऽवकल्पते । तथा हि—प्रसिद्धपदार्थकः स कल्पितो भवति। तत्तु वेदाध्ययनम् । तस्मिन् हि सति साऽवकल्पते । नैतदेवम् । अन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा युक्ता प्रागपि वेदाध्ययनात् । उच्यते—तादृशं तु धर्मजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यो या वेदाध्ययनमन्तरेण न संभवति'।

'धर्मः प्रसिद्धो वा स्यादप्रसिद्धो वा। स चेत्प्रसिद्धो न ज्ञासितव्यः। अथाप्रसिद्धो नतराम् । धर्मं प्रति हि विप्रतिपन्ना बहुविदः । केचिदन्यं धर्ममाहुः केचिदन्यम् । सोऽयमविचार्य प्रवर्तमानः कंचिदेवोपाददानो विहन्येत, अनर्थं च च्छेत्।'

**शांकरभाष्यम्।**

'तत्राथशब्द आनन्तर्यार्थः परिगृह्यते नाधिकारार्थः। पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकात्। सति चाऽऽनन्तर्यार्थत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं वेदाध्ययनं नियमेनापेक्षत एवं ब्रह्मजिज्ञासाऽपि यत्पूर्ववृत्तं नियमेनापेक्षते तद्वक्तव्यम् । स्वाध्यायानन्तर्यं तु समानम्। नन्विह कर्मावबोधानन्तर्यं विशेषः। धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः। तस्मात्किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति'।

'तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात्। यदि प्रसिद्धं न जिज्ञासितव्यम्। अथाप्रसिद्धं नैव शक्यं जिज्ञासितुमिति। तद्विशेषं प्रति विप्रतिपत्तेः। देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लोकायतिकाश्च प्रतिपन्नाः०, मन इत्यन्ये। एवं बहवो विप्रतिपन्ना युक्तिवाक्यतदाभाससमाश्रयाः सन्तः। तत्राविचार्य यत्किंचित्प्रतिपद्यमानो निःश्रेयसात्प्रतिहन्येतानर्थं चेयात्'।

इत्यादि।

भाष्यकृतः शबरस्वामिनः प्राक् मीमांसासूत्राणां वृत्तिमरीरचद्भगवानुपवर्ष इति भाष्यकारेणानूदितात्तच्चिद्विरोधपरिहारेण समीकृताच्च तन्मतादवगम्यते। परं च नाद्यावदुपलभामहे भारतीयानां दौर्भाग्यादुपवर्षाचार्यप्रणीतं यथावद्वृत्तिग्रन्थम्।

भाष्यस्यातिगम्भीरतयाऽर्थानवगमेनोपेक्षमाणेषु निखिलेषु कृशमतीननुजिघृक्षुः श्रीमान् प्रातःस्मरणीयप्रभावो लोकोत्तरप्रतिभस्तत्रभवान्भट्टकुमारिलो दुर्वादितुण्डकीलायितमप्रध्नावार्तिकम् । यच्च कतिपयसहस्रग्रन्थसंमितं नैकाभिर्युक्तिभिः सर्वाङ्गमनोज्ञं शब्दतोऽर्थतश्च बहुविस्तृतमप्यतिगम्भीरं शाबरभाष्यं भानोः प्रभेव पदार्थजातं विशदयदतिमात्रमुपकरोति मीमांसामधिजिगांसूनाम् ।

केचित्पुनः ग्रन्थवतिष्ठेरन्नतिविस्तृतमिदं वार्तिकं पठितॄणां वैरस्यमावहतीति नैतच्चिरम् । आदितो हि भाष्यमेव संक्षिप्तं ततोऽप्यतिसंक्षिप्तं सूत्रजातं तत्कथं नु नामान्तरा विशदतमं विवरणमस्मादृशा मीमांसामहोदधेः पारमधिगन्तुं प्रभवेयुः । महदेतत्सौभाग्यमस्माकं यन्मीमांसासदृशस्य दुरवगाहतमस्य शास्त्रस्य साकल्येनाऽऽपादमूर्द्धं विषयान् प्रतिपादयन्नेकोऽपि वाऽयं प्रबन्धोऽद्यत्वेऽपि भारतभुवमलंकरोतीति । सत्स्वर्वपाऽधमर्णं किल पण्डितकुलं श्रीमतो भट्टपादस्य न केवलं भाष्यार्थमेव विवरीतुं विस्तरोऽयमालम्बितोऽपि तु भाष्येऽनुक्तानामपि भूयसां विषयाणां सप्रपञ्चं सोपपत्तिकं च समर्थनाय नान्तरीयक एव संवृत्तः प्रबन्धस्य बहुलीभावः । यथा—स्मृत्यधिकरणे भाष्ये 'औदुम्बरी सर्वा वेष्टयितव्या' इत्यादिस्मृतीनां 'औदुम्बरीं स्पृष्ट्वा उद्गायेत् ' इत्यादिप्रत्यक्षश्रुतिविरोधान्मूलभूतश्रुत्यनुमाने जिज्ञासानुदयाच्च स्वरूपतोऽप्रामाण्यमूरीकर्तव्यमित्याशयिष्ट शबरस्वामी । तच्च स्वरूपतोऽप्रामाण्यमनधिगतावाधितार्थाबोधकत्वरूपम् । भट्टकुमारिलस्तु यावच्छ्रुतिदर्शनं तासां स्मृतीनामननुष्ठापकत्वरूपमप्रामाण्यं न पुनरनधिगतार्थाबोधकत्वरूपमप्रामाण्यमिति व्याजहार । 'विरोधे त्वनपेक्षम्०' इति सूत्रगतानपेक्षपदस्य सामान्यतोऽप्रमाणार्थत्वादननुष्ठापकत्वरूपाप्रामाण्यविवक्षयाऽपि निर्वाहे सर्वथाऽप्रामाण्यं स्मृतीनां नारोचिष्ट वार्तिककृते ।

प्राचीननैयायिका इव शबरोऽपि सिषाधयिषाया अनुमितिजनकत्वमभिमन्वानो जिज्ञासाया अनुमानाङ्गत्वमूरीकृत्य प्रत्यक्षश्रुतौ जाग्रत्यां निराकाङ्क्षतया जिज्ञासाभावादनुमानमेव न प्रवर्तत इत्यज्ञातमूलकस्मृतेः सर्वथैवाप्रामाण्यमङ्गीचकार्षीत् ।

वार्तिककारस्तु-घनगर्जितेन मेघानुमानादौ व्यभिचारदर्शनादनुमित्साया अनुमितिजनकत्वं प्रत्याचक्षाणो मूलभूतां श्रुतिमनुमिमानस्तस्याः सर्वथाऽप्रामाण्यमसहिष्णुरननुष्ठापकत्वरूपमप्रामाण्यं व्यवातिष्ठिपत् । एवं भूयांसि स्थलानि तत्र तत्रानुसंधेयानि भाष्यवार्तिकमनुसंदधद्भिः ।

अन्यदप्यत्र चोद्यमवतरेत्—वार्तिककारो भाष्यकृन्मतं तत्र तत्र व्युदस्यतीति । तदपि नाऽऽस्मानं लभते । छात्रबुद्धिवैशद्यायाभ्युच्चयवादेनार्थान्तरोपवर्णनं न खण्डनमपि तु

मण्डनमेव । वस्तुतो निष्पक्षपातं प्रज्ञया युक्तिधारया कमप्यर्थं निर्णयन् ग्रन्थकारो न कथंचिदपि शिष्टमर्यादामतिलङ्घयेत्प्रत्युतोपकुर्यादेव मूलग्रन्थं पण्डितकुलं च । अत एव तार्किककुलचक्रवर्ती गदाधरः–'नहि कस्यचिद्ग्रन्थकृतो विपरीतलेखनं युक्तिबलाद्वस्तुसिद्धौ बाधकम्' इति साटोपमुदटङ्कयत् । एतां दार्शनिकानां ग्रन्थकृतां सरणिमजानन्तो मुधैव जल्पन्ति 'वार्तिककृच्चखण्ड भाष्यकृतो मतमिति ।

षोडशलक्षण्यामस्यां धर्ममीमांसायामस्त्यन्तिमा चतुरध्यायी, या संकर्षकाण्डमिति व्यवह्रियते । प्राग् द्वादशलक्षण्यां निर्णीय भूयसो न्यायांस्तैरेवेतस्ततो विप्रकीर्णान् वेदवाक्यार्थानैदंपर्येण सम्यङ् निर्णेतुं प्रावर्तिष्ट चतुर्लक्षणी । नात्र प्रत्यधिकरणं संगतिरपेक्ष्यते । संकर्षः संकलीकरणं विप्रकीर्णानां वेदवाक्यार्थानामस्मिन्काण्डे प्रतिपाद्यत इति संकर्षकाण्डपदव्युत्पत्तिः । अत्र च प्रायशः सूत्राण्यन्तरोत्सन्नानीत्यवगम्यते केभ्यश्चिद्ग्रन्थान्तरेभ्यः ।

यच्च केचिदाचिख्यासिषुर्मीमांसाद्वयस्याप्यैकशास्त्र्यं विंशतिलक्षणात्मकत्वम् । अथातो ब्रह्मजिज्ञासेति प्रतिज्ञानं तु 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासेतिवदैकशास्त्र्येऽप्यवान्तरप्रतिज्ञाभेदादुपपद्यते । धर्मब्रह्मणोरुभयोरपि तात्पर्येण वेदप्रतिपाद्यतया वेदप्रतिपाद्यार्थनिर्णायकत्वं मीमांसाप्रयोजनमित्युभयोरपि भागयोरर्थादैवैकशास्त्र्यं सेत्स्यति । कर्मदृष्टान्तेनालौकिकश्रेयःसाधनत्वहेतुना जैमिनीयविचारप्रतिज्ञाविषयत्वस्य ब्रह्मण्यनुमानात् । ब्रह्मणोऽपि नक्षत्रेष्ट्यादिषु देवतात्वेनान्वयाद्देवताप्राधान्यतदभावविचारे देवतात्वेन ब्रह्मणोऽपि विषयत्वैकशास्त्रत्वं सूपपादम् । इति ।

तदेतदश्रद्धेयम् । ब्रह्मणो जैमिनिप्रतिज्ञाविषयत्वे षोडशलक्षण्यां क्वापि ब्रह्मविचारस्यादृश्यमानत्वान्महर्षेश्च विघ्नविस्मरणयोरसंभाव्यमानत्वात्षोडशलक्षण्यां चतुर्लक्षण्यां च प्रतिपादितानां न्यायानां मिथो विरुद्धत्वाच्च शास्त्रभेद एवाध्यवसातुं युक्तः । कर्तृभेदाच्च । अन्यो हि जैमिनिः प्रणिनाय धर्ममीमांसामन्यश्च भगवान् द्वैपायनो ब्रह्ममीमांसाम् । प्रसिद्धश्चायं न्यायानां मिथो विरोधः । यथा–'विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात्' इत्याष्टमिकाधिकरणे देवतायाः शब्देनोद्देश्यमात्ररूपत्वेन गुणत्वमिति युक्तिममंस्त जैमिनिः । व्यासस्तु देवताधिकरणे देवतानां यागदेशे संनिधानं हविर्भोक्तृत्वेन प्राधान्यं च रोचयते । अवान्तरप्रतिज्ञानं तत्रोपपद्येत, यत्र प्राथमिकी प्रतिज्ञोभयमपि विषयीकरोति । प्रकृते तु धर्मशब्दस्यानुष्ठेययागादिपरत्वप्रतिपत्त्या कथंचिदपि ब्रह्मवाचकत्वाभावाज्जैमिनिकृतप्राथमिकप्रतिज्ञा नोभयसाधारणीति ब्रह्मजिज्ञासाप्रतिज्ञाया नावान्तरप्रतिज्ञात्वं सुशकं वक्तुम् । यद्यपि आम्नायप्रतिपाद्यार्थप्रतिपादकत्वं

साधारणं, तथापि द्वौ भागावाम्नायस्य विभक्तौ पूर्वोत्तरकाण्डत्वेन । पूर्वकाण्डे प्राधान्येन कर्मैव प्रतिपिपादयिषितम् । उत्तरकाण्डे तु परं ब्रह्मैवेति तत्तत्काण्डविवरणाय पार्थक्यं शास्त्रयोरवश्यमभ्युपगन्तव्यम् । फलजिज्ञास्यचोदनाप्रवृत्तीनां भेदादैकशास्त्र्यं न नापद्यतीति । यथा चैतत्तथा सुस्पष्टं विशदीकृतं शारीरकमीमांसायां भगवत्पादैः । यच्चोक्तम्—अलौकिकश्रेयःसाधनत्वमुभयोरपि तुल्यमिति । नैतन्मनोहरम् । द्विविधं किल श्रेयः श्रूयते सापेक्षं निरपेक्षं चेति । अभ्युदयापरपर्यायस्य सापेक्षश्रेयसः साधनतामापद्यते धर्मजिज्ञासा । ब्रह्मजिज्ञासा पुनर्निरतिशयस्य कैवल्यापरपर्यायस्य निरपेक्षश्रेयसः साधनमिति निष्प्रत्यूहोऽयमर्थः । तन्मनागपि नाऽऽशङ्कनीयमेकविधश्रेयःसाधनत्वमुभयोरपीति । नाप्येतच्चोद्यमवतरति ब्रह्मणो नःश्रेयसहेतुत्वासंभवति जैमिनेः प्रतिज्ञाविषयत्वमिति । नैतद्ब्रह्माशनायाद्यतीतमुपनिषत्स्वाम्नायमानं सच्चिदानन्दरूपं परं ब्रह्म, अपि तु चतुर्थ्यन्तपदप्रतिपाद्यं त्यागोद्देश्यम् । उपनिषत्प्रतिपाद्यब्रह्मणोऽध्वरमीमांसायामनभ्युपगमात् । ' तानि धर्माणि प्रथमान्यासन् ' नहि धर्माधर्मौ चरत आवां स्व इति न देवगन्धर्वा न पितर इत्याचक्षतेऽयं धर्मोऽयमधर्म इति । यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः । यं गर्हन्ते सोऽधर्म इति । चरतो रथ्यायामटत इत्यर्थः । इति श्रुत्याऽऽपस्तम्बसूत्राद्यनुरोधेनानुष्ठेययागादावेव धर्मशब्दं प्रयुङ्क्ते षोडशलक्षणीकृतः ।

अथ धर्मपदं मनाग्विमृशामः—तत्र बहवो बहुधा धर्मशब्दार्थं प्रकल्पयन्ति ।

सांख्या हि—अन्तःकरणस्य वृत्तिविशेषं यागाद्यनुष्ठानजन्यं धर्ममाहुः ।

सौगतास्तु—ज्ञानस्य ज्ञानान्तरजन्यां वासनाम् ।

आर्हतास्तु—पुद्गलाख्यान् देहारम्भकान् पुण्यविशेषोत्पन्नान्परमाणून् ।

नैयायिकाः—अदृष्टापरपर्यायं विहितकर्मजन्यमात्मनो विशेषगुणम् ।
मीमांसकैकदेशिनः—अपूर्वम् ।

इममेवार्थं जगन्थ वार्तिके भट्टकुमारिलः—

> अन्तःकरणवृत्त्यादौ वासनायां च चेतसः ।
> पुद्गलेषु च पुण्येषु नृगुणेऽपूर्वजन्मनि ॥ इति ॥

एवमेव केचनाऽऽगमानुयायिनः—चैत्यवन्दनमेव धर्ममाचक्षते ।

भागवतास्तु—अयं हि परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् । इति संगिरन्ते ।

ऐतिह्यविदस्तु—आचारः प्रथमो धर्म इति, ( आचारप्रभवो धर्म इति पाठान्तरम् ) व्याहरन्ति ।

काणादास्तु--' यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः इति प्रतिपन्नाः ।

अभियुक्तचूडामणयस्तु--नहि सत्यात्परो धर्म इति निर्णयं कुर्वन्ति । इत्थं परम्पर्यु-ज्झाव्यमाना धर्मविप्रतिपत्तयो बहुधा किल तत्र तत्रोद्धुष्यन्ते । ता सर्वा अपि कियताऽप्यंशेन निर्दिष्टविप्रतिपत्तिष्वन्तर्भूता इति नात्र पुनस्तदुद्धेतनार्थं प्रयतामहे ।

एवं बहुधा विप्रतिपत्तिगोचरे धर्मशब्दार्थेऽस्मन्मूर्द्धन्यभगवाञ्जैमिनिः ' चोदनालक्षणोऽर्थो धर्मः ' इति । तस्य चार्थो वेदबोधितश्रेयःसाधनताको यागादिक्रियाकलापो धर्म इति । ' तानि धर्माणि प्रथमान्यासन् ' इत्यादिश्रुत्या यागादिरूपक्रियाया एव धर्मत्वप्रतिपादनात् । न केवलं श्रुतिरेव, किंतु लोकेऽपि यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते । ' धर्मः स्वनुष्ठितः पुंसाम् ' इत्यादि पुराणेष्वपि अनुष्ठेयक्रियाया एव धर्मत्वं प्रतिपाद्यते । ' धर्मं चर ' इत्युपनिषदाम्नानाच्चरतिसमभिव्याहारमहिम्ना क्रियाया एव धर्मत्वमवसीयते । आहुश्चेममेवार्थं भट्टपादाः —

श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः ।
चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मता ।
अन्यत्साध्यमदृष्टैव यागादीननुतिष्ठतः ।
धार्मिकत्वसमाख्यानं तद्योगादिति गम्यते ।
पश्वादीनि च धर्मस्य फलानीति व्यवस्थितम् ।
चित्रागोदोहनादीनां वाप्युक्तानि फलानि च ।
तस्मात्तेष्वेव धर्मत्वं धर्माणीति च दर्शनात् ।
लिङ्गसंख्याविनिर्मुक्तो धर्मशब्दो निदर्शनम् । इति ।

तथा च चोदनालक्षण इत्यस्य चोदनाप्रमाणक इत्यर्थः । लक्षणशब्दः प्रमाणवचनोऽध्यायवचनश्च दृष्टो मीमांसायाम् । तथा च चोदनाप्रमाणकत्वं धर्मस्य सिद्धम् ।

तत्पुनः कथं गम्यत इति किंचिद्विचारयामः किमयं धर्मोऽप्रमाणक एव, किंवा प्रत्यक्षादीन्येवास्य प्रमाणानि, उत चोदनैव उताहो तयोर्विकल्पः, आहोस्वित्समुच्चय इति । तत्र धर्मस्यातीन्द्रियतया प्रत्यक्षादिप्रमाणानामसामर्थ्यादप्रमाणकोऽयं धर्म इति शक्यं वक्तुम् । नैतद्युक्तम्—मानाधीना मेयसिद्धिरिति न्यायविरोधेन धर्मपदार्थ एव नाऽऽस्मान लभेत । तर्हि प्रत्यक्षादिप्रमाणगम्य एवेत्युच्यताम् । न । स्वर्गयागयोः साध्यसाधनभावस्य निपुणमतिनाऽपि प्रत्यक्षेणोऽनवगम्यमानत्वात् । न च योगिप्रत्यक्षगम्यत्वं तस्येति वाच्यम् । अविच्छिन्नधारया भावनया जायमानं योगिप्रत्यक्षं जनिष्यमाणं धर्मं कथतरामवगाहेत ? । भावना हि नाम—अनुभूतस्य विषयस्य पुनः पुनः स्मरणात्मिका वृत्तिः । सा हि भूतविषयिणी स्यान्न जातु भविष्यद्विषयिणी ।

यत्तु काश्यपीयाः पुनः प्रातिभमृषीणां ज्ञानं धर्मे प्रवर्तत इत्याम्नन्ति, तदपि मनोरथमात्रम् । तद्धि ज्ञानं लिङ्गाभासादिसमशीलत्वान्न क्वापि प्रमाणभावमापद्यते, सुतरां धर्मे । प्रत्यक्षचोदनयोर्भिन्नविषयत्वेन विकल्पः समुच्चयो वा न धर्मप्रमितिं जनयितुमीष्टे । प्रत्यक्षं हीन्द्रियार्थसंप्रयोगजन्यत्वेन विद्यमानार्थमात्रं गृह्णाति, चोदना त्विन्द्रियागोचरं भूतं भवद्भावि च वस्तुजातं प्रत्याययति, अनधिगतार्थबोधकत्वस्याभावात् । तस्माच्चोदनैव केवला परमं प्रमाणं धर्मे । यस्या हि नास्ति प्रणेता, यस्य भ्रमप्रमादादिदोषैश्चोदनाऽप्रामाण्यशङ्काकलङ्कभाजनतामापद्येत ।

अथ किञ्चित्कर्म क्रतुसाद्गुण्यसंपादनार्थमनुष्ठीयमानं यथा प्रयाजादि, किञ्चिच्च क्रतुजन्यफलाधानयोग्यतासंपादकं यथा दीक्षितस्नानादि । अपरं च पुरुषनिष्ठपुरुषाभिलाषितफलसाधकं यथा दर्शपूर्णमासादि । त्रीण्येतानि यथासंख्यं केवलक्रत्वर्थं, क्रतुयुक्तपुरुषार्थं, केवलपुरुषार्थमिति च व्यपदिश्यन्ते । एतत्तत्त्वमनवगच्छन् धार्मिकः क्रतुं कुर्वाणो वैकल्यमप्यापादयेत् , आत्मनः प्रत्यवायमुपजनयेत् , स्वाभीष्टं च न संपादयेत् । अतो हि परमकारुणिको भगवाञ्जैमिनिमुनिश्चतुर्थाध्याये जिज्ञासांचक्रे क्रत्वर्थपुरुषार्थौ । येनानुष्ठीयमानेन पुरुषस्य प्रीतिरुत्पद्यते स पुरुषार्थः । यथा यागेनानुष्ठितेन स्वर्गरूपं सुखं जायते स पुरुषार्थस्तदन्यो विहितः क्रत्वर्थः । तथा च शास्त्रजन्यज्ञानाजन्येच्छाविषयसाधनत्वं पुरुषार्थत्वम् । इदं पुनः पुरुषार्थत्वं धर्मार्थकाममोक्षव्यावृत्तं पारिभाषिकं मीमांसकानाम् । तत्तु इतरेच्छानधीनेच्छाविषयत्वरूपं धर्मार्थकामजन्ये सुखे मोक्षसुखे च समन्वेति । इदं पुनस्तत्साधनभूतक्रियादिष्विति महद्वैलक्षण्यम् ।

नन्वेवं पुरुषार्थे क्रत्वर्थे चाविशेषादनुष्ठातुं चातुर्वर्ण्यमप्यधिक्रियते, क्रतौ ह्यविशेषेण चत्वारोऽप्यधिकुर्वाणास्तच्चदीप्सितं साधयेयुस्तारतम्ये मानाभावादयुक्तत्वाच्चेति चेन्मैवं, आऽऽधिकारलक्षणे भगवज्जैमिनिः—'अपि वाऽन्यार्थदर्शनाद्यथाश्रुति प्रतीयेत' इति । त्रैवर्णिकानेवोपादाय तेषु तेषु निमित्तेषु तत्तत्कर्मणो विधानाच्छूद्राणामनिर्देशाच्च त्रैवर्णिकानामेव वेदविहितकर्मस्वधिकार इति प्रतीयते । यथा—'पयो ब्राह्मणस्य व्रतम्, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य' 'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः,' 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्' इत्यादि उपनयनवाक्ये शूद्रस्यानिर्देशादुपनयनं व्यावर्त्यते । अनुपनीतस्य च वेदाध्ययनाभावात्त्रैवर्णिकेष्वेवाध्ययनमनुष्ठानं च व्यवतिष्ठते न शूद्रेषु । कथं तर्हि रथकारनिषादस्थपत्यादीनां श्रौतकर्मस्वधिकारमभ्युपैषि? इति चेन्नैवम् । किमिव हि वचनं न कुर्यात् ? । प्रत्यक्षमेव हि भगवती श्रुतिराचष्टे 'वर्षासु रथकारोऽ-

मिमादधीत ' ' एतया निषादस्थपतिं याजयेत् ' इत्यादिना तयोरधिकारम् । न च ' मस्तु शूद्रस्य ' ' हविष्कृदाधावेति शूद्रस्य ' अपि वा पत्न्यवहन्ति शूद्रा पिनष्टि ' ' तस्माच्छूद्रो न दुह्यात् दुह्याद्वा ' । इत्यादिवचनानां जागरूकत्वात् कथमपह्नूयन्ते शूद्रस्याधिकारमिति वाच्यम् । मस्तु शूद्रस्येत्यादीन्यौचित्यार्थवाद-रूपाणि वाक्यान्यधिकृतानां ब्राह्मणानां पयआदिष्वेवाधिकारं प्रत्याययेयुर्न मस्त्वादिषु ' तस्माच्छूद्रो यज्ञेऽनवक्लृप्त ' इति श्रुत्यन्तराद्यज्ञानाधिकृतस्य शूद्रस्यैव मस्तूचितमिति बोधयेयुः । इतराणि तु रथकारादिशूद्रपरत्वेन गर्भन्यासपरत्वेन वा नेतव्यानि । यत्तु केचित्—साक्षाद्वेदविहितकर्मानुष्ठानाधिकारं सर्ववर्णसाधारणमाचक्षाणाः समर्थयन्ते समर्थयमाना अपि नापत्रपन्ते, ते तु मन्यामहे शास्त्रबहिर्भावेनैव स्वच्छन्दतस्तत्त्वं प्रतिपद्यन्ते, नातः शास्त्रैकशरणैस्तदीयं मतं खण्ड्यकोटिमाटीकते । यदि शास्त्रेणैव सर्ववर्णसाधारणो वेदाधिकार इति तैः समर्थ्येत तर्हि पूर्वोत्तरमीमांसयोरपशूद्राधिकरणे दत्ततिलाञ्जलिनी स्यातां, को हि नाम ततोऽप्यधिकमेतन्मीमांसेत ।

एवमवसितायामधिकारचिन्तायामनुतिष्ठासुरधिकारी सर्वाण्यङ्गान्युपसंहरन्नेव फलं प्रतिपत्स्यत उत यदा यावन्त्यङ्गानि शक्नोत्युपसंहर्तुं तदा तावद्भिरुपेतं प्रधानं कुर्वन्नेव फलं प्राप्स्यत इति किंचिच्चिन्तयामः । ननु सर्वाङ्गसमुचितमेव प्रधानं फलं प्रसवितुमीष्ट इति युक्तं वक्तुम् । अन्यथा किंचिदङ्गप्रहाणे तदाम्नानमानर्थक्यमापद्येतेति चेन्न । आम्नातानां हि सकलाङ्गानां नित्यनैमित्तिककाम्यनिषिद्धादिकर्मसु साधारण्येनोपयोगः समस्त्येव, तत्र चावश्यं सर्वाङ्गोपसंहारेणैव सुफलान्येवमाम्नातानामङ्गानां काम्ये कर्मणि नान्तरीयकतया चरितार्थत्वान्नित्यप्रयोगे च कदाचित्समग्राङ्गोपसंहाराशक्तस्य कानिचिदङ्गान्यनुतिष्ठन्नपि समग्रं फलमश्नुवीत । सर्वशाखाप्रत्ययाधिकरणन्यायेन शाखान्तरे समाम्नातानां गुणक्रियाद्यङ्गानामुपसंहारस्याङ्गीकर्तव्यतया प्रधानमनुहते ते गुणाः संपद्यन्ते । स्पष्टं चैतत् षष्ठे ।

अनुष्ठेयपदार्थप्रयोगप्रतिपादकेषु कल्पसूत्रेषु सत्सु किं पुनस्तया मीमांसया नः प्रयोजनं यावता न्यायेन निर्णिनीष्यमाणानर्थान् सम्यक् प्रयोगेषूपनिबध्य प्रदर्शयन्ति कल्पसूत्राणीति, चेन्नैवम्—कल्पसूत्रेभ्यः विध्यर्थवादादिमिश्रशाखान्तरविप्रकीर्णन्यायलभ्यविध्युपसंहारनिष्पन्नः प्रयोगप्रादुर्भाव एव विज्ञायेत । कर्मणः शेषशेषिभावोपदेशातिदेशोहबाधतन्त्राधिकारविचारादयो विषया नैवान्तरा मीमांसा केवलं कल्पसूत्रैरवगन्तुं पार्यन्ते । अनुप्रयोगं पाठमात्रेण कल्पयन्ति इति किल कल्पशब्देन

व्यपदिश्यते । 'एतत्तीर्थमित्याचक्षते' 'ऋचं पादग्रहणे' इत्यादिस्वकृतसंज्ञापरिभाषादिभिः प्रयोगस्य सूचकानि सूत्रत्वेन व्यपदिश्यन्ते । इति हि सामान्यतः कल्पसूत्रयोर्भेदो वक्तुं सुशकः । सर्वत्र वेदार्थनिरूपणपराः स्मृत्यर्थनिर्णायकाश्च न्याया मीमांसायामेव संग्रथिता इति न जातुचिदपि शङ्कनीयं गतार्थत्वं मीमांसायाः कल्पसूत्रैः ।

वस्तुतो मीमांसाशास्त्रं प्रयोगशास्त्रं च नात्यन्तं विभिन्नमपि तु परस्परमुपकुर्वाणे एकमेव तत्त्वं संपादयतः । मीमांसया हि क्रियातत्त्वं निर्धार्य प्रयोगशास्त्रेण तदनुष्ठातव्यम् । यथाऽऽयुर्वेदे विचारः प्रयोगश्चेत्युभयमपि सममेव संपद्यत एवमेव मीमांसाकल्पसूत्रयोरेकविषयत्वं सूपपादम् । तानि च कल्पसूत्राणि बहुभिर्ऋषिभिर्बहूनि व्यसूषिषत । यथा ऋग्वेदे, आश्वलायनं सांख्यायनमित्यादि, कृष्णयजुर्वेदे, आपस्तम्ब, बौधायन, भरद्वाज, कठ, वैखानस, वाधूल, मानवादीनि, शुक्लयजुर्वेदे–कात्यायनपारस्करादीनि, सामवेदे–द्राह्यायण, लाट्यायनगोभिलीयादीनि, अथर्ववेदे कौशिकादीनि ।

अथ मीमांसायां यैर्विद्वद्भिर्ये च प्रबन्धाः प्राणायिषत तांश्च कांश्चिदत्रोपहर्तुमिच्छामः ।

| ग्रन्थाः | प्रणेतारः |
|---|---|
| मीमांसादर्शनम् (सूत्राणि) | जैमिनिः |
| सूत्रवृत्तिः | उपवर्षः |
| मीमांसासूत्रभाष्यम् | शबरस्वामी |
| वार्तिकम् ( श्लोकवार्तिकं तन्त्रवार्तिकं टुप्टीका ) | भट्टकुमारिलः |
| विधिविवेकः<br>भावनाविवेकः<br>विभ्रमविवेकः | मण्डनमिश्रः |
| न्यायकणिका | वाचस्पतिमिश्रः |
| शास्त्रदीपिका<br>न्यायरत्नाकरः<br>न्यायरत्नमाला<br>तन्त्ररत्नम् | पार्थसारथिमिश्रः |

१ आपस्तम्बाश्वलायन–बौधायन–सत्याषाढ–भरद्वाज–वैखानस–द्राह्यायण–लाट्यायन खदिर–सांख्यायन–कठ मनु–गौतम–कात्यायन–कौशिकप्रभृतिभिर्महर्षिभिर्ब्रह्मर्षिभि प्रणीतानि कल्पसूत्राणि साम्प्रतमपि सव्याख्यानि लभामह इति सानन्दं निवेदयितुमुत्कण्ठते चेत. ।

२ पारस्कर इति कात्यायनस्यैवाभिधानमित्याभियुक्तोक्ति ।

| ग्रन्थाः | प्रणेतारः |
| --- | --- |
| न्यायसुधा, तन्त्रसारः | भट्टसोमेश्वरः |
| जैमिनीयन्यायमालाविस्तरः | माधवाचार्यः |
| विधिरसायनम्<br>मयूखावलिः<br>उपक्रमपराक्रमः<br>वादनक्षत्रमाला | अप्पय्यदीक्षिताः |
| सिद्धान्तचन्द्रिका<br>सिद्धान्तचन्द्रिकागूढार्थविवरणम् | रामकृष्णः |
| भाट्टचिन्तामणिः | विश्वेश्वरसूरी ( गागाभट्टः ) |
| भाट्टदीपिका<br>भाट्टरहस्यम्<br>भाट्टकौस्तुभः<br>फलैकत्ववादः | खण्डदेवः |
| चिन्तामणिः | भास्कररायः, श्रीमद्वाञ्छेश्वरः |
| बृहती<br>लघ्वी } शाबरभाष्यव्याख्ये | प्रभाकरः |
| ऋजुविमला<br>प्रकरणपञ्चिका | शालिकनाथमिश्रः |
| नयविवेकः | भवनाथः |
| नयविवेकदीपिका | वरदरामः |
| सुबोधिनी | रामेश्वरसूरी |
| मीमांसान्यायप्रकाशः | आपदेवः |
| प्रभावली | शंभुभट्टः |
| वार्तिकाभरणम् | श्रीवेङ्कटेश्वरमखी |
| मीमांसापरिभाषा | कृष्णयज्वा |
| पूर्वमीमांसाधिकरणकौमुदी | रामकृष्णभट्टाचार्यः |
| अर्थसंग्रहः | लौगाक्षिभास्करः |
| मीमांसाबालप्रकाशः | भट्टशंकरः |
| कुतूहलवृत्तिः | वासुदेवाध्वरी |
| शाबरभाष्यविवरणम् | गोविन्दमुनिः |
| मीमांसाचन्द्रिका | ब्रह्मानन्दसरस्वत्यः |

अन्यदपि विधिरसायनखण्डनतन्मण्डन—दुरूहशिक्षाव्याख्यानिरुक्ति—भाट्टालंकार-शाबरभाष्यव्याख्यादीपशिखाप्रभृतयो ग्रन्था उपलब्धा अनुपलब्धाश्च बहवः श्रूयन्ते

ग्रन्थानां प्रणेतॄणां च पौर्वापर्ये कालनिर्णये चैतिह्यविद एव प्रमाणमिति नात्र व्यापारयामो लेखनीमात्मीयाम् ।

सर्वेष्वपि दर्शनेषु प्राचश्च नव्याश्चेति ग्रन्थकृतो द्विविधाश्चकासति । कश्चिदुभयेषां मतान्यपि भिद्यन्ते । एवं मीमांसायामपि जरन्मीमांसका नव्यमीमांसकाश्चेति ग्रन्थकर्तारः कश्चिन्मतवैचित्र्येण ग्रन्थान्प्रणयन्तः कामपि शोभामेव पुष्णन्ति मीमांसाशास्त्रस्य ।

ज्ञानप्रामाण्यविषये बहु विवदन्ते प्रायो दार्शनिकाः ।

प्रामाण्यमप्रामाण्यं च स्वत एव जन्यते गृह्यते चेति सांख्या आमनन्ति ।
नैयायिकास्ते द्वे अपि परत इति प्रतियन्ति ।
सौगतास्त्वप्रामाण्यं स्वतः, प्रामाण्यं परत इत्यातिष्ठन्ते ।
मीमांसकाः पुनः प्रामाण्यं स्वतः, अप्रामाण्यं परतश्चेति समाचक्षते ।

अनभ्यासदशापन्नज्ञाने संदेहोपपत्तयेऽनुमानादिना प्रामाण्यं ज्ञायत इति नैयायिकानामाकूतम् ।

अत्र मीमांसकाः—, यदि हि ज्ञानं स्वगतं प्रामाण्यं स्वतो निश्चेतुं न शक्नुयात्तर्हि जगति निश्चयात्यन्ताभाव एव स्यादित्यान्ध्यमेवाशेषस्य जगतः संपद्येत । न हि स्वतोऽनिर्धीयमानोऽर्थः परतो निश्चेतुं पार्यते, परस्यापि तद्वदेवासामर्थ्यात् । अतो यत्र क्वापि वा स्वतो ग्राह्यत्वमङ्गीकरणीयं तद्वरमुत्सर्गतः सर्वज्ञानेष्वेव प्रामाण्यं स्वतो गृह्यत इत्यङ्गीकारः । तच्च स्वतो ग्राह्यत्वं प्रामाणिकज्ञानग्रहग्राह्यत्वं, तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वमिति यावत् । एतादृशं स्वतो ग्राह्यत्वं मीमांसकानां त्रिष्वपि मतेषु युज्यते ।

मुरारिमिश्रमते—अयं घट इत्याकारकज्ञानोत्पत्तिद्वितीयक्षणे घटमहं जानामीति तद्विषयकोऽनुव्यवसायः समुत्पद्यते, तेनैव तद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपं प्रामाण्यं गृह्यत इति तदप्रामाण्याग्राहिका यावती ज्ञानग्राहिका सामग्री, व्यवसायात्ममनःसंयोगादिरूपा तज्जन्यो ग्रहोऽनुव्यवसायः, तद्विषयत्वं प्रामाण्यस्याभ्युपेयत इति स्वतो ग्राह्यत्वोपपत्तिः ।

प्राभाकरास्तु—ज्ञानानां स्वप्रकाशत्वेन घटमहं जानामीत्याकारकव्यवसायेनैव प्रामाण्यग्रहणं समामनन्ति । तन्मते ज्ञानग्राहकसामग्रीपदेनेन्द्रियसंनिकर्षादिघटितसामग्रीपरिग्रहात्तज्जन्यव्यवसायात्मकग्रहविषयत्वात्स्वतो ग्राह्यत्वं प्रामाण्यस्य सूपपादम् ।

भाट्टा पुन.—अथ घट इत्यादिज्ञाने जाते ज्ञातता नाम कश्चित्सविषय पदार्थो घटे उत्पद्यते, तल्लिङ्गकानुमित्या प्रामाण्य विषयी क्रियत इति प्राथमिकग्रहग्राह्यत्व तन्यौपपादयन्ति। तत्र ज्ञानग्राहकसामग्रीपदेन परामर्शघटितसामग्रीपरिग्रहे तज्जन्यानु मितिग्रहविषयत्वात्प्रामाण्य स्वतो ग्राह्य सपद्यते।

अथान्वरमीमासका विग्रहवती देवता नाङ्गी कुर्वन्तीति किंचिदिव निरीश्वरवादिकोटौ तान्निवेशयितुमीहन्ते केचित्पण्डिता —वस्तुतो न भगवाञ्जैमिनि प्रत्याचख्यौ देवताना विग्रहवत्त्वम्। भाष्यकृच्छबरस्वामी पुनरभ्युपगम्याप्यविग्रहा शब्दमात्रमयीं देवता कर्मण प्राधान्य सर्वाङ्गपरिपूर्णता च निराबाधमुपपादयिष्यामीति प्रौढिवादेन देवताना विग्रहवत्त्व निराकुर्वाणो भाष्यमाकल्पयाचकार नाधमिकस्य देवताधिकरणस्य। सोऽय तदीयो गूढोऽभिप्रायेऽर्थेत्केचिद्दार्थतत्त्वमनवगच्छन्तस्तदुदिते कर्मणि निर्भरमनाखह तश्च देवताविग्रहमेव बहुमन्यमाना अङ्गप्रधानादिक्रियाजातमगणयन्त कर्मणो वैकल्यमेव सपादयेयुरिति देवताना विग्रह एवासद्भूते कर्मकलापेष्वेकतान मन सपद्यत इति। परमार्थतश्च देवताना विग्रहाभावो ब्रह्मवादिना, साङ्ख्यादीना दार्शनिकाना च समत। औपाधिकविग्रहाङ्गीकरण तु न सामञ्जस्यमश्नुवीतेति। अत एव भगवान्सूत्रकृदपि स्पष्टमेव निराचष्टे देवताया प्राधान्यम्। तावतैवावगम्यते देवताया प्राधान्ये, कर्मण्य निर्भर समवेज्ञानानामित्याकूत सूत्रकृत। शास्त्रदीपिकाकारप्रभृतयो निबन्धकारा अपि विग्रहवत्त्वमभ्युपगम्यैव देवताना फलदातृत्व प्राधान्य च निराचक्रु। उत्तरमीमास कास्तु चित्तैकाग्र्यनिबन्धनमुपासन प्रचिचारयिषन्तो ' वज्रहस्त पुरदर ' इत्यादिभूतार्थ वादैरपि समर्थ्यमान विग्रहवत्त्व लोकोपकृतय उपन्यमासु। तेषा गूढोऽयमभिसाधि — यद्यपि परमार्थत एव विग्रहवत्त्वाभाव पूर्वतन्त्रसमतोऽस्माकमपि रुचये भवति, मन्दा नुकम्पार्थ पुनश्चित्तैकाग्र्यायोपासना प्रवर्तयेम, तथा चौपाधिकविग्रहवतीं देवतामु पासीरन्, ज्ञाननिष्ठाधिकार चानुविन्देरन्। शोभते चैतद्विग्रहवती देवता, सनिधाय परिगृह्य भुक्त्वा तृप्यति प्रसीदति चेति, इति।

नैत पथ क्षोदक्षम म यन्ते मीमासका —अभ्युपगतेऽपि विग्रहे सनिहित हवि स्वय देवता कर्मभूमिमुपसद्य भुनक्तीति विरुद्धोऽयमशो न शक्योऽभ्युपगन्तुम्। ॥ चाभुञ्जाना प्रसीदतीति युक्तम्। न चाप्रसन्ना फल दद्यादिति साम्प्रतम्—न चाददाना फल प्राधा न्यमश्नोतीति समञ्जसम्। मन्त्रार्थवादेतिहासपुराणेष्वपि देवतानामपि तपश्चरणञ्चत्वनु ष्ठानब्रह्मास्त्रादिमन्त्रन समीहितसिद्धयनुकीर्तनात्कर्मैव फल प्रसवितुमीष्टे। मन्दाधिय श्रद्धालवस्तु काम श्रद्दधतु नेवतैव फलदात्रीति। को हि नाम सचेता श्रद्दधीत स्तोक मण्डूकान्यभिनिर्यद्य, अचेतनाश्चौषधिवनस्पतय, अश्वा गावो हनुदन्ता अश्वरूपा अश्व

चरिताश्चेङ्कारशकृत्करणादयश्च देवतात्वेन यागेषु श्रूयमाणा अपि यष्टुः कामितं फलं साधयितुं धृष्णुयुरिति। न चात्र भ्रमितव्यम्—अतिथेः प्रीतिमुपजनयितुं क्रियमाणा सत्क्रिया यथाऽतिथिप्रधाना भवति एवं देवताराधनार्थो यागो देवताप्रधानक एवेति। अतिथिभोजनस्य प्रमाणान्तरेण तादर्थ्यावगमात्, तत्रापि नातिथिर्भोजयितुः फलं ददाति प्रीयमाणोऽपि न ह्यसौ स्वर्गादिप्रदानायेष्टे, तत्तादृशः सत्कार एव यष्टुरभीष्टं संपादयितुमीष्टे यागवत्।

यत्तु 'मम त्वेवं वदतोऽपि वाणी दुष्यतीति हरिस्मरणमेव शरणम्'[1] इति खण्डदेववचनं तद्वेदान्तिमते स्थितस्य ममेत्यर्थविवक्षया योजनीयम्।

अथ मीमांसका जीवात्मानं कीदृशमभ्युपयन्तीति समालोचयामः—आदितस्तावच्छरीरम्, इन्द्रियाणि मनो बुद्धिं प्राणांश्चानात्मत्वेन समर्थयन्तस्तत्साक्षिणं तदधिष्ठातारं परलोकसंबन्धिनं नित्यं कर्तारं फलभोक्तारं च समामनन्ति। सुखादयः क्वचिदाश्रिता गुणत्वाद्रूपवदित्यनुमानेन देहादिबाधात्तद्व्यतिरिक्तात्मसिद्धिः। चैतन्यस्य [illegible] शरीरधर्मत्वं नास्तीत्यवश्यं तदाश्रयत्वेन चाऽऽत्माऽङ्गीकरणीय इत्याचक्षते।

शरीरसंबन्धो बन्धस्तदभावो मोक्षः, कर्मणा निष्पन्नानां देहानां यः प्रध्वंसः, यश्चानुत्पन्नानां प्रागभावः स मोक्ष इति यावत्। कर्मनिमित्तो हि बन्धः कर्मक्षयादेव नश्यति। [illegible] च कर्मक्षयः, यो देहादिविविक्तमनन्तमजरमदुःखमात्मानं जानाति, तस्य देहसंप्रयोगविरक्तस्य फलोपभोगेन भविष्यति। ततश्च तन्निमित्ते शरीरे पतितेऽनागतानां च कर्मणामननुष्ठानादेवासत्त्वाद्देहान्तरानुत्पत्तेरत्यन्तासंबन्धः शरीरेण भवति। स एव च कीर्त्यते मोक्ष इत्यपवर्ग इति [illegible]। स्वर्गस्तु सुखतारतम्यरूपः क्षयिष्णुश्च भवति। अत्र च प्रमाणयन्ति—

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥ इति वचनम्।

मीमांसकाः सृष्टिं महाप्रलयं चानभ्युपगच्छन्तः 'यः कल्पः स कल्पपूर्वः' इति व्याप्त्याऽनादिरयमनन्तो जगद्व्यवहारप्रवाहः प्रवर्तत इत्यातिष्ठन्ते। यदीश्वरः सृष्टिमु-

---

[1] तदेतत्सर्वं मन्त्रार्थवादादिभ्यः प्रतीयमानमाकारचिन्तनं देवतायां भगवता यास्केन निरुक्ते प्रपञ्चितम्—तत्र चायं निष्कृष्टोऽर्थो भाष्यकारैः। पौरुषविध्यम्। अपौरुषविध्यम्। कर्मात्मोभयविध्यम्। नित्यमौभयविध्यम्। माहाभाग्यादेव देवतायाः सर्वमुपपद्यत इति। अमूर्ता, मूर्ता, एकधा, द्विधा, बहुधा चेति। उक्तं च—

'हीना न निन्दा स्तुतिरेव सा स्याद्देवात्मतत्त्वैः सम्यगभिष्टुतात्मकः।
शक्तिक्षयेऽप्यध्यवस्यन्ति शिष्टाः स्तोतुं न पश्यन्ति गतिं यतोऽन्याम्'॥ इति।

त्पादयेत्किं पुनः फलमभिसंधायोत्पादयेत्। 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' । यदि जीवविषयिण्यनुकम्पैव सृष्टेर्निमित्तमिष्येत साऽपि न मागिनी, दुःखदर्शननिमित्ता ह्यनुकम्पा भवति, न च सृष्टेः प्राक्, शरीरिणामात्मनां किंचिद्दुःखमस्ति येनानुकम्प्येरन् । अतोऽनुकम्प्याभावान्नानुकम्पा संभवति । अथ असत्यपि दुःखे सुखस्याभावस्तन्निमित्ताऽनुकम्पा संभवेदिति चेन्न । तथा सति तयाऽनुकम्पया प्रवर्तमानः परमेश्वरः सुखमेवैकं सृजेन्न दुःखम्। दृश्यते चैषा सृष्टिः सुखदुःखोभयात्मिका। न चापि शङ्कनीयं परमेश्वरस्य स्वतः किंचित्प्रयोजनमस्तीति । आप्तकामत्वव्याघातात्। क्रीडार्था प्रवृत्तिरिति चेत्। क्रीडा हि विनोदजन्यसुखार्थैव। न चासावाप्तसुखस्य संभवति। तदनवाप्तौ कृतार्थतालक्षणमैश्वर्यं तस्य भज्येत । क्रीडा चाल्पीयसी हि रमयति। समस्तभूधरादिविषयो जगद्बिम्बरचनारूपो महाव्यापारोऽतिक्लेशरूपो न क्रीडया विनोदयति। न वा चित्तमनुरञ्जयति। किं च यदि सिसृक्षा, अनुकम्पानिमित्ता, संजिहीर्षा तर्हि किंनिमित्ता स्यात् । साऽप्यनुकम्पानिमित्तेति न भ्रमितव्यम्। विरुद्धयोरनुकम्पैकहेतुकत्वासंभवात्। किं च सिसृक्षुर्भगवान्साधनसचिवः सृजेदुत तद्विकलः । नाऽऽद्यः। तदानीं साधनान्तरासंभवात्। धर्माधर्मावेव साधनमिति ब्रूम इति चेत्तयोरपि प्राक् सृष्टेरसंभवात्। नान्त्यः। असाधनस्य स्रष्टुः क्वापि स्रष्टृत्वादर्शनात् । तस्मात्स्रष्टुरभावान्न कदाचिदनीदृशं जगत्, इति।

अनुपलब्धिरूपं षष्ठं प्रमाणमुपयन्ति कर्मवादिनः । भूतले घटासत्त्वदशायामिह घटो नास्तीति यः प्रत्ययः स चाभावं नाम पदार्थमवगाहते, जायते चानुपलब्ध्यपरपर्यायादभावाख्यात्करणादिति।

प्राभाकरास्तु—इह घटो नास्तीति प्रतीतावपह्नुत्य नास्तित्वं प्रमेयाभावादेव षष्ठं प्रमाणं नाभ्युपेयत इति संगिरन्ते। भाट्टाः पुनस्तेदतन्मतं न क्षमन्ते। योग्यानुपलम्भोत्तरमिह घटो नास्तीति प्रत्ययस्य किं बत, आलम्बनमिष्यत आयुष्मता। भूतलमिति चेत्। सत्यपि घटे तादृशप्रत्ययप्रसङ्गात् । किंच गवि नायमश्व इति प्रत्ययः, रूपे नायं रस इति प्रत्ययश्च किमवगाहते। न तावद्रूपम्। तस्य अश्वरूपप्रतियोगिनिरपेक्ष्येणापि प्रतीयमानत्वात्। अश्वो न भवतीति ज्ञानस्य तु प्रतियोग्यपेक्षत्वम्। अथ गोरूपमिति चेत्। सिंहाद्यौ नायमश्व इति प्रतीतिर्नोत्पद्येत। गोरूपस्य तत्राभावात्। नन्वश्वानुयोगिको गवानुयोगिकश्च भेदस्तादृशप्रतीत्यालम्बन इति चेत्तर्हि कोऽयं भेदो नाम । किमितरेतराभावः। समायातं तर्ह्यभावेन । पृथक्त्वाख्यो गुणविशेष एव भेद इति चेत्तस्य द्रव्यगतत्वस्वाभाव्यात्, गुणानां च गुणानधिकरणत्वात्, रूपं रसो न, रसो रूपं न, इति, इतरेतराभावप्रत्ययो न जायेत । तस्माच्चास्तीति प्रतीतिविषयोऽस्ति कश्चिदभावाख्यः पदार्थोऽनुपलब्धिगम्य इति।

यद्दर्शनान्तरेषु तत्र तत्रानूद्यतेऽभावस्याधिकरणस्वरूपत्वं मीमांसकैरभ्युपगम्यत इति तत्प्राभाकराणां मतमित्याकलनीयं सुधीभिः ।

एत एव प्राभाकरा अख्यातिवादिन इति कथ्यन्ते । ते हि शुक्ताविदं रजतमिति ज्ञानस्य भ्रमत्वमेव नाङ्गी कुर्वन्ति, सर्वं हि ज्ञानजातं जगति प्रमैवेति मन्यते'। कथं तर्हि रजतार्थिनः शुक्तौ प्रवृत्तिरिति चेच्छृणु—

इदं रजतमित्यत्र ज्ञानद्वयं विद्यते । इदमिति प्रत्यक्षात्मकं' पुरोवर्तिज्ञानम् । तत्र दोषवशात्तद्गतशुक्तित्वविशेषस्याग्रहः । तन्मात्रं च गृहीतं सदृशतया संस्कारोद्बोधक्रमेण रजतस्मृतिं जनयति । अतो रजतमिति स्मरणात्मकं रजतज्ञानम् । तच्च गृहीतग्रहणस्वभावमपि दोषवशादगृहीततत्तांशप्रमोषात्स्मरणमात्रमवतिष्ठते । तत्र द्रष्टुः शुक्तिरजतयोरसंसर्गाग्रहो नास्ति, तावतैव रजतमर्थयमानोऽपि' इदमि प्रवर्तते । न च ज्ञानद्वयरूपत्वे कथं विशिष्टज्ञानव्यवहार इति वाच्यम् । ज्ञानयोरपि मिथोऽसंसर्गाग्रहाभावात् । तथा च रजतस्मृतेः पुरोवर्तिद्रव्यमात्रग्रहणस्य च मिथः स्वरूपतो विषयतश्च भेदाग्रहात्संनिहितरजतगोचरज्ञानसारूप्येण, इदं रजतमिति भिन्नेऽपि स्मरणग्रहणेऽभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयत इत्येषा तेषां मर्यादा ।

इमां प्राभाकराणामख्यातिमसूयन्तो भाट्टा विपरीतख्यातिमाचक्षते । विपरीतख्यातिरन्यथाख्यातिरित्यनर्थान्तरम् ।

यत्त्वत्र केचिद्विपरीतख्यातिम्, अन्यथाख्यातिभिन्नामाहुस्तन्मीमांसाशास्त्राज्ञानमूलकमिति ज्ञेयम् । न विवेकाग्रहणमेव भ्रान्तिर्वक्तुं शक्यते । अङ्गुलिनिपीडितदृष्टिः पुमान् ' एक एवायं चन्द्रो न द्वौ ' इत्येवं चन्द्रस्य द्वित्वविवेकं विस्पष्टमनुसंदधानोऽपि चक्षुषा चन्द्रद्वित्वं प्रतिपद्यते । कथमियं प्रतिपत्तिर्विवेकाग्रहनिमित्ता स्यात् । एवमवगतदिक्कः पुरुषः संभ्रमे दिग्भ्रमं प्राप्नोति । तत्रापि कथं विवेकाग्रहो निमित्ततामधिगच्छेत् । किं च यदि सत्यरजतस्थले तादात्म्यमवभासते, न शुक्तिरजतस्थल इति व्यवस्था, तर्ह्यवभास्यभेदादवभासस्य वैलक्षण्यमनुसंदध्यादेव । तथा च कथं रजतार्थी शुक्तौ प्रवर्तेत । तस्माद्विशिष्टव्यवहारोपपत्तये प्रवृत्त्युपपत्तये चास्ति कश्चिद्भ्रम इत्यवश्यमूरीकरणीयम् । तत्र चान्यत्र सन्तं पदार्थं तदनधिकरणे देशे गृह्णातीति । अन्यथाख्यातिरेषैव विपरीतख्यात्यपरपर्यायाऽभ्युपेतव्येति भाट्टानां प्रघट्टकम् ।

एतदेकमेव मीमांसाशास्त्रस्य विशेषतो भट्टमतस्य सर्वसंप्रतिपन्नत्वं समर्थयितुमलम्, यत्—वेदान्तिनः सत्यपि कर्मब्रह्मप्राधान्यादिविषये मिथो विवादे । व्यवहारे भट्टसंमितामेव प्रक्रियामङ्गीकुर्वाणाः स्वीयं मतं सम्प्रचारयन्ति । अत एव च प्राहुरभियुक्ताः

वेदान्तिनः ' व्यवहारे भाट्टनयः ' इति । न खलु वेदान्तिनामुपनिषत्तत्त्वं निर्मथ्यो-द्धच्छतां स्वातन्त्र्येण शास्त्रं प्रणयतां यथेष्टं प्रक्रियाव्यूहरचनं नामैकान्ततो दुःशकं, नापि वा वैशेषिकादिदर्शनगतायाः प्रक्रियाया आलम्बनम् । तन्मन्यामहे भट्टमतमेव शास्त्रसिद्धं क्षोदक्षमं न्यायोपबृंहितं रुचिरतमं चेति द्रढिष्ठोऽयं प्रत्ययो वेदान्तिनामिति ।

अवतिष्ठतां पुनः पारमार्थिकं तत्त्वं विमिश्रम् । शास्त्रमर्यादा दुर्नमोऽष्टैः कामपि हृदयहारिणीमेव शैलीमापादितेति समुपादेयतामापन्ना वेदान्तिनाम् ।

एतेन मीमांसकेषु निर्निमित्तं निरर्गलं च कैश्चिदल्पप्रज्ञैः समुद्भाव्यमानानि दूषणानि ' निरीश्वरवादिन इति ' ' कर्मवादिन इति ' । ' अत एव भगवत्पादशंकराचार्यैरेतन्मतं खण्डितम् ' इत्यादीनि प्रत्याख्यातानि वेदितव्यानि ।

किंच भट्टैः—अयं घट इत्यादीनां ज्ञानानामतीन्द्रियतयाऽनुमानेनैव तत्सिद्धिरिष्यते । न पुनरितरैरिव ज्ञानविषयकप्रत्यक्षमनुव्यवसायादिकमभिमन्यते । किं तदनुमानं यत्—ज्ञानानि साधयितुमीष्टे । घटादयः पदार्थाः प्रत्यक्षादिज्ञानोत्तरं परोक्षा अपरोक्षा इति व्यवहारविषयतामापद्यन्त इति सर्वजनीनम् । एतच्चाऽऽपरोक्ष्यं पारोक्ष्यं च कार्यभूतं स्वकारणं विज्ञानमुपकल्पयति । यथा हि गम्यादिक्रियाः कर्मादिभूतेषु ग्रामादिषु संयोगादीनि फलान्युपजनयन्त्येवं ज्ञानक्रियाऽपि हि सकर्मिका सती कर्मभूतेष्वर्थेषु फलं जनयति· तदेतत्फलमापरोक्ष्यादिकम् । कार्यात्कारणमनुमातव्यमिति न्यायेनानुमिमीमहे । प्रयोगस्तु—घटः, ऐन्द्रियकज्ञानविषयः, तज्जन्यापरोक्षतावत्त्वात्, इति ।

निर्णयसिन्धु—वीरमित्रोदय—दत्तकचन्द्रिका—व्यवहारमयूख—स्मृतिचन्द्रिका—दायविभाग—विवादचिन्तामणि—विवादरत्नाकर—मिताक्षरा—हेमाद्रिप्रभृतयो निबन्धा मनु—पराशर—याज्ञवल्क्यप्रभृतीनां स्मृतयश्च मीमांसाशास्त्रप्रतिपादितानेकविधान्न्यायानुपजीव्यैव धर्मतत्त्वं निर्णयन्तीत्यवश्यं धर्मशास्त्रमनुशीलयद्भिरिदं शास्त्रं समादरणीयम् । वाक्यशास्त्रं किलैतत् । एतदनधीत्य न खलु निर्विचिकित्सं शास्त्रार्थः शक्यः संप्रतिपत्तुम् ।

केचित्पुनरनाघ्रातशास्त्रगन्धाः किं बहुना ज्ञातशास्त्रास्वादा अपि कतिपये सर्वशास्त्रप्रदीपभूतमपीदं मीमांसाशास्त्रं पौरोहित्येनोपजीवतां भिक्षुकाणामेव प्रयोगरूपनिश्चायकतयोपयोगितामापद्यत इति मन्यन्ते । मन्यामहे सोऽयमेषां मतिविपर्यासः । यतोऽत्र व्युत्पादिता न्याया वाक्यतात्पर्यनिर्णायकतर्करूपत्वाच्छक्या लौकिकेष्वपि वाक्येषु योजयितुम् । न केवलमदृष्टपरेष्वेव वैदिकेषु, न हि वेदवाक्यान्युदाहृत्य व्युत्पादिता गुणा दोषा वा वाक्यान्तरेषु स्वभावं परिजह्युः, न हि जामात्रर्थमपि कृतं मधुरान्नं पररसना प्राप्य विपरीतं भवति । अत एव राजकीयनियमेष्वपि, दायविभागदण्डचादण्डचादिविषये

मीमांसान्याया एव शरणीकरणीया नान्तरीयकतया संवृत्ता इति ततोऽपि सुस्पष्टमेवावग-म्यते लौकिकादिव्यवहारोपयोगित्वमस्य शास्त्रस्य।

शिष्टाकोपाद्यधिकरणमनुसंदधतां तु नैतत्तिरोहितं यत् तत्तद्देशभेदेन प्रवर्तमानानाचारा-न्व्यवस्थापयितुमिदमेव शास्त्रं प्रभवतीति।

तथा वेदान्तादिशास्त्रेषु प्रस्थानत्रयीभामतीप्रभृतयो गभीरतमा अपि ग्रन्था भूयिष्ठं मीमांसान्यायैरेव संभृतास्तत्त्वं विवेचयन्तीत्यहो अस्य शास्त्रस्य सर्वशास्त्रोपकारकत्वम्। सर्वथा न्यायानां निधिः किलैषः। अत एव चाभियुक्ताः शास्त्रेऽस्मिन्न्यायमाला—न्याय-बिन्दुर्न्यायरत्नमाला—न्यायकणिका—न्यायसुधा—न्यायप्रकाश इत्यादिशब्दैरेव विभूषितान् प्रबन्धान् प्राणैषुः।

कथं तर्ह्यान्वीक्षिक्या न्यायशास्त्रत्वव्यपदेश इति चेत्तत्र प्रमाणैरर्थपरीक्षणं न्यायः परार्थानुमानं वा। तदधिकृत्य प्रवृत्ते तच्छास्त्रम्। एतत्पुनर्वाक्यानामर्थनिर्णायकत्वं युक्त्या विशदयतीत्यनयोर्भेदः।

यत्र मीमांसकानामितरैर्दार्शनिकैः सह महान्विरोधो यश्च मीमांसाशास्त्रस्य, किं बहुना भारतीयधर्मस्यैव जीवातुः, सोऽयं वेदानामपौरुषेयत्ववादो, नित्यत्ववादः, प्रामा-ण्यवादश्च सांप्रतं मीमांस्यते।

अत्र शास्त्रान्तरकृतः प्रत्यवतिष्ठन्ते। उत्पन्नो गकारो नष्टो गकार इत्यापामरप्रतीति-बलाद्वर्णानामनित्यत्वं तावत्सिद्धम्। कथंचिद्वर्णानां नित्यत्वाभ्युपगमेऽपि तदानुपूर्वीरूप-वेदानां नित्यत्वं तु सर्वथा न संगच्छते।

काठकादयश्च समाख्याः सकर्तृकत्वमेव वेदानामुपोद्बलयन्ति। सति च सकर्तृकत्वे पुरुषसंबन्धनिबन्धनदोषसंभावनया प्रामाण्यमपि न यथावत्संगच्छत इति। तथा हि—वेदः प्रागभावप्रतियोगितावच्छेदकधर्मवान् वाक्यत्वात्। भारतादिवत्। इत्यनुमानेन वेदानां पौरुषेयत्वम्। पुरुषाश्च कठकलापादयः। तेषां सर्वज्ञत्वसंदेहे त्वीश्वर एव कर्ता कल्प्य-ताम्। अत एव त्रयो वेदा अजायन्त, अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद इत्यादिश्रुतिरेवाचष्ट उत्पत्तिमिति।

पक्षमेनं शततलं तक्ष्णुवन्ति मीमांसकाः—अलौकिकः, अपूर्वोऽयमा च वेदार्थो न कथं-चिदपि पुरुषैर्बुद्ध्यावारोपयितुं पार्यते। अनारोपयन्तश्च बुद्धौ कथं वाक्यानि विरचयेयुः। काठककालापकादिसमाख्यास्तु प्रवचनातिशयेनाप्युपपद्यन्ते। स्मर्यते च वैशंपायनः सर्व-शाखाध्यायी, कठो हि केवलमिमां शाखामध्यापयांबभूवेत्यादि। न चानेकपुरुषसाधारणं

हि प्रवचनं कथं काठकत्वेनैव समाख्यायेत, कर्तृत्वे पुनः कर्तुरेकत्वाद्युज्यते समाख्या सेयमिति वाच्यम्। अतिशययोगेनासाधारण्यं कठस्यैवोपपद्यते। यो हि परम्परयाऽविच्छेदेनाध्यापनप्रसितो बभूवेति।

उक्तानुमानं तु—वेदः प्रागभावप्रतियोगितावच्छेदकधर्माभाववान्, अस्मर्यमाणकर्तृकत्वात्, आत्मवत्, इत्यनेन, सत्प्रतिपक्षितम्।

प्रत्युत पूर्वकालो न वेदशून्यः कालत्वात्, वर्तमानकालवत्।

प्राक्कालिकं वेदाध्ययनं गुर्वध्ययनपूर्वकम्, अध्ययनत्वात्, अद्यतनाध्ययनवत्।

वेदा न पौरुषेयाः संप्रदायाविच्छेदे सति, अस्मर्यमाणकर्तृकत्वात्।

इत्यादिभिरनुमानैः पौरुषेयत्वस्य समूलमुन्मूलनात्।

ननु अस्मर्यमाणकर्तृककूपादौ व्यभिचार इति चेन्न। तत्रापि सामान्येन कर्तृस्मरणात्। आदराभाववत्त्वदर्शनाच्च। वेदे पुनः सर्वजनसमाद्रियमाणत्वेऽपि कर्तुरस्मरणं पौरुषेयत्वाभावमेव स्फारं स्फोरयति।

यदि हि वेदानां कर्ता कश्चिदभविष्यत्ततोऽध्येतृपरम्परयाऽवश्यं व्यासबुद्धकाळिदासादिवदस्मरिष्यत। न ह्यस्य जातु विस्मरणं संभवति। यागादेः फलसाधनतायाः प्रमाणान्तरागोचरत्वात्कर्तरि विश्रम्भादेव सर्वे वेदार्थानुष्ठाने प्रवर्तेरन्। तत्कथं बत कर्ता विस्मर्येत? अवश्यं हि स्मर्तव्यो न च स्मर्यते तेन स्मर्तव्यत्वे सति, अस्मर्यमाणः कर्ता शशविषाणवदात्मनोऽभावमेवाध्यवसाययेत्। येऽपि साटोपं पौरुषेयता समर्थयन्ति तेऽपि नैव परम्परया तत्र कर्तृविशेषस्मरणं प्रभवन्त्यभिधातुम्। सामान्यतो दृष्टेन कर्तारमनुमाय स्वाभिमतं यं कंचन तत्र निक्षिपन्ति। केचिदीश्वरम्, अन्ये हिरण्यगर्भम्, अपरे प्रजापतिम्, इतरे त्वनेकान्। न चेयं विप्रतिपत्तिर्बहुलपा परम्परया वेदकर्तरि मन्वादिवत्स्मर्यमाणे कथंचिदवकल्पते। न हि मानवे, भारते, शाक्यग्रन्थे वा कर्तृविशेषं प्रति कश्चिद्विवदते। तस्मात्स्मर्तव्यत्वे सति, अस्मरणात्कर्तुरभाव एवाध्यवसातुं योग्यः।

यच्चोक्तमग्नेर्ऋग्वेद इत्यादि तन्न मनोज्ञम्। 'अजा स्वयंभु, वाचा विरूप नित्यया' इत्यादिश्रुतिविरोधेन 'अग्नेर्ऋग्वेद' इत्यादिश्रुतीनामग्निना ज्ञापित ऋग्वेद इत्यर्थपरत्वावगतेः। स्मृतिरप्यत्रोदाहर्तव्या—

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।
स्वयंभूरेष भगवान् वेदो गीतः स्वयंभुवा।
शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः" इत्यादि।

किञ्च, पौरुषेयत्ववादी प्रष्टव्यः, किमिदं पौरुषेयत्वं नाम विवक्ष्यते आयुष्मता । किं पुरुषाधीनोत्पत्तिकत्वमुताहो मानान्तरेणार्थमुपलभ्य रचितत्वम् । नाऽऽद्यः । इष्टत्वात् । आकाशवन्नित्यानां सर्वगतानां कालतो देशतश्च क्रमशून्यानां वर्णानामनित्योच्चारणक्रमविशिष्टानां पूर्वपूर्वक्रमानुस्मरणनिमित्ततत्सदृशोत्तरोत्तरक्रमवतां वेदशब्दवाच्यानां पुरुषाधीनोत्पत्तिकत्वस्यास्माकमपि संप्रतिपत्तेः । न द्वितीयः । कालिदासादिकृतरघुवंशादिसाधारण्यापत्त्या लोकोत्तरत्वाभावेन सर्वजनसमादरणीयत्वानुपपत्तेः । किं च को माऽयं पुरुषोऽभिप्रेयते भवता किं कश्चिन्मनुष्यः, उत योगी, अथ ईश्वरः । तत्रापि नाऽऽद्यः कल्पो विचारसहः, मनुष्ये धर्मादिज्ञानस्य वेदजन्यत्वादेव तत्र तस्य कर्तृत्वानुपपत्तेः । न द्वितीयः । तत्रापि योगिनो धर्माधर्मादिप्रमापकं किं बाह्यमिन्द्रियमुताऽऽन्तरम् । नाऽऽद्यः । धर्माधर्मादेर्बाह्येन्द्रियायोग्यत्वात् । न द्वितीयः । आत्मयोग्यतद्गुणातिरिक्तज्ञानजनने मनसोऽप्रभविष्णुत्वात् । धर्माधर्मयोश्चाऽऽत्मगुणत्वेऽप्ययोग्यत्वात् । एतेनानेककर्तृकत्वपक्षोऽपि परास्तः । नापि तृतीयः । वेदादीश्वरसिद्धिरीश्वरश्च वेदानां प्रणेता, इत्यन्योन्याश्रयस्य दुरुद्धरत्वात् । स्वप्रणीते ग्रन्थे स्वस्यैव ध्यानादिकथनानुपपत्तेश्च ।

तस्मात्कर्त्रस्मरणान्निराबाधमपौरुषेयत्वं वेदानाम् ।

अपौरुषेयत्वादेव च स्वतः प्रामाण्यं जोघुष्यद्भिर्मीमांसकैरेव यशः पीतम् ।

शब्दनिष्ठं स्वतः प्रामाण्यं नाम—अनधिगताबाधितार्थबोधकत्वम् ।

ज्ञप्तिनिष्ठं स्वनधिगताबाधितार्थविषयकज्ञानत्वम् । अपौरुषेयत्वं नाम—पूर्वकालत्वव्यापकसमानानुपूर्वीकाध्ययनविषयत्वे सति सर्वजनसमादरणीयत्वे सति, अस्मर्यमाणकर्तृकत्वम् ।

अथवा पुरुषसमवेतमानान्तरजन्यज्ञानानपेक्षोत्पत्तिकानुपूर्वीकत्वे सति, अध्ययनविषयत्वम् ।

नित्यत्वम्—प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम् । इदं वर्णसामान्यस्य, आनुपूर्वीविशेषविशिष्टतत्समुदायरूपस्य वेदस्य तु नित्यत्वमपौरुषेयत्वेनैव गतार्थमिति न पुनस्तदत्र विचार्यते ।

सोऽयमपौरुषेयो वेदो विधिमन्त्रनामधेयनिषेधार्थवादभेदात्पञ्चविधः । अस्यैव पञ्चविधस्य भगवत आम्नायस्यार्थनिर्णायकमिदं शास्त्रम् ।

मीमांसकास्तु, आख्यातार्थमुख्यविशेष्यकशाब्दबोधमुपयन्ति ।

यथा–'स्वर्गकामो यजेत' इति वाक्याज्जायमानः शाब्दबोधः स्वर्गभाव्यका यागादिकरणिका यत्किंचिदितिकर्तव्यताका, अर्थभावना शब्दभावनाप्रयोज्या इति ।

लिङादेः प्रवर्तनायां शक्तिः, शब्दजन्यप्रवृत्तिं प्रति प्रवर्तनाज्ञानस्य हेतुत्वात् । प्रवर्तना च परानिष्ठप्रवृत्तिहेतुः प्रवर्तकनिष्ठो धर्मविशेषः, अहमेनं प्रवर्तयामीति प्रतीतिसाक्षिको धर्मविशेषः । स च धर्मो लोक इच्छादिः, वेदे तु तदसंभवाल्लिङादिनिष्ठः कश्चिदलौकिक इति चाऽऽकलयन्ति ।

नैयायिकास्तु स्वर्गोद्देश्यको यागः, बलवदनिष्टाननुबन्धित्वविशिष्टकृतिसाध्यत्वविशिष्टेष्टसाधनत्ववान् । अथवा, इष्टसाधनकृतिसाध्यबलवदनिष्टाननुबन्धियागानुकूलकृतिमान् स्वर्गकाम इति शाब्दबोध इति ।

लिङादिश्रवणे प्रवृत्तिर्जायत इति लिङादिज्ञानं प्रवृत्तिसामग्रीजनकम् । सामग्री च चिकीर्षारूपा । तज्जनकं च, इष्टसाधनत्वबलवदनिष्टाननुबन्धित्वकृतिसाध्यत्वज्ञानम् । अन्यतमाभावे प्रवृत्त्यजननाद्विनिगमनाविरहाच्च लिङादेस्त्रितयेऽपि शक्तिरित्याचक्षते ।

वैयाकरणास्तु–स्वर्गकामाभिन्नकर्तृको विधिविषयो याग इति धात्वर्थमुख्यविशेष्यकं शाब्दबोधं वर्णयन्ति ।

तदेतत्परमगहनं सकलशास्त्रोपकारकं शास्त्ररत्नं दुर्विज्ञेयं, यद्यपि भाष्यवार्तिकप्रभृतिभिर्ग्रन्थैः सुविज्ञेयतामापादितं तथाऽपि तर्कपादापरपर्यायशाबरभाष्यप्रथमपादस्य, अतिनिगूढार्थत्वेन दुरवगाहतया यत्सत्यं विमनायितामिव जिज्ञासुकुलमुदीक्ष्य, प्रियप्रवरमहाभागैरचुलुकितमीमांसापाथोधिभिः बेङ्गलूरपुरस्थश्रीशृङ्गगिरिशंकरमठपाठशालाप्रधानाध्यापकैर्मातृतः पितृतश्च त्रिचतुरपूरुषमनुवृत्तमीमांसापाण्डित्यैः, अपरशिवावताररराजमन्नारगुडिराजुशास्त्रित्यागराजमखिराजसमासादितानवद्यविद्यैर्मीमांसाकण्ठीरवादिसुगृहीतोपाधिभिर्ब्रह्मश्रीवैद्यनाथशास्त्रिवर्यैर्निरमायि हृदयहारिणी यथार्थनाम्नी प्रभेव सुस्पष्टं प्रकाशयन्ती ललिता च सुप्रसन्ना प्रभाख्या व्याख्या, किं बहुना, इमानेव शास्त्रिपादानाश्रित्य सांप्रतं प्राच्यविद्यानास्थावहेऽपि काले भारतभुवि जीवति परमगभीरं मीमांसाशास्त्रमिति नैतद्वचोऽत्युक्तिकोटिमवगाहते ।

पुण्यपत्तनस्थसुप्रतिष्ठितशिक्षणप्रसारकमण्डल्या प्रचाल्यमानेन मीमांसाविद्यालयेनोपक्रम्यमाणोऽयं प्रशस्यतमस्तन्त्रवार्तिकसनाथीकृतशाबरभाष्यादिमहाप्रबन्धप्रकाशनरूपोऽध्यवसायः कस्य वा सचेतसश्चेतो न धिनुयात् । इति सर्वथाऽभिनन्दनार्हो विद्यालयप्रवर्तकाः ।

इदं पुनरत्रास्माल्याख्यानं न युक्तं मन्यामहे । यच्छाबरभाष्यस्यास्य, आनन्दाश्रममुद्रणालयव्यवस्थापकैः प्राच्यग्रन्थप्रकाशनप्रवणैर्निरवर्ति मुद्रणं तेन सुमहदुपकृतं पण्डितनिवहे ।

आस्ताम् । उपोद्घातेऽस्मिन्समासतोऽनुक्रान्तान्विषयान्निरीक्ष्य मीमांसाशास्त्रजिज्ञासुभिर्न विरन्तव्यम् । अपि तु संमुद्र्यमाणेऽस्मिन्सूत्रभाष्यप्रभावार्तिकसहिते ग्रन्थ एव सप्रपञ्चं प्रतिपादितान् विषयान् दर्शं दर्शं गाहं गाहं प्रमोदपूरे कृतार्थतां नीयतामात्मा ।

मीमांसाशास्त्रस्य विशेषतस्तन्त्रवार्तिकोपबृंहितशाबरभाष्यस्य धर्मविप्रतिपत्तिजटिलेऽस्मिन् दुराराध्ये कलिकाले समादरणीयतायां नाधिकमावेदनमावश्यकमुत्पश्यामः । तत्र मीमांसारसिका एव परमं प्रमाणमिति पल्लवितमिमं निबन्धमुपसंहरामः ।

महामहोपाध्यायः—हानगलकर इत्युपाह्व—विरूपाक्षशास्त्री ।



ॐ तत्सद्ब्रह्मणे नमः ।

सव्याख्यशावरभाष्यसमेतं

# श्रीमज्जैमिनिप्रणीतं मीमांसादर्शनम् ।

## अथातो धर्मजिज्ञासा ॥ १ ॥

( प्रतिज्ञासूत्रम् )—

भा०—लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि सति संभवे तदर्थान्येव

प्रभा— कल्पकतरुं प्रणमतां हृद्यालंकारनायकीदयितम् ।
ऐरावतेश्वराख्यं कुलदैवतमाश्रयामि सुरमुख्यम् ॥ १ ॥
श्रीसद्गुरून्संप्रणिपत्य सादरं तदीयकारुण्यलवावलम्बनः ।
करोम्यहं भाट्टमतेन टिप्पणीं प्रभाभिधां शावरभाष्यसन्मणेः ॥ २ ॥

इह खलु सकलपुरुषार्थानर्थसाधनीभूतधर्माधर्मतत्त्वपरिज्ञानाय परमकारुणिको भगवान् जैमिनिराचार्यो धर्ममीमांसाशास्त्रं चिकीर्षुः प्रारिप्सितस्यास्य शास्त्रस्य श्रोतृप्रवृत्तिसिद्धये विषयप्रयोजनसंबन्धाधिकारिरूपानुबन्धचतुष्टयं निर्णेतुमिदं प्रथमं सूत्रं प्रणिनाय— अथातो धर्मजिज्ञासा इति । उक्तं च वार्तिककारैः—

अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम् ।
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् । इति ॥
( श्लो० वा० १–१–१–११ )

अनेन च वार्तिकेन धर्मस्यैव विशेषरूपेणाज्ञातत्वेन विषयत्वं ज्ञातत्वेन च प्रयोजनत्वमुक्तं भवति । विषयप्रयोजनकथनादेव च शास्त्रप्रयोजनयोः साध्यसाधनभावरूपः संबन्धः, प्रयोजनकामोऽधिकारीति च सिद्धो भवति । तदत्रानेन सूत्रेणेत्थमधिकरणं प्रदर्शितं भवति । अधिकरणं नाम—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ।
प्रयोजनं संगतिश्च शास्त्रेऽधिकरणं स्मृतम् ॥

इत्यभियुक्तोक्त्या विषयसंशयपूर्वपक्षसिद्धान्तप्रयोजनसंगतिरूपाणां षण्णामवयवानां समुदायात्मकम् ।

सूत्रेष्वित्यत्रगन्तव्यम्; नाध्याहारादिभिरेषा परिकल्पनीयोऽर्थः परिभाषितव्यो वा । एवं वेदवाक्यान्येवैभिर्व्याख्यायन्ते/ इतरथा वेदवाक्यानि व्याख्येयानि स्वपदार्थाश्च व्याख्येया इति प्रयत्नगौरवं प्रसज्येत । तत्र लोकेऽयमथशब्दो वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः । न चेह किंचिद्वृत्तमुपलभ्यते; भवितव्यं तु तेन यस्मिन् सत्य-

---

अत्र विषय "स्वाध्यायोऽध्येतव्य" ( तै० आ०२–१५–१ ) इति विधिवाक्यम् । विषयत्वं च प्रकृताधिकरणधर्मीभूतसंशयविशेष्यत्वम् । संशयस्तु विमय विधि स्वर्गार्थं स्वाध्यायाध्ययन विधत्त, अतश्चाध्ययनमात्रेण स्वर्गफलनिष्पत्तेर्न धर्मजिज्ञासार्थं गुरुकुलेऽवस्थातव्यम्, किं तु 'अधीत्य स्नायात्' इति स्मृतिबलेनाध्ययनानन्तरमेव गुरुकुलात्समावर्तितव्यम् । अथवाऽक्षरादिग्रहणपरम्परोपजायमानवाक्यार्थज्ञानार्थमध्ययनं विधत्ते । ततस्तस्य विचारमन्तरेणासंभवादध्ययनविधिनैवार्थात् विचारोऽपि विहित इति गुरुकुल एव स्थित्वा वेदवाक्यार्थरूपधर्मोऽपि विचारयितव्य इति ।

पूर्वपक्षस्तु न स्वाध्यायाध्ययनस्यार्थज्ञानार्थत्वेन विधानं युज्यते । शास्त्रान्तराध्ययनदृष्टान्वयव्यतिरेकाभ्यामेवार्थज्ञानार्थत्वावगतेर्विधिवैफल्यापत्ते । नाप्यवघातादिविधिवदध्ययननियमार्थत्वम् । अवघातविधेर्दर्शपूर्णमासप्रकरणस्थत्वेन तन्नियमस्य तदपूर्वोपयोगसमवेऽप्यध्ययनविधेरनारभ्याधीतत्वेन श्रुत्याद्यभावाद्यज्ञाङ्गत्वानवगमेन तदपूर्वउपयोगासंभवाच्च । तस्मात्स्वर्गार्थमेव स्वाध्यायाध्ययनमित्यध्ययनमात्रादेवसमाप्तेऽध्ययनविधिवाक्यार्थे गुरुकुलात्समावर्तितव्यं न तु तत्रैव स्थित्वा वेदार्थो विचारयितव्यः प्रयोजनाभावादित्येव सूत्राद्बहिरेव पूर्वपक्षे प्राप्ते—

सिद्धान्तमाह भगवान्सूत्रकार 'अथातो धर्मजिज्ञासा' इति । तदेतत्सूत्रप्रदर्शितं सिद्धान्तमुपपादयितुं सूत्रघटकीभूताथशब्दार्थं निरूपयितुं चाऽऽरभते लोक इत्यादिना भगवान्भाष्यकार । अत्र—

> लोकइत्यादिभाष्यस्य षडर्थान्संप्रचक्षते ।
> भाष्यकारानुसारेण प्रयुक्तस्याऽऽदितः पृथक् ॥
> सर्वव्याख्यामुपालम्भं प्रत्याख्यानं तथाऽपरे ।
> परिसंख्यास्तुती केचिदथशब्दस्य दूषणम् ॥
> (श्लो० वा० अ० पा० अ० १–१–१–२६–२७)

ऽनन्तरं धर्मजिज्ञासाऽवकल्पते । तथा हि—प्रसिद्धपदार्थकः स कल्पितो भवति । तत्तु वेदाध्ययनम् । तस्मिन् हि सति साऽवकल्पते । नैतदेवम् । अन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा युक्ता प्रागपि च वेदाध्ययनात् ।

---

इति वार्तिकेन लोक इत्यादिभाष्यस्य सर्वव्याख्यादिरूपाः पक्षाः प्रदर्शिताः । तत्र सर्वव्याख्या—सर्वसूत्राणां साधारणी व्याख्या । उपालम्भः—भवदासादिभिः कृतस्य 'अथात' इति पदद्वयस्याऽऽनन्तर्यरूपैकार्थकत्वस्य निन्दा । प्रत्याख्यानम्—वेदवाक्यानामेव व्याख्याप्रयासः सफलः । उपेतव्यत्वात् । उपायभूतसूत्रव्याख्याप्रयासस्त्वफल इति तद्व्याख्यानिराकरणम् । परिसंख्या—वेदसूत्रार्थविरोधे सूत्राण्येवान्यथा नेयानीति सूत्रान्यथानयनम् । स्तुतिः—सूत्रकारस्य प्रसिद्धार्थकपदसूत्रोपदेशेन प्रशंसा । इति पञ्च पक्षा मतभेदेन भाष्यार्थतया भाष्ययोजनापुरःसरं वार्तिके प्रपञ्चिताः । पञ्चोऽर्थस्त्वथशब्दस्य दूषणमिति । अस्मिंश्च पक्ष एवं भाष्ययोजना । 'लोके येष्वर्थेषु' इत्यारभ्य 'न चेह किंचिद्वृत्तमुपलभ्यते' इत्यन्तो ग्रन्थोऽथशब्ददूषणपरः । 'भवितव्यं तु' इत्यादि 'साऽवकल्पते' इत्यन्तः समाधानपरः । यद्वा 'लोके' इत्यादिः[1] 'स कल्पितो भवति' इत्यन्तो दूषणपरः । 'तत्तु' इत्यादिः 'साऽवकल्पते' इत्यन्तः समाधानपरः । तत्र प्रथमकल्पे दूषणपरभाष्यस्यायमाशयः । यत्र श्रुतिसूत्रयोर्विरोधाभावस्तत्र सूत्रपदानि प्रसिद्धार्थकान्येवाङ्गीकरणीयानि न त्वध्याहारादिभिरर्थान्तरपराणि कल्पयितव्यानि । इतरथा वेदवाक्यानि सूत्रपदानि च व्याख्येयानीति प्रयत्नगौरवं प्रसज्येत । यत्र तु वेदविरोधः सूत्रस्य तत्राध्याहारादिनाऽन्यपरत्वपरिकल्पनं न दोषमावहतीति सूचयितुं भाष्ये 'सति संभवे' इत्युक्तम् ।

[1] अध्याहारादिभिरित्यत्राध्याहारो नाम—अश्रुतपदान्तरकल्पनम् । आदिपदेन विपरिणामादीनां संग्रहः । एतेषां चोदाहरणानि वार्तिक एव प्रपञ्चितानि तत्रैव द्रष्टव्यानि ।

एवं स्थिते सूत्रे प्रयुक्तोऽयमथशब्दो लोके वृत्तादनन्तरस्य वाचको दृष्टः । तादृशार्थपरित्यागकारणं च वेदविरोधादिकं नोपलभ्यते । आनन्तर्यार्थकत्वं च नैव युज्यते । आनन्तर्यप्रतियोगिनः पूर्ववृत्तस्य कस्याप्यनुपादानात् । अत इमं शब्दं कथं प्रयुक्तवानाचार्य इति ।

[2] भवितव्यं त्वित्यादिपरिहारभाष्यस्यायमाशयः । अथशब्दस्याऽऽनर्थक्येऽर्थान्तरे वा कल्प्यमाने प्रसिद्धिबाधापत्तेः, आनन्तर्यार्थकत्वे सिद्धे तद्बलेनैव यत्किंचित्पूर्ववृत्तं कल्प्यत इति 'भवितव्यं तु' इत्यादिना सामान्यतः परिहारमभि-

उच्यते—तादर्थ्ये तु धर्मजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यः । या वेदाध्ययनमन्तरेण न संभवति । कथम् । वेदवाक्यानामनेकविधो विचार इह वर्तिष्यते । अपि च नैव वयमिह वेदाध्ययनात्

---

धाय 'वृत्तु वेदाध्ययनम्' इत्यादिना विशेषत परिहारोऽभिधीयते । वेदाध्ययने कृत एव वेदार्थविचाररूपधर्मजिज्ञासाया उपपन्नतरत्वादिति । द्वितीयकल्पे तु यस्मिन्सत्येव पूर्ववृत्ते तदानन्तर्यं धर्मजिज्ञासायामुपपद्यते । अथ शब्दोऽपि प्रसिद्धार्थक प्रकल्पितो भवति । तादृशस्येहानुपलम्भात् । कथ प्रसिद्धार्थकोऽथशब्द इति दूषणपरग्रन्थस्याऽऽशय । समाधानपरग्रन्थस्य प्रथमकल्प इवाऽऽशयो ज्ञेय ।

ननु वेदार्थ एव धर्मे वेदवाक्यान्येव तत्प्रमाणत्वेनोत्तरत्र विचारयिष्यतीतीदानीमनिर्णयात् सूत्रे च धर्मपदमात्रश्रवणात् चैत्यवन्दनादीनामपि धर्मत्वसमवादन्यस्यापि बुद्धवाक्याध्ययनादेरनन्तरमपि धर्मजिज्ञासा युक्तेति वेदाध्ययनानन्तरमेव धर्मजिज्ञासा कर्तव्येति न सेत्स्यति । किं च हानोपादानार्थे जिज्ञासा तत प्रागेव कर्तव्या । अथ धर्मं जिज्ञासित्वा वेदार्थ एव धर्म इति च ज्ञात्वा पश्चाद्धर्मावबोधाय वेदोऽध्येय इति कथ धर्मजिज्ञासाया वेदाध्ययनानन्तर्यमित्यभिप्रायेण शङ्कते—नैतदेवमित्यादिना ।

अत्र प्रागपि चेति भाष्यम् । अपि च वेदाध्ययनात्प्रागिति भिन्नक्रम योजनीयम् । यद्वा वेदार्थ एव धर्म इत्यादि वक्ष्यमाणार्थनिर्णये सत्यपीय शङ्का । तदा च वेदमधीत्य ' अथातो धर्मजिज्ञासा ' इत्येव सूत्र पठनीयम् । अत्र वेदमधीत्यैवानन्तरं धर्मजिज्ञासा नानधीत्य । वेदमधीत्यानन्तरमेव धर्मजिज्ञासा नान्यत्कृत्वेत्यर्थद्वय प्रतिभाति । तदेव वाक्यमेदभियाऽन्यतरार्थे स्वीकर्तव्ये यदि याऽनन्तर धर्मजिज्ञासा इत्यनूद्य सा वेदमधीत्यैवेति विधीयते । तदा वेदमधीत्यान्यस्यापि स्नानादेरनन्तर सा भवितुमर्हतीति लभ्यते ।

यदि च वेदमधीत्य या जिज्ञासा इत्यनूद्य साऽनन्तरमेवेति विधीयते । तदा वेदाध्ययनात्प्रागपि धर्मजिज्ञासाऽऽपतन्ती न वारिता भवतीति कथ वेदाध्ययनानन्तरमेव धर्मजिज्ञासा सिध्यतीत्यभिप्रायेण शङ्कते भगवान्भाष्यकार —नैतदेवमित्यादिना ।

तादर्थ्ये त्वित्यादि वर्तिष्यत इत्यन्तस्य परिहारभाष्यस्यायमाशय । वक्ष्यमाणार्थनिर्णयेन या शङ्का सा वेदवाक्यानामनेकविधविचारस्य वर्तिष्यमाणत्वकथनेन निरस्ता भवति । या च हानोपादानाभ्यामित्यादिना शङ्का साऽप्यनेकविधवेदवाक्यविचारस्या-

पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्मः परस्ताच्चाऽऽनन्तर्यम् । नह्येतदेकं वाक्यं पुरस्ताच्च वेदाध्ययनात् धर्मजिज्ञासां प्रतिषेधिष्यति परस्ताच्चाऽऽनन्तर्यं प्रकरिष्यति । भिद्येत हि तथा वाक्यम् । अन्या हि वचनव्यक्तिरस्य, पुरस्ताद्वेदाध्ययनाद्धर्मजिज्ञासां प्रतिषेधति । अन्या च परस्तादानन्तर्य्यमुपदिशति । "वेदानधीत्य"—इत्येकस्यां विधीयतेऽनूद्याऽऽनन्तर्यं । विपरीतमन्यस्यामर्थैकत्वाच्चैकवाक्यतां वक्ष्यति । किं त्वधीते वेदे द्वयमापतति । गुरुकुलाच्च समावर्तितव्यं, वेदवाक्यानि च विचारयितव्यानि । तत्र 'गुरुकुलान्मा समावर्त्तिष्ट' कथं नु वेदवाक्यानि विचारयेदित्येवमर्थोऽयमुपदेशः । यद्येवं, न तर्हि वेदाध्ययनं पूर्वं गम्यते । एवं हि समामनन्ति 'वेदमधीत्य स्नायात्' इति । इह च वेदमधीत्य स्नास्यन् धर्मं जिज्ञासमान इममाम्नायमतिक्रामेत् । न चाऽऽम्नायो नामातिक्र-

यने प्रवृत्तिरिति शङ्कनीयम् । हितकारिपित्रादिभिः प्रवर्तितानां प्रवृत्तिसंभवात् । यदपि द्वितीयकल्प एकस्मिन्वाक्ये वचोव्यक्तिद्वयासंभवादन्यतरग्रहणेऽन्यतरस्याविधानमित्यादि शङ्कितम् । तत्राऽऽनन्तर्यविधिपक्षस्यैवाऽऽश्रयणात् । अन्यस्यापि इति शङ्काया नावकाशः । यत्त्वस्मिन्पक्षेऽधीत्येत्यस्याविधानात् प्रागपीति चोद्यं तस्यापि वेदवाक्यविचारस्यानधीतवेदेन कर्तुमशक्यत्वात् तदविधानेऽपि सामर्थ्यादेवाध्ययनस्य पूर्वभावित्वसिद्धेर्नावकाशः । किं च प्रदर्शितयोर्वचोव्यक्त्योर्मध्ये नैकोऽपि श्रौतोऽर्थो निर्णीयते । येन पूर्वोक्तशङ्काया अवकाशः स्यादित्याह—अपि चेत्यादिना वक्ष्यतीत्यन्तेन । किं तर्हि विधीयत इत्यपेक्षायामाह—किंत्वित्यादिना । अध्ययनानन्तरं समापततोर्गुरुकुलवासनिवृत्तिवेदवाक्यविचारयोर्मध्ये वेदवाक्यविचारेऽथशब्दोक्तानन्तर्यस्य सिद्धत्वेनादृष्टार्थत्वापत्त्या वेदवाक्यविचाराविरोधिगुरुकुलवासावसानरूपस्नाननिवृत्तिरेव लक्षणयाऽथशब्देनोपदिश्यत इत्यर्थः । अत्र शङ्कते यद्येवमित्यादिना अतिक्रामितव्य इत्यन्तेन । अस्यायमाशयः । वेदमधीत्य स्नायादिति स्मृत्या स्नाने वेदाध्ययनानन्तर्यविधानात्तस्य च बाधनिरूत्वेन प्रबलत्वान्न्यायप्राप्तविचार एव दुर्बलो बाधनीय इति । यद्येवं तर्हीति पूर्वोक्तरीत्या स्नाननिवृत्तिलक्षणाङ्गीकार इत्यर्थः । वेदाध्ययनं पूर्वं न गम्यत इति वेदाध्ययने स्नानपूर्वकालता प्रतीयमाना बाध्येतेत्यर्थः । एतदेवोपपादयति एवं हीत्यादिना ।

---

1 म० स्मृ० ३–२ । २ बौधायनगृह्यसूत्रे ६–१ । स्नास्यन् इति हि आपस्तम्बीयसूत्रे । अत्र त्विदमर्थतो गृहीतम् ।

सन्तमनर्थकमवकल्पयेम। दृष्टो हि तस्यार्थः कर्मावबोधन नाम। न च तस्याध्ययनमात्रात्तत्रभवन्तो याज्ञिकाः फल समामनन्ति। यदपि च समामनन्तीव, तत्रापि 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' (जै० सू० ४-३-१) इत्यर्थवादता वक्ष्यति। न च 'अधीतवेदस्य स्नानानन्तर्यमेतद्विधीयते'। नयत्राऽऽनन्तर्यस्य वक्ता कश्चिच्छब्दोऽस्ति। पूर्वकालताया क्त्वा स्मर्यते नाऽऽनन्तर्ये। दृष्टार्थता वाऽध्ययनस्याऽऽनन्तर्ये व्याहन्येत। समावर्तेत तदुच्यते इत्यादिना। स्नानमेवाऽऽदस्य दौर्बल्यमाश्रयणीयम्। अन्यथा समन्तर्यत वेदस्यार्थावबोधार्थतयाऽध्ययनोपात्तस्य तदभावानित्वापत्त्याऽऽनर्थक्यापत्ते। स्वाध्यायविधिना हि दृष्टसमवेऽदृष्टकल्पनाया अन्याय्यत्वादिति न्यायादर्थावबोधाव्येनत्वेन विहितो वेदो विचारमन्तरा तादर्थ्यमभवद्विचारमाक्षिप्य तद्विरुद्ध स्नान स्मार्तं बाधते। तदिदमुच्यते वेदमर्थवन्तं सन्तमित्यादिना। न च तस्याध्ययनमात्रादिति। तस्य वेदस्येत्यर्थ। तथा च वेदाध्ययनमात्रस्य न क्वचिदपि स्वर्गादिरूप फल समाम्नायते।

यदपि क्वचित् तस्य फलाम्नानमिव दृश्यते। यथा यं यं क्रतुमधीते तेन तेनास्येष्टं भवति (तै०आ०२।१५) इति। तदपि द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् इति चतुर्थेतृतीयाद्ये पर्णमय्यधिकरणे अर्थवादता वक्ष्यति। अस्य च सूत्रस्यायमर्थ। द्रव्याणि च संस्काराश्च कर्माणि च तेष्विति विग्रह। द्रव्यम्-'यस्य पर्णमयी जुहूर्भवति' इत्यादिवाक्यविहितपर्णतादिरूपम्। संस्कार—'यदाङ्क्ते' इत्यादि ज्योतिष्टोमप्रकरणपठितवाक्यविहिताञ्जनादिरूप। कर्मेषद संस्कारकर्मेण पृथगुपादानादारादुपकारकत्वप्रयाजादिकर्मपरम्। तेषु फलश्रुति। द्रव्यविषये तावत् 'न स पापं श्लोकं शृणोति' इति। संस्कारविषये 'चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति। कर्मणि च 'वर्म वा एतद्यज्ञस्य क्रियते' इति। पर्णताया वाक्येन क्रत्वव्यभिचारिजुहूपस्थापितदर्शपूर्णमासरूपप्रकृतिक्रत्वर्थत्वात् संस्कारस्य च ज्योतिष्टोमादिप्रकरणेन प्रकृतक्रतुफलाधीनयोग्यतासिद्धिद्वारा क्रत्वर्थत्वात्, प्रयाजादेश्च दर्शपूर्णमासप्रकरणेन तदर्थत्वावगमात् परार्थत्वेन न तेषां फलाकाङ्क्षा समस्तीति फलश्रुतिरर्थवाद स्यात् विधीयमानद्रव्यादिस्तावकमात्रस्यादिति। एतावता विनारम्य स्मार्तस्नानेन विरोधमभ्युपगम्य श्रौतस्याद्विचारस्य स्नानबाधकत्वमभिहितम्। प्रकृते तु विरोध एव नास्तीत्याह—

---

१ समानकर्तृकया पूर्वकाले। अ० पाणिनि ३-४-२१।

लक्षणया त्वेषोऽर्थः स्यात्, न वा इदं स्नानमदृष्टाय

किंतु लक्षणयाऽस्नानादिनियमस्य पर्यवसानं वेदाध्ययनसमकाल-

माहुः, 'वेदमधीत्य स्नायात्' 'गुरुकुलान्मा समावर्तिष्ट'—इत्य

दृष्टार्थतापरिहारायैव।

तस्माद्वेदाध्ययनमेव पूर्वमभिनिर्वर्त्यानन्तरं धर्मो जिज्ञासितव्य

---

'न चाधीतवेदस्य'—इत्यादिना न आनन्तर्ये इत्यन्तेन।

वेदमधीत्य स्नायादित्यत्र ल्यपः समानकर्तृकयोः पूर्वकाले (पा० सू० ३-४-२१) इति स्मृत्या उत्तरकालत्वमात्रमुक्तम्। तस्य चासति बाधकेऽव्यवहितोत्तरकालत्व-रूपत्वेऽपि सति वेदविरोधरूपे बाधक उत्तरत्वमात्राश्रयणाद्वेदाध्ययनानन्तरं धर्मे जिज्ञा-सित्वाऽनन्तरं स्नानकरणेऽपि न स्मृतिविरोध इत्याशयः

दृष्टार्थता वाऽध्ययनस्याऽऽनन्तर्ये व्याहन्येत लक्षणया त्वेषोऽर्थः स्यात् इति पूर्वभाष्ये क्त्वाप्रत्ययस्याऽऽनन्तर्यं न वाच्यमित्युक्तम्। यद्यप्यानन्तर्यं वाच्यं भवति तथापि प्रकृते शक्यार्थपरिग्रहेऽध्ययनस्य दृष्टार्थता भज्येतेति तदविरोधाय प्रयाजशेषाभिघारणन्यायेनोत्तरकालतामात्रमेव लक्षणया ग्रहीतव्यमिति भावः

वेदमधीत्य स्नायात् इत्यत्र स्नानशब्देनाऽऽप्लवनमात्रमुच्यते। तच्च ज्योतिष्टोमादि-यत् फलार्थं दीक्षितस्नानवद्वा वटुसंस्कारार्थं विधीयते। न चैतादृशं वेदाध्ययनानन्तरमुप-दिश्यमानमपि विचारं विरुणद्धीत्येवं स्मृतिविरोधाभावशङ्कायामाह न चे त्यादिना आहुरित्यन्तेन। अयमाशयः—वेदमधीत्य स्नायादित्ययं विधिर्ब्रह्मचारिधर्मस्यास्नाना-दिनियमस्यानिर्दिष्टावधेरवधिमपेक्षमाणस्याऽऽकाङ्क्षितविधिन्यायेनावधिमात्रसमर्पको न स्वाप्लवनमात्रविधायकः। अनपेक्षितत्वाददृष्टकल्पनापत्तेश्च। अतः स्नानशब्देन स्ववि-रुद्धस्यास्नाननियमस्य तत्सहचारिणां चान्येषां निवृत्तिरेव लक्ष्यते। तथा च वेद-मधीत्य स्नायात् वेदाध्ययनानन्तरमस्नानादिनियमं वर्जयेदित्यध्ययनसमाप्तिरेवास्ना-नादिनियमजातस्यावधिरित्यनेनोपादिश्यत इति। न च अधीत्य स्नायादिति स्मृत्यविरोधार्थमध्ययनानन्तरं गुरुकुलात्परावृत्त्य पुनर्गुरुकुलं प्रविश्य धर्मे जिज्ञास्य-मानेऽपि न वेदस्याऽऽनर्थक्यं संभवतीत्येवमेव क्रियतामिति वाच्यम्। यत एवंकर-णेऽपि न स्मृतिविरोधः परिहृतो भवति। तथा हि—एतत्स्मृत्यनुरोधेनाध्ययनानन्तरं स्नाने क्रियमाणेऽनन्तरं "स्नात्वा भार्यामुपेयात्" इति स्मृत्या दारपरिग्रहः प्राप्नोति। अनन्तरं च कृष्णकेशोऽग्नीनादधीत इत्यादिनाऽऽधानादि। तदवश्यं विचा-रसिद्ध्यर्थं यस्य कस्य चिद्बाधे कर्तव्येऽध्ययनान्तरमुपनिपतितो विचारस्तत्कालवृत्तिस्ना-नमेव बाधत इति।

इत्यथशब्दस्य सामर्थ्यम् । न च ब्रूमोऽन्यस्य कर्मणोऽनन्तरं धर्म-जिज्ञासा न कर्तव्येति । किं तु वेदमधीत्य त्वरितेन न स्नातव्यमनन्तरं धर्मो जिज्ञासितव्य इत्यथशब्दस्यार्थः ॥

अतःशब्दो वृत्तस्यापदेशको हेत्वर्थः । यथा क्षेमसुभिक्षोऽयमतोऽहमस्मिन् देशे प्रतिवसामीति । एवमधीतो वेदो धर्मजिज्ञासायां हेतुः कृतः । अनन्तरं धर्मो जिज्ञासितव्य इति अतःशब्दस्य सामर्थ्यम् । धर्माय हि वेदवाक्यानि विचारयितुमनधीतवेदो न शक्नुयात् । अत एतस्मात्कारणादनन्तरं धर्मं जिज्ञासितुमिच्छेदित्यतःशब्दस्यार्थः ॥

---

एतावता स्मार्तस्य क्रमस्य स्नानपदार्थसामान्ये सकलब्रह्मचारिधर्मनिवृत्तिरूपे बाधोऽभिहितः । इदानीं यस्यैव गुरुकुलवासनिवृत्तिरूपस्य स्नानस्य विचारविरोधित्वं तन्निष्ठक्रमस्यैव बाधनं न त्वविरोधिमधुमांसभक्षणवर्जनादिनिवृत्तिनिष्ठानन्तर्यस्यापि । अदृष्टार्थत्वप्रसङ्गादित्याह वेदमधीत्य स्नायादित्यादिना परिहारायैव इत्यन्तेन । वेदमधीत्य स्नायादित्यस्यार्थः—गुरुकुलान्मा समावर्तिष्टैवेति । गुरुकुलवासव्यतिरिक्तसकलब्रह्मचारिधर्मान्वर्जयेदिति भावः । तथा चोक्तं वार्तिके ।

> स्नानोपलक्षिता चात्र निवृत्तिर्गुरुवेश्मनः ।
> विरोधित्वेन बाध्येत न तु मध्वादिभक्षणम् ॥
> तस्माद्गुरुकुले तिष्ठन्मधुमांसाद्यवर्जयन् ।
> जिज्ञासेताविरुद्धत्वाद्धर्ममित्यवगम्यते ॥ इति ।
>
> ( श्लो० वा० १–१–१००–१०१ )

अथशब्दार्थमुपसंहरति तस्मादिति । धर्मजिज्ञासातः पूर्वं वेदाध्ययनमेवाभिनिर्वर्त्यं न तु गुरुकुलवासनिवृत्तिमपीत्यर्थः ।

अतःशब्दार्थं निरूपयति—अतःशब्द इत्यादिना । अतःशब्दो जिज्ञासायामध्ययनस्य हेतुत्वार्थकः इत्यर्थः । न चाध्ययनानन्तर्याभिधायिनाऽथशब्देनैव दृष्टार्थत्वानुरोधेनाध्ययनस्य जिज्ञासाहेतुता सिद्धेति किं पुनरतःशब्देनेति वाच्यम् । यतोऽथशब्दमात्रेणाधीतवेदः पुरुषो जिज्ञासाया योग्यो भवतीत्येतावत्सिध्यति न त्वध्ययनविधिविहिताध्ययनमेव हेतुरिति । तथा हि । अतःशब्दाभावे हि स्वर्गकामो यजेतेत्यादिक्रतुविधयः क्रत्वनुष्ठानसिध्यर्थं विचारमपेक्षमाणास्तत्सिध्यर्थविचारमपि सर्ववर्णसाधारण्येनाऽऽक्षिपेयुरिति शूद्रा अपि धर्मम्वधिकुर्युरित्यापतति । सति त्वतःशब्दे अथ—वेदाध्ययनानन्तरम् । अतोऽधीतवेदत्वात्कारणाद्वेदार्थभूतधर्मजिज्ञासा

धर्माय जिज्ञासा धर्मजिज्ञासा । सा हि तस्य ज्ञातुमिच्छा । स कथं जिज्ञासितव्यः । को धर्मः कथंलक्षणः कान्यस्य साधनानि कानि साधनाभासानि किंपरश्चेति । तत्र को धर्मः कथंलक्षण इत्येकेनैव सूत्रेण व्याख्यातम्—चोदनालक्षणोऽर्थो धर्म इति । कान्यस्य साधनानि कानि साधनाभासानि किंपरश्चेति शेषलक्षणेन व्याख्यातम् । क पुरुषपरत्वं क वा पुरुषो गुणभूत इत्येतासां प्रतिज्ञानां पिण्डस्यैतत्सूत्रं 'अथातो धर्मजिज्ञासा' इति ।

---

कर्तव्येति लभ्यते । तथा च 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिनाऽर्थज्ञानोद्देशेन त्रयाणामेव प्रकृतानां वर्णानामुपनयनसंस्कृतानामध्ययनं विचारश्च विधीयत इति त्रैवर्णिकेष्वेव विद्वत्सु लब्धेषु तानेव लब्ध्वा क्रतुविषयः कृतार्थो भवन्तीति न सर्ववर्णसाधारण्येन विद्यां विचारं च स्वातन्त्र्येण प्रयुञ्जत इति शूद्राधिकारव्यावृत्तिः सिध्यतीति प्रयोजनवानतःशब्दः । धर्मं जिज्ञासितुमिच्छेदिति । धर्मज्ञानेच्छा मे भूयादित्याकारकेच्छाश्रयो भूयादित्यर्थः । न हीच्छाविषयकेच्छा लोकेऽप्रसिद्धा । मन्दाग्नीनां भोजनेच्छारहितानां भोजनेच्छायामिच्छादर्शनात् । धर्माय जिज्ञासेति । नेदं विग्रहदर्शनपरम् । प्रकृतिविकारभावस्थल एव चतुर्थीसमासस्येष्टत्वात्प्रकृते तदभावात् । किं तु 'सा हि तस्य ज्ञातुमिच्छा' इत्येव विग्रहप्रदर्शनपरं भाष्यम् । 'धर्माय' इति तु तादर्थ्यरूपषष्ठ्यर्थविशेषग्रहणसूचनपरम् । सकलस्यापि वक्ष्यमाणशास्त्रार्थस्यास्यामेव प्रतिज्ञायामन्तर्भावं दर्शयति 'स कथं जिज्ञासितव्यः' इत्यादिना । तत्र 'को धर्मः कथंलक्षणः' इति भाष्यावयवाभ्यां धर्मस्वरूपविषयस्तल्लक्षणविषयश्च विचारः प्रतिज्ञातो भवति । 'कान्यस्य साधनानि' इति च सिद्धान्त्यभिमतसाधनप्रदर्शनपरम् । 'साधनाभासानि' इति च पूर्वपक्ष्यभिमतसाधनप्रदर्शनपरम् । 'किंपरश्च' इति च धर्मफलप्रदर्शनपरम् । एतेषां प्रतिज्ञातानां व्याख्याप्रदेशं प्रदर्शयति भगवान्भाष्यकारः 'तत्र को धर्मः' इत्यादिना । तत्र 'को धर्मः कथंलक्षणः' इति धर्मप्रमाणतत्स्वरूपे चोदनासूत्रेण सूत्रिते प्रथमद्वितीयाध्यायाभ्यां विस्तरेण प्रतिपाद्येते । 'कान्यस्य साधनानि' इत्यादि चावशिष्टैरध्यायैः प्रतिपाद्यत इत्यर्थः । 'शेषलक्षणेन' इत्यत्र शेषं च तल्लक्षणं चेति विग्रहः । अध्यायानां बहुत्वेऽप्येकवचनं लक्षणत्वरूपसामान्याभिप्रायकं ज्ञेयम् । 'किंपरश्च' इत्यस्य विवरणम् 'क पुरुषपरत्वं क वा पुरुषो गुणभूतः' इति । कुत्र धर्मस्य फलार्थत्वं कुत्र वा तदभाव इत्यर्थः ।

१ पू. मी. १।१।२।

धर्मः प्रसिद्धो वा स्यादप्रसिद्धो वा ? स चेत्प्रसिद्धो न जिज्ञासितव्यः । अथाप्रसिद्धो नतराम् । तदेतदनर्थकं धर्मजिज्ञासाप्रकरणम् । अथवाऽर्थवत् । धर्मं प्रति हि विप्रतिपन्ना बहुविदः केचिदन्यं धर्ममाहुः ।

सूत्रकारेण 'अथातो धर्मजिज्ञासा' इति सूत्रेण धर्मोऽस्य शास्त्रस्य प्रतिपाद्यमानतया प्रयोजनमिति वदता शास्त्रस्य प्रयोजनेन सह प्रतिपाद्यप्रतिपादकभावः संबन्धः शास्त्रावतारहेतुभूत इति सूचितम् ।

अत एवोक्तं वार्तिकेऽपि—

" शास्त्रं प्रयोजनं चैव संबन्धस्याऽऽश्रयावुभौ ।
तदुक्त्यन्तर्गतस्तस्माद्भिन्नो नोक्तः प्रयोजनात् " इति ॥
( श्लो० वा० १–१–१–१८ )

स चायं संबन्धो न शास्त्रारम्भहेतुः संभवति । धर्मस्याजिज्ञास्यत्वात् । न ह्यजिज्ञासितप्रतिपादकतया शास्त्रारम्भः संभवतीत्यभिप्रायेण शङ्कते 'धर्मः प्रसिद्धो वा स्यादि'त्यादिना धर्मजिज्ञासाप्रकरणमित्यन्तेन । धर्मस्य प्रसिद्धत्वेऽयमेव धर्म इति निर्णीतत्वाज्जिज्ञासा नोदियात् । अप्रसिद्धत्वे च ज्ञानेच्छयोरुभयोरपि तत्रासंभवान्नतरामित्यतिशयोपपत्तिः । तथा च जिज्ञासितार्थप्रतिपादकं धर्मविचारात्मकं शास्त्रं न भवतीति निरुक्तसंबन्धो न शास्त्रावतारहेतुः संभवतीति भावः । एवं शङ्कायां परिहारमाह— 'अथवाऽर्थवत्' इत्यादिना । अयमाशय.—धर्मविषये बहुमार्गविदां विप्रतिपत्तिदर्शनान्निःश्रेयसरूपप्रयोजनवत्त्वस्य च सत्त्वात्संदिग्धत्वसप्रयोजनत्वरूपं कारणं वर्तत इति कार्येणापि जिज्ञास्यत्वेन भवितव्यम् । अतश्च जिज्ञासितार्थप्रतिपादकत्वसंभवात्प्रतिपाद्यप्रतिपादकभावसंबन्धस्य शास्त्रारम्भहेतुत्वं संभवत्येवेति धर्ममीमांसाशास्त्रं धर्मनिर्णयप्रयोजकमारम्भणीयमिति । एतावता च भाष्येणैतत्सूत्रसूचितः सिद्धान्त एवं प्रदर्शितो भवति । तथाहि—अध्ययनविधिना न स्वर्गाद्यर्थमध्ययनं विधीयते । "लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना" इति न्यायेन दृष्टफलसंभवेऽदृष्टकल्पनस्यान्याय्यत्वात् । किं त्वर्थज्ञानोद्देशेनैवाध्ययनं विधीयते । न च तस्य प्राप्तत्वाद्विध्यानर्थक्यमिति शङ्क्यम् । अध्ययनेनैवार्थज्ञानं संपादनीयमिति नियमार्थत्वेन सार्थक्यात् । न च नियमस्य ज्ञानस्वरूपे क्रत्वपूर्वे वोपयोगासंभवेनाऽऽनर्थक्यमिति वाच्यम् । यतो नोभयथाऽपि ब्रूमः । किं तु योऽयमग्निहोत्रादिष्वधीतवेदानां त्रैवर्णिकानामेवाधिकारो नानधीतवेदानां शूद्राणामित्यधिकारनियमः। सप्रयोजनमध्ययनविधेः । तथाहि— असत्यध्ययनविधावग्निहोत्रादिशास्त्राणि विद्वत्समलभमानान्यविद्वांसमेवाधिकृत्य विधानान्तरेण चानुष्ठानासंभवाद्विद्यामाक्षिपन्त्यविशेषाच्चतुरो वर्णानधिकुर्युः । सति त्वध्ययनविधौ त्रैवर्णिकानामेव विदुषामधिकारो भवति

केचिदन्यम् । सोऽयमविचार्य प्रवर्तमानः कंचिदेवोपाददानो विहन्येत । अनर्थं च ऋच्छेत् । तस्माद्धर्मो जिज्ञासितव्य इति ॥ १ ॥

स हि निःश्रेयसेन पुरुषं संयुनक्तीति प्रतिजानीमहे । तदभिधीयते—

चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

---

न कुर्यादिति । तथा हि—" वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम् " इति द्वितीयानिर्देशादुपनयनसंस्कृतास्त्रैवर्णिकाः किमस्माभिः कर्तव्यमित्यपेक्षन्ते । तत्संनिधौ चानिर्दिष्टकर्तृकमध्ययनं कर्तारमपेक्षते । तत्रापेक्षासंनिधियोग्यत्वैरेवं विज्ञायते त्रैवर्णिकैरेवोपनीतैरक्षरग्रहणेनाध्ययनादिपरम्परयार्थज्ञानं कर्तव्यमिति । एवं च फलवदध्ययनकर्तृभूतमाणवकसंस्कारत्वादुपनयनमध्ययनाङ्गम् । अध्ययनमपि च दृष्टार्थज्ञानार्थम् । अर्थज्ञानं त्वनुष्ठानोपयिकत्वात्प्रसिद्धफलकमेवेति सर्वेषां फलवत्त्वम् । एवं च त्रैवर्णिकेषु विद्वत्सु लब्धेषु नाग्निहोत्रादिविषयश्चतुर्थवर्णस्य विद्यामाक्षिपन्ति किं तु त्रैवर्णिकानेव विदुषोऽधिकुर्वन्ति । सोऽयमधिकारनियमः षष्ठेऽपशूद्राधिकरणे वक्ष्यमाणोऽध्ययनविधिप्रसादलभ्य एवेति फलवानेवाध्ययनविधिः । तेनार्थज्ञानावसानमध्ययनमध्ययनविधिना विधीयत इति विचारमन्तरा तदनुपपत्तेरध्ययनविधिरेव विचारमाक्षिपंस्तद्विरुद्धं स्मार्तं स्नानं बाधत इति सिद्धमध्ययनानन्तरं गुरुकुल एव स्थित्वा धर्माधर्मावपि विचार्य स्नातव्यमिति । संगतिस्तु सर्वत्राधिकरणेषु चतुर्विधा विज्ञेया । शास्त्रसंगतिरध्यायसंगतिः पादसंगतिरधिकरणसंगतिश्चेति । तत्रास्यापि सूत्रस्य शास्त्रस्यैव सतः स्वस्वामिकशास्त्रारम्भसिद्धिहेतुत्वमपि । यथा स्वाध्यायविधेरितराध्ययनवत्स्वाध्ययनप्रयोजकत्वं तथा प्रकृतेऽपि संभवतीत्यस्याधिकरणस्य शास्त्रप्रतिपाद्यार्थप्रतिपादकत्वरूपा शास्त्रसंगतिः सुलभा । शास्त्रप्रतिपाद्यश्चार्थो धर्मः । प्रकृते चार्थज्ञानोद्देश्यता यत्नात्मकप्रतिपादनाद्धर्माधर्मप्रमाणनिरूपणपरप्रथमाध्यायसंगतिः । एवं विधिप्रामाण्यनिरूपणपरपादसंगतिरपि सुलभा । अधिकरणसंगतिस्त्वाद्याधिकरणत्वेन नापेक्ष्यते । शास्त्रारम्भहेतुभूतविषयप्रयोजनादिरूपानुबन्धचतुष्टयनिर्णायकत्वादस्याधिकरणस्य शास्त्रादावुपोद्घातरूपा संगतिः । पूर्वपक्षे प्रयोजनं विचारं विना यथाकथंचित्संपादितार्थज्ञानेन कर्मानुष्ठानेऽपि फलसिद्धिः । सिद्धान्ते तु विचारपूर्वकज्ञानादेवानुष्ठितात्फलसिद्धिरिति । इति धर्मजिज्ञासाधिकरणम् ॥ १ ॥

एवं समर्थितारम्भं शास्त्रमारभते—चोदनालक्षणोऽर्थो धर्म इति । अत्र पूर्वाधिकरणे

चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः। आचार्यचोदितः करोमीति हि दृश्यते। लक्ष्यते येन तल्लक्षणम्। धूमो लक्षणमग्नेरिति हि वदन्ति।

---

कर्तव्यत्वेन प्रतिज्ञातो धर्मविचारो विषयः। स कर्तव्यो न वेति संशयः। धर्मेऽलौकिके लक्षणप्रमाणयोरसम्भवात्तदविषाणवत्तद्विचारो न कर्तव्य इति पूर्वः पक्षः। सिद्धान्ते धर्मे लक्षणप्रमाणयोः प्रतिपादनाद्धर्मविचारात्मकशास्त्रसंगतिः। चोदनायाः धर्मे प्रामाण्यनिरूपणाच्च पादाध्यायसंगती स्पष्टे। "आक्षेपिकी त्वनन्तरा" एवं पूर्वपक्षे प्राप्ते सिद्धान्तमाह—चोदनालक्षणोऽर्थो धर्म इति सूत्रकारः। सूत्रस्य चायमर्थः—योऽयं निष्प्रमाणकप्रत्यक्षादिप्रमाणकचोदनाप्रमाणकत्वादीनां विप्रतिपत्तिविशेषाणां विषयभूतः साधारणात्मा धर्मपदार्थः स चोदनालक्षण इति। चोदनैव लक्षणं प्रमाणं यस्य चोदनालक्षणमेव यस्येति द्वेधा विग्रहो ज्ञेयः। तत्र च प्रथमविग्रहेण चोदनाव्यतिरिक्तस्य प्रत्यक्षादेर्धर्मे प्रामाण्यं व्यावर्त्यते। द्वितीयेन तु चोदनाया अप्रामाण्यशङ्का व्यावर्त्यते। एवं च चोदनाप्रमाणकत्वरूपलक्षणस्य चोदनारूपप्रमाणस्य च सम्भवाद्धर्मविचारः कर्तव्य इत्येव सूत्रप्रतिपादितं सिद्धान्तं प्रतिपादयितुं सूत्रघटकीभूतचोदनाशब्दार्थं निरूपयति चोदनेतीत्यादिना भाष्यकारः। क्रियायाः प्रवर्तकं वचनमिति। क्रियायाः यत्किंचिदनिर्दिष्टयत्नाश्रयागादिरूपायाः। प्रवर्तकं प्रवृत्त्यनुकूलव्यापाररूपप्रवर्तनाबोधकलिङादिप्रत्ययघटितं वचनं "यजेत स्वर्गकामः" इत्यादिरूपं वाक्यम्। एवं चोदनापदार्थः सिद्धः। तथा चोक्तं वार्तिके—

> " क्रियायामपेक्षिनः पूर्णः समर्थः प्रत्ययो विधौ।
> तेन प्रवर्तकं वाक्यं शास्त्रे-ऽस्मिंश्चोदनोच्यते॥ इति।
>
> (श्लो० वा० १।१।२।३)

किं केन कथमित्यपेक्षिते साध्यसाधनेतिकर्तव्यताशे पूर्णं समर्थं अर्थे लिङादिर्विधौ पुरुषप्रवर्तने समर्थो भवति। तद्घटकं वाक्यमिति प्रवर्तकं वाक्यमेव चोदनेत्युच्यत इत्यर्थः। चोदनापदस्य निरुक्तार्थकत्वे लौकिकव्यवहारं प्रमाणयति—आचार्यचोदित इति। आचार्यप्रयुक्तप्रवर्तनाबोधकलिङादिघटितवाक्यप्रवर्तित इत्यर्थः। गामानयेत्याचार्यप्रयुक्तवाक्यश्रवणानन्तरं मत्प्रवर्तनाज्ञानं गवानयनेऽयं मां प्रवर्तयतीत्याकारकं तदनन्तरं च गवानयनं मदिष्टसाधनमित्याकारकं ज्ञानं तदाश्रयोऽहमिति भावः। लक्षणशब्दार्थमाह—लक्ष्यत इत्यादिना। ज्ञानजनकमित्यर्थः। यथा धूमोऽग्नेर्लक्षणम्। ज्ञानजनकमित्यर्थः।

तया यो लक्ष्यते सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्तीति प्रतिजानीमहे। चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुं नान्यत्किंचन, नेन्द्रियम् ।

नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना यथा यत्किंचन लौकिकं वचनं नद्यास्तीरे फलानि सन्तीति । तत्तथ्यमपि भवति वितथमपि भवतीति ।

---

तया यो लक्ष्यत इति । चोदनाजन्यप्रमाविषयः पुरुषनिःश्रेयसहेतुभूतश्च यः स धर्म इति प्रतिज्ञायत इति भावः । संभावितो हि प्रतिज्ञातोऽर्थो हेतुना साधयितुं शक्यते । शब्दस्य च नित्यं प्रमाणान्तरपरतन्त्रस्य स्वातन्त्र्येण प्रामाण्यं प्रत्यक्षादेश्च स्वतन्त्रस्याप्रामाण्यमिति चोदनैव प्रमाणमेवेत्यनेन प्रतिज्ञातम् । तदिदमवधारणद्वयमसंभावितार्थं सयुक्तिसाकाङ्क्षमिति मन्वानः संभावनापदलाभार्थं प्रतिज्ञाद्वयेऽपि युक्तिलेशं प्रदर्शयति—चोदना हीत्यादिना, इन्द्रियमित्यन्तेन । अत्र चोदनाशब्दः शब्दसामान्यपरः न तु पूर्वोक्तविधायकवाक्यपरः । तस्य भूतादिविषयकत्वासंभवात् । प्रत्यक्षादेः प्रामाण्यनिरसनपूर्वकं शब्दसामान्यस्य प्रामाण्यप्रसाधनमन्तरा शब्दविशेषभूतचोदनायाः प्रामाण्यप्रदर्शनस्यानवसरत्वाच्च । तथा च शब्दसामान्यस्यायं स्वभावः । यदिन्द्रियाद्यगम्यभूतभविष्यदाद्यर्थबोधनम् । अत एवोक्तं वार्तिके—

अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि ॥ इति ।

[ श्लो० वा० १ । १ । २ । ६ ]

इन्द्रियादीनां तु नैवंविधेषु भूतादिषु सामर्थ्यं विद्यते । अतश्चायं भाष्याशयः—चोदना धर्मे प्रमाणं न त्विन्द्रियादिकम् । शब्दसामान्यस्य ज्ञानजनकत्वेन प्रामाण्यसंभवाच्चोदनायाश्च शब्दत्वादतः संभवत्येवातीन्द्रिये धर्मे चोदनायाः प्रामाण्यमिति । नान्यत्किंच नेन्द्रियमिति । नान्यत्किंचेति पदच्छेदः । तथा च शब्दस्यैव तादृशार्थबोधनसामर्थ्यं न तु तद्व्यतिरिक्तप्रमाणसामान्यस्य । अत्रैव हेतुः—नेन्द्रियमिति । यत इन्द्रियमसमर्थमतस्तत्पूर्वकत्वादितरत्सर्वमसमर्थमिति भावः । अथवा नान्यत्समर्थमित्यर्थः । किंचेति प्रश्नार्थे । कुत इत्यर्थः । नेन्द्रियमिति तु पूर्ववदेव हेतुरिति व्याख्येयम् ।

ननु वेदः पौरुषेयोऽपौरुषेयो वा । यदि पौरुषेयस्तर्हि तस्य प्रत्यक्षाद्यनवगतार्थकबुद्धादिप्रयुक्तचैत्यवन्दनादिवाक्यसाधर्म्यात्प्रामाण्यं दुर्घटम् । यद्यपौरुषेयस्तर्हि शब्दप्रामाण्यहेतुभूताप्तोच्चारितत्वस्याभावेन सुतरां प्रामाण्यं दुर्लभमित्यभिप्रायेण शङ्कते—नन्वतथाभूतमित्यादिना भवतीतीत्यन्तेन । अतथाभूतमिति । असत्यमित्यर्थः ।

उच्यते । विप्रतिषिद्धमिदमुच्यते—ब्रवीति वितथं चेति । ब्रवीतीत्युच्यते अवबोधयति बुध्यमानस्य निमित्तं भवतीति । यस्मिंश्च निमित्तभूते सत्यवबुध्यते सोऽवबोधयति । यदि च चोदनायां सत्यामग्निहोत्रात्स्वर्गो भवतीति गम्यते कथमुच्यते न तथा भवतीति । अथ न तथा भवतीति कथमवबुध्यते । असन्तमर्थमवबुध्यत इति विप्रतिषिद्धम् ।

---

तथा च वेदस्य धर्माधर्मप्रामाण्यं न संभवतीत्याशयः । समाधत्ते—उच्यत इत्यादिना तस्मादवितथ इत्यन्तेन । परिहारभाष्यस्यायमाशयः—ज्ञानस्य प्रामाण्यमप्रामाण्यं च स्वत एव निर्णीयत इति सांख्याः । उभयमपि कारणगुणदोषाभ्यामिति तार्किकाः । अप्रामाण्यस्य स्वतस्त्वं प्रामाण्यस्य च परतस्त्वमिति बौद्धाः । प्रामाण्यं स्वतोऽप्रामाण्यमेव परत इति तु मीमांसकाः । तथा चोक्तं वार्तिके—

> स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।
> न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते ॥ इत्यादिना ।
> (श्लो० वा० १ । १ । २ । ४७)

अयं विचारो मतान्तरनिरासपूर्वकं वार्तिक एव प्रपञ्चितस्तत्रैव द्रष्टव्यः । तथा च सिद्धान्ते ज्ञानप्रामाण्यस्य स्वतस्त्वात्प्रामाण्यकारणं नापेक्ष्यते । अप्रामाण्यमेव तु कारणाधीनं तच्च कारणं ज्ञानानुत्पत्तिः । उत्पन्नस्य ज्ञानस्य संशयात्मकता । उत्तरकाले बाधकप्रत्ययान्तरोत्पत्तिः । करणे दोषवत्ताज्ञानं च । तत्र प्रकृते वेदस्य कर्तृस्मरणाभावादियुक्तिनिचयेनापौरुषेयत्वस्य साधयिष्यमाणत्वात्करणदोषज्ञानं शक्यशङ्कम् । नापि 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादिवाक्यं संशयात्मकं ज्ञानमुत्पादयति । नाप्येतद्वाक्यजन्यज्ञानस्याग्निहोत्रात्स्वर्गो न भवतीति बाधकज्ञानं कस्यापि कदापि जायते । न वा ज्ञानमेव नोत्पद्यते । अतोऽप्रामाण्यकारणत्वेन संभाविताना मध्ये इह कस्याप्यनुपलम्भादप्रामाण्यशङ्काया दूरापास्तत्वेन स्वतःसिद्धं प्रामाण्यं निरपवादं तिष्ठतीति । तत्र—विप्रतिषिद्धमिदं, ब्रवीति वितथं चेति बोधयति न बोधयतीति विप्रतिषिद्धमित्यर्थः । तथा चैतत्पादान्त्याधिकरणे वेदापौरुषेयत्वस्य साधयिष्यमाणत्वादग्रेऽोपरितनभाष्येण संशयविपर्ययज्ञानयोर्निरसिष्यमाणत्वाच्चेतद्भाष्यं ज्ञानानुत्पत्तिरूपाप्रामाण्यकारणनिराकरणपरमेवेति वेदितव्यम् । अमुमेव विरोधमुपपादयति— ब्रवीतीत्यादिना विप्रतिषिद्धमित्यन्तेन । न तथा भवतीति । न बोधयतीत्यर्थः । कथमवबुध्यत इति । कथं ज्ञायत इत्यर्थः । असन्तमर्थमवबुध्यत इति विप्रतिषिद्धमिति । अर्थोऽवबुध्यते नावबुध्यत इति वि

न च 'स्वर्गकामो यजेत' इत्यतो वचनात्संदिग्धमवगम्यते भवति वा स्वर्गो न वा भवतीति । न च निश्चितमवगम्यमानमिदं मिथ्या स्यात् । यो हि जनित्वा प्रध्वंसते नैतदेवमिति स मिथ्या प्रत्ययः । न चैष कालान्तरे पुरुषान्तरेऽवस्थान्तरे देशान्तरे वा विपर्येति । तस्मादवितथः । यत्तु लौकिकं वचनं तच्चेत्प्रत्ययितात्पुरुषादिन्द्रियविषयं वाऽवितथमेव तत् । अथाप्रत्ययितादनिन्द्रियविषयं वा तावत्पुरुषबुद्धिप्रभवमप्रमाणम् । अशक्यं हि तत्पुरुषेण ज्ञातुमृते वचनात् ।

---

विरुद्धमित्यर्थः । एवं ज्ञानानुत्पत्तिरूपं कारणं निरस्य द्वितीयं निरस्यति—न च स्वर्गकाम इत्यादिना । अतः संदिग्धार्थबोधकत्वं नास्तीति भावः । बाधकप्रत्ययान्तरमपि वेदजन्यज्ञानस्याप्रामाण्यकारणं नास्तीत्युपपादयति—न च निश्चितमित्यादिना विपर्येतीत्यन्तेन । भाष्यं स्पष्टार्थम् । तस्मादवितथ इति । नाप्रमाणमित्यर्थः ।

यत्तु पूर्वपक्षे लौकिकवचनमप्रामाण्ये दृष्टान्ततयोपन्यस्तं तदनुभाष्ये दूषयति—यत्त्वित्यादिना ऋते वचनादित्यन्तेन । प्रत्ययितादिति । यथाभूतमतथाभूतं वा यथादृष्टमर्थं यो वदति स प्रत्ययितस्तस्मादित्यर्थः । इन्द्रियविषयं वेति । इन्द्रियपदं मूलभूतप्रमाणसामान्योपलक्षणम् । अवितथमिति । नाप्रमाणमित्यर्थः ।

तथा चायं भाष्याशयः—यथा यत्किंचनेति । पूर्वपक्ष्युपन्यस्तं दृष्टान्तवचनं यदि संभवत्प्रमाणमूलं प्रत्ययितपुरुषोच्चारितं च तदा तत्प्रमाणमेवेति दृष्टान्ते साध्यवैकल्यम् । यदि तद्वचनमप्रत्ययितपुरुषवक्तृकमसंभवन्मूलप्रमाणं वा तदा केवलपुरुषबुद्धिप्रभवं मूलदोषेण दुष्टत्वादप्रमाणमेवेति न तद्दृष्टान्तेनादुष्टस्यापि वेदवचसोऽप्रामाण्यं शङ्कितुं शक्यमिति । अत्र च पूर्वभाष्ये वाशब्दः समुच्चयार्थकः । उत्तरत्र च विकल्पार्थकः । निपातानामनेकार्थत्वादेकैकस्याप्यप्रामाण्यापादकत्वात् । यथाऽनृतवादिनि पुरुषे सति तदुच्यमानस्यार्थस्य प्रमातुं योग्यत्वेऽप्यप्रामाण्यमेवानाश्वासाद्दृष्टम् । यथा वा वक्तरि प्रत्ययिते सत्यपि तदुच्यमानार्थं प्रत्यक्षाद्यसंभवेन द्रष्टुमशक्यश्चेत्तत्राप्यप्रामाण्यमेव । न ह्यतीन्द्रियार्थविषये वचनमन्तराऽवगतिः संभवति । तदिदमुक्तम्—अशक्यं हि तत्, पुरुषेण ज्ञातुमृते वचनादिति भाष्येण । न चात्र तच्चेत्प्रत्ययितादिन्द्रियविषयं वेत्यादिभाष्येण सम्यङ्मूलापेक्षं प्रामाण्यं प्रदर्शितं गुणाधीनमेव सिध्यतीति प्रामाण्ये स्वतस्त्वं साधितं विरुध्येतेति शङ्क्यम् । तादृशभाष्यस्यापवादभूताप्रामाण्यनिवृत्त्यर्थं गुणद्वारेण दोषाभावोपवर्णनमात्रपरत्वेन प्रामाण्याय गुणस्वरूपकथनपरत्वाभावात् । नन्वतीन्द्रियविषयस्य वचनं विना ज्ञातुमशक्यत्वेऽपि पुरुषान्तरीयवचनाज्ज्ञानं भवितुमर्हतीत्याशङ्क्यानेकेषामपि जात्यन्धानां रूपविशेषविषये वचनमेकरूपेणाप्रमाणमे-

भवति प्रत्ययो नैवमयमर्थ इति ।

विप्लवते हि खल्वपि कश्चित्पुरुषकृताद्वचनात्प्रत्ययः । न तु वेदवचनस्य मिथ्यात्वे किंचन प्रमाणमस्ति । ननु सामान्यतो दृष्टं पौरुषेयं वचनं वितथमुपलभ्य वचनसामान्यादिदमपि वितथमवगम्यते । न । अन्यत्वात् । न ह्यन्यस्य वितथभावेऽन्यस्य वैतथ्यं भवितुमर्हति । अन्यत्वादेव । न हि देवदत्तस्य श्यामत्वे यज्ञदत्तस्यापि श्यामत्वं भवितुमर्हति । अपि च पुरुषवचनसाधर्म्याद्वेदवचनं वितथमित्यनुमानं प्रत्यक्षादवगम्यते । प्रत्यक्षस्तु वेदवचनेन प्रत्ययः । न चानुमानं प्रत्यक्षविरोधि प्रमाणं भवति । तस्माच्चोदनालक्षणोऽर्थः श्रेयस्करः । एवं तर्हि श्रेयस्करो जिज्ञासितव्यः किं धर्मजिज्ञासया । उच्यते । य एव श्रेयस्करः स एव धर्मशब्देनोच्यते । कथमवगम्यताम् । यो हि यागमनुतिष्ठति

---

अमुमेवार्थं प्रदर्शयति—पौरुषेयाद्वचनाद्भवति प्रत्यय एवमयं पुरुषो वेदेतीति । नैवमयमर्थ इति—प्रत्ययोऽर्थे न प्रतितिष्ठतीत्यर्थः । पुंवाक्यत्वादस्य पुरुषे च दोषसंभवेन सम्यग्ज्ञानवत्त्वावधारणं विना प्रथमं जातोऽप्यर्थनिश्चयो न प्रतिष्ठितो भवतीति भावः ।

यत्र त्वनाप्तवाक्ये मूलभूतवक्तृज्ञाने सम्यक्त्वज्ञानं दुर्घटं भवति तत्राप्रामाण्यमेवेत्यपरः स्वभावः । तदिदमुच्यते—विप्लवते हि खल्वपीत्यादिना । वेदे वक्तुरभावात्तत्प्रामाण्यस्य वक्तृज्ञानपूर्वकत्वानपेक्षणान्न तदभावप्रयुक्ताऽप्ययार्थता भवतीत्याह—न तु वेदवचनस्येत्यादिना । वाक्यत्वहेतोरप्रामाण्येऽप्रयोजकत्वं सिद्धान्त्यभिप्रेतमजानानः शङ्कते—नन्वित्यादिना । वचनत्वाद्वेदवचनमप्यप्रमाणं भवतीति शङ्काशयः । समाधत्ते— न । अन्यत्वादिति । पौरुषेयवचनस्य मिथ्यात्वे प्रयोजकं दुष्टत्वम् । वाक्यत्वस्य च तद्भिन्नत्वादप्रयोजकत्वमित्याशयः । तदेव विवृणोति—न ह्यन्यस्येत्यादिना । अन्यस्येति । दुष्टस्येत्यर्थः । अन्यस्येति । अदुष्टस्येत्यर्थः । न हि देवदत्तस्येति । देवदत्तस्य श्यामत्वहेतुयुक्तस्येत्यर्थः । यज्ञदत्तस्यापीति । तद्रहितस्येत्यर्थः । एतच्छङ्कोत्तरभाष्ययोर्यान्यर्थान्तराणि तानि वार्तिक एव प्रपञ्चितानि तत्रैव द्रष्टव्यानि । अस्या एव शङ्कायाः समाधानान्तरमाह—अपि चेत्यादिना । अयमाशयः—परेण हि वेदवचनस्याप्रामाण्यं शङ्क्यते । तच्च संशयविपर्ययजनकत्वरूपं द्वयमपि न संभवतीति प्रागेव निरूपितमतो ज्ञानाभावरूपाप्रामाण्यमेव शङ्कनीयम् । ततो भवतां प्रतिज्ञा प्रत्यक्षविरुद्धा भवति । वेदजन्यज्ञानस्यापि भवन्मते प्रत्यक्षत्वान्मीमांसकस्येव मते ज्ञानस्यानुमेयत्वाद्भवदीयमनुमानं प्रत्यक्षबाधितमिति । धर्मशब्दस्य चोदनालक्षणयागादिरूपश्रेयस्करवाचित्वं निरूपयितुमुपसंहरति—तस्मादित्यादिना । उक्तार्थे लोकप्रयोगं प्रमाणयति—कथमवगम्यतामित्यादिना । लो—

तं धार्मिक इति समाचक्षते। यश्च यस्य कर्ता स तेन व्यपदिश्यते। यथा पाचको लावक इति। तेन यः पुरुषं निःश्रेयसेन संयुनक्ति स धर्मशब्देनोच्यते। न केवलं लोके, वेदेऽपि 'यज्ञेन यज्ञमयजन्त देवाः, तानि धर्माणि प्रथमान्यासन्'¹ इति यजतिशब्दवाच्यमेव धर्मं समामनन्ति। उभयमिह चोदनया लक्ष्यतेऽर्थोऽनर्थश्चेति। कोऽर्थः। यो निःश्रेयसाय ज्योतिष्टोमादिः। कोऽनर्थः। यः प्रत्यवायाय श्येनो वज्र इषुरित्येवमादिः।
*(names of certain malevolent acts)*

———

अपूर्वादिस्वरूपाज्ञानेऽपि यागाद्यनुष्ठानमात्रदर्शनेन तदनुष्ठायिनि धार्मिकशब्दं प्रयुञ्जते। अतो यागादीनामेव श्रेयःसाधनात्मना चोदनालक्षणानां धर्मशब्दाभिधेयत्वं निर्णीयते। वेदे उपलभ्यमानाद्यागधर्मशब्दयोः सामानाधिकरण्यादपि यागादेर्धर्मशब्दाभिधेयत्वं प्रतिपादयति—न केवलमित्यादिना। यद्यप्युदाहृतश्रुतौ धर्मयज्ञशब्दयोर्लिङ्गवचनव्यत्ययो गम्यते तथाऽपि च्छान्दसत्वाद्धर्मो न दोष इति भावः।

सूत्रघटकीभूतार्थशब्दप्रयोजनं कथयति—उभयमिहेत्यादिनाऽभिचरितव्यमितीत्यन्तेन। उभयं साध्यं साधनं च। चोदनया प्रवर्तकवचनात्मकविधिरूपया। लक्ष्यते ज्ञाप्यते। यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'श्येनेनाभिचरन्यजेत' इत्यादिविधिभिर्यागस्वर्गाद्योः साध्यसाधनभावरूपे सम्बन्धे गम्यमाने साधनीभूतज्योतिष्टोमादिर्यथा साधनत्वेन ज्ञाप्यते तथा साध्यभूतस्वर्गादिरपि ज्योतिष्टोमादिसाध्यत्वेन ज्ञाप्यत इत्युभयोरपि साध्यसाधनयोश्चोदनाज्ञाप्यत्वमित्याशयः। अर्थोऽनर्थश्चेति। पूर्वोक्तोभयपदार्थघटकीभूतसाध्यं द्विविधमित्यादि। चोदनाज्ञाप्यं साध्यमर्थानर्थभेदेन द्विविधम्। अर्थोऽनिषिद्धं प्राप्तव्यं स्वर्गादि। अनर्थो निषिद्धो निवारणीयो हिंसादिरित्यर्थः। कोऽर्थ इति। अत्रार्थशब्दो लक्षणया स्वसाधनपरः। अर्थात्मकस्वर्गादिफलसाधनं किमित्यर्थः। यो निःश्रेयसाय ज्योतिष्टोमादिरिति। ज्योतिष्टोमेन स्वर्गकामो यजेतेति विधिना स्वर्गरूपनिःश्रेयससाधनत्वेन विधीयमानो ज्योतिष्टोमादिर्यः स प्रकृतार्थपदार्थ इत्यर्थः। कोऽनर्थ इति। अत्रत्यानर्थपदं फलस्वरूपपरमेव। निषिध्यमानमनर्थरूपं फलं किमित्यर्थः। यः प्रत्यवायायेति। यः प्रत्यवायसाधनीभूतो हिंसादिः स प्रकृतानर्थपदार्थ इत्यर्थः। श्येन इति। अत्र श्येनपदेन 'श्येनेनाभिचरन्यजेत'

———

1 तै आ ३ अ १३ अनु।

तत्रानर्थो धर्म उक्तो मा भूदित्यर्थग्रहणम्।

कथं पुनरसावनर्थः। हिंसा हि सा। हिंसा च प्रतिषिद्धेति। कथं पुनरनर्थः कर्तव्यतयोपदिश्यते। उच्यते। नैव श्येनादयः कर्तव्या विज्ञायन्ते। यो हि हिंसितुमिच्छेत्तस्यायमभ्युपाय इति हि तेषामुपदेशः। 'श्येनेनाभिचरन्यजेत' इति हि समामनन्ति 'नाभिचरितव्यम्' इति।

नन्वशक्तमिदं सूत्रमिमावर्थावभिवदितुम्। चोदनालक्षणो धर्मो नेन्द्रियादिलक्षणः। अर्थश्च धर्मो नानर्थ इति। एकं हीदं वाक्यं तदेवं सति

---

इत्यादिविधिभिः श्येनसंज्ञकयागफलत्वेन गम्यमानाऽभिचारात्मिका वैरिमरणानुकूलशस्त्राघातादिरूपा हिंसा लक्षणयोच्यते। सा च 'न हिंस्यात्सर्वा भूतानि' इति निषेधेन निषिध्यमाना प्रत्यवायसाधनीभूतेति प्रकृतानर्थात्मकफलस्वरूपेत्यर्थः। एवं 'वज्र इषुः' इत्यादावपि लक्षणया वज्रादिपदेन तत्तत्संज्ञकयागफलीभूता हिंसोच्यत इति ज्ञेयम्। अनर्थो धर्म उक्तो मा भूदिति। उक्तरीत्या श्येनादिफलीभूतहिंसायाश्चोदनालक्षणत्वसंभवेन धर्मत्वप्रसक्तौ तद्वारणार्थमर्थग्रहणम्। अर्थपदस्य च निःश्रेयससाधनपरत्वाद्धिंसायाश्चातथात्वान्नातिव्याप्तिरिति भावः।

उदाहृतं श्येनादिपदं स्वसाध्यफलपरमित्यभिप्रेतमर्थं प्रश्नोत्तराभ्यां विवृणोति—कथं पुनरसावित्यादिप्रतिषिद्धेत्यन्तेन। अनेन च भाष्येण श्येनफलीभूताभिचारपदार्थो हिंसा। सा च न हिंस्यादिति शास्त्रेण निषिद्धेति ज्ञापितं भवति।

उभयमिदेत्यादिभाष्येण फलस्यापि चोदनालक्षणत्वप्रतिपादनाच्चोदनाज्ञाप्यस्य च विधेयत्वाद्विधेयस्य च कथमनर्थत्वमिति फलस्याविधेयत्वमजानन्पूर्वपक्षी शङ्कते—कथं पुनरनर्थ इत्यादिना। समाधत्ते—नैवेति। नैवेत्येतावदेवेदं वाक्यम्। अस्य चायमर्थः—नैवानर्थो हिंसा कर्तव्यतयोपदिश्यत इति प्रश्नवाक्यस्थपदानुषङ्गेण बोध्यः। किं तर्हि विधीयत इत्यपेक्षायामाह—श्येनादय इत्यादिना। अत्र श्येनादिपदार्थो यागः। यो हि हिंसितुमिच्छेदिति। श्येनेनाभिचरन्निति वाक्यस्थशत्रन्ताभिचरपदव्याख्यानार्थमिदम्। तेषां श्येनादिसंज्ञकयागानाम्। अमुमेवार्थं स्फुटयन्नाह—श्येनेनाभिचरन्नित्यादिना। तथा चोदाहृतवाक्येऽभिचरन्निति शतुर्दर्शनात्तस्य च लक्षणहेत्वोरित्यनेन लक्षणार्थे विधानात्प्रसिद्धस्यैव च लक्षणत्वात्प्रसिद्धस्य चाभिचारस्य विधेयत्वं न संभवति। किं तु तदुपायभूतस्यैव तत्त्वेनाज्ञातस्य श्येनादिसंज्ञकयागस्यानेन शास्त्रेणोपदेश इत्ययमर्थः स्फुटीकृतः।

एतावता सूत्रतात्पर्यार्थं सम्यग्विशदय्य शङ्कासमाधानमुखेन सूत्राक्षरार्थं प्रतिपादयितुं शङ्कते—नन्वित्यादिना भिद्येतेत्यन्तेन। अशक्तमिति। असमर्थमित्यर्थः। अयमाशयः—एकवाक्यत्वेन प्रतीयमानेऽस्मिन्सूत्रेऽर्थद्वयपरिकल्पनेऽर्थैकवाक्यनिबन्धन-

भिद्येत । उच्यते । यत्र वाक्यादर्थोऽवगम्यते तत्रैवम् । तत्तु वैदिकेषु, न सूत्रेषु । अन्यतोऽवगतेऽर्थे सूत्रमेवमर्थमिदमित्यवगम्यते । तेन चैकदेशः सूत्र्यत इति सूत्रम् । तत्र भिन्नयोरेव वाक्ययोरिमावेकदेशाविस्यवगन्तव्यम् ।

अथवाऽर्थस्य सतश्चोदनालक्षणस्य धर्मत्वमुच्यत इत्येकार्थमेवेति ॥२॥

---

मेकवाक्यत्वं भज्येतेति । समाधत्ते—उच्यत इत्यादिनाऽवगन्तव्यमित्यन्तेन । वाक्यादिति । वैदिकवाक्यादित्यर्थः । अर्थ इति । अज्ञात इत्यर्थः । एवमिति । वाक्यभेदादिरूपं दूषणमित्यर्थः । सूत्रेषु वैपरीत्यं प्रदर्शयति—न सूत्रेष्विति । प्रमाणान्तरेणावगतमर्थं सूचयति—सूत्रमिति। अवगतार्थे सूत्रे वाक्यभेदादिदूषणं न भवतीति भावः । एकदेश इति । वाक्यैकदेशार्थ इत्यर्थः। तत्र भिन्नयोरिति । अयमाशयः–इदं सूत्रं वाक्यद्वयरूपेण न्यस्यमिन्नम् । 'अर्थो धर्मः' इत्येकं सूत्रमपरं च 'चोदनालक्षणः' इति । अस्य च साकाङ्क्षत्वादनन्तरसूत्रगतो धर्मशब्दोऽनुषङ्गेण तदेकदेशतया कल्प्यते चोदनालक्षणो धर्म इति । तथा च वाक्यद्वयेनैवार्थद्वयप्रतीतिरिति । न चैवमर्थो धर्म इति सूत्रेणाचोदनालक्षणस्यापि धर्मत्वमेवं चोदनालक्षण इत्यनेनानर्थस्यापि धर्मत्वं स्यादिति शङ्कनीयम् । यतोऽर्थो धर्म इति सूत्रादनुषज्यमानो धर्मशब्दोऽन्तर्णीतार्थ एव चोदनालक्षणसूत्रेऽनुषज्यते न तु तदनादरेण स्वतन्त्रं धर्मपदमवयवत्वेन कल्प्यते । तादृशस्यासंनिहितत्वात् । तेनार्थत्वविशिष्ट एव चोदनालक्षणो धर्मः । अर्थोऽपि चोदनालक्षणत्वविशिष्ट एव धर्मो न त्वविशिष्ट इति न कश्चिद्दोषः ।

एकवाक्यत्वमभ्युपगम्यापि सूत्रार्थो वर्णयितुं शक्यत इत्येवं समाधानान्तरमाह—अथवेत्यादिना । अर्थस्य सतो यद्धर्मत्वं तच्चोदनालक्षणस्येत्युच्यत इति भाष्ययोजना । अयमाशयः— अस्मिन्सूत्रे यो धर्मः स चोदनालक्षण इत्येव वचनव्यक्तिर्न तु यश्चोदनालक्षणः स धर्म इति । तथात्वेऽनर्थस्यापि चोदनालक्षणत्वात्तस्य धर्मत्वव्यावृत्त्यर्थमर्थग्रहणमावश्यकमित्यर्थद्वयप्रयुक्तवाक्यभेदो भवेत् । अतः पूर्वोक्तैव वचनव्यक्तिराद्रियते । तत्र च धर्मेऽर्थत्वस्य नित्यसिद्धत्वाद्धर्ममात्रमुद्दिश्य चोदनालक्षणत्वं विधीयते न त्वर्थत्वस्याप्युद्देश्यविशेषणत्वं किं त्वर्थशब्दस्य नित्यानुवादत्वमेव । तस्य नित्यानुवादत्वं 'अर्थस्य सत' इति भाष्येण स्फुटं प्रदर्शितम् । तथा चैकार्थत्वसंपादकवाक्यत्वमेवास्य सूत्रस्येति भाव ॥ २ ॥

इति धर्मलक्षणाधिकरणम् ।



## तस्य निमित्तपरीष्टिः ॥ ३ ॥

उक्तमस्माभिश्चोदनानिमित्तं धर्मस्य ज्ञानमिति। तत्प्रतिज्ञामात्रेणोक्तम्। इदानीं तस्य निमित्तं परीक्षिष्यामहे—किं चोदनैवेति, अन्यदपीति। तस्मान्न तावन्निश्चीयते चोदनालक्षणोऽर्थो धर्म इति ॥ ३ ॥ तदुच्यते—

## सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥

इदं परीक्ष्यते—प्रत्यक्षं तावदनिमित्तम्। किं कारणम्। एवंलक्षणकं हि तत्। सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्। सती-

---

पूर्वसूत्रार्थेनास्य सूत्रार्थस्य संबन्धं प्रदर्शयितुं वृत्तमनुकीर्तयति—उक्तमित्यादिना। पूर्वसूत्रेण तावच्चोदनानिमित्तकं धर्मस्य ज्ञानमित्येवं प्रतिपादितम्। तच्च प्रतिज्ञामात्रेणोक्तं न तु युक्तिभिः साधितमित्यर्थः। यद्यपि चोदना हि भूतमित्यादिना भाष्ये युक्तिरपि प्रदर्शिता तथाऽपि भाष्यकारेणैव सा प्रदर्शिता न तु सूत्रकारेणेति सूत्रकाराभिमतेन प्रतिज्ञामात्रोक्त्यविरोधः। इदानीमस्मिन्सूत्रे धर्मज्ञानस्य निमित्तभूतां चोदनां परीक्षिष्यामह इत्येवमस्मिन्पादे वक्ष्यमाणं किं चोदनैव निमित्तमुतान्यदपि किं चोदनानिमित्तं भवितुमर्हत्युत नेत्येवं परीक्षणं सुखग्रहणार्थं प्रतिज्ञायते। तथा च वक्ष्यमाणपरीक्षाधिकरणप्रतिज्ञारूपत्वादस्य संगतिरुपोद्घातरूपा विज्ञेया ॥ ३ ॥

इति धर्मे प्रामाण्यपरीक्षाधिकरणम्।

---

पूर्वसूत्रे कर्तव्यत्वेन प्रतिज्ञातं परीक्षणमारभते— इदं परीक्ष्यत इति। धर्मज्ञानं प्रति किं चोदनैव निमित्तमुतान्यदपीति विचार्यत इत्यर्थः। तत्र प्रत्यक्षानुमानादीनां प्रामाण्यस्य प्रसिद्धत्वात्तेषामपि धर्मज्ञानं प्रति निमित्तत्वं भवितुमर्हति। अतश्चोदनैव धर्मे प्रमाणमिति चोदनासूत्रेण प्रदर्शिता प्रतिज्ञा न संगच्छत इत्याक्षेपसंगत्या पूर्वपक्षे प्राप्ते प्रकृतसूत्रेण प्रतिपादितं सिद्धान्तमुपपादयति—प्रत्यक्षमित्यादिना। धर्मज्ञानं प्रति प्रत्यक्षमनिमित्तमित्यर्थः। इदमेव प्रश्नपूर्वकमुपपादयति—किं कारणमिति। एवंलक्षणकं हीति। धर्मं प्रत्यनिमित्तत्वं येन लिङ्गेन लक्ष्यते तल्लक्षणकं प्रत्यक्षमित्यर्थः। तादृशं लिङ्गं प्रदर्शयति—सत्संप्रयोग इत्यादिना। सतीन्द्रियार्थसंबन्ध इत्यादिना च। सूत्रस्थपुरुषस्येन्द्रियाणामिति पदस्य सत्संप्रयोग इत्यत्र संप्रयोगेण संबन्धं पुरुषस्येत्यस्य बुद्धिजन्मेत्यत्र बुद्ध्या संबन्धं चाभिप्रेत्य सूत्रार्थं प्रदर्शयति। सत्संप्रयोग इति पदे संश्चासौ संप्रयोगश्चेति कर्मधारयश्च प्रदर्शितः। तथा चेन्द्रियाणामर्थेन साकं संबन्धे विद्यमाने सतीत्यर्थः। पुरु-

न्द्रियार्थसंबन्धे या पुरुषस्य बुद्धिर्जायते तत्प्रत्यक्षम्। भविष्यंश्चैपोऽर्थो न ज्ञानकालेऽस्तीति। सतश्चैतदुपलम्भनं नासतः। अतः प्रत्यक्षमनिमित्तम्। बुद्धिर्वा जन्म वा संनिकर्षो वेति नैषां कस्यचिदवधारणार्थमेतत्सूत्रम्। सतीन्द्रियार्थसंप्रयोगे नासतीत्येतावदवधार्यते। अनेकस्मिन्नवधार्यमाणे भिद्येत वाक्यम्। प्रत्यक्षपूर्वकत्वाच्चानुमानोपमानार्थापत्तीनामप्यकारणत्वमिति ॥ ४ ॥

अभावोऽपि नास्ति। यतः—

---

पाणा बुद्धिजन्मेत्यवयवार्थं विवृणोति—या पुरुषस्य बुद्धिर्जायत इति। तथा च जन्मशब्द कर्तृवचन सन्, बुद्धिशब्दसमानाधिकरण इति प्रदर्शितो भवति। तथा चैव जायमाना बुद्धिर्या तत्प्रत्यक्षमित्यर्थ। यत उक्तरीत्या प्रत्यक्ष सत्संप्रयोगजमतस्तस्य विद्यमानोपलम्भनत्वमिति। विद्यमानोपम्भनत्वसिध्यर्थं सत्संप्रयोगजत्वकथनम्। विद्यमानोपलम्भनत्वमेव चानिमित्तत्वे प्रयोजकम्। तथा च प्रत्यक्ष धर्माधर्मागोचर विद्यमानोपलम्भनत्वात्। प्रत्यक्ष विद्यमानोपलम्भन विद्यमानार्थोपलब्धिरूप वर्तमानेन्द्रियार्थसंयोगजन्यत्वात्। प्रत्यक्ष सत्संप्रयोगज प्रत्यक्षत्वादिति प्रयोगत्रय सूत्रभाष्याभ्या प्रदर्शित विज्ञेयम्। विद्यमानार्थावगाहिन प्रत्यक्षस्य धर्माधर्मागोचरत्वमुपपादयति—भविष्यंश्चेत्यादिना। स्वकालीनार्थविषयकस्य प्रत्यक्षस्य स्वकालेऽविद्यमानधर्माधर्मविषयकत्व न संभवतीति भाव। विद्यमानोपलम्भनत्वादितिसूत्रावयवार्थं विवृणोति—सत इत्यादिना। प्रत्यक्षस्यानिमित्तत्वमुपसंहरति—अत इत्यादिना।

अत्र च पूर्वोक्तानुमानेषु योगिप्रत्यक्षस्यैव पक्षत्वादस्मदादिप्रत्यक्षदृष्टान्तेन तत्र साध्यसाधनाभ्या दृष्टान्तासिद्धिर्न वा सिद्धसाध्यतेति ज्ञेयम्। एव यागादे फलसाधनस्वरूपेणैव धर्मत्वाङ्गीकारान्निष्पन्नावस्थाया यागस्वरूपस्य प्रत्यक्षत्वसंभवेऽपि विशिष्टरूपस्य न तत्संभव। [illegible]
वाप्रत्यक्षत्वमित्यपि द्र [illegible]
न्यहानादिबुद्धेर्वा प्रमाणफलभावेऽनादर प्रदर्शयति—बुद्धिर्वेत्यादिना। आदरविषय प्रदर्शयति—*सतीन्द्रियार्थ इत्यादिना। अनेकार्थतात्पर्यकत्वे वाक्यभेदप्रसङ्ग इत्याशय।* प्रत्यक्षस्य धर्मे प्रत्यप्रामाण्यसमर्थनादेव तत्पूर्वकाणामनुमानोपमानार्थापत्तीनामपि सुतरामप्रामाण्य प्रदर्शित भवतीत्याह—प्रत्यक्षपूर्वकत्वाच्चेति। अर्थापत्तेस्तु जगद्वैचित्र्यान्यथानुपपत्तिरूपाया दृष्टकारणभिन्नादृष्टरूपकारणसामान्याक्षेपकत्वेऽपीदमस्य साधनमित्यादिविशेषरूपेणानाक्षेपकत्वादप्रामाण्य स्पष्टमिति भाव ॥ ४ ॥

इति धर्मे प्रत्यक्षाद्यप्रामाण्याधिकरणम्।

**औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥**

औत्पत्तिक इति नित्यं ब्रूमः । उत्पत्तिर्हि भाव उच्यते लक्षणया । अवियुक्तः शब्दार्थयोर्भावः संबन्धो नोत्पन्नयोः पश्चात्संबन्धः । औत्पत्तिकः शब्दस्यार्थेन संबन्धस्तस्याग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं

पूर्वसूत्रेण प्रत्यक्षादीनां धर्मे प्रत्यप्रामाण्यमुक्तम् । तत एव प्रत्यक्षादिमूलकपुरुषवचनस्याप्यप्रामाण्यं सिद्धमेव । एतावता चोदनैव धर्मे प्रमाणमित्येवं चोदनासूत्रेण प्रतिज्ञातोऽर्थ एको व्यवस्थापितः ।

चोदना प्रमाणमेवेत्येवं प्रतिज्ञातमपरमर्थं व्यवस्थापयितुमिहेदं विचार्यते—चोदना वा धर्मे प्रमाणं भवितुमर्हत्युत नेति । तत्र शब्दस्य सर्वत्र प्रमाणान्तरापेक्षयैव प्रामाण्यदर्शनात्प्रकृते च चोदनात्मकशब्दस्य मूलभूतप्रमाणान्तराभावात्तस्या अप्यप्रामाण्याद्भावबोधकप्रमाणानामप्रवृत्तावभावबोधकानुपलब्धिप्रमाणगम्यत्वमेव धर्मस्येति धर्मो निष्प्रमाणक इत्येवं पूर्वपक्षे प्राप्ते सिद्धान्तमुपपादयितुं प्रवृत्तमौत्पत्तिकस्त्विति सूत्रमवतारयति—अभावोऽपीत्यादिना । अभावोऽपि नास्तीति । धर्मे प्रमाणसामान्यस्याप्यभावादभावगम्यत्वमेव धर्मस्येति योऽभाव उक्तः स नास्तीत्यर्थः । हेतुं प्रदर्शयति—यत इत्यादिना । यतो वक्ष्यमाणं प्रमाणं विद्यतेऽत इत्यर्थः । सूत्रघटकीभूतौत्पत्तिकशब्दार्थमाह—औत्पत्तिक इतीत्यादिना । औत्पत्तिकशब्दस्य नित्यत्वरूपार्थपरत्वे उपपत्तिमाह—उत्पत्तिर्हीति । तथा चौत्पत्तिकः स्वाभाविक इत्यर्थः । अमुमेवार्थं स्फुटयति—अवियुक्त इत्यादिना । शब्दार्थयोः संबन्धो भावोऽवियुक्त इति भावत् । तथा चौत्पत्तिकशब्देन नित्यत्वमभिप्रेतमिति भावः । एवं च नित्यः शब्दस्यार्थेन संबन्धः प्रत्याय्यप्रत्यायकलक्षणः, तस्य—अग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं भवितुमर्हतीति निमित्तपदाध्याहारेणार्थो विज्ञेयः ।

अनेन चेदमुक्तं भवति । लोके प्रमाणान्तरमूलानां प्रामाण्यम् । अतन्मूलानामप्रामाण्यं यद्यपि दृश्यते तथाऽपि प्रामाण्यं नेतरसापेक्षं किं तु स्वत एव । अनाप्तवाक्यस्याप्रामाण्यं न मूलविरहात् । येनाऽऽप्तवाक्यप्रामाण्यं मूलाधीनं स्यात्किं तु दुष्टमूलतया । शब्दस्य दुष्टत्वात्स्वाभाविकस्य प्रामाण्यस्यापवादात् । अपौरुषेये तु वेदे यद्यप्याप्तप्रणीतत्वं नास्ति तथाऽपि प्रामाण्यस्य तदपेक्षाभावादनाप्तस्पर्शनिमित्तदोषाभावाच्चानपोदितं प्रामाण्यं भवति । त्रेधा ह्यत्र पुरुषानुप्रवेशः संभाव्यते—पदपदार्थसंबन्धद्वारेण वाक्यवाक्यार्थसंबन्धद्वारेण ग्रन्थ-

प्रत्यक्षादिभिरनवगतस्य । कथम् । उपदेशो हि भवति । उपदेश इति विशिष्टस्य शब्दस्योच्चारणम् ।

अव्यतिरेकश्च ज्ञानस्य । न हि तदुत्पन्नं ज्ञानं विपर्येति । यच्च नाम ज्ञानं न विपर्येति न तच्छक्यते वक्तुम् । नैतदेव मिति । यथा विज्ञायते न तथा भवति यथैतन्न विज्ञायते तथैतदिति । अन्यदस्य हृदयेऽन्यद्वाचि स्यात् । एवं वदतो विरुद्धमिदं गम्यतेऽस्ति नास्ति वेति । तस्मात्तत्प्रमाणम् ।

---

स्येव भारतादिवत्पौरुषेयत्वाद्वा । न त्वेतत्त्रयमप्यस्ति पदपदार्थसंबन्धस्य नित्यत्वमस्मिन्सूत्र औत्पत्तिकशब्देनोक्तम् । वाक्यार्थज्ञानस्य च पदार्थमूलत्वं वेदस्य चापौरुषेयत्वमुपरिष्टाद्वक्ष्यते । अतः स्वतः प्रमाणभूतस्य चोदनात्मकशब्दस्याप्रामाण्यकारणं कारणदोषज्ञानरूपं नैव संभवतीति । प्रत्यक्षादिभिरनवगतस्येति । 'अर्थेऽनुपलब्धे' इतिसूत्रावयवस्य विवरणमिदम् । अनेन च प्रत्यक्षाद्यनवगतार्थत्वप्रतिपादनेनानुवादत्वलक्षणमप्रामाण्यं निरस्तं वेदितव्यम् ।

उक्तार्थे प्रश्नपूर्वकं हेतुप्रतिपादनार्थमाह—कथमित्यादिना । विशिष्टस्य शब्दस्येति । श्रेयःसाधनत्वाद्यर्थप्रतिपादकत्वेनाभ्यर्हितस्येत्यर्थः । अत्रोपदेश इत्यत्र तस्य ज्ञानमित्यपि विशेषणीयम् । ज्ञानशब्दश्च करणार्थे व्युत्पन्न उपदेशपदसमानाधिकरणो भवितुमर्हति । तथा चायमर्थः—तस्याग्निहोत्रादिरूपस्य श्रेयःसाधनस्य ज्ञानं ज्ञापकीभूतम् । उपदेशः 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादिविधिवाक्यरूपं यस्माद्भवत्यतोऽनन्यप्रमाण भवितुमर्हतीति ।

अनेन च विधिवाक्यस्य ज्ञानानुत्पादकत्वरूपमप्रामाण्यं निरस्तमिति वेदितव्यम् । बाधकज्ञानरूपमप्रामाण्यकारणमपि नास्तीति प्रदर्शयति—अव्यतिरेकश्च ज्ञानस्येति । अव्यतिरेकशब्दार्थमेव प्रदर्शयति—न हीत्यादिना । अग्निहोत्रादिवाक्योत्पन्नस्य ज्ञानस्य बाधकं प्रत्ययान्तरं नाग्निहोत्रहोम स्वर्गसाधनमित्याकारकं कदाऽपि केनापि प्रमाणेन नोत्पद्यत इत्यर्थः । विपर्ययज्ञानरहितस्य चोदनाजन्यज्ञानस्य कथमप्यप्रामाण्यं वक्तुमशक्यमित्युपपादयति—यच्च नामेत्यादिना नैतदेवमित्यन्तेन । बाधकज्ञानरहितस्यापि प्रामाण्यानङ्गीकारेऽनिष्टं प्रसञ्जयति—यथा विज्ञायत इत्यादिना नास्ति वेत्यन्तेन । अयमाशयः—प्रतीयमानार्थपरित्यागेनाप्रतीयमानार्थकल्पनेऽन्यदस्य हृदयेऽन्यद्वाचि स्यादित्येवं प्रतारकस्येवानुन्मत्तस्य वेदवचनं स्यात् । तच्च न युक्तमिति । 'अनपेक्षत्वात्' इति सूत्रोक्तहेतुं प्रदर्शयन्सिद्धान्तमुपसंहरति—तस्मादिति । स्वतः

अनपेक्षत्वात् । न ह्येवं सति प्रत्ययान्तरमपेक्षितव्यं पुरुषान्तरं वाऽपि । अयं प्रत्ययो ह्यसौ । बादरायणग्रहणं बादरायणस्येदं मतं कीर्त्यते बादरायणं पूजयितुं नाऽऽत्मीयं मतं पर्युदसितुम् ॥ ५ ॥

वृत्तिकारस्तु--अन्यथेऽमं ग्रन्थं वर्णयांचकार तस्य निमित्तपरीष्टिरित्येवमादिम् । न परीक्षितव्यं निमित्तम् । प्रत्यक्षादीनि हि प्रसिद्धानि

---

प्रमाणस्य वेदवचनस्याप्रामाण्यकारणानां कारणदोषबाधकज्ञानानुत्पादकत्वज्ञानानुत्पादकत्वानामन्यतमस्याप्यभावात्स्वारसिकं प्रामाण्यमनपोदितं भवितुमर्हतीत्यर्थः । 'अनपेक्षत्वात्' इति सूत्रावयवं व्याचष्टे---न ह्येवं सतीति । वेदस्यापौरुषेयत्वेन प्रामाण्याङ्गीकार इत्यर्थः । प्रत्ययान्तरमपेक्षितव्यमिति । लोकेऽप्याप्तोक्तिषु तज्जन्यप्रत्ययसदृशप्रत्ययान्तरं समीचीनमपेक्ष्यैव प्रामाण्यं दृष्टम् । पौरुषेयत्वेनाप्रामाण्यशङ्काकवलितत्वात् । आप्तोक्तिषु तु वक्तर्याप्तत्वनिश्चयमात्रमपेक्ष्य प्रामाण्यं दृष्टम् । अत्रापि पौरुषेयत्वेनाप्रामाण्यशङ्कासंभवात् । एवं च यत्र पौरुषेयवाक्ये कारणदोषादिनाऽप्रामाण्यशङ्का तत्र तत्परिहारार्थमन्यस्यापेक्षणीयत्वेऽप्यपौरुषेये वेदवचने कारणदोषादिरूपाप्रामाण्यकारणलेशस्याऽप्यसंभावितत्वेन न तत्परिहारार्थमन्यत्किंचिदपेक्षितव्यमिति भावः । अयं प्रत्ययो ह्यसाविति । असौ प्रत्ययः । हि--यतोऽपौरुषेयेणाप्रामाण्यशङ्कानास्कन्दितेन वेदवचनेन जायमानो भवति । अतोऽयं न तत्परिहारार्थमितरसापेक्षो भवतीति योजना । सूत्रघटकीभूतबादरायणपदकृत्यं दर्शयति--बादरायणमित्यादिना । इदमस्मदभिमतं भगवतो बादरायणस्यापि संमतमिति भावः ॥ ५ ॥

इति धर्मे चोदनाप्रामाण्याधिकरणम् ।

एतावता स्वमतेन तस्य निमित्तपरीष्टिरित्यादिसूत्रत्रयं व्याख्यायोपवर्षाचार्यैरस्य सूत्रत्रयस्य कृतं व्याख्यानान्तरं प्रदर्शयितुमारभते--वृत्तिकारस्त्वित्यादिना । तुशब्देन पूर्वोक्तव्याख्यानापेक्षयाऽस्मिन्व्याख्याने वलक्षण्यं सूचितम् । अन्यथा वर्णयांचकारेति । तस्य निमित्तपरीष्टिरित्येवमादिं--सूत्रत्रयात्मकं ग्रन्थम् । अन्यथा--पूर्वोक्तापेक्षयाऽर्थान्तरपरत्वेन । वर्णयांचकार---व्याख्यातवानित्यर्थः । तदेव व्याख्यानान्तरं प्रदर्शयति--

प्रमाणापरीक्ष्यत्वनिरूपणम् ।

न परीक्षितव्यं निमित्तमिति । तस्य निमित्तपरीष्टिरितिसूत्रे नञमध्याहृत्यैवं योजना । तस्य धर्मस्य, निमित्तपरीष्टिर्निमित्तस्य चोदनात्मकप्रमाणस्य परीष्टिः प्रामाण्यपरीक्षा न कर्तव्येत्यर्थः । एवं च पूर्वसूत्रे प्रतिज्ञातस्य चोदनाप्रामाण्यस्य हेतुभूतं प्रामाण्यस्य स्वतस्त्वमनेन सूत्रेणोच्यत इत्याशयः परीक्षा न कर्तव्येति व्याजेन प्रदर्शितः । तदेवोपपादयति--प्रत्यक्षादीनीत्यादिना । प्रसिद्धानि प्रसिद्धप्रामाण्यविशेषाणि प्रत्यक्षादिप्रमाणानी-

प्रमाणानि । तदन्तर्गतं च शास्त्रमतस्तदपि न परीक्षितव्यम् ।

अत्रोच्यते—व्यभिचारात्परीक्षितव्यम् । शुक्तिका हि रजतवत्प्रकाशते यतः । तेन प्रत्यक्षं व्यभिचरति, तन्मूलत्वाच्चानुमानादीन्यपि । तत्राप-रीक्ष्य प्रवर्तमानोऽर्थाद्धिहन्येत । अनर्थं चाऽऽप्नुयात्कदाचित् । नैतदेवम् । यत्प्रत्यक्षं, न तद्व्यभिचरति, यद्व्यभिचरति न तत्प्रत्यक्षम् । किं तर्हि प्रत्य-क्षम्? तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम् । यद्विषयं ज्ञानं,

---

त्यर्थः । तदन्तर्गतं च शास्त्रमिति । शास्त्रं चोदनात्मकं, प्रमाणत्वावच्छिन्नान्तर्गतम् । अतस्तदपि प्रमाणभूतं चोदनात्मकं शास्त्रमपि न परीक्षितव्यम् । चोदना प्रमाणं भवति न वेत्यादिप्रकारेण विचारो न कर्तव्य इत्यर्थः । यदि प्रसिद्धप्रामाण्यस्य प्रामाण्यं कार-णान्तरेण परीक्ष्यते, ततो येन परीक्ष्यते, तस्याप्यन्येन परीक्षा, तस्याप्यन्येनेत्यनवस्था स्यात् । तस्मात्प्रामाण्यस्य स्वतस्त्वावश्यकत्वात्प्रत्यक्षादिवच्चोदनाऽपि प्रमाणमेवेति प्रमाणपरीक्षा न कर्तव्येति भावः । अत्र शङ्कते—अत्रोच्यत इत्यादिना कदाचिदि-त्यन्तेन । अयमाशयः—यदुक्तं प्रत्यक्षादीनां प्रामाण्यं न परीक्षितव्यमिति तन्न संगच्छते । शुक्तिकायामिदं रजतमिति जायमानस्य प्रत्यक्षस्य प्रामाण्यव्यभिचारित्वात्तन्मूलकानाम-नुमानादीनामपि प्रामाण्यव्यभिचारात् । अतोऽपरीक्ष्यैव प्रवर्तमानो निःश्रेयसाद्धिहन्येता-नर्थं च प्राप्नुयादिति प्रत्यक्षादिकं परीक्षितव्यमेवेति । समाधत्ते—नैतदेवमित्या-दिना न तत्प्रत्यक्षमित्यन्तेन । नैतदेवम् एवं शङ्का न कार्या । यत्प्रत्यक्षं रजतं दृष्ट्वेदं रजतमिति जायमानं यत्प्रत्यक्षात्मकज्ञानम् । तन्न व्यभिचरति नायथार्थज्ञानं भवि-तुमर्हति, उत्तरकाले बाधकज्ञानाभावात् । यद्व्यभिचरतीति । यत् शुक्तिकायामिदं रजतमिति प्रत्यक्षाभासात्मकं ज्ञानं व्यभिचरति—अयथार्थं भवितुमर्हति । उत्तरकाले बाधकज्ञानादीनां संभवात् । तन्न प्रत्यक्षं, किंतु प्रत्यक्षाभासात्मकम् । अतश्च प्रत्यक्षा-भासस्यायथार्थत्वरूपव्यभिचारित्वेऽप्यनाभासस्य प्रत्यक्षस्य निरुक्तव्यभिचारादर्शनान्न प्रत्यक्षादिकं प्रमाणं परीक्षितव्यमित्युपमहन्तमिति ज्ञेयम् ।

प्रत्यक्षलक्षणम् ।

प्रत्यक्षस्याऽऽभासानामस्पर्शि लक्षणं प्रतिपादयितुं प्रवृत्तमुत्तरसूत्रं प्रश्नपूर्वकमवतारयति—किं तर्हीत्यादिना । किं लक्षणकमव्यभिचारिप्रत्यक्षमिति प्रश्नभाष्यार्थः । सूत्रस्य विव-क्षितलक्षणपरत्वप्रतिपादनार्थं सूत्रस्थयोः सत्तच्छब्दयोः पौर्वापर्यव्यत्ययं कृत्वाऽनिमित्त-मित्यतः पूर्वतनं सूत्रं पठति—तत्संप्रयोग इत्यादिना । विवक्षितार्थप्रतिपादनपरतया सूत्रपदानि योजयति—यद्विषयमित्यादिना सत्प्रत्यक्षमित्यन्तेन । यद्विषयं ज्ञानमुत्पद्यते इन्द्रियाणां तेनैव विषयेण संप्रयोगे पुरुषस्य यद्बुद्धिजन्म या बुद्धिर्जायते तत्सत्प्रत्यक्ष-शोभनं प्रत्यक्षमित्यर्थः ।

तेनैव संप्रयोगे इन्द्रियाणां, पुरुषस्य बुद्धिजन्म सत्प्रत्यक्षम् । यदन्यविषयज्ञानमन्यसंप्रयोगे भवति न तत्प्रत्यक्षम् । कथं पुनरिदमवगम्यते ? इदं तत्संप्रयोगे, इदमन्यसंप्रयोग इति । यन्नान्यसंप्रयोगे तत्तत्संप्रयोगे, एतद्विपरीतमन्यसंप्रयोग इति । कथं ज्ञेयम् ? यच्छुक्तिकायामपि रजतं मन्यमानो रजतसंनिकृष्टं मे चक्षुरिति मन्यते । बाधकं हि यत्र ज्ञानमुत्पद्यते नैतदेवं मिथ्याज्ञानमिति, तदन्यसंप्रयोगे, विपरीतं तत्संप्रयोग इति । प्राग्बाधकज्ञानोत्पत्तेः कथमवगम्येत ? यदा न तत्काले सम्यग्ज्ञानस्य मिथ्याज्ञानस्य वा कश्चिद्विशेषः ॥ यदा हि चक्षुरादिभिरुपहतं मनो भवति । इन्द्रियं वा तिमिरादिभिः, सौक्ष्म्यादिभिर्वाह्यो वा विषयः । ततो मिथ्याज्ञानम् । अनुपहतेषु हि सम्यग्ज्ञानम् ।

---

तेनैव संप्रयोग इत्यत्र एवकारव्यावर्त्यं दर्शयति—यदन्यविषयज्ञानमित्यादिना । अन्यसंप्रयोगे सति, अन्यविषयकं यज्ज्ञानमुत्पद्यते न तत्प्रत्यक्षमित्यर्थः । तत्संप्रयोगे जायमानमिदं ज्ञानमिदं तु न तथेत्येतत्प्रश्नपूर्वकमुपपादयति—कथं पुनरित्यादिनाऽन्यसंप्रयोग इतीत्यन्तेन । यद्विषयकज्ञानं तदन्यसंप्रयोगे न जायते तत्संप्रयोगजमन्यद् विपरीतमन्यदिति भावः ।

ननु शुक्तिकायां रजतं मन्यमानोऽपि यतो रजतसंनिकृष्टं मे चक्षुरिति मन्यते । अतस्तत्संप्रयोगजत्वतदन्यसंप्रयोजकत्वयोः कथं विवेको भवितुमर्हतीति शङ्कते—कथं ज्ञेयमित्यादिना मन्यत इत्यन्तेन । समाधत्ते—बाधकं हीत्यादिना तत्संप्रयोग इतीत्यन्तेन । अयमाशयः—यत्र पूर्वज्ञानानन्तरं नैतदेवं किं तु मिथ्याज्ञानमिति बाधकं ज्ञानान्तरमुत्पद्यते तत्र पूर्वविज्ञानमन्यसंप्रयोगजम् । यत्र तु न तथा तत्संप्रयोगजमिति वेदितव्यमिति । यत्रोत्तरकाले बाधकं ज्ञानान्तरं नैवोत्पद्यते तादृशपूर्वज्ञानं कथं मिथ्यात्वमवगम्यतामित्याशयेन शङ्कते—प्राग्बाधकेत्यादिना कश्चिद्विशेष इत्यन्तेन । समाधत्ते—यदा हीत्यादिना चक्षुरादिभिरित्यन्तेन । अन्येन्द्रियगतस्यापि संबन्धादन्येन्द्रियेण मनसः संबन्धे मनसो दुष्टत्वमिति भावः । इन्द्रिये दोषविशेषमाह—इन्द्रियं वेति । तिमिरादिभिरिति । तिमिरं नाम चक्षुरिन्द्रियनिष्ठदोष(रोग)विशेषः । विषये दोषसंभवमाह—सौक्ष्म्यादिभिरिति । उपहत इत्यस्यानुषङ्गः । आदिपदेन दूरत्वादीनां परिग्रहः । ततो मिथ्याज्ञानमिति । उक्तरीत्या करणेषु दुष्टेषु जायमानेषु सत्सु दुष्टकरणजन्यं ज्ञानं मिथ्याज्ञानं भवितुमर्हतीत्यर्थः । अत्रैव व्यतिरेकमाह—अनुपहतेषु

not wrong, as stated by the Opponent; there can be no examination of the means of cognition in general)

इन्द्रियमनोऽर्थसंनिकर्षो हि सम्यग्ज्ञानस्य हेतुः। असति तस्मिन्मिथ्याज्ञानम्। तदुभयगतो दोषो मिथ्याज्ञानस्य हेतुः। दुष्टेषु हि ज्ञानं मिथ्या भवति। कथमवगम्यते? दोषापगमे संप्रतिपत्तिदर्शनात्। कथं दुष्टादुष्टावगम इति चेत्। प्रयत्नेनान्विच्छन्तो न चेद्दोषमवगच्छेमहि प्रमाणाभावाददुष्टमिति मन्येमहि। तस्माद्यस्य च दुष्टं करणं, यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययो नान्य इति।

ननु सर्व एव निरालम्बनः स्वप्नवत्प्रत्ययः। प्रत्ययस्य हि निरालम्बनतास्वभाव उपलक्षितः स्वप्ने। जाग्रतोऽपि स्तम्भ इति वा कुड्य इति वा प्रत्यय एव भवति तस्मात्सोऽपि निरालम्बनः।

---

हीत्यादिना। अदुष्टेषु करणेष्वित्यर्थः। इमावन्वयव्यतिरेकावुपपादयति—इन्द्रियेत्यादिना मिथ्याभवतीत्यन्तेन। तथा च यत्र करणेषु इन्द्रियमनोर्थरूपेषु दोषो न संभाव्यते तादृशज्ञानस्य सम्यक्त्वम्। यत्र तु न तथा तत्र वैपरीत्यमित्यवगन्तव्यमिति भावः।

ननु करणेषु दुष्टेष्वज्ञायमानेष्वपि जायमानज्ञानस्य मिथ्यात्वं कथमवगन्तव्यमित्याशयेन शङ्कते—कथमवगम्यत इति। समाधत्ते—दोषापगम इति। दोषापगमानन्तरं पुरुषान्तरज्ञानेनैतदीयज्ञानस्य समानविषयकत्वे विप्रतिपत्त्यदर्शनाद्दोषकालीनज्ञाने परं तद्दर्शनाद्दुष्टकरणजन्यज्ञानस्य मिथ्यात्वमेवावगन्तव्यमिति भावः। करणेषु दुष्टत्वादुष्टत्वे कथमवगन्तव्ये इति शङ्कते—कथमित्यादिना चेदित्यन्तेन। यत्र करणेषु प्रयत्नेनान्विष्यमाणोऽपि दोषः शङ्कितुमपि न शक्यते तत्र करणेषु दोषसत्त्वे प्रमाणाभावाद्दुष्टत्वनिश्चयः। यथाऽपौरुषेये वेदे। यत्र तु करणेषु दोषः संभाव्यते यथा शाक्याद्यागमेषु। तत्र तज्जन्यप्रत्ययस्य दुष्टकरणजन्यत्वेन न सम्यग्ज्ञानत्वमित्याशयेन समाधत्ते—प्रयत्नेनेत्यादिना मन्येमहीत्यन्तेन। एवं च यत्रोत्तरकाले बाधकप्रत्ययो यत्र वा करणेषु दुष्टत्वावगमस्तादृशस्थल एवाऽन्यसंप्रयोगजं ज्ञानमाभासात्मकम्। यत्र तु न तथा तदेव ज्ञानं तत्संप्रयोगे जायमानमनाभासं प्रत्यक्षमिति ज्ञातु शक्यत्वादव्यभिचारिप्रत्यक्षादिकं प्रमाणं न परीक्षितव्यमिति प्रकृतमुपसंहरति—तस्मादिति।

## निरालम्बनवादः।

ननु यत्र करणदोषज्ञानमुत्तरकाले बाधकज्ञानं वा तत्र मिथ्यात्वमन्यस्य तु सत्यत्वमिति पूर्वोक्ता व्यवस्था नोपपद्यते। सर्वेषामेव ज्ञानानां मिथ्यात्वादित्येवं ज्ञानसामान्यस्य निरालम्बनत्वमङ्गीकृत्य बाह्यार्थं ये योगाचारादयोऽपलपन्ति तन्मतं दूषयितुं प्रथमतस्तन्मतरीत्याऽनुमानाद्बाह्यार्थापन्हवं शङ्कते—नन्वित्यादिना निरालम्बन इत्यन्तेन।

उच्यते । स्तम्भ इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यतीति । स्वप्नेऽप्येवमेव सुपरिनिश्चिताऽऽसीत्प्राक्प्रबोधनान्न तत्र कश्चिद्विशेष इति । न । स्वप्ने विपर्ययदर्शनात् । अविपर्ययाच्चेतरस्मिन् । तत्सामान्यादितरत्रापि भविष्यतीति चेत् ।

सर्व एवेति । जाग्रत्कालीनः सर्वोऽपि प्रत्यय इत्यर्थः । तेन नांशतः सिद्धसाधनं न वा दृष्टान्तासिद्धिरिति भावः । **निरालम्बन** इति । बाह्यालम्बनशून्य इत्यर्थः । तेन च प्रकृतानुमाने स्वाभ्युपगतस्वांशालम्बनमादाय बाधशङ्कानवकाशः । **स्वप्नवत्**—स्वप्नकालीनप्रत्ययवदिति दृष्टान्तप्रदर्शनम् । दृष्टान्ते साध्यहेत्वोर्व्याप्तिं प्रदर्शयति—**प्रत्ययस्य हीत्यादिना स्वप्न इत्यन्तेन** । एवं दृष्टान्ते साध्यहेत्वोर्व्याप्तिं प्रदर्श्योपनयवाक्यमाह—**जाग्रतोऽपीत्यादिना भवतीत्यन्तेन** । उपनयो नाम-उदाहरणोपदर्शितसाध्यनियमस्य हेतोः साध्यधर्मिणि पक्ष उपसंहारः । तथा चानेनोपनयवाक्येन जाग्रत्प्रत्ययरूपे पक्षे प्रत्ययत्वरूपहेतोः सद्भावः प्रदर्शितः ।

निगमनवाक्यं प्रदर्शयति—**तस्मात्सोऽपि निरालम्बन** इति । तस्मान्निरालम्बनत्वव्याप्यप्रत्ययत्वरूपहेतुमत्त्वात् । सोऽपि जाग्रत्प्रत्ययः **सर्वोऽपि निरालम्बनः** स्वांशातिरिक्तबाह्यविषयशून्य इत्यर्थः । स्वप्नादिप्रत्यया हि यथावगम्यमानबाह्यार्थाभावाद्देशान्तरकालान्तरवर्तिनां च संनिहितदेशकालतया प्रतिभासासंभवात्कचित्कदाचिदप्यसंभवतां स्वशिरश्छेदादीनां स्वप्ने प्रतिभासादवश्यं स्वात्मांशमेव बहिर्वद्गृह्णन्तीत्यभ्युपगन्तव्यम् । अतस्तत्सामान्याज्जाग्रज्ज्ञानानामपि स्वांशमात्रपर्यवसायित्वान्मिथ्यात्वमेवाऽऽश्रयणीयमिति पूर्वपक्ष्याशयः । स्वाप्नप्रत्ययेषु बाधकेन ज्ञानान्तरेण मिथ्यात्वसंभवेऽपि जाग्रत्कालीनेष्विदं नीलमिदं पीतं स्तम्भोऽयं घटोऽयमित्येवमिदमाकारास्पदीभूतनीलादिरूपबाह्यार्थविषयकेषु प्रत्यक्षात्मकप्रत्ययेषु बाधकज्ञानान्तराभावाद्बहिर्दीत्यानुमानेनेव भवदुक्तानुमानेन प्रत्यक्षबाधायोगाद्बाह्यार्थग्राहि प्रत्यक्षमेव तदपन्हवप्रवृत्तभवदुक्तानुमानस्योदयं निरुणद्धीति प्रत्यक्षप्रमाणबलेन बाह्यार्थोऽवश्यमभ्युपेय इत्याशयेन समाधत्ते—**उच्यत इत्यादिना** । सुपरिनिश्चितेति—सुपरिनिश्चितत्वमबाधितप्रात्यक्षिकप्रतीतित्वम् । इदं च निरालम्बनानुमानात्प्रत्यक्षादीनां बलीयस्त्वं कथयितुमुक्तम् । कथं विपर्यसिष्यतीति । मिथ्या भवितुं नार्हतीत्यर्थः । ननु प्राक्प्रबोधात्स्वप्नप्रत्ययस्यापि सुपरिनिश्चितत्वमेवाऽऽसीदिति जाग्रत्प्रत्ययादविशेषापत्तिरिति शङ्कते—**स्वप्नेऽपीत्यादिना विशेष इतीत्यन्तेन** । समाधत्ते—**नेत्यादिना—इतरस्मिन्नि**त्यन्तेन । स्वप्नकाले सुपरिनिश्चितत्वसंभवेऽपि प्रबोधानन्तरं विपर्ययदर्शनरूपविशेषस्य सत्त्वाज्जाग्रत्प्रत्ययस्य कदाऽपि विपर्ययादर्शनान्न स्वप्नप्रत्ययस्य जाग्रत्प्रत्ययाविशेष इति भावः । पूर्वपक्ष्यभिमतहेतोरप्रयोजकत्वं वक्तुं तामेव शङ्कामनुवदति—**तत्सामान्यादित्यादिना चेदित्यन्तेन** ।

यदि प्रत्ययत्वात्स्वप्नप्रत्ययस्य मिथ्याभावः, जाग्रत्प्रत्ययस्यापि तथा भवितुमर्हति। अथ प्रतीतिस्तथाभावस्य हेतुः, न शक्यते प्रत्ययत्वादयमन्य इति वक्तुम्। अन्यतस्तु स्वप्नप्रत्ययस्य मिथ्याभावो विपर्ययादवगतः। कुत इति चेत्। सनिद्रस्य मनसो दौर्बल्यान्निद्रा मिथ्याभावस्य हेतुः स्वप्नादौ स्वप्नान्ते च। सुषुप्तस्याभाव एव। अचेतयन्नेव हि सुषुप्त इत्युच्यते। तस्माज्जाग्रतः प्रत्ययो न मिथ्येति।

ननु जाग्रतोऽपि करणदोषः स्यात्। यदि स्यादवगम्येत। स्वप्नदर्शनकालेऽपि नावगम्यत इति चेत्। तत्र प्रबुद्धो ह्यवगच्छति निद्राक्रान्तं मे मन आसीदिति।

---

स्वप्नप्रत्यये प्रत्ययत्वरूपहेतुना यथा मिथ्यात्वं तद्वज्जाग्रत्प्रत्ययेऽपि प्रत्ययत्वसत्त्वान्मिथ्यात्वेन भवितव्यमिति शङ्काशयः। न प्रत्ययत्वहेतुना स्वप्नप्रत्ययस्य मिथ्याभावः। अप्रयोजकशङ्कावारकानुकूलतर्कादेरभावात्। किं तु बाधितत्वहेतुनैव। तच्च जाग्रत्प्रत्यये नास्ति। यच्च विद्यते जाग्रत्प्रत्यये प्रत्ययत्वं तत्तु तथात्वस्यैव प्रयोजकं भवितुमर्हति। परं त्ववाधितत्वविशिष्टं तत्प्रयोजकमिति स्वप्नप्रत्यये तादृशस्याभावान्मिथ्यात्वमेव। जाग्रत्प्रत्यये तु तत्सत्त्वात्सत्यत्वमेवेत्याशयेन समाधानमाह— यदीत्यादिना विपर्ययादवगत इत्यन्तेन। स्वप्नप्रत्ययस्य मिथ्यात्वे कारणान्तरं करणदोषरूपं प्रश्नपूर्वकमुपपादयति—कुत इत्यादिना, इत्युच्यत इत्यन्तेन। स्वप्नादौ स्वप्नान्ते चेति। स्वप्नारम्भप्रभृति स्वप्नावसानपर्यन्तं जायमानप्रत्यये करणं सनिद्रं मन इति करणदोषरूपा निद्रा मिथ्यात्वस्य हेतुः। सुषुप्त्यवस्थायां तु प्रत्ययसामान्यस्याप्यभाव एव। स्वप्नावस्थायामेव जायमानप्रत्ययस्य करणदोषान्मिथ्यात्वमिति भावः। जाग्रत्कालीनप्रत्ययस्योक्तकरणदोषाभावान्न मिथ्यात्वमित्युपसंहरति—तस्मादिति।

जाग्रत्कालीनप्रत्यये करणदोषस्यानवगम्यमानत्वेनासंभवं शङ्कापूर्वकमाह—नन्वित्यादिना। स्वप्नप्रत्यये तु तत्काले करणदोषानवगमेऽपि प्रबुद्धेन पुरुषेण निद्राक्रान्तं मे मन आसीदित्येवमवगम्यमानत्वान्मिथ्यात्वमित्याह—स्वप्नदर्शनकालेऽपीत्यादिना। तथा च बाह्यार्थग्राहिप्रत्यक्षविरुद्धं बाह्यार्थापह्नवप्रवृत्तं भवदुक्तमनुमानं नैवोत्पत्तुमर्हतीति भावः।

## शून्यवादः।

एवं परोक्तानुमाने प्रत्यक्षविरोधेन निराकृतेऽधुना प्रत्यक्षस्य बहिः प्रवृत्तौ सामर्थ्य-

'शून्यस्तु'कथम् । अर्थज्ञानयोराकारभेदं नोपलभामहे । प्रत्यक्षा च नो बुद्धिः । अतस्तद्भिन्नमर्थरूपं नाम न किंचिदस्तीति पश्यामः । स्यादेतदेवम्— यदर्थाकारा बुद्धिः स्यान्निराकारा तु नो बुद्धिः । आकारवान्बाह्योऽर्थः । स हि बहिर्देशसंबद्धः प्रत्यक्षमुपलभ्यते ।

---

मेव नास्तीत्येवं पूर्वोक्तलेशेन स एव शून्यवादी पुनः प्रत्यवतिष्ठते—शून्यस्त्वित्यादिना । अत्र-प्रकृतत्वात्प्रत्यय इत्यनुवर्तते । तुशब्देन च पूर्वोक्तपक्षो व्यावर्त्यते । तथा चायमर्थः—प्रत्ययो नीलमित्यादिप्रत्यक्षात्मकः । शून्यः स्वांशव्यतिरिक्तविषयशून्यः । किं तु नीलाद्याकारविशिष्टं स्वात्मानमेव गृह्णातीति । इदं नीलमित्यादिरूपेण बाहिरवभासमानस्य कथं ज्ञानाकारत्वमिति पृच्छति—कथमिति । उत्तरमाह—अर्थज्ञानयोरित्यादिना । इदं नीलमित्यादिप्रतीतौ द्वयोर्भिन्नाकारवतोरर्थज्ञानयोर्नोपलब्धिः । किं त्वेकमेव नीलाद्याकारविशिष्टं वस्तु प्रतीयत इत्युभयवादिसंप्रतिपन्नमित्यर्थः । तच्च वस्तु प्रतीयमानं किं बाह्यमुत ज्ञानात्मकमित्यपेक्षायामाह—प्रत्यक्षा च नो बुद्धिरिति । अयमर्थः—तादृशप्रतीतौ बुद्धिरेव नीलाद्याकारविशिष्टा प्रत्यक्षात्मिका भासते । न तु तद्भिन्नो जडात्मको बाह्योऽर्थः । जडस्य तस्य बाह्यस्य ग्राह्यत्वाङ्गीकारे, तस्य ग्राह्यत्वसिद्धये ग्राहकं ज्ञानान्तरमवश्यं कल्पनीयम् । तत्र च प्रमाणाभावः । अतः स्वप्रकाशा बुद्धिरेव नीलाद्याकारविशिष्टा प्रत्यक्षा प्रतीयत इत्यभ्युपगन्तव्यमिति । एवं च स्वप्रकाशबुद्धेरेव ग्राह्यत्वेन ग्राह्यग्राहकयोरैक्यस्याभ्युपगन्तव्यत्वात्तत्रैवोपक्षीणा प्रत्यक्षप्रमा न तद्भिन्नबाह्यार्थकल्पनाय प्रभवतीति बाह्यार्थसद्भावो निष्प्रमाणक इत्याशयेन प्रकृतशङ्कामुपसंहरति—अत इत्यादिना पश्याम इत्यन्तेन ।

ग्राह्यग्राहकवस्तुनोर्यद्यभिन्नत्वं त्वयेष्यते तदा ग्राह्यग्राहकान्यतरसंवित्तौ ग्राह्यग्राहकाकारयोर्द्वयोरपि ग्रहणं भवेन्न तु तद्वदिति । यदेदं नीलमित्यादौ नीलादिग्राह्याकारं भासते न तदा ग्राहकाकारो भासते । ग्राहकं हि ज्ञानं करणं क्रिया कर्ता वा स्यात् । यथा नीलमहं जानामीत्यादौ ज्ञानाश्रयरूपग्राहकाकारमानं तद्वदिदं नीलमित्यादिप्रत्ययेषु ग्राह्याकारविषयेषु ग्राहकस्य ज्ञानस्याऽऽकारः कर्तृत्वाद्यन्यतमरूपो नैव प्रतीयते । एवं यदा न कश्चिद्ग्राहकाकारमात्रं गृह्यते न तत्र ग्राह्यसंवेदनमस्ति । इदं चाग्रे न तु पूर्वं ज्ञायत इतिभाष्य एवोपपादयिष्यते । एवं च ग्राह्यमात्रसंवित्तौ ग्राहकग्रहणाभावाद्ग्राहकमात्रसंवित्तौ ग्राह्यग्रहणाभावाद्ग्राह्यग्राहकयोरैक्येऽभ्युपगम्यमानेऽन्यतरसंवित्तौ द्व्याकारप्रतीतेरावश्यकत्वात्तस्य चानुपलम्भान्न ग्राह्यग्राहकयोरैक्यमभ्युपगन्तुं युक्तमिति ।

इदं नीलमित्यादिप्रत्यक्षप्रत्ययेषु प्रतीयमानार्थो नीलादिर्न ज्ञानाकारः किं तु बाह्य एवेत्यङ्गीकर्तव्यमित्याशयेन समाधत्ते—स्यादेतदेवमित्यादिना ।

अर्थविषया हि प्रत्यक्षबुद्धिर्न बुध्यन्तरविषया । क्षणिका हि सा न बुद्ध्यन्तरकालमवस्थास्यत इति । उत्पद्यमानैवासौ ज्ञायते ज्ञापयति चार्थान्तरं प्रदीपवदिति यदुच्यते तन्न । न ह्यज्ञातेऽर्थे कश्चिद्बुद्धिमुपलभते । ज्ञाते त्वनुमानादवगच्छति । तत्र यौगपद्यमनुपपन्नम् । नन्त्पन्नायामेव बुद्धौ ज्ञातोऽर्थ इत्युच्यते नानुत्पन्नायाम् । अतः पूर्वं बुद्धिरुत्पद्यते पश्चाज्ज्ञातोऽर्थः ।

---

त्ववदभ्युपगतमैक्यं सिध्येदित्यर्थः । यद्यर्थाकारा बुद्धिरिति । यदि जायमाना सर्वाऽपि बुद्धिर्नीलाद्यर्थरूपाकारविशेषविशिष्टैव प्रतीयेत तदैवं स्यादिति पूर्वेण संबन्धः। निराकारा तु नो बुद्धिरिति । तुशब्देन वैषम्य प्रदर्श्यते । कदाचिन्निराकारा ग्राह्याकाररहिता बुद्धिर्ग्राहकमात्रविषयिणी दृश्यते । इदं चोपरिष्टाद्भाष्य एव स्पष्टीभविष्यति । आकारवान्बाह्योऽर्थ इति । इदं नीलमित्यादिप्रतीतौ प्रतीयमानो नीलाद्याकारवान्बाह्य एवार्थ इत्यर्थः । अमुमर्थमुपपादयति—स हीत्यादिना । स हि स एव हि नीलाद्याकारः, बहिर्देशसंबद्धो ग्राहकान्निष्कृष्टः प्रत्यक्षमुपलभ्यते प्रत्यक्षप्रतीतौ विषयो भवति न बुद्धिरित्यर्थः। तथा च ग्राह्यमात्रविषयकप्रतीतौ ग्राहकाभानाद्ग्राहकमात्रविषयके च ग्राह्याभानाद्ग्राह्यग्राहकयोरैक्ये च सर्वत्र द्व्याकारभानस्याऽऽवश्यकत्वात्तस्य चोक्तरीत्याऽभावान्न प्रत्यक्षात्मिका प्रतीतिः स्वांशमेव गृह्णाति किं तु स्वांशव्यतिरिक्तं बाह्यमेव वस्तु गृह्णातीत्याशयः । ननु ग्राह्यस्य ग्राहकाद्भिन्नत्वेऽप्यतीतं ज्ञानमेवोत्तरज्ञानस्य ग्राह्यं नार्थ इति न ज्ञानभिन्नोऽर्थः प्रामाणिक इति वैभाषिकमतं दूषयन्नाह—अर्थविषया हीत्यादिना अवस्थास्यत इतीत्यन्तेन । इदं नीलमित्याद्याकारकप्रत्यक्षबुद्धिर्बाह्यार्थविषयिण्येव । नातीतबुद्ध्यन्तरविषयिका इत्यर्थः । अत्र हेतुं प्रदर्शयति—क्षणिका हि सेति । वैभाषिकमते ज्ञानानां सर्वेषामपि क्षणिकत्वाभ्युपगमादुत्तरबुद्ध्युत्पत्तिकाले पूर्वबुद्धेरवस्थित्यभावात्प्रत्यक्षस्य च विद्यमानार्थसंप्रयोगजत्वनियमान्नाविद्यमानपूर्वज्ञानविषयिणी प्रत्यक्षात्मिकोत्तरबुद्धिः । किं त्विदं नीलमित्येवमिदंकारास्पदत्वेन भासमाननीलादिरूपबाह्यार्थविषयिण्येवेति भावः । नन्वर्थग्रहणकाले ज्ञानस्यापि ग्रहणे प्रतिबन्धाभावं किं नेच्छति भवान् । तथा चाप्रतिबद्धस्य ज्ञानस्याग्रहणायोगाद्ग्रहणे चाभ्युपगन्तव्ये गृह्यमाणस्य ज्ञानस्यैवायमाकारो नीलादिर्भवितुमर्हतीति बाह्यार्थाभावसिद्धिरस्मदभिमता सेत्स्यतीत्याशयेन शून्यवादी बाह्यार्थवादिनं चोदयति—उत्पद्यमानैवेत्यादिना ।

सत्यम् । पूर्वं बुद्धिरुत्पद्यते न तु पूर्वं ज्ञायते । भवति हि कदाचिदेत-

न त्वनेन भाष्येण पूर्वपक्षिपक्षोपन्यासः । अर्थग्रहणकाले बुद्धिग्रहणोपन्यासस्य तदभिमतबाह्यार्थापह्नवानुपयोगित्वात् । प्रत्युतार्थान्तरं ज्ञापयतीति भाष्यवचनमर्थोपह्नववाद्यभिमतस्य विपरीतमेवाऽऽपद्येतेति पूर्वोक्तरीत्यैव भाष्याशयो ज्ञेयः ।

समाधानमाह—सत्येत्यादिनाऽनुपपन्नमित्यन्तेन । अयमाशयः—सत्यम् । अर्थग्रहणकाले बुद्धेर्ग्रहणे नास्ति प्रतिबन्धः । तथाऽपि ग्राहकाभावान्न तदा बुद्धिर्गृह्यते । अर्थस्य ज्ञातत्वमेव बुद्धेर्ग्राहकं लिङ्गम् । तच्चार्थग्रहणसमये न विद्यते । अस्मन्मते ज्ञातताऽलिङ्गकानुमानेनैव बुद्धेर्ग्रहणाङ्गीकारात्तस्य चार्थग्रहणोत्तरकालीनत्वान्न प्रतिबन्धकाभावमात्रेणार्थग्रहणसमये बुद्धेर्ग्रहणं भवितुमर्हतीति । ज्ञाते त्वनुमानादिति । अर्थे ज्ञाते सति ज्ञातताऽलिङ्गकानुमानाद्बुद्धिमवगच्छतीत्यर्थः । अनुमानं चेत्थम् । घटो विषयतासंबन्धेन ज्ञानविशिष्टः । स्वरूपसंबन्धेन ज्ञाततावत्त्वात् । ज्ञातता नाम ज्ञानजन्यो ज्ञेयनिष्ठोऽतिशयविशेषः । स च मानसप्रत्यक्षविषयः । तत्र यौगपद्यमिति । तत्रैवं स्थिते यौगपद्यमर्थज्ञानयोर्ग्रहणयौगपद्यमित्यर्थः । ज्ञाते त्वनुमानादवगच्छतीति सिद्धान्तिनो वाक्याद्भ्रान्तः शून्यवादी सिद्धान्तिपक्षमन्यथा गृहीत्वा चोदयति—ननूत्पन्नायामित्यादिना ज्ञातोऽर्थ इत्यन्तेन । शङ्काग्रन्थस्यायमाशयः—ज्ञानस्योत्पत्तिरुपलब्धिश्च द्वयं युगपदिति तावदविवादम् । तत्तु द्वयमर्थोपलब्धेः प्राक्पश्चाद्युगपद्वेत्येतावदेव विचारणीयम् । एवं च मीमांसको भवानर्थसंवित्तेः पश्चाज्ज्ञानसंवित्तिं ब्रवीति ज्ञाते त्वनुमानादवगच्छतीति । अतस्तव ज्ञानोत्पत्तिरपि पश्चादेवाभिमतेति ज्ञायते । न च तद्युक्तम् । अतोऽर्थसंवित्तेः प्राग्ज्ञानस्योत्पत्तिस्त्वयाऽभ्युपगन्तव्या । एवं चोत्पत्त्युपलब्ध्योर्युगपदेवाऽऽश्रयणीययोर्मध्ये एकस्या उत्पत्तेः पूर्वत्वेऽभ्युपगम्यमाने तन्नियतसमानकालोपलब्धेरपि पूर्वत्वमकामेनाप्यभ्युपगन्तव्यम् । तथा च प्रागर्थग्रहणाद्बुद्धेरुत्पत्तिसमय एव ग्रहणेऽभ्युपगन्तव्ये प्रतीयमानो नीलादिः प्रतीयमानबुद्धेराऽऽकारो न तु तद्भिन्नो बाह्योऽर्थ इत्यस्मदभिमताऽर्थाभावसिद्धिः सेत्स्यतीति । अत्र च शङ्काभाष्ये यथाश्रुतरीत्याऽर्थग्रहणात्प्राग्बुद्धेरुत्पत्तिमात्रं पूर्वपक्ष्युपपादितं भाति न तु बुद्धेर्ग्रहणमपि । तथाऽपि न तावन्मात्रमेव शङ्काग्रन्थाशयः । तावन्मात्रस्य स्वपक्षासाधकत्वात्परपक्षाविरोधित्वात्सिद्धान्तभाष्ये च न तु पूर्वं ज्ञायत इत्यनेन क्रियमाणस्य ग्रहणप्रतिषेधस्याप्रसक्तप्रतिषेधत्वापत्तेश्च ।

पूर्वोक्तं शून्यवादिनो भ्रमपपाकुर्वन्सिद्धान्ती स्वाशयमाह—सत्यमित्यादिना । नास्माभिर्बुद्धेरुत्पत्तिरपि पश्चादेवेतीष्यते । किं तु पूर्वमेव बुद्धिरुत्पद्यते न तु तदानीं ज्ञायते । किं त्वर्थप्रतीत्यनन्तरमनुमानादेव पूर्वोक्ताज्ज्ञायत इत्यर्थः । अत्र साधकमाह—भवति हीत्यादिना । अनेन भाष्येण ज्ञातो मया वस-

यज्ज्ञातोऽर्थः सन्नज्ञात इत्युच्यते। न चार्थव्यपदेशमन्तरेण बुद्धे रूपोपलम्भनम्। तस्मान्न व्यपदेश्या बुद्धिरव्यपदेश्यं च न प्रत्यक्षम्। तस्मादप्रत्यक्षा बुद्धिः।

---

न्तेऽस्मिन्देशे कोऽपि पुरुषः संप्रति विस्मृतवानस्मीति पूर्वत्र ग्राह्ये देवदत्ते स्मृतावप्रतिभासमानेऽपि तद्गोचरं ज्ञानं प्रतिभासत इत्युक्तं भवति। यद्यपि सहानुभूतयोरपि द्वयोर्मध्य उत्तरत्र स्मरणकाल एकस्य स्मरणमपरस्य च विस्मरणमित्येवं संभवात्प्रकृतेऽर्थविस्मरणे सत्यपि ज्ञानमात्रस्मरणेन हेतुनाऽर्थसंवित्तिसमये ज्ञानसंवित्तिर्न संभवतीति साधयितुं न शक्यत इति शङ्कितुं शक्यं तथाऽपि फलद्वारेदं साधनमुच्यते। तथा हि। बुद्धेः पूर्वोपलब्धिसाधनस्य हि फलं नीलादेर्ज्ञानाकारत्वसिद्धिस्तदनेन निराक्रियते। नीलाकारं चेज्ज्ञानं न तन्निर्मुक्तं स्मर्येत। स्मर्यते चोक्तरीत्या। अतो न ज्ञानं नीलाकारं किं तु नीलादिर्ज्ञानाद्ग्राहकादत्यन्तभिन्नः। ग्राहकसंवित्तावसंवेद्यमानत्वात्। यद्यत्संवित्तावसंवेद्यमानं तत्तद्भिन्नम्। यथा रसनग्राह्यो रसादिः। एवमर्थज्ञानयोरत्यन्तभेदान्नार्थग्रहणसमये बुद्धिर्ज्ञातुं शक्येति न तु पूर्वं ज्ञायते बुद्धिरित्युच्यत इत्याशयः। अपि चेत्यादिरवगच्छाम इत्यन्तो भाष्यग्रन्थोऽत्रैव संगतत्वादपकृष्य योजनीयः। काममित्यादेः प्रत्यक्षस्य सत इत्यन्तस्य ग्रन्थस्यायमाशयः—ग्राह्यग्राहकयोरेकरूपत्वमभ्युपगच्छता यद्यवश्यमन्यतरदपह्नोतव्यं तर्होऽर्थप्रकाशायीनं तदन्यथानुपपत्त्याऽनुमेयं ज्ञानमेवापह्नोतव्यं न तु प्रत्यक्षसिद्धोऽर्थ इति। इदं चातिशयोक्तिमात्रं न परमार्थः। परमार्थतस्त्वाह—न चैकरूप्यमिति। एकरूपत्वं नानुभूयत इत्यर्थः। अत्र हेतुमाह—अनाकारामित्यादिना। यत इदं नीलमित्यादिप्रत्ययेषु पूर्वोक्तरीत्या बुद्धिर्न भासते नीलादेश्च बुद्ध्याकारत्वं न भासतेऽतः प्रतीयमाननीलाद्याकारविशिष्टा बुद्धिर्न भवति। नापि प्रत्यक्षा भवितुमर्हति। किं त्वर्थप्रकाशान्यथानुपपत्त्याऽनुमेयैव। अर्थस्तु बाह्यो नीलाद्याकारविशिष्टः प्रत्यक्षोऽवगम्यते। अतो विरुद्धधर्मवत्तेोर्द्वयोरपि प्रमाणप्रमितयोर्ग्राह्यग्राहकयोरेकरूपत्वं पुनरसंभावितमित्याशयः। पराभिमतं बुद्धेः प्रत्यक्षत्वं निराकरोति—न चेत्यादिनाऽप्रत्यक्षा बुद्धिरित्यन्तेन। अर्थव्यपदेशमन्तरेणेति। अर्थरूपाद्धेदेनेत्यर्थः। बुद्धे रूपोपलम्भनमिति। स्वीयेन रूपेण निरूपणं न चास्तीत्यर्थः। स्वच्छं चिन्मात्रं नैसर्गिकं ज्ञानरूपम्। तत्तु वासनोपप्लवादविद्यमाननीलाद्याकारं प्रकाशत इति बुद्धानां सिद्धान्तः। एवं च स्वरूपेण निरूपयितुमनर्हा बुद्धिः पररूपेणात्मना व्यपदेश्या भवति। तथा च पररूपेण व्यपदेश्यं स्वरूपेणाव्यपदेश्यं वस्तु शृगनीयात्मना प्रतीयमानवस्तुवत्र प्रत्यक्षविषयो भवितुमर्हति। अतो बुद्धिर्न प्रत्यक्षेत्याशयः। उपसंहरति—तस्मादिति।

अपि च कायमेकरूपत्वे बुद्धेरेवाभावो नार्थस्य प्रत्यक्षस्य सतः । न चैकरूप्यमनाकारामेव हि बुद्धिमनुमिमीमहे । साकारं चार्थं प्रत्यक्षमेवावगच्छामः । तस्मादर्थालम्बनः प्रत्ययः ।

अपि च नियतनिमित्तस्तन्तुष्वेवोपादीयमानेषु पटप्रत्ययः । इतरथा तन्त्वादानेऽपि कदाचिद्घटबुद्धिरविकलेन्द्रियस्य स्यात् । न चैवमस्ति । अतो न निरालम्बनः प्रत्ययः । अतो न व्यभिचरति प्रत्यक्षम् ।

---

इदं नीलमित्यादिप्रत्ययो न स्वात्मभूतनीलाद्याकारविशिष्टबुद्धिविषयकः किं तु स्वव्यतिरिक्तबहिर्विद्यमाननीलादिरूपार्थविशेषविषयक एवेत्यर्थः ।

किं चायं घटोऽयं पट इत्यादिप्रत्ययानां बाह्यार्थानालम्बनत्वपक्षेऽनिष्टं प्रदर्शयन्नाह—अपि चेत्यादिना । तन्तुष्वेवोपादीयमानेष्वयं पट इत्येव प्रत्ययो न तु मृत्पिण्ड उपादीयमाने । एवं तन्तुष्वुपादीयमानेषु पटप्रत्यय एव न तु कदाचिदविकलेन्द्रियस्य घटप्रत्ययोऽपि । एवं प्रत्ययसामान्यस्य यन्नियतनिमित्तत्वमस्ति सार्वजनीनं तदर्थापह्नववादिमते दुर्घटमेव स्यात् । ज्ञानव्यतिरिक्तनियामकस्यैवाप्रसिद्धेः । न चार्थवादिनो यथा कारणीभूततन्त्वादिनिष्ठशक्तिवशात्पटादिरूपकार्यारम्भव्यवस्था तथा ज्ञानवादिनोऽपि कारणीभूततन्तुज्ञानादिनिष्ठशक्तिवशात्पटज्ञानादिरूपकार्यव्यवस्था सिद्ध्यत्येवेति शङ्कितुं शक्यम् । यतोऽर्थवादिमते प्रतिकार्यं व्यवस्थिताः पारमार्थिक्यः कारणीभूततन्त्वादिनिष्ठाः शक्तयः प्रसिद्धा विद्यन्ते । तासां च शक्तीनां स्वकार्येनियमं प्रति व्यञ्जकानि देशकालकर्त्रादीन्यपेक्षितानि कादाचित्कानि विद्यन्ते । ज्ञानवादिनश्च ज्ञानव्यतिरिक्तानां शक्तीनां पारमार्थिकीनामेवाप्रसिद्धेस्तदभिव्यञ्जकानां देशकालादीनां सुतरामसंभवः । अतोऽर्थवादिनः शक्तिकृता व्यवस्था सिध्यति न ज्ञानवादिन इति । अतः प्रत्ययस्य नियतनिमित्तत्वानुरोधेन निरालम्बनत्वं न सिध्यति । किं तु बाह्यार्थविषयकत्वमेवेत्यकामेनाप्यभ्युपगन्तव्यमित्युपसंहरति—अतो न निरालम्बन इति । एवं प्रत्यक्षपरीक्षणे क्रियमाणे तस्य बहिःप्रवृत्तौ सामर्थ्यस्य सत्त्वात्तादृशबहिर्विषयविषयकप्रत्यक्षविरुद्धस्य बौद्धाभिमतस्य निरालम्बनत्वानुमानस्यैवानुत्पत्तेर्यत्र प्रत्यये दुष्टं करणमुत्तरकाले बाधकप्रत्ययो वा तादृशप्रत्ययस्यासमीचीनत्वेऽपि यत्र तदुभयं नास्ति तादृशः समीचीनः प्रत्यक्षात्मकः प्रत्ययो न व्यभिचरत्येवेति न परीक्षितव्यमेव प्रत्यक्षमित्याशयेनोपसंहरति—अतो न व्यभिचरतीति ।

निमित्तसूत्रे हि वृत्तिकारमतरीत्या प्रत्यक्षादीनां प्रमाणानां प्रसिद्धत्वेनापरीक्ष्यत्वे वर्णितेऽनन्तरं व्यभिचारात्परीक्षितव्यं प्रमाणं शुक्तिरजतवेदने हि प्रत्यक्षस्य व्यभि-

अनुमानं ज्ञातसंबन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसंनिकृष्टेऽर्थे बुद्धिः।
तत्तु द्विविधं—प्रत्यक्षतो दृष्टसंबन्धं सामान्यतो दृष्टसंबन्धं च।
प्रत्यक्षतो दृष्टसंबन्धं यथा—धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम्।

---

चारात्तत्पूर्वकत्वाच्चेतरेषामपि व्यभिचार इति चोदिते प्रत्यक्षस्यैतावता ग्रन्थेनाव्यभिचारित्वप्रदर्शनेनापरीक्ष्यत्वोक्त्या तत्पूर्वकत्वेन यदनुमानादीनां व्यभिचारित्वमुक्तं तत्परिहारे जातेऽपीदानीमात्मीयलक्षणानुरोधेनाप्यव्यभिचारादनुमानादिकं न परीक्षितव्यमिति प्रतिपादनार्थमनुमानादीनामनुपलब्धयन्तानां प्रमाणानां लोकप्रसिद्धानि लक्षणानि प्रदर्शयितुकाम प्रथममनुमानलक्षणं प्रदर्शयति—अनुमानमित्यादिना।

### अनुमानलक्षणम्।

अत्रानुमानशब्दोऽनुमितिपरः। ज्ञातसंबन्धस्येति। तृतीयाबहुव्रीहिः। ज्ञातः सबन्धः लिङ्गलिङ्गिनोर्व्याप्त्याख्यः सबन्धो येन प्रमात्रा पुरुषेण तस्य। लिङ्गलिङ्गिसबन्धाख्यव्याप्तिज्ञानवत पुरुषस्येत्यर्थः। एकदेशदर्शनादिति। अत्र पक्षधर्म्येकदेशरूपाभ्यामेकदेशाभ्यामेकदेशिसंबन्धिरूपाभ्यामर्थादाक्षिप्यते। तथा च पक्षधर्मिण्येकदेशिनि पर्वतादावेकदेशदर्शनाद्धूमाद्यात्मकलिङ्गरूपैकदेशदर्शनादेकदेशान्तरे वह्न्याद्यात्मकलिङ्गिरूपैकदेशान्तरेऽसंनिकृष्टे—इन्द्रियसनिकर्षाभाववत्यर्थे या बुद्धिर्जायते तदनुमानम्। अनुमितिरित्यर्थः। अनेन च व्याप्तिस्मृतिपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिरित्येव लक्षणमुक्तं भवति। अत्र भाष्येऽसनिकृष्टग्रहणमनुमितेः प्रमाणान्तरानधिगतार्थविषयकस्वरूपप्रामाण्यसूचनार्थं वेदितव्यम्। एवं सामान्यलक्षणमुक्त्वाऽनुमानं विभजते—तत्तु द्विविधमित्यादिना। प्रत्यक्षतो दृष्टसबन्धं सामान्यतो दृष्टसंबन्धं चेति द्विप्रकारमनुमानमित्यर्थः। प्रत्यक्षतो दृष्टसंबन्धमिति। यत्र विशेषयोरेव प्रत्यक्षेण सबन्धो गृह्यते तद्विशेषविषयं प्रत्यक्षतो दृष्टसबन्धमित्युच्यते। यथा यस्मिन्नेव धर्मिणि गोमयेन्धनाग्निविशेषतज्जन्यधूमविशेषयोः सबन्धग्रहणं प्रत्यक्षेण जातं तस्मिन्नेव धर्मिणि कालान्तरे तस्यैव धूमविशेषस्य दर्शनेन तस्यैव सदिह्यमानसद्भावस्याग्निविशेषस्य यदनुमानं तत्प्रत्यक्षतो दृष्टसबन्धात्मकमनुमानमित्याशय। तदिदमाह—यथा धूमाकृतिदर्शनादित्यादिना। अत्र भाष्ये धूमदर्शनादग्निविज्ञानमिति वक्तव्ये आकृतिग्रहणमाकृत्योरेवेतरव्यवच्छेदकत्वेन हेतुमात्यवव्यापर्यवमानार्थमिति ज्ञेयम्। अत्र प्रत्यक्षविषयस्यैवानुमानविषयत्वेऽपि पूर्वतो वा कालान्तरस्याऽऽधिक्येन मानादनुमाने प्रामाण्यमित्यपि विज्ञेयम्। अस्यैव विशेषानवच्छिन्नस्य सामान्यतो दृष्टोदाहरणत्वसभवेऽपि विशेषतो दृष्टसंबन्धित्वाद्दर्श-

सामान्यतो दृष्टसंबन्धं यथा—देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्याऽऽदित्यगतिस्मरणम् ।

शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञानम् ।

उपमानमपि सादृश्यमसंनिकृष्टेऽर्थे बुद्धिमुत्पादयति । यथा गवयदर्शनं गोस्मरणस्य ।

---

कीर्णनिःसंदिग्धसामान्यतो दृष्टोदाहरणप्रदर्शनार्थमुदाहरणान्तरमाह—सामान्यतो दृष्टसंबन्धं यथेति । यत्र सामान्ययोरेव प्रत्यक्षेण संबन्धो गृह्यते तत्सामान्यतो दृष्टसंबन्धमित्यर्थः । आदित्यो गतिमान्देशान्तरप्राप्तिमत्त्वात् । यो यो देशान्तरप्राप्तिमान्स स गतिमान् । यथा देवदत्त इति । अत्र गतिप्राप्त्योः सामान्ययोरेव प्रत्यक्षेण संबन्धो गृहीतः । आदित्ये गत्यनुमानोपयोगीतीदं सामान्यतो दृष्टसंबन्धमन्यानुमानमित्याशयः । गतिस्मरणमिति । गत्यनुमानमित्यर्थः ।

### शास्त्रलक्षणम् ।

एवमनुमानलक्षणमुक्त्वा प्रसिद्धप्रमाणमात्रस्य शब्दविशेषस्य शास्त्रस्य वेदार्थविचारोपयोगित्वेन लक्षणमाह—शास्त्रमिति । शास्त्रशब्देनात्र पङ्कजादिपदवद्योगरूढ्या धर्माधर्मोपदेशीनि चतुर्दशाष्टादश वा विद्यास्थानान्युच्यन्ते । शब्दविज्ञानादित्यत्र शब्दशब्देन सामान्यवाचिना प्रकृतत्वाच्चोदनाऽभिधीयते । अर्थशब्देन च धर्माधर्मावभिधीयेते । ततश्चायमर्थः—चोदनात्मकशब्दविज्ञानात्प्रमाणान्तरागम्यधर्माधर्मविषयकज्ञानजनकं शास्त्रमिति । अतश्च प्रकृतलक्षणस्य न वेदानुपयोगित्वं न वा लौकिकवाक्येष्वतिव्यापकत्वमिति विज्ञेयम् । अस्य च शब्दप्रमाणस्य यथा नानुमानान्तर्भावस्तथा प्रपञ्चितं वार्तिके तत्रैव द्रष्टव्यम् ।

### उपमानलक्षणम् ।

एवं शब्दप्रमाणं निरूप्य प्रसिद्धप्रमाणमात्रस्योपमानप्रमाणस्य वेदार्थविचारोपयोगित्वेन लक्षणमाह—उपमानमिति । सादृश्यमित्युपमानपदविवरणम् । यत् सादृश्यं दृश्यमानमसंनिकृष्टेऽर्थे—प्रमाणान्तरागम्येऽर्थे बुद्धिमुत्पादयति तदुपमानम् । उपमित्यात्मकप्रमाकरणमिति लक्षणवाक्यार्थः । उदाहरणं प्रदर्शयति—यथेति । गवयदर्शनम् । अरण्ये गतस्य गवयाख्यमृगविशेषं पश्यतः गोसदृशो गवय इत्याकारकं सादृश्यविशिष्टगवयदर्शनमित्यर्थः । गोस्मरणस्येति । एतादृशगवयदर्शनानन्तरमेतत्सदृशी मदीया गौरित्याकारकं सादृश्यविशिष्टगोज्ञानं यत्तस्येत्यर्थः । जनकमिति शेषः । अस्य च सादृश्यविशिष्टगोज्ञानस्य गोविषये स्मरणरूपत्वे सादृश्यविषये प्रत्यक्षरूपत्वेऽपि सादृश्यविशिष्टस्य गवादेरन्यतोऽसिद्धेरुपमानप्रमेयत्वं वह्निविशिष्टपर्वतस्यानुमानप्रमेयत्ववद्विज्ञेयम् ।

अर्थापत्तिरपि दृष्ट: श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना। यथा- जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना।

---

अर्थापत्तिलक्षणम्।

एवमुपमानं निरूप्य प्रसिद्धप्रमाणभावस्यार्थापत्तिप्रमाणभावस्य लक्षणमाह-अर्थापत्तिरपीत्यादिना। दृष्ट इति। प्रत्यक्षादिप्रमाणपञ्चकेन प्रमित इत्यर्थ। श्रुत इति पृथगुपादानात्प्रमितमात्रवचनोऽपि दृष्टशब्दो गोबलीवर्दन्यायेन श्रुतातिरिक्तप्रमितमात्रपरो ज्ञेय। श्रुत इति। शब्दप्रमाणप्रमित इत्यर्थ। श्रुतपदस्य पृथगुपादानं स्वर्थविषयदृष्टार्थापत्त्यपेक्षयाऽस्या श्रुतार्थापत्ते प्रमाणग्राहिणीत्वेन वैलक्षण्यप्रदर्शनार्थम्। तथा च लक्षणपरभाष्यस्यायमर्थ-प्रमाणषट्केण प्रमितस्यार्थस्यार्थान्तरेण विनाऽनुपपत्तिमालोच्य तदुपपत्तये याऽर्थान्तरकल्पना साऽर्थापत्तिरिति। तत्र प्रत्यक्षमिनान्यथानुपपत्त्याऽर्थकल्पना यथा-प्रत्यक्षतोऽवगताद्दाहाद्वह्नेर्दाहशक्तिकल्पना। अनुमानपूर्विकाऽर्थापत्तिर्यथा-देशान्तरप्राप्तिलिङ्गकेनानुमानेनाऽऽदित्ये गतिमनुमाय तदन्यथानुपपत्त्याऽऽदित्ये गमनशक्तिकल्पना। शब्दपूर्विका प्रमाणग्राहिण्यर्थापत्तिर्यथा-' पीनो देवदत्तो दिवा न भुङ्क्ते ' इति श्रुतेन वाक्येन दिवाऽभुञ्जाने देवदत्ते पीनत्वरूपो योऽर्थ प्रमितस्तदन्यथानुपपत्तिमालोच्य तदुपपत्तये 'रात्रौ भुङ्क्ते' इति रात्रिभोजनरूपार्थप्रतिपादकवाक्यान्तरस्य कल्पना। न चात्र दिवावाक्यप्रमितार्थस्योपपत्त्यर्थं रात्रिभोजनरूपार्थमात्रकल्पना युक्ता समाश्रयितुम्। श्रुतवाक्यप्रतीयमानार्थान्यथानुपपत्तिप्रतिसंधानेन तदुपपत्तय आकाङ्क्षितस्यार्थान्तरस्य तद्बोधकेन वाक्येनैव समर्पणस्य युक्तत्वात्। शाब्द शाब्देनान्वेतीति न्यायात्। उपमानपूर्विका त्वर्थापत्तिर्यथा-गवयदर्शनादेतत्सदृशो गौरिति यद्गवि गवयसादृश्यमुपमितं तदन्यथानुपपत्त्या तादृशसादृश्यविशिष्टगवि तादृशप्रमाविषयत्वशक्तिरस्तीति कल्पना। अर्थापत्तिपूर्विकाऽर्थापत्तिर्यथा-अर्थबोधान्यथानुपपत्त्या शब्दस्य वाचकशक्तिं कल्पयित्वा पुनस्तदनुपपत्त्या शब्दस्य नित्यत्वकल्पना। इदं च शब्दनित्यत्वाधिकरणे स्पष्टी भविष्यति। अभावपूर्विकामर्थापत्तिमुदाहरति भाष्यकारो यथा-जीवति देवदत्त इत्यादिना। जीवतो देवदत्तस्य गृहेऽभावो योग्यानुपलब्ध्या प्रमित। तदन्यथानुपपत्त्या च बहिर्भावस्य प्रमाणान्तरागम्यस्य या कल्पना साऽभावपूर्विकाऽर्थापत्तिरित्यर्थ। इदं च भाष्यकारोदाहृतं पूर्वोक्तसर्वोदाहरणोपलक्षकं विज्ञेयम्।

अनुपलब्धिलक्षणम्।

अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्यासंनिकृष्टस्य । तस्मात्प्र- सिद्धत्वान्न परीक्षितव्यं निमित्तम् ।

ननु प्रत्यक्षादीन्यन्यानि भवन्तु नाम प्रमाणानि । शब्दस्तु न प्रमाणम् । कुतः । ' अनिमित्तं विद्यमानोपलम्भनत्वात् ' ( ६ । ११ ) । अनिमित्तमप्रमाणं शब्दः । यो ह्युपलम्भनविषयो नोपलभ्यते स नास्ति । यथा शशस्य विषाणम् । उपलम्भकानि चेन्द्रियाणि पश्वादीनाम् । न च पशुकामेष्ट्यनन्तरं पशव उपलभ्यन्ते ।

---

एवमर्थापत्तिप्रमाणं निरूप्यानुपलब्ध्याख्यं प्रमाणं निरूपयति—अभावोऽपी- त्यादिना । अभाव इत्यस्य विवरणं प्रमाणाभाव इति । अत्र प्रमाणशब्दः पूर्वोक्तप्रत्यक्षादिरूपप्रमापञ्चकपरः । तदभावोऽनुपलब्ध्याख्यं प्रमाणमित्यर्थः । अस्य प्रमाणस्य प्रमेयं दर्शयति—नास्तीत्यस्यार्थस्येति ।

भूतले घटो नास्तीत्येवं प्रतीयमानो यो भूप्रदेशातिरिक्तः स्मर्यमाणघटावच्छिन्नो भूप्रदेशाधिकरणको नञर्थरूपोऽभावस्तादृशस्य प्रमेयस्येत्यर्थः । असंनिकृष्टस्येत्यनेन पूर्वो- क्तप्रमेयस्य प्रत्यक्षाद्यविषयत्वमुक्तम् । तथा च भूतले घटो नास्तीत्येवं भूतलाधिकरण- कतया भूतलव्यतिरेकेण प्रतीयमानस्य घटाभावस्य प्रत्यक्षाद्यविषयस्य बोधकः प्रत्य- क्षादिप्रमाणपञ्चकस्योत्पत्तुं योग्यस्यापि योऽनुत्पादो दृश्यादर्शनयोग्यानुपलम्भादिपर्यायः प्रमाणाभावशब्दितः स एवानुपलब्ध्याख्यं प्रमाणमिति भाव. । एवं लोकप्रसिद्धलक्षण- धतामनुमानाद्यनुपलब्ध्यन्तानां प्रमाणानां लोकप्रसिद्धस्वतःप्रामाण्यस्य लोकसिद्धत्वा- त्प्रामाण्ये विषये निमित्तपरीक्षा न कर्तव्येति प्रकृतं प्रामाण्ये निमित्तस्यापरीक्ष्यत्वमुपसंह- रति—तस्मादिति ।

चित्राक्षेपवादः ।

एवं ' चोदनालक्षणोऽर्थो धर्मः ' इति सूत्रेण चोदना धर्मे प्रमा- णमेव नत्वप्रमाणमित्येवं प्रतिज्ञातार्थे वृत्तिकारमतेन प्रत्यक्षादिप्रमाणानां प्रामाण्यस्य लोकप्रसिद्धत्वप्रदर्शनेन साधिते संप्रति चोदनाव्यतिरिक्तानां प्रत्यक्षादिप्रमाणानां प्रामा- ण्यस्य संभवेऽप्यैहिकफलबोधकानां ' चित्रया यजेत पशुकामः ' इत्यादिचोदनानां प्रत्यक्षादिभिरसंवादेन विसंवादेन च प्रामाण्यं न संभवतीत्याक्षेपपरतया ' अनिमि- त्तम् ' इत्यादिसूत्रमवतारयति—नन्वित्यादिना । पक्षभूतं शब्दमध्याहृत्य तत्र सूत्रनिर्दिष्टमप्रामाण्यात्मकं साध्यं प्रदर्शयति । अनिमित्तमित्यस्यैव विवरणमप्रमाणमिति। ' विद्यमानोपलम्भनत्वात् ' इति हेतुबोधकं सूत्रावयवं व्याचष्टे—यो हीत्यादिना । अनेन न मानान्तरेणोपलम्भनयोग्यस्यानुपलभ्यमानस्येऽसत्त्वमेव । यथा शशविषाणमित्येवं सामा- न्यतो व्याप्तिः प्रदर्शिता । प्रकृतपक्षे प्रकृतहेतुं योजयति—उपलम्भकानि चेत्यादिना ।

अतो नेष्टिः पशुफला । कर्मकाले च फलेन भवितव्यम् । यत्कालं हि मर्दनं, तत्कालं मर्दनसुखम् । कालान्तरे फलं दास्यतीति चेन्न । न कालान्तरे फलमिष्टेरित्यवगच्छामः । कुतः । यदा तावदसौ विद्यमानाऽऽसीत्तदा फलं न दत्तवती । यदा फलमुत्पद्यते तदाऽसौ नास्ति । असती कथं दास्यति । सत्यस्य च फलकारणमन्यदुपलभामहे । न च दृष्टे कारणे सत्यदृष्टं कल्पयितुं शक्यते । प्रमाणाभावात् । एवं दृष्टापचारस्य वेदस्य स्वर्गाद्यपि फलं न भवतीति मन्यामहे ।

---

पश्वादिफलसाधनत्वेन चित्रादिकर्मविधायका 'चित्रया यजेत' इत्यादिचोदना अप्रमाण योग्यानुपलब्धिबाधितार्थकत्वात् यथास्तीरे फलानि सन्तीति विप्रलिप्सुवाक्यवत् । अयमाशय —उपलब्धियोग्यस्य वस्तुन सत्यां सामग्र्यामुपलभ्यमानत्वे विद्यमानत्वं सिध्येत् । प्रकृते च चित्रादिफलत्वेन श्रूयमाणाना पश्वादीनामुपलब्धियोग्यानां सत्यामपि चक्षुरादिसामग्र्या चित्रेष्ट्यनुष्ठानानन्तरमनुपलभ्यमानत्वेन शशविषाणादिवत्तेषां चित्रादिफलत्वमसदेवेत्यसदर्थबोधकत्वात् चित्रादिचोदना प्रमाणमिति । 'अतो नेष्टिः पशुफला' इत्यनेन भाष्येणानुमानान्तरमपि सूचितम् । चित्रा न पशुफला स्वान्यवहितोत्तरकाले स्वफलाजनकत्वात्स्नानभोजनादिवत् । अत्र प्रयोगे व्यतिरेकोदाहरणं प्रदर्शयन्नाह—कर्मकाले चेत्यादिना । यद्यस्य साधनं मर्दनादि सुखादेः साधन तत्तु मर्दनादि स्वकाल एव सुखादि साधयति । चित्रादिक तु न तथेति न तत्फलसाधनमिति भाव । ननु यदि कर्मानन्तर्यं फलस्योक्त स्यात्तदनन्तरं प्रत्यक्षयोग्यतया तदनुपलब्ध्या बाध स्यात् । तदनन्तरमेव फलदानशक्त इत्यपि स्यात्र तु तदुक्तमित्यनुपलब्धिबाधितार्थकत्व स्वकाले फलादानं चासिद्धमित्याशयेन शङ्कते—कालान्तर इत्यादिना । समाधत्ते—नेत्यादिना । अयमाशय —सत्यम् । न वाचकशब्देनाऽऽनन्तर्यमुक्तम् । तथा कालान्तरमपि नोपात्तम् । अतो विनष्टस्य कारणत्वायोगात्कालान्तरभावित्वस्य ■ श्रुत्यनुपात्तत्वात्कर्मानन्तरभाविद्धमानन्तर्यमेव शब्दानुपात्तमपि फलेऽङ्गीकरणीयमिति तस्य चानुपलम्भात्पूर्वोक्त हेतुद्वय मुख्यमिति । फलकारणमन्यदिति । क्रमप्रतिग्रहादिरूपमित्यर्थः । एवमैहिकफलविषये बाधितार्थकस्य वेदस्याऽऽमुष्मिकस्वर्गादिफलविषयेऽपि सुतरां प्रमापकत्वं न सम्भवतीत्याह—एवमित्यादिना मन्यामह इत्यन्तेन ।

दृष्टविरुद्धमपि भवति किंचिद्वचनं, पात्रचयनं विधायाऽऽह 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति' इति प्रत्यक्षं शरीरकं व्यपदिशति।

न च तत्स्वर्गं लोकं यातीति । प्रत्यक्षं हि तद्दह्यते । न चैष यातीति विधिशब्दः । एवंजातीयकं प्रमाणविरुद्धं वचनमप्रमाणम् । अम्बुनि मज्जन्त्यलाबूनि, ग्रावाणः प्लवन्त इति यथा । तत्सामान्यादग्निहोत्रादिचोदनास्वप्यनाश्वासः । तस्मान्न चोदनालक्षणोऽर्थो धर्मः ।

"औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानम्' तुशब्दः पक्षं व्यावर्तयति'। अपौरुषेयः शब्दस्यार्थेन संबन्धः ।

---

प्रत्यक्षविसंवादनिरूपणम् ।

एवमनुपलब्धिबाधितार्थकोदाहरणेऽप्रामाण्यं प्रदर्श्य प्रत्यक्षविरुद्धार्थकोदाहरणविशेषेऽ- [illegible] विधायेत्यन्तेन । आहिता- [illegible] 'दक्षिणहस्ते जुहूमासादयति' इत्यादिवाक्यैर्यज्ञपात्राणामाहिताग्निशरीरे स्थापनात्मकं चयनं विहितं तदनन्तरमित्यर्थः । 'स एष' इत्यारभ्य 'याति' इत्यन्तोऽर्थवादः । ननु 'स्वर्गं लोकं याति' इति स्वर्गं प्रति गन्ता शरीरादन्य आत्मैवेति कथं प्रत्यक्षविरोध इत्यत आह— प्रत्यक्षं शरीरकमिति । शरीरातिरिक्तस्याऽऽत्मनः सत्ताया एव निष्प्रमाणकत्वात्कथंचित्तत्स्वाभ्युपगमेऽपि यज्ञपात्ररूपयज्ञायुधसंयोगासंभवाद्भिन्नस्य यागकर्तृत्वासंभवाच्च 'एषः' इति पुरोवर्तिनिर्देशकशब्दविरोधाच्च शरीरपरमेवेदं वचनम् । तच्च शरीरं प्रत्यक्षं दह्यत इति 'स्वर्गं लोकं याति' इति विप्रतिषिद्धमिति भावः ।

— यदि चास्य वाक्यस्य विधायकत्वं स्यात्तदा तत्प्रामाण्यादेव शरीरादन्यमात्मानं कल्पयित्वाऽपि विरोधः परिह्रियेत । नत्वेतदस्ति । अनुवादकत्वात् । स्वार्थेऽप्रमाणं मार्गान्तरं कल्पयितुं शक्नुयात् । अतः शरीरस्यैव स्वर्गगमनवचनात्प्रत्यक्षविरोधः स्पष्ट एवेत्याह— न चैष इत्यादिना । अमुमर्थं प्रयोगेण दर्शयति— एवंजातीयकमित्यादिना । अयमर्थः । यज्ञायुधीत्यादिवचनमप्रमाणम् । प्रत्यक्षविरुद्धार्थकत्वात् । 'अम्बुनि मज्जन्त्यलाबूनि, ग्रावाणः प्लवन्ते' इत्यादिवचनवदिति । अग्निहोत्रादिचोदनास्वपि तमेव न्यायमतिदिशति— तत्सामान्यादित्यादिना । अग्निहोत्रादिचोदना अप्रमाणं वेदवाक्यैकदेशत्वाच्चित्रादिचोदनावदित्यर्थः । प्रकृतं पूर्वपक्षमुपसंहरति— तस्मादिति । प्रत्यक्षासंवादविसंवादाभ्यां चित्रादिवाक्यानामप्रामाण्ये दृष्टान्तेनाग्निहोत्रादिचोदनानामप्रामाण्याच्चोदनालक्षणोऽर्थो धर्म इति प्रतिज्ञातार्थो न घटत इति भावः । एवं विधिवाक्य-

६

तस्याग्निहोत्रादिलक्षणस्यार्थस्य ज्ञानं प्रत्यक्षादिभिरनवगम्यमानस्य । तथा च चोदनालक्षणः सम्यक्संप्रत्यय इति । पौरुषेये हि शब्दे यः प्रत्ययस्तस्य मिथ्याभाव आशङ्क्येत परप्रत्ययो हि तदा स्यात् । अथ शब्दे ब्रवीति कथं मिथ्येति । न हि तदानीमन्यतः पुरुषादवगतिमिच्छामः । ब्रवीतीत्युच्यते बोधयति बुध्यमानस्य निमित्तं भवतीति शब्दे च निमित्ते स्वयं बुध्यते । कथं विप्रलब्धं ब्रूयादनृतमेवमिति । नचास्य चोदना स्याद्वा न वेति सांशयिकं प्रत्ययमुत्पादयति । न च मिथ्यैतदिति कालान्तरे देशान्तरेऽवस्थान्तरे पुरुषान्तरे वा पुनरव्यपदेश्यप्रत्ययो भवति । योऽप्यस्य प्रत्ययविपर्यासं दृष्ट्वाऽत्रापि विपर्यसिष्यतीत्यानुमानिकः प्रत्यय उत्पद्यते सोऽप्यनेन प्रत्यक्षेण प्रत्ययेन विरुध्यमानो बाध्यते । तस्माच्चोदनालक्षण एव धर्मः ।

---

मप्रमाणमिति पूर्वपक्षे प्राप्तेऽप्रामाण्यकारणीभूतकरणदोषनिराकरणेन पूर्वोक्तमेव स्वतःप्रामाण्यं सिद्धान्ताभिमतम् 'औत्पत्तिकस्तु' इत्यादिसूत्रार्थविवरणमुखेन प्रदर्शयति— तुशब्द इत्यादिना । नाप्रमाणं विधिवाक्यमित्यर्थः । हेतुप्रतिपादकसूत्रावयवं विवृणोति— अपौरुषेय इत्यादिना । अपौरुषेय इत्यौत्पत्तिक इत्यस्य विवरणम् । यतोऽग्निहोत्रादिः स्वर्गादिसाधनमित्येवंरूपार्थस्य प्रत्यक्षादिभिरनवगम्यमानस्य ज्ञापकः शब्दार्थसंबन्धोऽपौरुषेयो विद्यत इति हेतुप्रतिपादकसूत्रावयवार्थः । तथा च शब्दे वक्तृदोषस्यैव संभावितत्वात्प्रकृते चापौरुषेयत्वस्य सत्त्वात्करणदोषरहितं शास्त्रमप्रामाण्यकारणाभावात्प्रमाणमेवेत्याह— तथा चेति । पौरुषेयवाक्ये तु भ्रमप्रमादादिरूपपुरुषदोषस्य संभावितत्वादप्रामाण्यं भवितुमर्हतीत्याह— पौरुषेये हीत्यादिना । अपौरुषेये तु पुरुषानपेक्षत्वान्नाप्रामाण्यकारणमस्तीत्याह— अथ शब्द इत्यादिना । शब्देऽपौरुषेय इत्यर्थः । न च वैदिकशब्देभ्योऽर्थप्रतीतिरेव नोत्पद्यते न वा प्रतारकवाक्यवद्विप्रलम्भात्मकं ज्ञानं जायत इत्याह— ब्रवीतीत्यादिना । नापि वैदिकवाक्यस्य संशयजनकत्वमित्याह— न चेत्यादिना । नापि कालान्तरे देशान्तरे वा वैदिकवाक्यप्रतीतेऽर्थे विपर्ययप्रत्ययो जायत इत्याह— न च मिथ्यैतदित्यादिना । ननु वचनत्वाल्लौकिकवचनवद्वेदवचनमपि मिथ्येति शङ्कां परिहरति— योऽप्यस्येत्यादिना । अस्य च भाष्यस्यायमाशयः । बाधकाधीनेन हि मिथ्यात्वेन व्याप्तं वाक्यत्वं तादृशमेव मिथ्यात्वं साधयेत् । वेदे च तादृशं मिथ्यात्वं साधयितुं न शक्यते । प्रत्यक्षो हि वेदोत्पादितः प्रत्ययः प्रत्यक्षवदेव कदाचिदप्यबाध्यमानत्वादतो बाधकाधीनं मिथ्यात्वं वेदे साधयितुं

स्यादेतदेवं नैव शब्दस्यार्थेन संबन्धः। कुतोऽस्य पौरुषेयताऽपौरुषेयता वेति। कथम्। स्याच्चेदर्थेन संबन्धः क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्। यदि संश्लेषलक्षणं संबन्धमभिप्रेत्योच्यते कार्यकारणनिमित्तनैमित्तिकाश्रयाश्रयिभावादयस्तु संबन्धाः शब्दस्यानुपपन्ना एवेति। उच्यते। यो ह्यत्र व्यपदेश्यः संबन्धस्तमेकं न व्यपदिशति भवान्प्रत्याय्यस्य प्रत्यायकस्य च यः संज्ञासंज्ञिलक्षण इति।

---

न शक्यत इति विरुद्धो हेतुरिति। अत्र भाष्ये प्रत्यक्षशब्दो गुणवृत्त्या कदाचिदप्यबाध्यमानत्वसादृश्येन प्रत्यक्षसदृशशाब्दज्ञानपरः। वेदजनितस्तदर्थप्रत्ययः सम्यगपौरुषेयवाक्योत्पन्नत्वाल्लिङ्गवाक्यबुद्धिवदित्येवं साधितं प्रामाण्यमुपसंहरति—तस्मादिति।

शब्दार्थसंबन्धाक्षेपवादः।

आह यदि प्रत्यायकः शब्दः प्रथमश्रुतः किं न प्रत्याययति । उच्यते । सर्वत्र नो दर्शनं प्रमाणम् । प्रत्यायक इति हि प्रत्ययं दृष्ट्वाऽवगच्छामो न प्रथमश्रुत इति प्रथमश्रवणे प्रत्ययमदृष्ट्वा यावत्कृत्वः श्रुतेनैव संज्ञाऽस्य संज्ञीत्यवधारितं भवति तावत्कृत्वः श्रुतादर्थावगम इति । यथा चक्षुर्द्रष्टृ न तावत् प्रकाशेन विना प्रकाशयतीत्यद्रष्टृ न भवति ।

---

तज्ज्ञप्रतिपत्तिरूपकार्यशालित्वेन यत्कर्मत्वं वाच्यस्वरूपमर्थस्य तस्यामेव च यत्करणत्वं वाचकत्वरूपं शब्दस्य तादृशो वाच्यवाचकभाव एव सम्बन्धः शक्तिरूपः शब्दार्थयोरनिवार्यः समस्तीत्यभिप्रायेण समाधत्ते—उच्यत इत्यादिना । संज्ञासंज्ञिलक्षण इति । वाच्यवाचकभाव इत्यर्थः ।

ननु गोशब्दो न गोत्ववाचकशक्तिमान् सम्बन्धग्रहणात्पूर्वमप्रतिपादकत्वाद्देवदत्तादिशब्दवदित्यभिप्रायवानाशङ्कते—आहेति । अत्रैवानुमाने पूर्वपक्षी विपक्षबाधकतर्कमाह—यदि प्रत्यायक इत्यादिना । यदि गोशब्दो गोत्ववाचकशक्तिमान्स्यात्प्रथमश्रुत एव गोत्वादि प्रत्याययेत् । न च प्रत्याययति यतो न तादृशशक्तिमानित्याशयः । यथा शब्दस्यार्थप्रत्यायकत्वं लोकव्यवहारात्प्रतीयते तथैव शक्तिविज्ञानमपि प्रत्यायकस्य शब्दस्य सहकारिभूतमिति लोकव्यवहारादेवावगम्यते । न हि सहकारिणं विना कारणस्य कस्यचिदपि कुत्रापि दृश्यते । अत एतादृशसहकारिविरहात्प्रथमश्रवणे प्रत्यायकत्वासम्भवेऽपि न तच्छक्तिमत्त्वहानिरित्यभिप्रायेण समाधत्ते—उच्यत इत्यादिना । दर्शनमिति । लोकव्यवहार इत्यर्थः । लोके च शब्दप्रयोगानन्तरं जायमानार्थप्रत्ययं दृष्ट्वा शब्दस्यार्थप्रत्यायकत्वव्यवहारो न प्रथमश्रुतत्वमात्रेण । प्रथमश्रवणेऽर्थप्रत्ययाजननेऽपि यावत्कृत्वः श्रुतेन संज्ञासंज्ञिसम्बन्धरूपा शक्तिरवधारिता भवति तावत्कृत्वः श्रुतादेव शब्दादर्थावगमो लोके दृष्ट इति दर्शनानुरोधेनैव प्रकृतेऽपि शक्तिज्ञानस्य सहकारित्वमाश्रयणीयमिति योजना । पूर्वपक्ष्युक्तानुमाने व्यभिचारं दर्शयति—यथा चक्षुरित्यादिना ।

शब्दार्थसम्बन्धापौरुषेयत्ववादः ।

एतावता सम्बन्धसद्भावो दर्शितः । स तु कृतको नित्यो वेति विचारयन्पूर्वपक्षमाह—यदि प्रथमश्रुत इत्यादिना । यदि प्रथमश्रुतः शब्दोऽर्थं न प्रत्याययति तर्हि देवदत्तादिशब्दस्येव संज्ञेति कश्चित् पुरुषैरेव संज्ञासम्बन्धः सम्बन्धः शब्दार्थयोः कृतः स्यादित्यर्थः यदि संज्ञात्वानिरिक्त किञ्चित्सम्बन्धान्तरं स्यात्तस्यादपि तस्य नित्यत

यदि प्रथमश्रुतो न प्रत्याययति कृतकस्तर्हि शब्दस्यार्थेन संबन्धः कुतः। स्वभावतो ह्यसंबन्धावेतौ शब्दार्थौ। मुखे हि शब्दमुपलभामहे भूमावर्थम्। शब्दोऽयं न त्वर्थोऽर्थोऽयं न शब्द इति च व्यपदिशन्ति। रूपभेदोऽपि भवति। गौरितीमं शब्दमुच्चारयन्ति सास्नादिमन्तमर्थमवबुध्यन्त इति। पृथग्भूतयोश्च यः संबन्धः स कृतको दृष्टः। यथा रज्जुघटयोरिति।

अथ गौरित्यत्र कः शब्दः। गकारौकारविसर्जनीया इति भगवानुपवर्षः। श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः। ते च श्रोत्रग्रहणाः। यद्येवमर्थप्रत्ययो नोपपद्यते। कथम्। एकैकाक्षरविज्ञानेऽर्थो नोपलभ्यते। न चाक्षरव्यतिरिक्तोऽन्यः कश्चिदस्ति समुदायो नाम। यतोऽर्थप्रतिपत्तिःस्यात्। यदा गकारो न तदौकारविसर्जनीयौ। यदौकारविसर्जनीयौ न तदा गकारः। अतो गकारादिव्यतिरिक्तोऽन्यो गोशब्दोऽस्ति यतोऽर्थप्रतिपत्तिः स्यात्। अन्तर्हिते शब्दे स्मरणादर्थप्रतिपत्तिश्चेन्न।

---

न तु तदस्ति। किं तु संज्ञात्वरूप एव संबन्ध एष्टव्य इत्येतमर्थमुपपादयति—कुत इत्यादिना। स्वभावतो ह्यसंबन्धाविति। मुखभूम्यादिरूपभिन्नदेशाद्यधिष्ठानत्वेन शब्दार्थयोः संबन्धो न स्वभावसिद्ध इत्यर्थः। अत्यन्तभिन्नत्वेन व्यपदेशादपि न स्वभावसिद्धः संबन्ध इत्याह—शब्दोऽयमित्यादिना। रूपभेदाच्च परस्परं भिन्नयोः शब्दार्थयोः स्वभावतोऽसंबन्ध इत्याह—रूपभेद इत्यादिना। शब्दस्योच्चार्यमाणत्वमर्थस्यावबुध्यमानत्वमिति रूपभेद इति भावः। एवं च पृथग्भूतयोरनयोः स्वतोऽसंबद्धयोः पश्चात्पुरुषेभ्यो जायमानः संज्ञासंज्ञिसंबन्धो रज्जुघटयोः संयोग इव पुरुषकृत एवैष्टव्य इति तद्द्वारा पुरुषानुप्रवेशासंभवाच्चोदना न धर्मे प्रमाणमित्याशयेन प्रकृतपूर्वपक्षमुपसंहरति—पृथग्भूतयोश्चेत्यादिना। आस्तां तावत्संबन्धः। संबन्धिद्वयाधारो हि संबन्धो नानिरूपितयोस्तयोर्निरूपयितुं शक्यते। नहि वर्णातिरिक्तस्य शब्दस्य शशविषाणायमानस्य संबन्ध एव संभवति नतरां नित्यत्वमित्याधारभूतं शब्दस्वरूपमेव कीदृशमिति प्रथमं निरूपयाम इति सिद्धान्तवाद्याह—अथ गौरित्यादिना। गौरित्यत्रेति। गौरित्युच्चारणे सति गोत्वरूपार्थप्रत्यायकत्वेनाभिमतः शब्दः किं गकारादिवर्णरूप उत तद्भिन्नस्तदभिव्यङ्ग्यः स्फोटाख्यः कश्चन इति प्रश्नमाप्यार्थः।

एवं शब्दस्वरूपं विमिति पृष्टा सिद्धान्ती वृद्धसंमतिप्रदर्शनपूर्वकं स्वमतेन गकारादिवर्णा एव शब्दस्वरूपमित्याह—गकारेत्यादिना। उपवर्षग्रहणं नास्य पक्षस्य

**स्मृतेरपि क्षणिकत्वादक्षरैस्तुल्यता । पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायक इत्यदोषः ।**

---

परमतत्वज्ञापनाय किं तु वृद्धसंमतिप्रदर्शनायेति वेदितव्यम् । गकारादिवर्णानामेव शब्दस्वरूपत्वं प्रत्यक्षबलेनार्थप्रत्यायकत्वानुरोधेन च व्यवस्थापयिष्यन्प्रथम प्रत्यक्षबलेन तेषां शब्दस्वरूपत्वं प्रतिपादयति—श्रोत्रग्रहणे इत्यादिना । श्रोत्रग्रहणे—श्रोत्रेन्द्रियजन्यप्रत्यक्षविषये । अर्थे वस्तुनि । शब्दशब्दः—शब्द इति शब्दः प्रसिद्धः । वाचकत्वेन लोके प्रसिद्ध इत्यर्थः । ते च श्रोत्रग्रहणा इति । त एव-गकाराद्य एव श्रोत्रग्राह्या इत्यर्थः । एवकारेण च पराभिमतस्फोटादीनां श्रोत्रग्राह्यत्वनिराकरणं बोध्यम् । एवं च श्रोत्रग्राह्यत्वलक्षणलक्षितानामेव लोके शब्दशब्दवाच्यत्वदर्शनात्स्फोटादीनां चातथात्वाद्गकारादीनामेव वर्णानां शब्दस्वरूपत्वमाश्रयणीयमिति भावः ।

स्फोटवादाक्षेपः ॥

एवं श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वाद्वर्णेषु शब्दत्वं प्रसाध्याधुनाऽर्थप्रत्यायकत्वानुरोधेनापि तेषामेव शब्दत्वमाक्षेपसमाधानाभ्यां व्यवस्थापयितुं प्रथमतः शङ्कामुपन्यस्यति—यद्येवमित्यादिना तुल्यता इत्यन्तेन । यद्येवम्—वर्णानामेव शब्दत्वेऽभ्युपगम्यमाने शब्दश्रवणानन्तरं जायमानोऽर्थप्रत्ययो नोपपद्येतेत्यर्थः । अत्र हेतुं पृच्छति—कथमिति । वर्णानामर्थप्रत्यायकत्वं वदता वक्तव्यं किं प्रत्येकं वर्णा अर्थं प्रत्याययेयुरुत तदतिरिक्तः समुदाय उत संहता वर्णा इति । एवं विकल्प्याऽऽद्यपक्षं दूषयति—एकैकाक्षरविज्ञाने इत्यादिना । द्वितीयपक्षं दूषयति—न चाक्षरव्यतिरिक्तेत्यादिना । वर्णैरारभ्य. समुदायो युगपदवस्थितैरेव वर्णैरारब्धव्य । न च वर्णानामुपलब्धिमतो यौगपद्यम् । विच्छिन्नयत्नजन्यत्वात् । सत्तायौगपद्येन त्वारम्भे नित्यत्वाद्विभुत्वाच्च वर्णानां सर्वे सर्वदा सर्वमारभेरन्नित्यादिबहुतरदोषप्रसक्तेः । वर्णावयविवद्वर्णातिरिक्तसमुदायोऽप्यप्रामाणिक इति भाव । क्रमवर्तिनां वर्णानां साहित्यमसंभाविनमेवेति महितानां वर्णानामर्थप्रत्यायकत्वमिति तृतीयं पक्षं निराकरोति—यदा गकार-इत्यादिना । एवं वर्णानामर्थप्रत्यायकत्वं दूषयित्वाऽर्थप्रतीतिनिरूपकार्यानुरोधेन गवादिव्यतिरिक्तो गवादिशब्दैर्व्यवहियमाणोऽन्य एव कश्चन स्फोटाख्य शब्दस्वरूपमित्यङ्गीकरणीयमित्याह—अत इत्यादिना । ननु तथाऽपि क्रमवर्तिनां वर्णानां स्वरूपतःसाहित्यासंभवेऽपि तत्तत्स्मरणद्वाराऽर्थप्रतीतिनिरूपपत्त्या एवान्यनर्थक्यं स्फोटकल्पनेत्याशङ्क्य स्मृतेरपि क्षणिकत्वादक्षरवत्स्मृतीनां यौगपद्यं दुर्घटमेवेत्यावदयदेव स्फोटकल्पने

नन्वेवं शब्दादर्थं प्रतिपद्यामहे इति लौकिकं वचनमनुपपन्नं स्यात् । उच्यते । यदि नोपपद्यतेऽनुपपन्नं नाम । न हि लौकिकं वचनमनुपपन्नमित्येतावता प्रत्यक्षादिभिरनवगम्यमानोऽर्थः शक्योऽभ्युपगन्तुम् । लौकिकानि वचनान्युपपन्नार्थान्यनुपपन्नार्थानि च दृश्यन्ते । यथा देवदत्त गामभ्याज इत्येवमादीनि, दश दाडिमानि षडपूपा इत्येवमादीनि च ।

ननु च शास्त्रकारा अप्येवमाहुः 'पूर्वापरीभूतं भावमाख्यातेनाऽऽचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्' [ नि०१।१ ] इति यथा । न शास्त्रकारवचनमप्यलौकिकमर्थमप्रमाणकमुपपादयितुम् । अपि च नैवैतद-

---

त्याशयेनाऽऽह—अन्तर्हित इत्यादिना । अन्तर्हिते विलीन इत्यर्थः ।

स्फोटनिराकरणम् ।

एवं स्फोटवाद्यभिमतां शङ्कामुपन्यस्य सिद्धान्तमाह—पूर्ववर्णजनितेत्यादिना । अस्य चायमाशयः । यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इत्यत्र दर्शपूर्णमाससंज्ञकानामाग्नेयादीनां षण्णां यागानां स्वरूपतः क्रमवर्तिनामपि सहितानामेव तेषां श्रुतफलसाधनत्वान्यथानुपपत्त्या स्वरूपतः साहित्यासंभवेऽपि तज्जन्यावान्तरापूर्वद्वारा साहित्यं परिकल्प्य सहितानां फलसाधनत्वं श्रूयमाणमुपपद्यत एवेतीष्यते । तथा वर्णानामप्येकैकशोऽर्थाभिधानादर्शनात्सकलोच्चारणे च तदवगमात्संहत्यकारित्वे निश्चिते स्वरूपेण च वर्णानां साहित्यासंभवात्संस्कारनामकमवान्तरव्यापारं परिकल्प्य तद्द्वारा साहित्यमभ्युपगम्यार्थप्रत्यायकत्वं सहितानां वर्णानामेवोपपद्यत इत्यर्थप्रतीत्यन्यथानुपपत्तिरूपाया अर्थापत्तेरेव क्षीणत्वान्न सा स्फोटकल्पनाय प्रभवतीति ।

नन्वेवं पूर्वपूर्ववर्णजनितसंस्कारसहितान्तिमवर्णस्यैवार्थप्रत्यायकत्वं न तु स्फोटात्मकशब्दस्येत्यभ्युपगमे 'शब्दादर्थं प्रतिपद्यामहे' 'गोशब्दात्सास्नादिमन्तं प्रतिपद्यामहे' इत्यादिको लौकिको व्यवहारोऽन्यप्रधानेन शब्दस्यैव निमित्तत्वबोधकोऽनुपपन्नः स्यादित्येवं स्फोटवादी शङ्कते—नन्वेवमित्यादिना । केवलं लौकिकं व्यवहारं पुरस्कृत्य न्यायविरुद्धोऽप्रामाणिकश्चार्थः कल्पयितुं न शक्यते किं तु लौकिक एव व्यवहारो यथाकथंचिदुपपादनीय इत्याशयेन सिद्धान्त्याह—उच्यत इत्यादिना । तत्र प्रथमं तावन्न्यायविरुद्धस्य लौकिकव्यवहारस्याप्रमाणत्वमिष्टमेवेत्याशयेनाऽऽह—यदि नोपपद्यत इत्यादिना—इत्येवमादीनि चेत्येवमन्तेन । स्पष्टार्थं भाष्यम् । ननु लौकिकव्यवहारस्य प्रकृतविषयेऽप्रमाणत्वेऽपि शास्त्रकारव्यवहार कथमप्रमाणं भवितुमर्हतीति

नुपपन्नार्थम् । अक्षरेभ्यः संस्काराः संस्कारादर्थप्रतिपत्तिरिति सं-
भवत्यर्थप्रतिपत्तावक्षराणि निमित्तम् । गौण एवार्थप्रतिपत्तौ शब्द
इति चेत् । न गौणोऽक्षरेषु निमित्तभावः । तद्भावे भावात्तदभावे
चाभावात् । अथापि गौणः स्यात् । न गौणः शब्दो
मा भूदिति प्रत्यक्षादिभिरनवगम्यमानोऽर्थः शक्यः परिकल्पयितुम् ।
न ह्यग्निर्माणवक इत्युक्तेऽग्निशब्दो गौणो मा भूदिति ज्वलन एव
माणवक इत्यध्यवसीयते । न च प्रत्यक्षो गकारादिभ्योऽन्यो गोशब्द
इति । भेददर्शनाभावादभेददर्शनाच्च । गकारादीनि हि प्रत्यक्षाणि ।
तस्माद्गौरिति गकारादिविसर्जनीयान्तं पदमक्षराण्येव । अतो न तेभ्यो
व्यतिरिक्तमन्यत्पदं नामेति । ननु 'संस्कारकल्पनायामप्यदृष्टकल्पना' ।
उच्यते । शब्दकल्पनायां सा च, शब्दकल्पना च । तस्मादक्षराण्येव
पदम् ।

---

शङ्कते—ननु चेत्यादिना । व्रजति पचतीत्येवमाख्यातान्तपदेनाऽऽद्यक्रियाप्रभृत्यन्तिम-
क्रियापर्यन्तं पूर्वापरभावेन विद्यमानक्रियासमूहात्मकं भावं धात्वर्थभूतमाचष्ट इत्येवं
शास्त्रकारव्यवहारेण शब्दस्यैवाव्यवधानेनार्थप्रत्यायकत्वदर्शनात्संस्कारद्वारा तदाश्रयणे
तादृशव्यवहारानुपपत्तिरित्यर्थः । शास्त्रकारस्यापि न्यायविरुद्धत्वेऽप्रमाणत्वमिष्टमेवेत्या-
शयेनाऽऽह—न शास्त्रकारवचनमित्यादिना । किं च तत्तद्वर्णानुभवजनितसंस्काराणां
व्यापारमात्रत्वेन व्यवधायकत्वाभावाच्चानुपपन्नार्थं लौकिकवचनं शास्त्रकारवचनं चेत्या-
शयेनाऽऽह—अपि चेत्यादिना निमित्तमित्यन्तेन ।

ननु शब्दादर्थं प्रतिपद्यामह इत्यादिव्यवहारेषु शब्दशब्दो वर्णात्मकशब्दो गौण एव
स्यान्न तु मुख्योऽव्यवधानेनार्थप्रत्यायकत्वाभावादित्याशयवाञ्छङ्कते—गौण इत्या-
दिना चेदन्तेन । समाधत्ते—न गौण इत्यादिना । पूर्वोक्तव्यवहारेषु शब्दशब्दो वर्णेषु न
गौण इत्यर्थः । तत्र हेतुमाह—अक्षरेषु निमित्तभाव इति । अक्षरेषु निमित्तत्वमर्थप्रति-
पत्तावन्वयव्यतिरेकदर्शनादित्यर्थः । एवं च व्यापारद्वाराऽक्षराणामर्थप्रतिपत्तौ हेतुत्वस-
म्भवात्ततोऽन्यादृशस्य हेतुत्वस्य कुत्राप्यदर्शनात्स्वव्यापारव्यवधायकस्य सर्वत्र नियतत्वात्संस्का-
रस्य शब्दस्य व्यापार एवेतीदृशं व्यवधानमव्यवधानमेवातो न गौणः शब्द इति भावः ।
एवं वर्णेषु मुख्यशब्दत्वमुपपाद्याधुना प्रौढिवादेन कथंचिद्वर्णानां गौणशब्दत्वेऽपि तेषा-
मेवार्थप्रत्यायकत्वं युक्तं प्रत्यक्षादिभिरवगम्यमानत्वान्न तु तद्व्यतिरिक्तस्य स्फोटस्य
प्रत्यक्षादिभिरनवगम्यमानस्यार्थप्रत्यायकत्वकल्पनमुपपत्तिमदित्याशयेनाऽऽह—अथापी-
त्यादिना प्रत्यक्षाणीत्यन्तेन ।

अथ गौरित्यस्य शब्दस्य कोऽर्थः ।

---

अयमाशयः । यथा 'अग्निर्माणवकः' इत्यादौ प्रयुज्यमानोऽग्निशब्दो गौणो मा भूदिति ज्वलनपरो नेष्यते माणवके ज्वलनाभेदस्य प्रत्यक्षबाधितत्वात् । तद्वच्छब्दादर्थं प्रतिपद्यामह इत्यादौ प्रत्यक्षादिभिरनवगम्यमानस्य स्फोटस्य न शब्दशब्दवाच्यत्वमङ्गीकृत्यार्थप्रत्यायकत्वं कल्पयितुमुचितम् । किं तु प्रत्यक्षगम्यानां गकारादीनामेव गौणत्वमप्यङ्गीकृत्य तत्कल्पनमुचितमिति । अत उक्तयुक्तिभिर्गकारादीनामेव वर्णानां पदत्वं न तु तदतिरिक्तस्य प्रमाणागोचरस्य स्फोटस्येत्याह—तस्मादित्यादिना नामेतीत्यन्तेन ।

ननु यथा स्फोटवादे स्फोटस्यार्थप्रतीतिहेतुत्वे स्वीक्रियमाणेऽदृष्टकल्पना तद्वद्वर्णमतेऽपि तत्तद्वर्णानुभवजनितसंस्कारस्य तत्तत्स्मृतिहेतोरर्थप्रतीतिरूपकार्यान्तरे सामर्थ्यमदृष्टमेव कल्पयितव्यं भवतीति कथं स्फोटवादो निराक्रियत इति शङ्कते—नन्विति । समाधत्ते—उच्यत इति । अयमाशयः । स्फोटशब्दपक्षे ह्यवश्यं तत्तद्वर्णानुभवजनितं संस्कारान्तरं स्फोटाभिव्यक्तिसमर्थं स्मृतिहेतोरेव वा तदभिव्यक्तिसामर्थ्यं कर्मणः संयोगविभागयोरिवादृष्टमेव कल्पनीयम् । तथाऽस्माभिरर्थप्रतीतावेव कल्प्यते भवन्मते तु पूर्वोक्तरीत्याऽदृष्टकल्पनाऽप्रसिद्धस्फोटात्मकशब्दकल्पना चेत्यधिको दोष इति । प्रकृतं स्फोटनिराकरणमुपसंहरति—तस्मादिति । ननु वर्णानां तदतिरिक्तस्फोटस्य वाऽर्थप्रत्यायकत्वांशे प्रकृतौत्पत्तिकसंबन्धाधारतांशे वा तुल्यतया प्रयत्नपुरःसरं स्फोटप्रतिषेधो निरर्थक इति चेन्न । यतः स्फोटपक्षे हि निरवयवं वाक्यं निरवयवस्य वाक्यार्थस्य वाचकमवयवास्तु पदात्मका वर्णात्मकाश्च मृषाभूता इतीष्यते । ततश्च पदतदवयवाश्रितयोहादेर्महावाक्यावयवावान्तरवाक्यार्थप्रयाजाद्याश्रितस्य प्रसङ्गतन्त्रादेश्चोत्तरत्र विचार्यमाणस्य मृषात्वं स्यात् । अतस्तत्सत्यतासिद्धयर्थं स्फोटनिराकरणमिति न

आकृतिवादः ॥

निष्फलम् । एवं संबन्धिद्वयाधारस्य संबन्धस्य एकस्मिन्नाधारे शब्दस्वरूपे निरूपितेऽपरं संबन्धिनमर्थरूपं निरूपयितुमारभते—अथ गौरित्यादिना ।

तत्र यद्यप्याकृतिस्तु क्रियार्थत्वादित्यादिना सूत्रकारेणैवाऽऽकृतेरभिधेयत्वं स्थापयिष्यत इत्यत्र पृथक्प्रयासो विफलः । तथाऽप्याकृतेरनभिधेयत्वं पूर्वपक्षिणा द्वेधोद्भाव्यते । अभावाद्भावे वा क्रियायामनुपयोगादिति । तदत्र सद्भावप्रतिपादनेन प्रथमपक्षनिराकरणं क्रियते । द्वितीयमुपरिष्टात्सूत्रकारो निराकरिष्यतीति विवेकः ।

अथेत्यादिप्रश्नभाष्यस्यायमर्थः । गोत्वादिसामान्यरूपाया आकृतेर्व्यक्तस्या

सास्नादिविशिष्टाकृतिरिति ब्रूमः। नन्वाकृतिः साध्याऽस्ति वा न वेति। न प्रत्यक्षा सती साध्या भवितुमर्हति। रुचकः स्वस्तिको वर्धमानक इति हि प्रत्यक्षं दृश्यते। व्यामोह इति चेन्न। नासति प्रत्ययविपर्यासे व्यामोह इति शक्यते वक्तुम्। 'असत्यप्यर्थान्तर एवंजातीयको

---

सह भेदाभेदादि विकल्पासहत्वेन दुर्निरूपतयाऽप्रसिद्धत्वादगोव्यावृत्तिरूपस्यापोहस्य शब्दार्थत्वे तस्यावस्तुतया कथं तदाधारतया संबन्धो नित्यः सिध्येदिति। प्रत्यक्षप्रमाणसिद्धस्य 'अयमपि गौरयमपि गौः शाबलेयादन्यो बाहुलेयः' इत्यादिप्रतीतिवशेन भिन्नाभिन्नत्वेन प्रतीयमानस्य च गोत्वादिसामान्यस्य "प्रत्यक्षबलसिद्धस्य सामान्यस्य कुतर्कतः। न शक्योऽपह्नवः कर्तुं सर्वं विजयते हि तत्" इत्याद्युक्तरीत्याऽपह्नोतुमशक्यतया तादृशं गोत्वादिरूपं सामान्यमेव शब्दार्थ इति तदाधारः संबन्धो नित्यः सिध्यत्येवेत्याशयेन सिद्धान्तवाद्याह—सास्नादिविशिष्टाकृतिरिति। 'जातिमेवाऽऽकृतिं प्राहुर्व्यक्तिराक्रियते यया' इति वार्तिकोक्तरीत्या जातिराकृतिशब्देनोच्यते। आक्रियते निरूप्यत इत्यर्थः। सास्नादिविशिष्टेति। एकस्मिन् गोपिण्डे विद्यमानानां समुचितानेकसामान्यानां सत्तादिरूपाणां मध्ये गोशब्दवाच्यसामान्यस्य तेन साकमेकस्मिन्नवयविन्यसाधारण्येन विद्यमानैः सास्नादिभिरवयवैरुपलक्षणभूतैर्विविच्य निर्देशार्थं सास्नादीत्युपादानम्।

नन्वाकृतिर्न पिण्डपृथग्भूता पिण्डबुद्ध्यभावेऽबुध्यमानत्वात्। पङ्क्तियूथवनादिवदित्यनुमानेन आकृतेरसद्भावमभिप्रेत्य शङ्कते—नन्वाकृतिरिति।

अस्ति वा न वेति संदिह्यमानतया साध्यत्वात्कथं सिद्धवत्कल्पयाऽऽकृतेः शब्दार्थत्वमुच्यत इत्यर्थः। प्रत्यक्षविरुद्धं भवदनुमानमित्याशयेन समाधत्ते—न प्रत्यक्षेत्यादिना। लोकप्रसिद्धप्रत्यक्षविरोधिभवदनुमानं निरालम्बनवादाभिमतप्रत्यक्षगम्यरूपाद्यपह्नवानुमानवदनादरणीयमिति भावः। रुचकः स्वस्तिको वर्धमानक इति। सौवर्णपदार्थगतरुचकत्वादिरूपावान्तरसामान्याभिप्रायेण बोध्यम्। अथानुगतसुवर्णत्वरूपसामान्याभिप्रायं वेदम्। ननूक्तः प्रत्ययो भ्रमरूपः प्रत्यक्षाभास इति शङ्कते—व्यामोह इति। उत्तरकाले बाधकज्ञानादिरूपबाधकाभावादुत्पन्नस्य च ज्ञानस्य स्वतः प्रमाणत्वान्न भ्रमत्वं कल्पयितुं शक्यमित्याशयेन समाधत्ते—नासतीत्यादिना। ननु यथा पङ्क्तिर्वनमिति वृक्षादिव्यतिरिक्तार्थान्तरस्याभावेऽपि प्रत्ययमात्रं भवति तद्वत्पिण्डव्यतिरिक्ताकृतिरूपार्थान्तराभावेऽपि प्रत्ययमात्रं भवितुमर्हतीति शङ्कते—असत्य-

---

१ श्लो वा. आ. वा. ३ श्लो०ः।

भवति प्रत्ययः; पङ्क्तिः, यूथं, वनमिति यथेति चेत् । न । असंबद्धमिदं वचनमुपन्यस्तम्। किमसत्ति वने वनप्रत्ययो भवतीति प्रत्यक्षमेवाऽऽक्षिप्यते वृक्षा अपि न सन्तीति । यद्येवं प्रत्युक्तः स माहायानिकः पक्षः । अथ क्रियाकृतिसद्भावववायुपालभ्यते सिद्धान्तान्तरं ते दुष्यतीति वनेऽपि सति वनप्रत्ययः प्राप्नोतीति । एवमपि प्रकृतं दूषयितुमशक्नुवतस्तत्सिद्धान्तान्तरदूषणे निग्रहस्थानमापद्यते, असाधकत्वात् । स हि वक्ष्यति दुष्यतु। यदि दुष्यति किं तेन दुष्टेन अदुष्टेन वा प्रकृतं त्वया साधितं भवति, मदीयो वा पक्षो दूषितो भवतीति । *न च वृक्षव्यतिरिक्तं वनं यस्मान्नोपलभ्यतेऽतो वनं नास्तीत्यवगम्यते ।* यदि वनेऽन्येन हेतुना सद्भावविपरीतः प्रत्यय उत्पद्यते मिथ्यैव वन-

---

**पीत्यादिना ।** असत्यप्यर्थान्तर इत्यादिना किं वनप्रत्ययो यथा प्रत्यक्षाभासोऽर्थान्तरसाधको न भवति, एवमाकृतिप्रत्ययोऽपीति निरालम्बनवादमभिप्रेत्य प्रत्यक्षमेवाऽऽक्षिप्यत उताऽऽकृतिसद्भाववद्युपालभ्यत आकृतिप्रत्ययानुरोधेनाऽऽकृतिसद्भावाभ्युपगमे वनप्रत्ययानुरोधेन वनसद्भावोऽप्यङ्गीकरणीयः स्यादिति ते सिद्धान्तान्तरं दुष्यतीत्येवं द्वेधा विकल्प्योभयथाऽपि न संभवतीत्येवं दूषयितुं भवदुपन्यस्तं वचनं प्रकृतेऽसंबद्धमित्युत्तरमाह—**नासंबद्धमित्यादिना ।** भवदुपन्यस्तं वचनं स्वपक्षसाधकमपि न भवति मदीयपक्षदूषकमपि न भवतीत्यर्थः । तत्राऽऽद्यं विकल्पमाशङ्क्य दूषयति—**किमसति वन इत्यादिना—माहायानिक इत्यन्तेन ।**

असति वने वनप्रत्ययो भवतीति वचनेन यदि शून्यवादमभिप्रेत्य वनमित्याकारकप्रत्ययेन वृक्षा अपि वस्तुभूता न सिध्यन्तीति प्रत्यक्षमेव स्वविषये प्रमाणं न भवतीत्याक्षिप्यते तर्हि स शून्यवादिपक्षः प्रागेव युक्तिनिचयोपपादनेन निराकृत इत्यर्थः । द्वितीयविकल्पमाशङ्कते—**अथेत्यादिना प्राप्नोतीत्यन्तेन ।** इमं विकल्पं दूषयति—**एवमपीत्यादिना भवतीतीत्यन्तेन ।** भाष्यं सुगमम् । वनप्रत्ययस्याऽऽकृतिप्रत्ययवैषम्यं द्वेधा दर्शयन् प्रथममेकमाह—**न चेत्यादिना ।** यस्माद्वृक्षातिरिक्ततया वनं नोपलभ्यते, अतोऽतिरिक्तं वनं नास्तीत्यवगम्यते, आकृतौ [illegible] न तथेत्येकं वैषम्यम्। अपरं वैषम्यमाह—**यदि वन इत्यादिना वैषम्यमित्यन्तेन ।** अयमाशयः । यदि लोकदृष्टिमनुसृत्य वनप्रत्ययस्य बाधकं प्रत्ययान्तरं वर्तत इति

प्रत्यय इति । ततो वनं नास्तीत्यवगच्छामः । न च गवादिषु प्रत्ययो विपर्येति । अतो वैषम्यम् । अथ वनादिषु नैव विपर्येति न ते न सन्तीति । तस्मादसंबद्धः पङ्क्तिवनोपन्यासः । अत उपपन्नं जैमिनिवचनमाकृतिः शब्दार्थ इति । यथा चाऽऽकृतिः शब्दार्थस्तथोपरिष्टान्निपुणतरमुपपादयिष्याम इति ।

अथ संबन्धः क इति । यच्छब्दे विज्ञातेऽर्थो विज्ञायते स तु कृतक इति पूर्वमुपपादितम् ।

तस्मान्मन्यामहे केनापि पुरुषेण शब्दानामर्थैः सह संबन्धं कृत्वा

---

वनप्रत्ययो मिथ्यैवेत्याश्रीयते तदा वनं नाम वस्त्वन्तरं माऽस्त्वेव । आकृतिप्रत्ययस्य तु कदाऽपि विपर्ययप्रत्ययान्तरं नास्त्येवेत्याकृतिरूपवस्त्वन्तराभ्युपगमे न कोऽपि दोष इति । यदि तु लोकेऽपि यः कश्चिद्वनादिप्रत्ययस्यापि विपर्ययप्रत्ययान्तरं नास्त्येवेत्यभिनिविशेत, तद्दृष्ट्या वनात्मकं वस्त्वन्तरमस्तु नाम । नैतावताऽस्माकमाकृतिसद्भाववादिनां काचित्क्षतिरित्याशयेनाऽऽह—अथ वनादिष्वित्यादिना । आकृतिसद्भावसमर्थनं तु विस्तरेण वार्तिक एव कृतं तत्रैव द्रष्टव्यम् । अत आकृतेरसत्यत्वप्रतिपादनाय पङ्क्तिवनाद्युपन्यासः सर्वथाऽसाधक एवेत्यसंबद्ध एवेत्युपसंहरति—तस्मादिति । उक्तरीत्याऽसाधकत्वादित्यर्थः । अत उक्तरीत्याऽऽकृतिसद्भावे बाधकाभावात् प्रत्यक्षादिप्रमाणरूपसाधकसद्भावाच्चाऽऽकृतेः शब्दार्थत्वबोधकं जैमिनिवचनम्—आकृतिस्तु क्रियार्थत्वादित्यादिकमुपपन्नतरमित्याह—अत इति । एवं सद्भावप्रतिपादनेनाऽऽकृतेः शब्दार्थत्वमुपपाद्य क्रियोपयोगप्रदर्शनेनापि शब्दार्थत्वमुत्तरत्राऽऽकृत्यधिकरणे विस्तरेणोपपादयिष्याम इत्याह—यथा चेत्यादिना । एवं शब्दार्थयोराधारभूतयोः स्वरूपं निरूप्य तदाधेयभूतस्य संज्ञासंज्ञिलक्षणसंबन्धस्य नित्यत्वमुपपादयितुं पूर्वमेवोपक्रान्तस्य तन्नित्यत्वपूर्वपक्षस्यैतावता शब्दार्थनिरूपणपरेण ग्रन्थेन व्यवहितत्वात्तत्स्मरणार्थं प्रश्नोत्तराभ्यां पूर्वोपपादितं संज्ञासंज्ञिलक्षणं शब्दार्थयोः संबन्धस्वरूपमाह—अथेत्यादिना । उक्तरीत्या शब्दार्थौ भवेतां नाम, यदर्थस्तु प्रयासोऽयं शब्दार्थस्वरूपनिरूपणविषयः तस्मादनयोः संबन्धः क इति प्रश्नभाष्यार्थः । यादृशेन संबन्धेन शब्दज्ञाने सत्यर्थज्ञानं जायते तादृशः संज्ञासंज्ञिरूप एव प्रकृते संबन्ध इत्युत्तरभाष्यार्थः । तस्य च कृतकत्वं पूर्वोपपादितमनुभाषते—स तु कृतक इत्यादिना । प्रकृतपूर्वपक्षमुपसंहरति—तस्मादिति । जगदादावेव केनचिन्महापुरुषेण शब्दानामर्थैः सह संज्ञासंज्ञिलक्षणसंबन्धं संव्यवहारार्थं कृत्वा वेदाः प्रणीता इति पुरुषस्य च भ्रमप्रमादादिमत्त्वादप्रमाणमेव वेदा धर्मप्रमायामित्यर्थः । एवं प्राप्ते सिद्धान्तमाह—तदिदानीमिति ।

संव्यवहर्त्तुं वेदाः प्रणीता इति । तदिदानीमुच्यते । अपौरुषेयत्वात्संबन्धस्य सिद्धमिति । कथं पुनरिदमवगम्यतेऽपौरुषेय एष संबन्ध इति । पुरुषस्य संबन्धुरभावात् । कथं संबन्धा नास्ति । प्रत्यक्षस्य प्रमाणस्याभावात्, तत्पूर्वकत्वाच्चेतरेषाम् । ननु ' चिरवृत्तत्वात्प्रत्यक्षस्याविषयो भवेदिदानीन्तनानाम् । न हि चिरवृत्तः सन्न स्मर्येत । न च हिमवदादिषु कूपारामादिषदस्मरणं भवितुमर्हति । पुरुषवियोगो हि तेषु भवति, देशोत्सादेन कुलोत्सादेन वा । न च शब्दार्थव्यवहारवियोगः पुरुषाणामस्ति । स्यादेतत् । संबन्धमात्रव्यवहारिणो निष्प्रयोजनं कर्तृस्मरणमनाद्रियमाणा विस्मरेयुरिति । तन्न । यदि हि पुरुषः कृत्वा संबन्धं व्यवहा-

---

शब्दार्थयोः संबन्धस्यापौरुषेयत्वासंभवात्सिद्धं प्रामाण्यमित्यर्थः ।

## शब्दार्थसंबन्धापौरुषेयत्ववादः ।

संबन्धस्यापौरुषेयत्वं प्रश्नोत्तराभ्यां निरूपयितुं कथं संबन्धस्यापौरुषेयत्वं गम्यत इति पृच्छति—कथं पुनरिति । संबन्धकर्तुः पुरुषस्याभावान्नास्ति संबन्धस्य पौरुषेयत्वमित्युत्तरमाह—पुरुषस्येत्यादिना । संबन्धस्य कर्ता नास्तीति कथमवगम्यत इति पृच्छति—कथमिति । प्रत्यक्षादिप्रमाणानामभावान्नास्ति तत्कर्तेत्यवगम्यत इत्युत्तरमाह—प्रत्यक्षस्येत्यादिना । यद्दर्शनयोग्यं वस्तु तादृशं सामग्रीसमवधानदशायामपि यदि न दृश्यते तन्नास्तीत्यवगम्यते यथा नरशृङ्गादिरित्याशयः । ननु संबन्धकर्तुः प्रत्यक्षयोग्यस्यापि चिरवृत्तत्वादिदानीन्तनानां न प्रत्यक्षविषयत्वं भवतीति शङ्कते—नन्विति । चिरवृत्तस्येदानीन्तनप्रत्यक्षयोग्यत्वासंभवेऽपि स्मरणयोग्यत्वसत्त्वात् । तस्य चानुपलम्भान्नास्त्येव संबन्धेत्यवगम्यत इति समाधत्ते—न हीति । न हि न स्मर्येत—स्मरणयोग्यो भवत्येवेत्यर्थः । ननु हिमवदादिषु विद्यमानकूपारामादीनां कर्ता यथा न स्मर्यत इदानींतनैस्तथेहापि भवितुमर्हतीत्याशङ्क्य समाधत्ते—नचे त्यादिना । अयमाशयः । हिमवदादिषु देशोत्सादस्य कुलोत्सादस्य वा संभावितत्वात्स्मृतिहेतुभूतपुरुषपरम्पराया विच्छेदात्तन्नविस्मरणमुपपद्येत, प्रकृते तु शब्दार्थव्यवहर्तृपुरुषपरम्पराविच्छेदस्य कथमपि कदाऽप्युद्भावयितुमशक्यत्वाच्छब्दार्थसंबन्धकर्तृविस्मरणोपपादनमतिसाहसमिति ।

ननु व्यवहर्तृपुरुषाणां शब्दार्थसंबन्धमात्रं व्यवहारार्थमावश्यकं तत्कर्तृस्मरणं तु घटकर्तृकुलालस्मरणमिव निष्प्रयोजनमिति संबन्धारमनाद्रियमाणा विस्मरेयुरिति शङ्कते—स्यादेतदित्यादिना । समाधत्ते—तन्नेत्यादिना न विमतिचावित्यन्तेन । अस्य

रयेत्, व्यवहारकालेऽवश्यं स्मर्तव्यो भवति। संप्रतिपत्तौ हि कर्तृव्यव हर्त्रोरर्थः सिध्यति, न विप्रतिपत्तौ। न हि वृद्धिशब्देन, अपाणिनेर्व्यवहारत आदैचः प्रतीयेरन्, पाणिनिकृतिमननुमन्यमानस्य वा। तथा मकारेणापिङ्गलस्य न सर्वगुरुस्त्रिकः प्रतीयेत, पिङ्गलकृतिमननुमन्यमानस्य वा। तेन कर्तृव्यवहर्तारौ समविपद्येते। तेन वेदे व्यवहरद्भिरवश्य स्मरणीयः सबन्धस्य कर्ता स्यात्, व्यवहारस्य च। न हि विस्मृते वृद्धिरादैजि(पा० १। १। १।)त्यस्य सूत्रस्य कर्तरि 'वृद्धिर्यस्याचामादिः। (पा० १। १।७३।) इति किंचित्प्रतीयेत।

---

भाष्यस्याशयमाशय। नात्र सबन्धकर्तुरनादराद्विस्मरणमुपपद्यते। यदा हि कश्चित्पद पदार्थसंबन्ध कृत्वा धर्माधर्मप्रतिपादनाय वेदवाक्यानि कृतवांस्तदाऽवश्यमसौ संबन्धस्य कर्ता, स एव च ते पदैर्वेदवाक्यरचनात्मक व्यवहार करोतीति समयव्यवहारयोरेकक र्तृकत्व प्रतिपत्तृभि स्मर्तव्य तथा वाक्यादर्थं प्रतिपाद्यमानानामवश्य वाक्यकर्तुराप्तत्वं च स्मर्तव्य तदधीनत्वादर्थनिश्चयस्य। न च वेदादर्थं प्रतिपाद्यमाना समयकर्तार तेन सह वेदकर्तुरेकत्व तस्य चाऽऽप्तत्व स्मरन्तो दृश्यन्त इति—संप्रतिपत्ताविति। सबन्धकर्तृवेदवाक्यकर्त्रोरैक्य आप्तत्वे च निश्चिते सतीत्यर्थ.। अर्थः सिध्यतीति। प्रतिपत्तॄणा वेदवाक्यादर्थनिश्चयो जायत इत्यर्थ —न विप्रतिपत्ताविति। ऐक्यनिश्चयाभावे सति न जायत इत्यर्थ। सबन्धव्यवहर्त्रोरैक्यनिश्चये सत्येव प्रतिपत्तॄणा तद्व्यव हारतोऽर्थनिश्चयो नान्यथेत्यन्वयव्यतिरेकौ दृष्टान्तेन प्रदर्शयति——न हीत्यादिना अननुमन्यमानस्य वेत्यन्तेन। अयमर्थ। यथा पाणिनिभिन्नस्य पाणिनिमताननुसारिणो वा वृद्धिशब्दव्यवहारत आदैचो न प्रतिपद्यन्ते प्रतिपत्तार। यथा वा पिङ्गलाचार्यभिन्नस्य तन्मताननुसारिणो वा मकारव्यवहारत सर्वगुरु त्रिक न प्रतिपद्यन्ते। किं तु वृद्धिरादैजिति वृद्धिशब्दसबन्धकर्तु पाणिनेर्वृद्धिर्यस्याचामादिस्तद्वृद्धमिति व्यव हारतो वृद्धिशब्देनाऽऽदैच प्रतिपद्यन्ते।

एव 'सर्वगुरुर्म' इति मकारसबन्धकर्तु पिङ्गलाचार्यस्य व्यवहारत सर्वगुरु त्रिक प्रतिपद्यन्ते तद्वदिति। अत कारणात्सबन्धव्यवहर्त्रो सप्रतिपत्तिरावश्यकीति निगमयति—तेनेति। तथा च प्रकृतेऽपि वेदवाक्यार्थप्रतिपत्तृभिरवश्य पदपदार्थसबन्ध कर्ता तादृशपदसमूहात्मकवेदवाक्यकर्ता चैक एवाऽऽप्तश्चेत्येव स्मरणीय इत्याह—तेन वेद इत्यादिना। समयव्यवहारयोरेककर्तृकत्वविस्मरणे नार्थनिश्चय समवतीत्यत्र दृष्टान्त प्रदर्शयति—न हीति। अतश्च प्रकृते विनाऽपि कर्तृस्मरण वेदवाक्यादर्थनिश्चयस्य

तस्मात्कारणादवगच्छामो न कृत्वा संबन्धं व्यवहारार्थं केनचिद्वेदाः प्रणीता इति । यद्यपि च विस्मरणमुपपद्येत, तथाऽपि न प्रमाणमन्तरेण संबन्धारं प्रतिपद्येमहि । यथा विद्यमानस्याप्यनुपलम्भनं भवतीति, नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्यामहे । तस्मादपौरुषेयः शब्दस्यार्थेन संबन्ध इति ।

नन्वर्थापत्त्या संबन्धारं प्रतिपद्येमहि न ह्यकृतसंबन्धाच्छब्दादर्थं प्रतिपद्यमानानुपलभामहे । प्रतिपद्येरंश्चेत्प्रथमश्रवणेऽपि प्रतिपद्येरन् । तदनुपलम्भनादवश्यं भवितव्यं संबन्धेति चेन्न सिद्धवदुपदे-

---

प्रसिद्धत्वान्न संबन्धस्य वेदवाक्यस्य च कर्ताऽभ्युपगन्तुं शक्यत इत्याह—तस्मात्कारणादिति । ननु विद्यमानस्यापि संबन्धकर्तुश्छन्दोगप्रसिद्धोहप्रन्यकर्तुरिव विस्मरणमुपपन्नमिति न तावता कर्त्रभावः सिध्यतीत्याशयेन शङ्कते—यद्यपीति । समाधत्ते—तथाऽपीत्यादिना । अयमाशयः । ऊहग्रन्थादिपूहेतिसमाख्यादिरूपबहुतरप्रमाणबलेन कर्तुः संप्रतिपन्नत्वेऽपीह संबन्धरि कस्यापि प्रमाणस्यानुपलम्भमात्केवलानुपलम्भनस्य वस्त्वभावासाधकत्वेऽप्यप्रामाणिकवस्त्वनुपलम्भनस्य शशविषाणादिष्विवाभावसाधकत्वं संभवत्येवेति ।

सौत्रोपदेशपदार्थं निरूपयितुमुत्तराणिकामारचयति—नन्वित्यादिना । अस्य शङ्काभाष्यस्यायमाशयः । संबन्धसद्भावे प्रमाणान्तराभावेऽपि प्रथमश्रुतादर्थाप्रतीत्यनुपपत्तिरूपाऽर्थापत्तिः प्रमाणं भवितुमर्हति । तथा हि । संबन्धस्य कृतकत्वे ह्यप्रतिपन्नसमयानामर्थाप्रतीतिः प्रतिपन्नसमयानां च प्रतीतिर्देवदत्तादिशब्दवदुपपन्ना भवति । स्वाभाविके तु प्रत्यायकत्वे प्रथमश्रवणेऽपि प्रतीतिः स्यात् । सा तु नास्ति किंत्वस्यायमर्थ इति पुरुषेण कथिते सत्येवार्थप्रत्यय उपलभ्यत इत्यवश्यं पुरुषकृतमेव शब्दस्यार्थप्रत्यायकत्वमिति पौरुषेय एव संबन्ध इति । इमां शङ्कां सौत्रोपदेशपदार्थप्रदर्शनेन निराकरोति—न सिद्धवदुपदेशादित्यादिना । सिद्धवदुपदेशादिति । अस्यायमर्थ इति न संबन्धकरणमिदं किं तु प्रसिद्धस्यैव संबन्धस्य, उपदेशः—कथनं तस्मादित्यर्थः । सिद्धसंबन्धस्य कथनमेवेदं न तु करणमिति कथमवगम्यत इति चेत् । इत्थम् । अर्थान्तरकथने बहुभिर्निवारणात् । तथा हि । यो हि कश्चित्कस्मैचिद्गोशब्दस्याश्वं गवयं वाऽर्थमाह तमन्ये बहवो निवारयन्ति नायमस्यार्थः किं तु सास्नादिमानस्यार्थ इति । संबन्धकरणपक्षे च देवदत्तादिशब्दवत् । येनैवार्थेन संबन्धः क्रियेत स एव तच्छब्दार्थ इति निवारणं नोपपद्यते । तस्मान्न तावत्पुरुषा अस्य शब्दस्यायमर्थोऽस्यायमर्थ इति वदन्तोऽपि तत्संब-

शात् । यदि संबन्धुरभावान्नियोगतो नार्थो उपलभ्येरंस्ततोऽर्थापत्त्या संबन्धारमवगच्छामः । अस्ति त्वन्यः प्रकारः ।

वृद्धानां स्वार्थेन संव्यवहारमाणानामुपशृण्वन्तो बालाः प्रत्यक्षमर्थं प्रतिपद्यमाना दृश्यन्ते । तेऽपि वृद्धा यदा बाला आसंस्तदाऽन्येभ्यो वृद्धेभ्यस्तेऽप्यन्येभ्य इति नास्त्यादिरित्येवं वा भवेत् । अथ वा न कश्चिदेकोऽपि शब्दस्यार्थेन संबन्ध आसीत्; अथ केनचित्संबन्धाः प्रवर्त्तिता इति । अत्र वृद्धव्यहारे सति नार्थादापद्येत संबन्धस्य कर्ता । अपि च व्यवहारवादिनः प्रत्यक्षमुपदिशन्ति, कल्पयन्तीतरे संबन्धारं न च प्रत्यक्षे प्रत्यर्थिनि कल्पना साध्वी । तस्मात्संबन्धुरभावः । अन्यतिरेकश्च यथाऽस्मिन्देशे सास्नादिमति गोशब्द एवं सर्वेषु दुर्ग-

---

न्धकर्तृत्वेन शङ्कनीया इति । पूर्वपक्ष्युपन्यस्तामर्थापत्तिमन्यथा परिहर्तुमाह—**यदि संबन्धुरित्यादिना** । सबन्धस्याकृतकत्वेऽपि शब्दादर्थप्रतीति· प्रकारान्तरेणोपपन्ना भवतीत्यर्थ । तदेव प्रकारान्तरमाह—**वृद्धानामित्यादिना** ।

यथाऽद्यत्वे स्वकार्यार्थं व्यवहरमाणाना वृद्धाना प्रसिद्धसंबन्धानामुपशृण्वन्तो बाला· संबन्धमर्थं च प्रत्यक्ष प्रतिपद्यमाना दृश्यन्ते, एव सर्वदाऽपीत्यनादिवृद्धव्यवहारमहिम्ना सबन्धावगमोऽर्थावगमश्चोपपन्नतरो भवतीति सबन्धस्याकृतकत्वेऽपि न काऽप्यनुपपत्तिरिति भाव ।

एव स्वमतमुपपाद्य शब्दार्थसबन्धस्य कृतकत्व शब्दार्थप्रतीत्यन्यथानुपपत्तिनिमित्तक दूषयितुमनुवदति—**अथ चेत्यादिना** प्रवर्तिता इत्य-तेन । इम पक्ष दूषयति—**अत्रेत्यादिना** । पूर्वोपपादितरीत्याऽनादिवृद्धव्यवहारेणैवार्थप्रतीतेरुपपन्नतरत्वादनुपपत्तेरेवाभावात्र तन्महिम्ना सबन्धकर्तृसिद्धिरिति भाव । सौत्रोपदेशपद प्रत्यक्षरूपार्थान्तरपरतया व्याचष्टे—**अपि चेत्यादिना** । उपदेश प्रत्यक्षविषयो वृद्धव्यवहारोऽर्थप्रतीतिसाधको यतो विद्यतेऽतोऽनुपपत्तिरेव नास्तीत्याशय । यत्तु स्वाभाविके प्रत्यायकत्वे प्रथमश्रवणेऽप्यर्थप्रतीति स्यादित्युक्तम् । तन्न। सबन्धस्य सामयिकत्व इव स्वाभाविकत्वेऽप्यवगतस्यैवार्थप्रतिपत्तौ निमित्तत्व नानवगतस्येति प्रथमश्रवणेऽप्रतिपन्नसंबन्धस्यार्थाप्रतीतेरुपपन्नतरत्वात् । सौत्रम यतिरेकपद व्याचष्टे—**अव्यतिरेकश्चेत्यादिना** । यतोऽ यतिरेको देशा यतिरेक सबन्धस्य विद्यतेऽतोऽपिकारणात्संबन्धो नित्य इत्यर्थ. । देशाव्यतिरेकमेव सबन्धस्योपपादयति—**यथाऽस्मिन्देश इत्यादिना** ।

अयमाशय । यथाऽस्मिन्देशे सास्नादिमत्यर्थे गोशब्द प्रयुज्यमानो दृश्यते,

मेष्वपि। बहवः संबन्धारः कथं संगंस्यन्ते। एको न शक्नुयात्। अतो नास्ति संबन्धस्य कर्ता। अपर आह। अव्यतिरेकश्च। न हि संबन्धव्यतिरिक्तः कश्चित्कालोऽस्ति। यस्मिन्न कश्चिदपि शब्दः केनचिदर्थेन संबद्ध आसीत्। कथम्। संबन्धक्रियैव हि नोपपद्यते। अवश्यमनेन संबन्धं कुर्वता केनचिच्छब्देन कर्तव्यः। येन क्रियेत तस्य केन कृतः। अथान्येन केनचित्कृतः, तस्य केनेति तस्य केनेति नैवावतिष्ठते। तस्मादवश्यमनेन संबन्धं कुर्वताऽकृतसंबन्धाः केचन शब्दा वृद्धव्यवहारसिद्धा अभ्युपगन्तव्याः। अस्ति चेद्व्यवहारसिद्धिर्न नियोगतः संबन्धा भवितव्यमित्यर्थापत्तिरपि नास्ति।

---

एवं सर्वेषु दुर्गमेष्वपि देशेषु। न चैवमेकेन कर्तुं शक्यते। अनेके चेत्संबन्धारः कथं ते सर्वे सर्वेषु दुर्गमेषु संगंस्यन्त इति संबन्धुरेकत्वानेकत्वाभ्यां निरूपयितुमशक्यत्वान्न संबन्धः कृतक इति। ननु दुर्गमेषु गोशब्दप्रयोगः सास्नादिमति विद्यत इति कथं ज्ञातुं शक्यते। केनचित्पुरुषेण तत्र तत्र गत्वा ■ प्रयोगो दृष्टश्चेत् संबन्धुरीश्वरस्याप्रतिहतगतेर्गमनं न संभवतीति कथं संभाव्यते। किं च बहूनां संबन्धृणामेकत्र संगमनमपि सर्वत्रैकरूपशब्दार्थव्यवहाररूपकार्यदर्शनात्कल्पयितुं शक्यमेव। अपि च मा भूत्सर्वदुर्गमगमनमेकस्य बहूनां वा संप्रतिपत्तिः। तथाऽपि वृद्धव्यादिशब्दार्थव्यवहारवत्सर्वत्र शब्दार्थव्यवहारैकरूप्यं संबन्धैक्यपक्ष उपपन्नमेवेत्यरुच्या प्रकारान्तरेणाव्यतिरेकपदं व्याचष्टे—अपर आहेत्यादिना। अस्मिन्पक्षेऽव्यतिरेकपदं कालाव्यतिरेकपरम्। संबन्धस्य कालाव्यतिरेकमुपपादयति—न हीत्यादिना। यतः संबन्धशून्यः कालोऽप्रामाणिकोऽतः संबन्धोऽनादिरित्यर्थः। पूर्वं संबन्धानामप्रसिद्धत्वे कालविशेषे पुरुषविशेषेण तेषां करणमेव दुर्घटमित्येतमर्थं प्रश्नपूर्वमुपपादयति—कथमित्यादिना।

संबन्धकरणपक्षेऽप्यवश्यमनवस्थापरिहाराय केचन वृद्धव्यवहारप्रसिद्धा अकृतसंबन्धाः शब्दाः संबन्धकरणायाभ्युपगन्तव्या इति यदि वृद्धव्यवहारसिद्धिस्तेनैव सर्वानुपपत्तिपरिहारे नावश्यं संबन्धा भवितव्यमिति सिद्धं संबन्धस्यानादित्वमिति भावः।

ननु यथाऽप्रसिद्धसंबन्धस्य करणमनुपपन्नं तद्वत्कथनमप्यनुपपन्नम्। यद्यपि तदा वक्तुः प्रसिद्धसंबन्धत्वात्संबन्धकथनाय वाक्योच्चारणं संभवति तथाऽपि श्रोतारोऽप्रसिद्धसमस्तपदार्था बालाः कथं वाक्येन संबन्धं प्रतिपद्येरन्नित्यभिप्रायेण शङ्कते—

स्यादेतत् । अप्रसिद्धसंबन्धा बालाः कथं वृद्धेभ्यः प्रतिपद्यन्त इति नास्ति दृष्टेऽनुपपन्नं नाम । दृष्टा बाला वृद्धेभ्यः प्रतिपद्यमानाः " न च प्रतिपन्नाः संबन्धाः " संबन्धस्य कर्तुः । तस्माद्वैषम्यम् । अर्थेऽनुपलब्धे । अनुपलब्धे च देवदत्तादावर्थेऽनर्थकं संज्ञाकरणमशक्यं च । विशेषान्प्रतिपत्तुं हि संज्ञाः क्रियन्ते विशेषांश्चोद्दिश्य । तद्विशेषेष्वज्ञायमानेषूभयमप्यनवक्लृप्तम् । तस्मादपौरुषेयः शब्दस्यार्थेन संबन्धः । अतश्च तत्प्रमाणमनपेक्षत्वात् । न चैवं सति पुरुषान्तरं प्रत्ययान्तरं चापेक्ष्यते । तस्माच्चोदनालक्षण एव धर्मो नान्यलक्षणः । बादरायणग्रहणमुक्तम् । अथ यदुक्तमनिमित्तं शब्दः कर्मकाले फलादर्शनात्कालान्तरे च कर्मा

---

स्यादेतदित्यादिना—समाधत्ते । नास्ति दृष्ट इत्यादिना । अयमाशयः । कथयितुमत्र कर्तुरिवाशक्तिः, उपायसम्भवात् । प्रतिपत्तारस्तूपायाभावान्न प्रतिपद्यन्त इति दृष्टविरुद्धम् । दृश्यन्ते ह्यप्रसिद्धसमस्तपदार्था बाला वृद्धेभ्यः संबन्धं प्रतिपद्यमाना इति । करणपक्षस्तु कर्तुरप्यप्रतिपन्नसंबन्धत्वादतिदुर्घट इत्याह—न च प्रतिपन्नाः संबन्धा इत्यादिना । उक्तं वैषम्यं निगमयति—तस्मादिति । युक्त्यन्तरेणापि संबन्धकरणस्याशक्यत्वमनर्थकत्वं च प्रतिपादयितुं प्रवृत्तं सौत्रं " अर्थेऽनुपलब्धे " इत्यंशं व्याचष्टे—अर्थेऽनुपलब्ध इत्यादिना । यतोऽनुपलब्धे सर्वथा प्रमाणान्तरेणानुपलब्धे शब्दैकसमधिगम्येऽर्थे संज्ञाकरणमियमस्य संज्ञेत्येवरूपमनर्थकमशक्यं च । अतोऽपि हेतोरौत्पत्तिकः संबन्ध इत्यर्थः । अमुमेवार्थमुपपादयति—अनुपलब्धे चेत्यादिना । अयमाशयः । लोके प्रसिद्धे देवदत्तादावर्थे विद्यमानान्विशेषान्प्रतिपत्तुं विशेषांश्चाभिप्रेत्य संज्ञा क्रियमाणा दृश्यन्ते । तदुभयमप्यप्रसिद्धपदार्थेऽनुपपन्नमिति तत्र संज्ञाकरणमनर्थकमशक्यं चेति ।

एतावता प्रपञ्चेनोपपादितं संबन्धस्यापौरुषेयत्वमुपसंहरति—तस्मादिति । अतश्चेत्यादिबादरायणग्रहणमित्यन्तो भाष्यग्रन्थः पूर्वमेव व्याख्यातः ।

## चित्राक्षेपनिराकरणम् ।

एवं तावत् संबन्धनित्यत्वोपपादनेन स्वपक्षं प्रसाध्याधुना चित्राद्युदाहरणेषु पूर्वपक्ष्युक्तमाक्षेपमनूद्य परिहरति—अथ यदुक्तमित्यादिना । समाधानभाष्यस्यायमाशयः । पूर्वं तावच्चित्रादिचोदनानामप्रामाण्यार्थमेकं साधनं चित्रादेर्निष्फलत्वार्थं चापरमुक्तम् ।

---

१ नात्रप्रतिपन्नसंबन्धा इति लिखितपुस्तके पाठान्तरम् ।

भावात्प्रमाणं नास्तीति । तदुच्यते । न स्यात्प्रमाणं यदि एवैव प्रमाणान्यभविष्यन् । येन येन हि प्रमीयते तत्तत्प्रमाणम् । शब्देनापि प्रमीयते ततः शब्दोऽपि प्रमाणम् । यथैव प्रत्यक्षम् । न च प्रमाणेनावगतं प्रमाणान्तरेणानवगतमित्येतावताऽनवगतं भवति । न चैवं श्रूयते कृते कर्मणि तावतैव फलं भवति, किन्तु कर्मणः फलं प्राप्यत इति ।

यच्च कालान्तरे फलस्यान्यत्प्रत्यक्षं कारणमस्तीति । नैष दोषः । तच्चैव हि तत्र कारणं शब्दश्चेति ।

---

तत्र चित्रादिनिष्फलत्वार्थं स्वकाले फलादानरूपं यत्साधनमुक्तं तत्तावदसिद्धम् । आनन्तर्ये फलदानकालत्वेन चोदिते हि स्वकाले फलादानं सिध्येत् । आनन्तर्यं न फलदानकालत्वेन चोदनया चोद्यते । किं तु कर्मणः फलं प्राप्यत इत्येव चोद्यते । एवं च कालान्तरेऽपि फलदानसंभवात्स्वकाले फलादानमितिसाधनमसिद्धमेवेति ।

एवं यच्च चित्रादिचोदनाप्रामाण्यार्थं प्रत्यक्षादिविसंवादिरूपं साधनान्तरमुक्तं तदप्यसिद्धमेव । तथा हि । आनन्तर्यविषयो हि प्रत्यक्षविसंवादः । नासावविशेषप्रवर्तिनीं चोदनां बाधितुमीष्टे विषयभेदात् । एवं च 'प्रत्यक्षाद्यधिकारेऽपि तैरर्थासङ्गतिर्यतः'[1] इति यत्साधनमुक्तं तदसिद्धं चोदनार्थे प्रत्यक्षादेरनधिकारादिति ।

, ननु कालान्तरे चित्रादीनां फलदानाभ्युपगमे कालान्तरे जायमानफलस्य प्रत्यक्षं सेवादिरूपं कारणान्तरं संभवतीति नादृष्टरूपं कारणं कल्पयितुं युज्यत इति न कालान्तरे जायमानफलस्य चित्रादिफलत्वं कल्पयितुं शक्यत इति पूर्वोक्तां शङ्कामनुवदति—यच्चेत्यादिना । परिहरति—नैष दोष इत्यादिना । तच्चैव हि तत्र कारणमिति । तत्र कालान्तरे जायमानफले । तत् । अदृष्टरूपं कारणमस्त्येवेत्यर्थः । दृष्टरूपस्य सेवादेरन्वयव्यतिरेकाभ्यां व्यभिचारान्न फलकारणत्वमभ्युपगन्तुं शक्यम् । अदृष्टस्य तु व्यभिचारशङ्कानास्पदत्वात्कारणत्वं सुनिरूपमिति भावः ।

ननु ईश्वरेच्छाधिकारादेरेवादृष्टरूपस्य कारणत्वमास्तां ननु भवदभिमतचित्रादेरित्यत आह—शब्दश्चेति । अयमाशयः । यत ईश्वरेच्छाधिकारादिकं शब्दलिङ्गादिरूपप्रमाणवर्जितं चित्रादिकमेव 'चित्रया यजेत पशुकामः' इत्यादिविधिप्रमाणकम् । अत श्चित्रादिकर्मैवान्यमदृष्टमेव कालान्तरजायमानफलसाधनमित्येवैष्टव्यमिति ।

---

1 श्लो० वा० पृ० ४१४ श्लो० २ ।

यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तं स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं यातीति प्रत्यक्ष शरीरक व्यपदिशतीति। तदुच्यते। शरीरसं बन्धात्। यस्य तच्छरीरं सोऽपि तैर्यज्ञायुधैर्यज्ञायुधीत्युच्यते।

आह कोऽसावन्यो नैनमुपलभामहे। प्राणादिभिरेनमुपलभामहे। योऽसौ

---

प्रत्यक्षविसंवादपरिहारः।

एवं तावच्चित्राक्षेपं परिहृत्य संप्रति वाक्यान्तरे दृष्टविरोधं पूर्वपक्ष्युपन्यस्तं परिहर्तु मनुवदति—यत्त्वित्यादिना। 'तदुच्यत इत्यादि' परिहारभाष्यस्यायमाशयः।

न ह्यनेन वचनेन शरीरस्य स्वर्गगमनमुच्यते। येन प्रत्यक्षविरोधः स्यात्। किं तर्हि आत्मन एव। यस्यैतच्छरीरं॥ आत्माऽपि शरीरशरीरिणोरभेदोपचारेण शरीरस्येन यज्ञायुधित्वेन प्रत्यक्षत्वेन च एष इति यज्ञायुधीति च व्यपदेष्टुं शक्यत एव। एवं *सर्वगतस्याप्यात्मनो यागविषयकज्ञानप्रयत्नादिषु साक्षादेव कर्तृत्वं समचति।*

न हि वयं स्पन्दमेव क्रियामभ्युपगच्छामो वैशेषिकवत्। येनाऽऽत्मनः साक्षात्कर्तृत्वं न स्यात्। किं तु धात्वर्थमात्रस्य क्रियात्वमिति न यजमानशब्दस्याप्यनुपपत्तिरिति न किंचिदनुपपन्नमिति।

आसंवादः।

ननु उदाहृतस्य यज्ञायुधिवाक्यस्य आदित्ययूपादिवाक्यवदर्थवादतयाऽपि नेतुं शक्यत्वाज्ज्ञानदेहादिव्यतिरिक्तात्मप्रतिपादनमत्र भाष्यकारेण क्रियमाणं व्यर्थमिति चेत्।

सत्यम्। नैरात्म्ये हि साध्यसाधनसंबन्धप्रतिपादकानां चोदनानामप्रामाण्यमापद्येत। तथा हि। स्वर्गकामादिचोदनाभिर्हि स्वर्गस्याऽऽमुष्मिकत्वाज्जन्मान्तरे फलोपभोगो बोध्यते। सोऽपि कर्तुरेव नान्यस्य। अतस्तस्य ज्ञानमात्रत्वे तेषां क्षणिकत्वात्कर्तृत्वभोक्तृत्वानुपपत्तेः शरीरचैतन्येऽपि तस्य विनिपाताद्वतिरिक्तस्य च कस्यचिद्भोक्तुरनङ्गीकारादिष्टचोदेश्चादत्तफलत्वापाताद्वचनस्याप्रामाण्यं स्यादिति यज्ञायुधिवाक्यसमर्थनच्छलेन ज्ञानदेहातिरिक्तात्मप्रतिपादनं वेदप्रामाण्यार्थमेव। तदुक्तं वार्तिके—( श्लो० वा० पृ० १९० श्लो० ६ )

तस्माद्वेदप्रमाणार्थमात्माऽत्र प्रतिपाद्यते।
यद्यपि प्रकृतं वाक्यं व्याख्यायेतार्थवादतः ॥ इति।

नैयायिकमतेनाऽऽत्मास्तित्वप्रतिपादनम्।

ननु शरीरव्यतिरिक्तात्मसद्भावे प्रमाणं नास्तीति शङ्कते—आहेत्यादिना। प्राणनादिलिङ्गकमनुमानमेव प्रमाणमिति वैशेषिकमतेन समाधत्ते—प्रणादिभिरित्यादिना।

प्राणिति अपानिति उच्छ्वसिति निमिषति, इत्यादि चेष्टितवान्, सोऽत्र शरीरे यत्नायुधीति

ननु शरीरमेव प्राणिति अपानिति च। न। प्राणादयः शरीरगुणविधर्माणोऽयावच्छरीरभावित्वात्। यावच्छरीरं तावदस्य गुणा रूपादयः। प्राणादयस्तु सत्यपि शरीरे न भवन्ति। सुखादयश्च स्वयमुपलभ्यन्ते न रूपादय इव शरीरगुणाः परेणापीति। तस्माच्छरीरगुणवैधर्म्यादन्यः शरीराद्यत्नायुधीति।

---

"योऽसौ प्राणिति" इत्यादिशब्देन प्राणनादिशब्दवाच्यस्य कोष्ठचस्य वायोरूर्ध्वाधोगमनवृत्तिविशेषस्य हेतुभूतः प्रयत्न उच्यते। अन्यथा वायुधर्मस्य मुख्यस्य प्राणनादेरात्मवृत्तित्वासंभवेनाऽऽत्मलिङ्गत्वानुपपत्तेः। तथा चायमत्र प्रयोगः—

प्राणनादिप्रयत्नः साश्रयो गुणत्वाद्रूपवदिति। स चाऽऽश्रय आत्मेत्याशयः। ननूक्तानुमाने शरीरस्यैवोक्तविधाश्रयतया सिद्धचा अर्थान्तरमित्याशयेन शङ्कते—नन्वित्यादिना। समाधत्ते—नेत्यादिना। यतः प्राणनादयः शरीरगुणविधर्माणोऽतो न शरीरं प्राणनाद्याश्रयो भवतीति योजना। प्राणनादिषु शरीरगुणत्वाभावे हेतुं प्रदर्शयति—अयावच्छरीरभावित्वादिति। अमुमेव हेतुमुपपादयति—यावच्छरीरमित्यादिना। अयमर्थः। यत्र रूपादिषु शरीरगुणत्वं तत्र यावच्छरीरभावित्वं दृष्टम्। प्राणनादिषु च व्यापकीभूतयावच्छरीरभावित्वाभावाद्व्याप्यं शरीरगुणत्वमपि न सिध्यतीति। शरीरातिरिक्तात्मसद्भावे लिङ्गान्तरमाह—सुखादयश्चेत्यादिना। यथा रूपादयः शरीरगुणाः स्वयमप्युपलभ्यन्ते परेणापि। न तथा सुखादयः परेणाप्युपलभ्यन्ते परेन्द्रियैर्नावगम्यन्ते। अतो न शरीरगुणा भवन्तीति योजना। प्राणनादेर्बहिर्वृत्तित्वस्यापि परेन्द्रियैर्गम्यमानत्वेनाभ्युपगन्तव्यत्वात्सुखादेश्च परेन्द्रियागम्यत्वेन सर्वथा आन्तरत्वात्त सुखादिवत्सर्वथा परानुपलभ्यमानत्वं प्राणनादेरित्यभिप्रेत्य सुखादेः पृथगुपन्यास इति मन्तव्यम्। तथा चायमत्र प्रयोगः। सुखादयो न शरीरगुणाः, परेन्द्रियानवगम्यमानत्वात्। मनोबुद्धचादिवत्। किं तु आत्मगुणाः। तत्र चायं प्रयोगः। सुखादिः किंचिदाश्रितः। गुणत्वात्। रसादिवदिति। स चाऽऽश्रय आत्मेति। एवं वैशेषिकादिमतेनोपपादितं शरीरव्यतिरिक्तात्मसद्भावमुपसंहरति—तस्मादिति।

### विज्ञानमात्रात्मवादाक्षेपः।

एवं सुखादीनां शरीरगुणत्वनिराकरणेन शरीरादन्यस्मिन्नात्मनि वैशेषिकमतेन साधिते

आह—कुत एष संप्रत्ययः। सुखादिभ्योऽन्यस्तद्वानस्तीति। न हि सुखादिप्रत्याख्यानेन तस्य स्वरूपमुपलभामहे। तस्माच्छशविषाणवदसौ नास्ति। अथोच्यते, तेन विना कस्य सुखादय इति। न कस्यचिदपीति वक्ष्यामः। न हि यो य उपलभ्यते तस्य तस्य संबन्धिना भवितव्यम्। यस्य संबन्धोऽप्युपलभ्यते संबन्धी च तस्यायं संबन्धीति गम्यते। न हि चन्द्रमसमादित्यं वोपलभ्य संबन्धान्वेषणा भवति कस्यायमिति। न कस्यचिदपीत्यवधार्यते। तस्मान्न सुखादिभ्योऽन्यस्तद्वानस्तीति। अथोपलब्धस्यावश्यं कल्पयितव्यः संबन्धी भवति। तत आत्मानमप्यनेन प्रकारेणोपलभ्य कस्यायमिति संबन्ध्यन्तरमन्विष्येम। तमपि कल्पयित्वाऽन्यमपि कल्पयित्वाऽन्यमित्यव्यवस्थैव स्यात्।

---

इदानीं ज्ञानमात्रात्मवादी शङ्कते—आहेत्यादिना।

यदुक्तं सुखादीनां गुणत्वाद्गुणवानात्माऽनुमीयत इति तादृशं गुणत्वं सुखादिष्वस्मान्प्रत्यसिद्धम्। *ज्ञानविशेषरूपाणां सुखादीनां स्वातन्त्र्यादन्यधर्मत्वानभ्युपगमा*दिति शङ्काशयः। सुखादिप्रत्याख्यानेनेति। सुखादिकं विहायेत्यर्थः। तस्येति। आत्मन इत्यर्थः। तस्मादिति। अनुपलभ्यमानत्वादित्यर्थः। सुखादीनां परतन्त्रत्वं *मन्यमानः सिद्धान्ती शङ्कते*—अथोच्यत इत्यादिना। सुखादीनां परतन्त्रत्वं प्रमाणाभावादसिद्धमिति मन्वानः पूर्वपक्षी समाधत्ते—न कस्यचिदपीत्यादिना। प्रमाणाभावमेवोपपादयति—नहीत्यादिना। अस्य चायमाशयः। न ह्युपलभ्यमानत्वमात्रं *वस्तुनः पारतन्त्र्ये गमकम्। आदित्यादौ व्यभिचारात्। न ह्यादित्यमुपलभ्य कस्याय*मिति संबन्धान्वेषणा भवति। किं तु यस्य वस्तुनः संबन्धः संबन्धी चोपलभ्यते तस्यैव तद्धर्मत्वं यथा राज्ञः पुरुष इत्यादौ पुरुषस्य राजसंबन्धित्वम्। सुखादेश्च संबन्धिनः संबन्धस्य चानुपलभ्यमानत्वात्केवलं सुखस्यैवाऽऽदित्यादिवदुपलभ्यमानत्वान्न तत्र परतन्त्रत्वाभ्युपगमो युक्त इति।

एवमुपलभ्यमानत्वमात्रस्य पारतन्त्र्यप्रयोजकत्वे व्यभिचारमुपपाद्याधुनाऽनवस्थामपि प्रदर्शयति—अथेत्यादिना अव्यवस्थैव स्यादित्यन्तेन। भाष्यं सुगमम्।

यद्यनवस्थाभिया सुखादेः संबन्धिनं कंचित्परिकल्प्य तावतैव विरम्यते तदा विज्ञानमात्रमेवैकमङ्गीकृत्य तावतैव विरन्तुमुचितमिति विज्ञानरूपत्वात्सुखादेः परतन्त्रत्वरूपगुणत्वासिद्ध्या न तल्लिङ्गेन तद्व्यतिरिक्तात्मा सिध्यतीत्याशयेनोपसंहरति—

अथ कंचित्कल्पयित्वा न संबन्ध्यन्तरमपि कल्पयिष्यसि तावत्येव विरंस्यसि तावता च परितोक्ष्यसि ततो विज्ञान एव परितुष्य तावत्येव विरन्तुमर्हसि ।

अत्रोच्यते । यदि विज्ञानादन्यो नास्ति कस्तर्हि जानातीत्युच्यते । ज्ञानस्य कर्तुरभिधानमनेन शब्देनोपपद्यते । तदेष शब्दोऽर्थवान्कर्तव्य इति ज्ञानाद्व्यतिरिक्तमात्मानं कल्पयिष्याम इति ।

आह–वेदा एनं शब्दमर्थवन्तं कल्पयिष्यन्ति, यदि कल्पयितव्यं मंस्यन्ते । बहवः खल्विह जना अस्त्यात्मा अस्त्यात्मेत्यात्मसत्तावादिन एव शब्दस्य प्रत्यक्षवक्तारो भवन्ति तथाऽपि नाऽऽत्मसत्तां कल्पयितुं घटन्ते । किमङ्ग पुनर्जानातीतिपरोक्षशब्ददर्शनात् । तस्मादसदेतत् ।

उच्यते । इच्छयाऽऽत्मानमुपलभामहे । कथमिति । उपलब्धपूर्वे ह्यभिप्रेते भवतीच्छा । यथा मेरुमुत्तरेण यान्यस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि न तानि प्रत्यस्माकमिच्छा भवति । नो खल्वन्येन पुरुषेणोपलब्धेऽपि विषयेऽन्यस्योपलब्धुरिच्छा भवति । भवति चान्येद्युरुपलब्धेऽन्येद्युरिच्छा । तेनोपलम्भनेन समानकर्तृका सेत्यवगच्छामः । यदि विज्ञानमात्रमेवेदमुपलम्भकमभविष्यत्, प्रत्यस्ते तस्मिन्कस्यापरेद्युरिच्छाऽभविष्यत् । अथ नु विज्ञानादन्यो

---

अथ कंचिदित्यादिनाऽर्हसीत्यन्तेन । ननु चैत्रो जानातीत्यादौ धातुप्रत्ययाभ्यां ज्ञानाश्रयस्य पुरुषस्य गम्यमानत्वेनैतादृशशब्दप्रयोगप्रत्ययान्यथानुपपत्त्या ज्ञानातिरिक्त आत्माऽवश्यमास्थेय इत्याशयवान्सिद्धान्ती शङ्कते– अत्रोच्यत इत्यादिना कल्पयिष्याम इतीरयन्तेन । अत्र विज्ञानमात्रात्मवादी प्रतिविधत्ते–आहेति । यद्यस्य शब्दस्यार्थवत्त्वं कल्पयितव्यं तदा वेदा अघटितघटनापटीयांसोऽर्थवत्त्वं कल्पयितुं शक्नुवन्ति । " देवा इति " पाठेऽप्येवमेवार्थः । न त्वस्मादृशाः शक्नुम इत्येवं वेदा इत्यादिनोपहासोक्तिः । यदा अस्त्यात्मेत्येवं ज्ञानव्यतिरिक्तात्मसत्तावादिनो बहवः केवलं तादृशशब्दस्यैवात्मरूपार्थबोधकस्य वक्तारो भवन्ति । न त्वात्मसत्तां कल्पयितुं पारयन्ति । तदा जानातीत्येवं परोक्षशब्ददर्शनमात्रादात्मसत्ताकल्पनं ' महागजाः पलायन्ते " इति न्यायमनुसरतीति समाधानभाष्याशयः ।

## इच्छादीनामात्मलिङ्गत्वनिराकरणम् ।

एवं सुखादीनां लिङ्गत्वं निराकृत्येच्छाया लिङ्गत्वं तेनैव वैशेषिकादिमतेन शङ्कते–उच्यते इच्छयाऽऽत्मानमित्यादिनेच्छा नोपपन्ना स्यादित्यन्तेन । शङ्काभाष्य-

विज्ञाता नित्यस्तत एकस्मिन्नहनि य एवोपलब्धाऽपरेद्युरपि स एवै पिप्यतीति । इतरथा हीच्छा नोपपन्ना स्यात् ।

अत्रोच्यते । अनुपपन्नमिति नः क संप्रत्ययः । यन्न प्रमाणेनावगतम् । विज्ञानात्तावदन्य नोपलभामहे । यन्नोपलभामहे तच्छशविषाणवदेव नास्तीत्यवगच्छामः । न च तस्मिन्नसति विज्ञानसद्भावोऽनुपपन्नः । प्रत्यक्षावगतत्वादेव ।

क्षणिकत्वं चास्य प्रत्यक्षपूर्वकमेव । न च ज्ञातरि विज्ञानादन्यस्मिन्नसति, ज्ञाने चानित्येऽपरेद्युरिच्छाऽनुपपन्ना । प्रत्यक्षावगतत्वादेव । नो खल्वप्येतद्दृष्टं य एवान्येद्युरपलब्धा स एवान्येद्युरेपितेति ।

---

स्यायमाशय । न विज्ञानमात्रमात्मा । तस्य क्षणिकत्वेनेच्छाया अनुपपत्ते ।तथा हि । इच्छा हि नादृष्टेऽन्यदृष्टे वा विषये सभवतीति अतिप्रसङ्गादनुपलम्भाच्च । भवति त्वन्येद्युरुपलब्धे विषये तस्यैव परेद्युरिच्छा । अत उपलब्धिसमानकर्तृका सतीच्छा क्षणिकविज्ञानातिरिक्त स्थायिनमात्मान कल्पयति, अन्यथानुपपत्ते । अयमत्र प्रयोग । इच्छा स्थायिपुरुषाश्रया स्वसमानकर्तृकोपलब्धिपूर्वकत्वनियतत्वात् । अत्र च व्यतिरेकदृष्टान्तो बोध्य इति । एव शङ्किते स एव विज्ञानवादी प्रतिविधत्ते—अत्रोच्यत इत्यादिनाऽनुपपन्नमिति नः क समत्यय इत्यन्तेन । स्थिरस्य विज्ञातुरभावेऽनुपपन्नमिति प्रत्ययो नास्त्येवेत्यर्थ । कुत इति चेदाह—यदिति । यस्मात्प्रमाणेन स्थिर कर्ता नावगम्यतेऽतो नास्तीत्यर्थ ।

अयमाशय । यत्र परस्परसबन्धित्वेन प्रमाणप्रमितयोर्द्वयोर्मध्य एकस्य दर्शन तत्र तन्मात्रस्यान्यथानुपपत्त्याऽपरस्य सबन्धिन कल्पनम् । यथा दिवाऽभुञ्जानस्य पीनस्य देवदत्तस्य दर्शनेन प्रमाणान्तरप्रमितस्य रात्रिभोजनस्य कल्पनम् । यत्र तु शशविषाणादि सर्वथाऽप्रसिद्धो न तादृशस्य यस्य कस्यचिच्छशत्वादेर्दर्शनेन तदन्यथानुपपत्त्या कल्पनमुपपत्तिमदिति ।

स्थिरस्य विज्ञातु सद्भावेऽनुपपत्तिरेव प्रमाणमिति वदता किं तदभावे विज्ञानसद्भाव एवानुपपन्न इत्युच्यत उत विज्ञानस्य क्षणिकत्वमनुपपन्नमित्याहोस्वित्पूर्वेद्युरुपलब्धु परेद्युरिच्छाऽनुपपन्नेतीत्येव विकल्प्यैतेषा सर्वेषामपि प्रत्यक्षावगतत्वान्नानुपपत्तिप्रत्ययो भवितुमर्हतीत्याशयेन दूपयति—न चेत्यादिना । यदुक्तमिच्छाया समानकर्तृकोपलब्धिपूर्वकत्वनियतत्वात्स्थायिपुरुपकल्पकत्वमिति तदनूद्य दूपयति—नो खल्वित्यादिना । अन्येद्युरन्योपलब्धेऽप्यर्थेऽन्येद्युरन्यस्येच्छादर्शनेन तादृशनियमोऽसिद्ध इति भाव । पूर्वोक्तनियमादर्शनेऽपि क्वचिदन्यदृष्टमन्य इच्छति क्वचिन्नेत्येव दृश्यते । एतादृशदर्शनानुरोधेनान्योपलब्धेऽप्यर्थे तत्सततिजन्यस्यान्यस्यापि वासनावशादिच्छा भवितुमर्हति ।

इदं तु दृष्टं यत्किंचिदन्येन दृष्टमन्य इच्छति। कश्चिन्न। समानाया संतता-वन्य इच्छति संतत्यन्तरे नेच्छतीति। तस्मान्न सुखादिव्यतिरिक्तोऽन्योऽस्तीति। अत्रोच्यते। न ह्यस्मर्तार इच्छन्तीत्युपपद्यते। न चाऽदृष्टपूर्वे स्मृतिर्भवति। तस्मात्क्षणिकविज्ञानस्कन्धमात्रे स्मृतिरनुपपन्नेति।

अत्राऽऽह। स्मृतिरपीच्छावत्पूर्वज्ञानसदृशं विज्ञानं पूर्वविज्ञानविषयं वा स्मृतिरित्युच्यते। तच्च द्रष्टरि विनष्टेऽप्यपरेद्युरुत्पद्यमानं नानुपपन्नम्। प्रत्यक्षावगतत्वादेव। अन्यस्मिन्स्कन्धघनेऽन्येन स्कन्धघनेन यज्ज्ञातं तत्संततिजेनान्येनोपलभ्यते नातत्संततिजेनान्येन।

तस्माच्छून्याः स्कन्धघना इति। अथास्मिन्नर्थे ब्राह्मणं भवति।

---

अन्यसततिजन्यस्य तु तादृशवासनाभावादिच्छा नैव भवतीत्येव व्यवस्थाऽस्मन्मतेऽपि भविष्यत्येवेत्याशयेनाऽऽह—इदं तु दृष्टमित्यादिना। अत सुखादीनामिच्छादीनां च लिङ्गत्वासंभवान्न तन्महिम्ना सुखादिव्यतिरिक्तात्मसिद्धिरित्याशयेनोपसंहरति—तस्मादिति। नन्विच्छालिङ्गेन स्थिरस्याऽऽत्मनोऽसिद्धावपि स्मृत्यात्मकलिङ्गेन तत्सिद्धिर्भवत्येव। न ह्यस्मर्तारीच्छोपपद्यते न चाऽदृष्टपूर्वे स्मृतिर्भवति। अत स्मृति स्थायिपुरुषाश्रया स्वसमानकर्तृकदर्शनपूर्वकत्वनियतत्वाद् व्यतिरेकेण घटादिवदित्याशयेन वैशेषिकादिमतेन पुन शङ्कते—अत्रोच्यत इत्यादिनाऽनुपपन्नेत्यन्तेन। समाधत्ते—अत्राऽऽहेत्यादिना। अयमाशय। यथैवेच्छाऽन्यदृष्टेऽप्यर्थे तत्सततिजन्यस्यान्यस्यापि वासनावशाद्भवत्येव। अन्यसततिजन्यस्य तु न भवति। एवमेव स्मृतिरप्यन्यदृष्टेऽप्यर्थेऽन्यस्य तत्सततिजन्यस्य वासनावशाद्भवत्येव न त्वन्यसततिजन्यस्य वासनाभावादित्येव दर्शनानुरोधेन कल्प्यत इति। नन्वेवमिच्छावदेव स्मृतावपि चोद्यपरिहारयो समत्वेन भेदेनोपन्यासो विफल इति चेन्न। यतो विशेषो विद्यते। तथा हि। स्मृतिविषया हीच्छा। सेयमन्तरेणाप्युपलब्धि-समानकर्तृकता स्मृतिव्यवस्थयैव व्यवस्था लभते य स्मर्ता स इच्छतीति। स्मृति पुन-रुपलब्ध्यनुसारेणैव भवन्ती, अवश्य समान कर्तारं गमयति। अन्यथा व्यवस्थानुप-पत्तेरित्यनेन विशेषेण भेदेनोपन्यास। निराकरणप्रकारस्त्विच्छावदेव पूर्वोपपादित-प्रकारेण समान इति। अत्र स्कन्धघनशब्दो बौद्धपरिभाषया विज्ञानरूपवस्तुमात्रपर। एवं च यथादर्शनं क्षणिकरूपाण्येव विज्ञानान्येवाभ्युपगन्तव्यानीति तद्व्यतिरिक्तविषया-भावान्न स्थिरस्याऽऽत्मन सद्भावे प्रमाणमस्तीत्येव बौद्धमतरीत्या पूर्वपक्षमुपसंहरति—तस्मादिति। शून्या — ज्ञानव्यतिरिक्तविषयशून्या इत्यर्थः। अथास्मिन्नर्थे ब्राह्मणं भवतीति। यद्यपि बौद्धमते ब्राह्मणमप्रमाणमेव तथाऽपि बौद्धवादिना वेदवादिनं प्रति

विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति [बृ० उ० ६-५] इति।

उच्यते । नैतदेवम् । अन्येद्युर्दृष्टेऽपरेद्युरहमिदमदर्शमिति भवति प्रत्ययः । प्रत्यगात्मनि चैतद्भवति न परत्र । अपरो ह्यसावन्येद्युर्दृष्टवान् । तस्मात्तद्व्यतिरिक्तोऽन्योऽस्ति यत्रायमहंशब्दः ।

आह । परत्राप्यहंशब्दो भक्त्या दृश्यते, यथाऽहमेव पुत्रोऽहमेव देवदत्तोऽहमेव गच्छामीति । अत्रोच्यते । न वयमहमितीमं शब्दं प्रयुज्यमानमन्यस्मिन्नर्थे हेतुत्वेन व्यपदिशामः । किं तर्हि, शब्दाद्व्यतिरिक्तं

---

स्थिरात्माभावसाधनाद्भवदभिमतवेदरूपप्रमाणासिद्ध स्थिरात्माभाव इति बौद्धेन कथन नानुपपन्नमिति भाव ।

स्वमतरीत्या नित्यात्मास्तित्वप्रतिपादनम् ।

एव पूर्वोक्तरीत्या स्थिरस्याऽऽत्मन सद्भावे परोक्तेषु हेतुषु क्षणिकविज्ञानवादिबौद्धेन प्रतिषिद्धेषु सम्प्रति ज्ञात्रैक्यावगाहिप्रत्यभिज्ञाप्रत्ययगम्य स्थिरमात्मानं स्वयमुपपादयति—उच्यत इत्यादिना । अयमाशय । योऽहं पूर्वेद्युरिदमद्राक्ष सोऽहमद्य स्मरामीत्येव प्रत्यभिज्ञाप्रत्यय सर्वजनीन इति निर्विवादम् । अत्र च प्रत्यये ज्ञातैव विषय इत्यपि । तदयय प्रत्यय क्षणिकविज्ञानात्मनो भवेत्तदा तदेव ज्ञातृ स्यादिति तस्य च क्षणिकत्वेन स्थिरैकविज्ञात्रवगाहिप्रत्यभिज्ञाप्रत्ययरूपाहप्रत्ययविषयत्व न स्यात् । अत एतादृशप्रत्ययानुरोधेन क्षणिकविज्ञानभिन्नो ज्ञानाधार. स्थिरो विज्ञाता विषय एष्टव्य इति ।

ननु स्मृतिवदेव प्रत्यभिज्ञाया अपि वासनावशादेवोपपत्तेर्नैकान्तत. पूर्वापरकालावस्थायिविज्ञातुपस्थापनक्षमत्वमिति चेन्न । यतो यदि स्मृतिवत्प्रत्यभिज्ञाऽप्यर्थान्तरविषया स्यात्तया चार्थापत्त्या विज्ञाता कल्प्येत ततो वासनावशादुपपत्तिर्भवेत् । न त्वेवम् ।ज्ञातृप्रत्यभिज्ञा ।विषयम् । अतोऽनेन ज्ञातृप्रत्यभिज्ञारूपाहप्रत्ययेनान्यस्य स्थिरस्य विज्ञातु सिद्धिर्भवत्येव ।

"यत्रायमहं शब्द इति" श्रुत्वा सिद्धान्त्याशयमजानानोऽहंशब्दप्रयोग एव साधकत्वेनोपन्यस्त इति मत्वाऽहंशब्दस्य परत्रापि गौण्या प्रयोगदर्शनेनातिप्रसङ्गान्न तन्महिम्नाऽतिरिक्तात्मसिद्धिरित्याशयेन शङ्कते—आहेत्यादिना । यद्यप्यत्राहं गच्छामीति प्रयुज्यमानस्याहंशब्दस्य न परगोचरत्वं सम्भवति तथाऽपि शरीरस्यैव गन्तृत्वात्तदभिप्रायेण प्रयुज्यमान स नानुपपन्न इति ज्ञेयम् । सिद्धान्ती स्वाशय प्रकटयन्समाधत्ते—अत्रोच्यत इत्यादिना । पूर्वोक्तरीत्या ज्ञात्रैक्यावगाहिन सर्वजनीन योऽहं पूर्वेद्युरिदमद्राक्ष सोऽहमिदानीं स्मरामीत्याकारक प्रत्यभिज्ञाप्रत्ययं विज्ञानव्यतिरिक्तस्थि-

प्रत्ययम्। प्रतीमो वयमिममर्थं वयमेवान्येद्युरुपलभामहे, वयमेवाद्य स्मराम इति। तस्माद्वयमिममर्थमवगच्छामो वयमेव ह्यो वयमेवाद्येति। ये ह्योऽद्य च न ते विनष्टाः। अथाप्यस्मिन्नर्थे ब्राह्मणं भवति। स वा अयमात्मेति प्रकृत्याऽऽमनन्ति—अशीर्यो न हि शीर्यत इति। ( बृ० उ० । ४ अ० ब्रा० ५ । ) तथा—अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा( बृ० उ० ६–५ )इति विनश्वरं च विज्ञानम्। तस्माद्विनश्वराद्न्यः स इत्यवगच्छामः। न च शक्यमेवमवगन्तुं यथोपलभ्यन्तेऽर्था न तथा भवन्तीति। यथा तु खलु नोपलभ्यन्ते तथा भवन्तीति। तथा हि सति शशो नास्ति, शशस्य विषाणमस्तीत्यवगम्येत। न चाहंप्रत्ययो व्यामोह इति शक्यते वक्तुम्। बाधकप्रत्ययाभावात्। तस्मात्सुखादिभ्यो व्यतिरिक्तोऽस्ति। एवं चेतस एव यज्ञायुधीति व्यपदिश्यते। आह। यदि विज्ञानादन्यदस्ति विज्ञातृ, विज्ञानमपास्य तन्निदर्श्यतामिदं तदीदृशं चेति। न च तन्निदर्श्यते। तस्मान्न ततोऽन्यदस्तीति।

अत्रोच्यते। स्वसंवेद्यः स भवति, नासावन्येन शक्यते द्रष्टुं कथ-

---

त्मसद्भावे साधकत्वेनोपपादयामो न त्वहंशब्दप्रयोगमात्रं हेतुत्वेन व्यपदिशाम इति पूर्वोक्तप्रत्यभिज्ञानुरोधेन स्थिर आत्मैष्टव्य इति भावः। एवं पूर्वोक्तार्थे न केवलं प्रत्यभिज्ञैव प्रमाणं किं तु ब्राह्मणमपीति प्रदर्शयति—अथाप्यस्मिन्नर्थ इत्यादिना। यद्यप्यनेन ब्राह्मणेन नास्तिका न प्रतिबोधयितुं शक्यन्ते तथाऽपि यो वेदवादी शिष्यो विज्ञानघन एवेत्यादिवेदादेव पूर्वोक्तात्मनास्तित्वं प्रतिपद्यते तादृशवेदविरोधं चाऽऽत्मनो मन्यते तत्प्रतिबोधनाय ब्राह्मणाभिधानं युक्ततरमिति।

यथाप्रमाणं वस्तुसिद्ध्यनभ्युपगमेऽतिप्रसङ्गं प्रदर्शयति—न च शक्यमित्यादिना। पूर्वोक्तप्रत्यभिज्ञात्मकाहंप्रत्ययस्य कदाचिदपि बाधकप्रत्ययान्तराभावान्न व्यामोहत्वं कल्पयितुं शक्यमित्याह—न चाहंप्रत्यय इत्यादिना। पूर्वोक्तप्रमाणानुरोधेन सुखादिव्यतिरिक्तः स्थिर आत्मैष्टव्य एवेति स एव यज्ञायुधिवाक्ये शरीरसंबन्धितया यज्ञायुधित्वेनोपचारेणोच्यत इति न प्रमाणविरुद्धं तद्वाक्यमित्याह—तस्मादित्यादिना। ननु पूर्वोक्तरीत्या विज्ञानव्यतिरिक्तविज्ञात्रङ्गीकारे तादृशविज्ञातृ इदमीदृशं चेति निर्देष्टव्यं घटादिवद्विज्ञानमपास्य। न च तथा क्रियते। अतस्तादृशं स्थिरं विज्ञानव्यतिरिक्तं नास्त्येवेत्यङ्गीकरणीयमित्याशयेन परः पुनः प्रत्यवतिष्ठते—आहेत्यादिनाऽस्तीत्यन्तेन। अत्र सिद्धान्ती समाधत्ते—अत्रोच्यत इत्यादिना।

मसौ निदर्शयेतेति । यथा च कश्चिच्चक्षुष्मान्स्वयं रूपं पश्यति न च शक्नोत्यन्यस्मै जात्यन्धाय तन्निदर्शयितुम् । न च तत्र शक्यते निदर्शयितुमित्येतावता नास्तीत्यवगम्यते । एवमसौ पुरुषः स्वयमात्मानमुपलभते न चान्यस्मै शक्नोति दर्शयितुम् । अन्यस्य द्रष्टुस्तं पुरुषं प्रति दर्शनशक्त्यभावात् । सोऽप्यन्यः पुरुषः स्वयमात्मानमुपलभते न च परात्मानम् । तेन सर्वे स्वेन स्वेनाऽऽत्मनाऽऽत्मानमुपलभमानाः सन्त्येव यद्यपि परपुरुषं नोपलभन्त इति । अथास्मिन्नर्थे ब्राह्मणं (बृ० उ० ६ अ० ३ ब्रा०) भवति। शान्तायां वाचि किंज्योतिरेवायं पुरुष आत्मज्योतिः सम्राडिति होवाचेति । परेण नोपलभ्यत इत्यत्रापि ब्राह्मणं (बृ० उ० ५ अ० । ६ ब्रा०) भवति। अगृह्यो न हि गृह्यत इति । परेण न गृह्यत इत्येतदभिप्रायमेतत् । कुतः । स्वयंज्योतिष्ट्ववचनात् ।

---

अयमाशयः । यद्यप्ययमात्मा परस्मै निर्देष्टुं न शक्यतेऽयमसाविति परस्य तं प्रति दर्शनशक्त्यभावात् । यथा रूपं जात्यन्धाय निदर्शयितुं न शक्यते तस्य तत्प्रति दर्शनशक्त्यभावात् । तथाऽपि यथा सर्वैरपि चक्षुष्मद्भिः स्वसंवेद्यत्वाद्रूपं प्रामाणिकमास्थेयं तद्वत्परस्मै दर्शनशक्तिरहितायाऽऽत्मनो निदर्शनासंभवेऽपि सर्वैरपि स्वेन स्वेनाऽऽत्मना स्वात्मन उपलभ्यमानतया न परनिदर्शनाभावमात्रेणाभावोऽभ्युपगन्तुं युज्यत इति ।

आत्मनः स्वसंवेद्यत्वे ब्राह्मणं प्रमाणत्वेनोपन्यस्यति—अथास्मिन्नर्थे इत्यादिना । शान्तायामित्यादि । भगवन्तं याज्ञवल्क्यं प्रति बृहदारण्यके षष्ठाध्याये जनकप्रश्नोऽयम् । वाचि वागिन्द्रिये । शान्तायां सुषुप्तिकालेऽशान्तायां सत्यामयं पुरुषो व्यवहर्ता किंज्योतिः केन ज्योतिषा प्रकाशकेन प्रकाशत इति पप्रच्छेत्यर्थः । आत्मज्योतिरित्यादि । जनकं प्रति याज्ञवल्क्येनोत्तरमुच्यते । हे सम्राट् सार्वभौम त्वदाऽयं पुरुष आत्मज्योतिरात्मनैव ज्योतिषा प्रकाश्य । इति प्रसिद्धौ । इत्युत्तरमुवाचेत्यर्थः । परेण परः आत्मा नोपलभ्यत इत्यत्रापि ब्राह्मणमुपन्यस्यति—अगृह्य इति । यस्मात्परग्राहकत्वशक्तिरहितोऽतः परेण न गृह्यत इत्यर्थः ।

नन्वत्र ग्रहीतृविशेषानुपादानात्सामान्यतः सर्वेणाप्ययमग्राह्य इति प्रतीयमानत्वात्कथमिदं ब्राह्मणं परेण पर आत्मा न गृह्यत इत्यत्र प्रमाणं भवतीत्यत आह—परेण न गृह्यत इति ।

अथापि ब्राह्मण (बृ०उ०अ० ६ ब्रा० ७) भवति। अत्रायं पुरुषः स्वयं-ज्योतिर्भवतीति। केन पुनरुपायेनायमन्यस्मै कथ्यत इति। तत्राप्युपाये ब्राह्मण (बृ० उ० ६ अ० ३ ब्रा०) भवति। स एष नेति नेत्या-त्मेति होवाचेति। 'असावेवंरूपः' इति न शक्यते निदर्शयितुम्। यच्च परः पश्यति तत्प्रतिषेधस्तस्योपदेशोपायः। शरीरं परः पश्यति तेनाऽऽत्मोपदिश्यते शरीरं नाऽऽत्माऽस्ति शरीरादन्य इति, स चाऽऽत्मेति शरीरप्रतिषेधेनोपदिश्यते। तथा प्राणादयो नाऽऽत्मानस्तत्प्रतिषेधेन तेभ्योऽन्य उपदिश्यते। तथा परस्थाः सुखादयः परेण लिङ्गैरुपलभ्यन्ते तेऽपि नाऽऽत्मान इति तत्प्रतिषेधेनान्य उपदिश्यते। यः स्वयं पश्यति न ततोऽन्यः पुरुष इत्येतदपि पुरुषप्रवृत्त्याऽनुमीयते। यदाऽसौ पुरुषः पूर्वेद्युः सामिकृतानामर्थानां प्रतिसमाधाने शेषानुष्ठाने च यतते,ऽतः प्रवृत्त्याऽवगम्यते नूनमसावनित्याऽनित्यमवगच्छतीति॥

उपमानाच्चोपदिश्यते। यादृशं भवान्स्वयमात्मानं पश्यति, अनेनोपमा

---

अयमाशयः। अत्र सामान्यतः सर्वेणापीति प्रतीतावप्युत्तरत्र पष्ठाध्यायेऽत्रायं पुरुषः स्वयंज्योतिर्भवतीत्येवमात्मनः स्वग्राह्यत्वप्रतिपादनादिदं ब्राह्मणं पराग्राह्यत्व-प्रतिपादकमेवावतिष्ठत इति।

नन्वयमात्मा परस्मै कथं केनोपायेनोपदेष्टुं शक्य इत्यत्रापि ब्राह्मणं प्रमाणत्वेनो-पन्यस्यति—केन पुनरित्यादिना। उक्तं ब्राह्मणं व्याचष्टे—असावेवंरूप इत्यादिना। विधिमुखेनायमात्मैतादृशस्वरूप इति निदर्शयितुं न शक्यते किं तु निषेधमुखे-नैवोपदिश्यत इत्येतदुपपादयति—यच्च पर इत्यादिना। अग्रत्यं भाष्यं सुगमम्। ननु यथा यच्च परः पश्यति न तदात्मेत्युक्तं तद्वद्यत्स्वयं पश्यति ततोऽप्यन्यः पुरुषः स्यादित्यत्राऽऽह—यः स्वयमित्यादिना।

भाष्यस्यायमाशयः। पूर्वेद्युरर्धमनुष्ठितानां पदार्थानां तच्छेषानुष्ठाने परेद्युस्तस्यैव प्रवृत्ति-दर्शनादन्यानुष्ठितपदार्थशेषानुष्ठानेऽन्यप्रवृत्त्यनुपपत्तेः स एवाऽऽत्मेत्यङ्गीकरणीयमिति।

एवं निषेधमुखेनाऽऽत्मोपदेशं कर्तुं शक्यत इत्युपपाद्योपमानप्रमाणादप्यात्मोपदेशः सम्भवतीत्याह—उपमानाच्चेत्यादिना। यथा हि कीदृशो गवय इत्येवं नागरिकेण पृष्टो वन्यः प्रसिद्धेन गवा साधर्म्यात्प्रसिद्धं गवयं यथा गौर्गवयस्तथेति वाक्ये-नोपदिशति तद्वत्केनचिदात्मा कीदृश इति पृष्टः प्रसिद्धस्य तदात्मनः साधर्म्यादप्रसिद्धं स्वात्मानं यादृशं भवान्स्वयमात्मानं पश्यत्यहमपि तादृशमेव पश्यामीत्येवमुपमानात्म-

नेनावगच्छादमपि तादृशमेव पश्यामीति। यथा कश्चिदात्मीयां वेदनां परस्मा आचक्षीत दह्यमानस्येव मे भवति यात्यमानस्येव मे भवति रुध्यमानस्येव मे भवतीति। अतः स्वयमवगम्यमानत्वादस्ति तद्व्यतिरिक्तः पुरुष इति।

यदुच्यते विज्ञानमपास्य तन्निदर्श्यतामिति। यद्युपायमेव निषेधसि। न शक्यमुपायमन्तरेणोपेयमुपेतुम्। अयमेवाभ्युपायो ज्ञातव्यानामर्थानां यो यथा ज्ञायते स तथेति। तद्यथा, कः शुक्लो नाम। यत्र शुक्लत्वमस्ति। किं शुक्लत्वं नाम। यत्र शुक्लशब्दप्रवृत्तिः। क्व तस्य प्रवृत्तिः।

---

केनानेन वाक्येनोपदिशतीत्यर्थः। अत्र दृष्टान्तमाह—यथेत्यादिना। यद्यपीदमतिदेशवाक्यात्मकमुपमानप्रमाणं प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानमिति वादिना नैयायिकाना प्रसिद्धं तच्चाऽऽगमाद्बहिर्भूतं न प्रमाणान्तरं भवितुमर्हति। तथाऽपि सादृश्यविषयत्वमात्रेणात्रोपचारादुपमानत्वोक्तिः। स्वाभिमतं तूपमानं सदृशार्थज्ञानात्सदृशान्तरज्ञानरूपं पूर्वोक्तमेवेति ध्येयम्। ननु परात्मन्यवगते तत्सादृश्येन स्वात्मोपदेष्टुं शक्यते तदवगतिरेव कुत इति चेन्न। यदसौ पुरुष इत्यादिना पूर्वभाष्येण प्रदर्शितादनुमानात्तदवगतिसंभवात्। तच्चानुमानमयं पूर्वेद्युः सामिकृतार्थोनुष्ठानमिन्नस्तच्छेषानुष्ठातृत्वादीदृशास्त्वात्मवदित्यादिरूपं बोध्यम्। यत्तूक्तं पूर्वपक्षिणा विज्ञातुर्विज्ञानादन्यस्याभ्युपगमे विज्ञानमपास्य विज्ञातृस्वरूपं निर्दिश्यतामिति। तत्रेदं तदीदृशं चेत्येवं परस्मै निर्देशो न शक्यत एव परस्य तं प्रति दर्शनशक्त्यभावात्। किं तु स्वसंवेद्य एव स भवति। न हि परस्मै निदर्शनाभावमात्रेण तन्नास्तित्वमभ्युपगन्तुं युज्यत इत्यादिना परस्मै निदर्शनासंभवेनाऽऽत्मनास्तित्वशङ्कां दूषयित्वा संप्रति विज्ञानमपास्येत्यंशं दूषयितुमनुवदति—यदुच्यत इत्यादिना।

पूर्वपक्ष्याशयं प्रश्नं दूषयति—यद्युपायमित्यादिना शक्यमित्यन्तेन। अयमाशयः। विज्ञानमपास्य तन्निदर्श्यतामिति किमुच्यते, परस्मै निर्देश एव न संभवतीति योत विज्ञानरूपमुपायं विहायाऽऽत्मस्वरूपं परस्मै निर्दिश्यतामिति वा। नाऽऽद्यः। तत्प्रकारस्य पूर्वमेवोपपादितत्वात्। न द्वितीयः। उपायमन्तरेण क्वचिदप्युपेयस्योपगन्तुमशक्यत्वात्। ज्ञातव्यार्थसामान्यस्योपगमे ज्ञानमेवाभ्युपायः। यद्वस्तु यथा ज्ञायतेऽसति बाधके तत्तथैवेति हि सर्वजनीनम्। अतो विज्ञानव्यतिरिक्तोपायान्तराभावात्तत्प्रत्याख्याय कस्यचिद्रूपं निदर्शयितुं शक्यमिति।

विज्ञानरूपोपायेनैव विज्ञेयार्थस्य सिद्धौ लोकसिद्धं दृष्टान्तं प्रदर्शयति—तद्यथे-

यच्छुकशब्द उच्चरिते प्रतीयते । तस्मान्न विज्ञानं प्रत्याख्याय कस्यचिद्रूपं निदर्शयितुं शक्यम् । न च नियोगतः प्रत्यये प्रतीते प्रत्ययार्थः प्रतीतो भवति । अप्रतीतेऽपि हि प्रत्यये सत्यर्थः प्रतीयत एव । न हि विज्ञानं प्रत्यक्षं विज्ञेयोऽर्थः प्रत्यक्ष इत्येतत्पूर्वमेवोक्तम् ।

तदवश्यकर्तव्येऽपह्नवे कामं विज्ञानमपह्नूयेत नार्थो इत्येतदुक्तमेव । तस्मादस्ति सुखादिभ्योऽन्यो नित्यः पुरुष इति । अथ यदुक्तं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीति । अत्रोच्यते । "अत्रैव मा भगवान्मोहान्तमापीपददिति परिचोदनोत्तरकालेऽपह्नुत्य मोहाभिप्रायमस्य वर्णितवान् "नवा अरे मोहं ब्रवीमि अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति" ( वृ० उ० ६ अ० । ५ ब्रा० ) इति । तस्माच्च

---

स्यादिना । यदि शून्यवादाभ्युपगतरीत्या ज्ञानज्ञेययोरैक्यमेव प्रामाणिकं स्यात्तदा भवेदपि विज्ञानातिरिक्तविज्ञानविषयीभूतविज्ञाप्रसिद्धिः । तत्तु सुतरां न संभवति ज्ञानज्ञेययोरन्यतरप्रतीतिं विनाऽप्यन्यतरप्रतीतेः सत्त्वादित्यादियुक्तिभिः शून्यवादखण्डनप्रस्तावेऽस्माभिर्निपुणतरमुपपादितमित्याह—न चेत्यादिना पूर्वमेवोक्तमित्यन्तेन । **न हि विज्ञानं प्रत्यक्षमिति** । यदि विज्ञानं प्रत्यक्षं स्यात्तर्हि तदैवैकमभ्युपगम्याप्रत्यक्षोऽर्थोऽपह्नूयेत न तु तथा । किं तु ज्ञाततालिङ्गकानुमानगम्यमेव विज्ञानं प्रत्यक्षस्तु विज्ञेयोऽर्थ एवेत्यपि पूर्वमेवोपपादितमित्यर्थः ।

तदवश्यकर्तव्य इति । इदमपि भाष्यं तत्रैव स्पष्टं व्याख्यातम् । अत उक्तयुक्तिभिर्विज्ञानदेहादिव्यतिरिक्तः स्वसंवेद्यो नित्यः पुरुषोऽस्तीत्यवश्यमभ्युपगन्तव्यमित्युपसंहरति—तस्मादिति । यत्तु पूर्वपक्षे विज्ञानघन एवेत्यादिब्राह्मणेन भूतानामेव चैतन्यमुक्तमतस्तदतिरिक्तश्चेतनो नाङ्गीकर्तुं शक्यत इत्याशङ्कितं तदनुवदति—अथ यदुक्तमित्यादिना । एतच्छङ्कापरिहारमाह—अत्रोच्यत इत्यादिना । श्रुतिरेव ह्यस्य वाक्यस्यान्यार्थतां दर्शयति । तथा हि । पूर्वमजराद्युक्तत्वमात्मनोऽभिधायेदानीं विज्ञानघन इत्यादिना विनाशित्वानुकीर्तनात्संमूढया मैत्रेय्या पूर्वापरविरोधाख्यः पूर्वपक्षो याज्ञवल्क्यं प्रति चोदितः "अत्रैव मा भगवानित्यादिना" । एवं परिचोदनोत्तरकालमस्य वाक्यस्य मोहाभिप्रायमपह्नुत्य सिद्धान्तं वर्णितवान्याज्ञवल्क्यः "न वा अरे मोहं ब्रवीमि अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मेति" । आत्माऽविनाशी नित्य इत्यर्थः । कथं तर्हि विनाशवचनमित्याशङ्क्याऽऽह—मात्रा-

विज्ञानमात्रम् । तस्माद्वैधर्म्यम् ।

यदुक्तं नचैष यातीति विधिशब्द इति । मा भूद्विधिशब्दः स्वर्गकामो यजेतेति वचनान्तरेणावगतमनुवदिष्यते । तस्मादविरोधः ॥ ५ ॥

[६] कर्मैके तत्र दर्शनात् ॥ ६ ॥

---

संसर्गस्त्वस्य भवतीति । अत्र मात्राशब्देन भूतेन्द्रियाणि धर्माधर्मौ चोच्यन्ते । तथा चायमाशय ।

विज्ञानघनः—ज्ञानशक्तिस्वभाव आत्मा, एतेभ्यो भूतेभ्य समुत्थाय मुक्तो भूत्वेत्यर्थ । तान्येवानुविनश्यति । भूतविनाशात्सोऽपि विनष्ट इव भवतीति । भूतस्थो ह्यसौ स्वय प्रत्यक्षेण गृह्यते परैश्च शरीरचेष्टालिङ्गकानुमानेन ज्ञायते । मुक्तस्तु प्रमाणपथातिवर्तनाद्विनष्ट इव भवतीति विनश्यतीत्युच्यते । तदनेन प्रकारेण मात्राणामेव विनाशो न त्वाऽऽत्मन इत्यभिप्रायकोऽयं सन्दर्भ इति—मात्रासंसर्गस्त्वस्येति । अस्य, मुक्तस्य पुरुषस्य मात्राभि पूर्वं य संसर्ग आसीत्स एवेदानीं विनष्टो भवतीत्यर्थ । प्रकरणार्थमुपसंहरति—तस्मान्न विज्ञानमात्रमिति । न विज्ञानमात्रमात्मा किं नु तदन्यो नित्यश्चेतन आत्मेति सिद्धम् । यच्चोक्तं नत्रायुविनाके यातीति श्रवणाद्विधिशब्दाश्रवणान्न तन्महिम्ना स्वर्गलोकगन्ता नित्यश्चेतन सिध्यति । यदि विधिशब्द श्रूयेत तदा विधिमहिम्ना तादृशो नित्यश्चेतन सिध्येदिति तदनूद्य परिहरति—यदुक्तमित्यादिना । अस्मिन्वाक्ये विधिप्रत्ययाश्रवणेऽपि स्वर्गकामो यजेतेत्यादि विधिवाक्यान्तरैस्तादृशोऽर्थोऽवगम्यत एव । तमेवार्थमिदमपि वाक्यमनुवदिष्यतीति न किंचिदनुपपन्नमिति ॥ ५ ॥

वृत्तिकारमतानुवाद समाप्त ।

औत्पत्तिकसूत्रेण पूर्वाधिकरणे शब्दार्थयो सम्बन्धस्य नित्यत्व प्रसाधितम् । तेन शब्दनित्यत्वमर्थसिद्धमाक्षेपसमाधानाभ्यां द्रढयितुमिदमधिकरणमारभ्यते ।

ननु निष्प्रयोजनोऽयं विचार । तथा हि । वेदप्रामाण्याय हीद नित्यत्वप्रतिपादनम् । असत्यपि नित्यत्वे तत्सिध्यति । यद्यपि नित्यत्वे शब्दादर्थप्रतीतिर्न स्यात्समयापेक्षा वा स्यात्तदाऽनवबोधकत्वात्समयकारिपुरुषापेक्षणाच्च न स्यात्प्रामाण्यम् । यदा त्वनित्यादपि शब्दादनित्यत्ववादिनामिवार्थप्रतीति सिध्यति, शब्दव्यवहारानादितया च न पुरुषस्य कश्चित्स्वातन्त्र्य तदा किं नित्यत्वप्रसाधनेन । न च सम्बन्धनित्यत्वसिद्ध्यर्थं तत्प्रतिपादनमिति वाच्यम् । सम्बन्धनित्यत्वासिद्धावपि बाधकाभावात् । सम्बन्धनित्यत्वाभावेऽपि तत्र पुरुषस्वातन्त्र्याभावादेव वेदप्रामाण्यसिद्धेरिति चेत् । सत्यम् । अनित्यत्ववादिनोऽपि शब्दादर्थप्रतीतिमिच्छन्ति । न च तदिच्छामात्रेणार्थ सिध्यति न्यायेन त्वस्मा-

उक्तं नित्यः शब्दार्थयोः संबन्ध इति। तदनुपपन्नम्। शब्दस्यानित्यत्वात्। विनष्टः शब्दः पुनरस्य क्रियमाणस्यार्थेनाकृतकः संबन्धो नोपपद्यते।

न हि प्रथमश्रुताच्छब्दात्कश्चिदर्थं प्रत्येति। कथं पुनरनित्यः शब्दः। प्रयत्नादुत्तरकालं दृश्यते यतः। अतः प्रयत्नानन्तर्यादेन क्रियत इति गम्यते।

नन्वभिव्यञ्ज्यात्स एनम्। नेति ब्रूमः। नह्यस्य प्रागभिव्यञ्जनात्सद्भावे किंचन प्रमाणमस्ति। सँश्चाभिव्यज्यते नासन्॥ ६॥

अस्थानात्॥ ७॥

नो खल्वप्युच्चरितं मुहूर्तमप्युपलभामहे। अतो विनष्ट इत्यवगच्छामः। न च सन्नोपलभ्यते। अनुपलम्भकारणानां व्यवधानादीनाम-

---

दर्थप्रतीतिः सिध्यति नेति निरूपणीयम्। स च न्याय उत्तरत्र भाष्य एव निरूपयिष्यत इति सफल एवायं विचारः। तदत्र वर्णात्मकं शब्दं विषयीकृत्य किमयं नित्य उतानित्य इति विचार्यते। तत्र पूर्वपक्षी मन्यतेऽनित्यः शब्द इति। अत्रास्य विचारस्य वेदप्रामाण्यसिद्ध्यर्थत्वात्पादाध्यायसंगती स्पष्टे। अनन्तरसंगतिस्त्वाक्षेपिकीति तां दर्शयति—उक्तमित्यादिना। यदुक्तं पूर्वाधिकरणे शब्दार्थसंबन्धो नित्य इति तदनुपपन्नमिति योजना। तत्र हेतुमाह—शब्दस्यानित्यत्वादिति। उच्चारणानुपदं शब्दस्य विनष्टत्वात्पुनः क्रियमाणस्य शब्दस्यार्थेन साकं नित्यः संबन्धो नोपपद्यते न वा ग्रहीतुं शक्यते यथगृहीतोऽपि संबन्धश्चक्षुरादिवदर्थं प्रत्याययेत्तर्हि प्रथमश्रवणेऽपि प्रत्याययेन्न तु तथेत्याह—विनष्ट इत्यादिना प्रत्येतीत्यन्तेन। प्रश्नपूर्वकं सूत्रार्थमुपपादयन्पूर्वपक्षमुपपादयति—कथंपुनरित्यादिना। अयमत्र सूत्रार्थः। पूर्वसूत्राच्छब्दशब्दः प्रथमान्तत्वेन विपरिणतोऽनुषञ्जनीयः। तथा च शब्दो गकारादिः, कर्म—क्रियत इति कर्म, कार्य—अनित्यमित्यर्थः।

तत्र हेतुः—तत्र दर्शनादिति। तद्व्याचष्टे—प्रयत्नादुत्तरकालमिति। उच्चारणप्रयत्नानन्तरमेव गकारादिशब्दस्योपलम्भात्तज्जन्यत्वमेवावगम्यते। यो हि यदनन्तरं नियमेनोपलभ्यते स तज्जन्य इति नियमादिति भावः। ननूच्चारणस्य शब्दाभिव्यञ्जकत्वेनाप्युपपत्तौ नावश्यं तज्जन्यत्वं वक्तुं युक्तमिति सिद्धान्तिशङ्कामनूद्य परिहरति—नन्वित्यादिना॥ ६॥

शब्दस्य कृतकत्वे हेत्वन्तरकथनार्थं सूत्रम्—अस्थानादिति। अस्यार्थः। उच्चरितस्य शब्दस्य मुहूर्तमपि स्थितेरदर्शनात्कृतकः शब्द इति। नन्वस्थानादिति हेतुर्विनाशाख्यानित्यत्वस्य साधकोऽपि सूत्रकारोक्तकर्मपदाभिहितकृतकत्वस्य साधकतया

भावेऽप्यनुपलम्भनात् । न चासौ विषयमप्राप्तः । आकाशविषयत्वात् । कर्णच्छिद्रेऽप्यनुपलम्भनात् ॥ ७ ॥

करोतिशब्दात् ॥ ८ ॥

अपि च शब्दं कुरु, मा शब्दं कार्षीरिति व्यवहर्तारः प्रयुञ्जते न ते नूनमवगच्छन्ति स एवायं शब्द इति ॥ ८ ॥

सत्त्वान्तरे च यौगपद्यात् ॥ ९ ॥

नानादेशेषु च युगपच्छब्दमुपलभामहे तदेकस्य नित्यस्यानुपपन्नमिति। असति विशेषे नित्यस्य नानेकत्वम् । कार्याणां तु बहूनां नानादेशेषु

---

कथं सगच्छते । न ह्यनित्यत्वं कृतकत्वरूपमिति चेत् । न । यतः कृतकत्वस्य विनाशित्वरूपत्वाभावेऽपि तयोः समनियततयैकसाधकोऽपि हेतुरपरसाधकोऽपि भवत्येवेति । भाष्यमतिरोहितार्थम् ॥ ७ ॥

पूर्वोक्तसाध्ये हेत्वन्तरकथनार्थं सूत्रम्—करोतिशब्दादिति । अस्यार्थः । शब्दं कुरु, अकार्षीत्, करोतीत्यादिव्यवहारविषयत्वादिति । अतोऽपि कृतक इति भावः । भाष्यं स्पष्टार्थम् ॥ ८ ॥

अत्रैव हेत्वन्तरकथनार्थं सूत्रम्—सत्त्वान्तरे च यौगपद्यादिति ।

अस्यार्थमाह—नानादेशेष्वित्यादिना । नानादेशस्थैर्वक्तृभिरुच्चरितान्शब्दान्युगपन्नानादेशेषूपलभामह इत्यर्थः । तदेकस्य नित्यस्यानुपपन्नमिति । अत्र तत्, नित्यस्यानुपपन्नमिति प्रतिज्ञा । एकस्येति हेतुः । अयमर्थः । यतोऽयं नित्योऽत एकं स्यादेकत्वे चानुपपन्नं तादृशनानादेशोपलम्भनमिति । ननु कथं पुनर्नित्यस्यैकत्वम् । नित्या एव बहवो गकारा भवन्त्वित्याशङ्कायामाह—असति विशेष इत्यादिना । अविशिष्टरूपस्य गकारस्य स एवायमित्येवं प्रत्यभिज्ञायमानस्य नित्यत्वपक्षे नानेकत्वं संभवति । तथा सति प्रत्यभिज्ञाबुद्धेरप्रामाण्यापत्तेस्तदप्रामाण्ये च न नित्यत्वसिद्धिरिति भावः । एवं चायमत्र प्रयोगः । युगपदनेकवक्तृच्चारितो गकारः परस्परं भिन्नः । अविभुत्वे सति युगपन्नानादेशेऽवगमात् । घटवदिति । गोत्वादिसामान्यस्याऽऽकाशस्य वाऽनेकत्र युगपदुपलभ्यमानस्यापि भेदाभावात्तत्र व्यभिचारवारणार्थमविभुत्वे सतीति विशेषणम् । घटादिवच्छब्दस्यैकत्र कात्स्न्येनावगमादविभुत्वं ज्ञेयम् । नन्वेवं भेदसिद्धावपि कथं कार्यता । भिन्ना एव गकारा नित्या भवन्त्वितिचेन्नैवम् । यतो न हि भेदे नित्यत्वं संभवति । भेदे सति प्रत्यभिज्ञाबुद्धेः सादृश्यादिवशेन भ्रान्तित्वं वक्तव्यं स्यात् । न च नित्यत्वे भ्रान्तित्वं तस्या वक्तुं शक्यम् । नित्यत्वहानिप्रसङ्गात् । तस्मान्नित्यत्वमभ्युप-

क्रियमाणानामुपपद्यतेऽनेकदेशसंबन्धस्तस्मादप्यनित्यः ॥ ९ ॥

प्रकृतिविकृत्योश्च ॥ १० ॥

अपि च दध्यत्रेत्यत्रेकारः प्रकृतिर्यकारो विकृतिरित्युपदिशन्ति। यद्धि क्रियते तदनित्यम्। इकारसादृश्यं च यकारस्योपलभ्यते तेनापि तयोः प्रकृतिविकारभावो लक्ष्यते ॥ १० ॥

वृद्धिश्च कर्तृभूम्नाऽस्य ॥ ११ ॥

अपि च बहुभिरुच्चार्यमाणैर्महाञ्शब्दः श्रूयते। स यद्यभिव्यज्यते, बहुभिरप्येकेनोच्चार्यमाणस्तावानेवोपलभ्येत। अतो मन्यामहे नूनमस्यैकैकेन कश्चिदवयवः क्रियते यत्प्रचयादयं महानुपलभ्यते ॥ ११ ॥

समं तु तत्र दर्शनम् ॥ १२ ॥

तुशब्दात्पक्षो विपरिवर्तते। यदुक्तं प्रयत्नादुत्तरकाले दर्शनात् कृत-

---

गच्छताऽवश्यमेकत्वमभ्युपगन्तव्यं स्यात्। तच्चैकत्वमुक्तेन नानादेशोपलम्भेन भेदे सिद्धे न सिध्यत्येव। अतो नानादेशोपलम्भाद्भिन्ना एव गकाराः। भेदाच्च प्रत्यभिज्ञाया भ्रान्तित्वं तद्भ्रान्तित्वाच्च शब्दस्य कार्यतेत्याशयः ॥ ९ ॥

इतश्च शब्दः कृतक इत्याह—प्रकृतिविकृत्योश्चेति।

इदं सूत्रं व्याचष्टे—अपि चेत्यादिना। अयमाशयः। दध्यत्रेत्यत्रेकारः प्रकृतिर्यकारो विकृतिरिति गम्यते स्मृतेः सादृश्याच्च। स्मृतिस्तावदिको यणचीति। अस्या अर्थः। इकः—इकारादेः स्थाने यण्—यकारादयः, अचि अकारादिषु परेषु सत्सु भवन्तीति। इकारसादृश्यं च यकारस्य तालुस्थानकत्वरूपं स्फुटमवगम्यते। तथा च पूर्वोक्तस्मृतिसादृश्याभ्यां वस्त्वन्तररूपेण विकारित्वदर्शनाद्विकारिणश्चानित्यत्वनियमादिकारादिवर्णोऽनित्यो दध्यादिवदिति भावः ॥ १० ॥

इतोऽप्येवमित्याह—वृद्धिश्च कर्तृभूम्नाऽस्येति। सूत्रं व्याचष्टे—अपि चेत्यादिना। अयमाशयः। कर्तृभूम्ना—उच्चारयितृबाहुल्येन, अस्य—शब्दस्य। वृद्धिः—महत्त्वं दृश्यते। अतश्च हेतुवृद्ध्यनुसारित्वाच्छब्दः कृतको मृत्पिण्डादिकारणमहत्त्वानुसारिघटवदिति।

ननु व्यञ्जकवृद्ध्या शब्दवृद्धिर्भवत्वित्यत आह—स यदीत्यादिना। न हि दीपसहस्रेऽपि व्यञ्जके वर्धते घट इत्याशयः ॥ ११ ॥

एवं पूर्वपक्षे प्राप्ते सिद्धान्तमाह—समं तु तत्र दर्शनमिति। एतत्सूत्रम्। तत्र दर्शनादिति पूर्वपक्ष्यभिमतहेतोर्व्यभिचारित्वप्रदर्शनपरतया व्याचष्टे—तु शब्दात्प-

कोऽयमिति।

यदि विस्पष्टेन हेतुना शब्दस्य नित्यत्वं वक्तुं शक्ष्यामस्ततो नित्यप्रत्ययसामर्थ्यात्प्रयत्नेनाभिव्यज्यत इति भविष्यति। यदि प्रागुच्चारणादनभिव्यक्तः प्रयत्नेनाभिव्यज्यते तस्मादुभयोः पक्षयोः सममेतत्॥ १२॥

## सतः परमदर्शनं विषयानागमात्॥ १३॥

यदपरं कारणमुक्तमुच्चरितप्रध्वस्त इति। अत्रापि यदि शक्ष्यामो नित्यतामस्य विस्पष्टं वक्तुं ततो नित्यप्रत्ययसामर्थ्यात्कदाचिदुपलम्भं कदाचिदनुपलम्भं दृष्ट्वा किंचिदुपलम्भस्य निमित्तं कल्पयिष्यामः। तच्च संयोगविभागसद्भावे सति भवतीति संयोगविभागावेवाभिव्यञ्जका-

---

क्षो विपरिवर्तत इत्यादिना। यदि विस्पष्टेन हेतुनेति।

नित्यस्तु स्यादिति सिद्धान्तसूत्रे वक्ष्यमाणहेतुनेत्यर्थः। तथा च प्रयत्नानन्तरकाले दर्शनं नैकान्तेन कृतकत्वस्य साधकं भवति। प्रयत्नानन्तरकाले दर्शनं हि तत्र सत्तां गमयति न कालान्तरे तां निषेधति। अतः सम्प्रत्यभिज्ञानेन प्रत्यक्षेण दृश्यमानस्य कालान्तरेऽपि सद्भावकल्पना शक्यत इति कालान्तरेऽपि संभावितसत्त्वे विपक्षे शब्दे हेतुरनैकान्तिक इति भावः। सूत्रस्यायमर्थः। तुशब्देन पूर्वपक्षव्यावृत्तिः, तत्र दर्शनम्–प्रयत्नानन्तरकाले दर्शनमिति पूर्वपक्ष्यभिमतो हेतुः। समम्–नित्यत्वानित्यत्वपक्षयोः साधारणम्। अप्रयोजकोऽनैकान्तिकश्चेत्यर्थः॥ १२॥

पूर्वपक्ष्यभिमतस्यास्थानादिति हेतोरनैकान्तिकत्वासिद्धिप्रदर्शनार्थं सूत्रम्—सतः परमित्यादि। तद्व्याचष्टे–यदपरमित्यादिना। अयमाशयः। अस्थानादित्यनेन यद्युच्चारणपूर्वापरकालासत्त्वं विवक्ष्यते तदा स हेतुरसिद्धः। पूर्वापरकालयोः सत एव शब्दस्यादर्शनं परं भवितुमर्हति। कुतः। विषयानागमात्। विषयं शब्दं प्रति। अनागमात्—उच्चारयितृमुखोद्गतवायवीयसंयोगविभागानां स्तिमितसमीरणापसारणेन शब्दाभिव्यञ्जकानामभावात्। अतोऽसत्त्वमसिद्धम्। यदि चास्थानादित्यनेनोच्चारणपूर्वापरकालयोरनुपलम्भो विवक्ष्यते। तदाऽऽकाशाद्यन्तर्भावेन व्यभिचारः। आकाशो हि कदाचित्कूपपूरणयत्नेनप्रत्यक्षो भवति न तु नश्यति। अतो नित्येऽप्याकाशे कदाचिदनुपलम्भसत्त्वादनैकान्तिकः स हेतुरिति। प्रपञ्चितं चैतदाकाशस्य प्रत्यक्षत्वं वार्तिके। कदाचिच्छब्दोपलम्भेऽन्वयव्यतिरेकाभ्यां निमित्तविशेषमाह—तच्चेत्यादिना। उपलम्भनं चेत्यर्थः। संयोगविभागसद्भाव इति। वायवीयसंयोगविभागसद्भाव इत्यर्थः। ततश्चाभिव्यञ्जकसं-

विति वक्ष्यामः ।

उपरतयोः संयोगविभागयोः श्रूयत इति चेद् । नैतदेवम् । न नूनमुपरमन्ति संयोगविभागाः । यत उपलभ्यते शब्द इति । न हि ते प्रत्यक्षा इति ।

यदि शब्दं संयोगविभागा एवाभिव्यञ्जन्ति न कुर्वन्ति, आकाश-

---

भावे शब्दोपलम्भस्तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यां वायवीयसंयोगविभागयोरेवाभिव्यञ्जकत्वमित्याह—संयोगविभागानेवेति ।

ननु संयोगविभागयोर्न शब्दाभिव्यञ्जकत्वं युज्यते । उपरतयोरपि तयोः शब्दस्य श्रूयमाणत्वादिति शङ्कते—उपरतयोरिति । इयं च शङ्का संयोगविभागयोः सिद्धान्त्यभिमतं वायवीयत्वमज्ञात्वा ताल्वादिस्थत्वाभिमानेनेति बोध्यम् । स्वाभिमतं वायवीयत्वमनुद्घाट्य गूढाभिप्रायः सिद्धान्ती परिहरति—नैतदेवमित्यादिना । यस्मात्कारणाच्छब्द उपलभ्यतेऽतोऽभिव्यञ्जकाः संयोगविभागा नोपरमन्तीत्यर्थः । न हि ते प्रत्यक्षा इति । ते संयोगविभागा इत्यर्थः । न चात्राप्रत्यक्षत्वकथनेन वायवीयत्वाभिप्रायः सिद्धान्तिना विवृत इति शङ्क्यम् । उपरमचोद्यपरिहारस्याभिधातवाक्य एव स्पष्टीकरिष्यमाणत्वात् । इह च ताल्वादिस्थानां संयोगविभागानां तत्तत्कार्यसामर्थ्यरूपेणाप्रत्यक्षत्वोपपत्तेरप्रत्यक्षत्वकथनसामञ्जस्यसंभवाच्च । ननु संयोगविभागावभिव्यञ्जकाविति यदुक्तं तन्न युज्यत इति शङ्कते—यदि शब्दमित्यादिना सूत्रस्यत्वाक्षेपामित्यन्तेन । अत्र च यदि शब्दमित्यतः प्रभृत्यभिघातेन हीत्यस्माद्ग्रन्थात्प्राक्पूर्वोत्तरपक्षवादिनौ गूढाभिप्रायाविति प्रत्येतव्यम् ।

कथं पुनर्गूढाभिप्रायत्वं गम्यत इति चेदित्थम् । उत्तरत्र भाष्येऽप्राप्तेश्चेदित्यादिना संयोगविभागानामप्राप्तौ पूर्वपक्षिणा दोष आपाद्यते । संयोगविभागानां वायवीयत्वपरिज्ञाने हि तेषां प्राप्तत्वादनवकाश एवास्य चोद्यस्य स्यात् । अतो भाष्यग्रन्थपौर्वापर्यपर्यालोचनायामुभयोर्गूढाभिप्रायत्वं गम्यत इति । "यदि शब्दम्" इत्यादिशङ्काभाष्यस्यायमाशयः । संयोगविभागयोः शब्दाभिव्यञ्जकत्वं न संभवति । अभिव्यक्तिर्हि त्रेधा संभाविता शब्दसंस्काराधानेन वा श्रोत्रसंस्काराधानेन वोभयसंस्काराधानेन वा । न तावच्छब्दसंस्कारेण । शब्दस्य तव मत एकत्वात्सर्वगतत्वादनवयवत्वेनावयवसंस्काराभावाच्च य एव शब्दः सुघ्नस्थैः संयोगविभागैः संस्कृतः स एव पाटलिपुत्रेऽपीति तत्राप्युपलभ्येत । यदि श्रोत्रसंस्कार इष्यते तदाऽप्ययमेव दोषः । तथा हि । यदि काणादादिमतेनाऽऽकाशः श्रोत्रमित्यभ्युपगम्यते तदा तस्यैकत्वात्सर्वगतत्वादनवयवत्वाच्चैकदेशस्थैः संयोगविभागैः संस्कृतत्वाद्देशान्तरेऽपि शब्दोपलब्धिः स्यादेव । अस्मिंश्च पक्षे श्रोत्रस्य सर्वशब्दसाधारण्यादेकशब्दोपलब्ध्यर्थमपि संस्कृतं श्रोत्रं प्रस-

विषयत्वाच्छब्दस्याऽऽकाशस्यैकत्वाच्च एवायमत्र श्रोत्राकाशः स एव देशान्तरेष्वपीति सुघ्नस्थैः संयोगविभागैरभिव्यक्तः पाटलिपुत्रेऽप्युपलभ्येत ।

यस्य पुनः कुर्वन्ति तस्य वायवीयाः संयोगविभागा वाय्वाश्रितत्वाद्वायुष्वेव करिष्यन्ति । यथा तन्तवस्तन्तुष्वेव पटम् । तस्य पाटलिपुत्रेष्वनुपलम्भो युक्तः । सुघ्नस्थत्वात्तेषाम् । यस्याप्यभिव्यञ्जन्ति, तस्याप्येष न दोषः । दूरे सत्याः कर्णशष्कुल्या अनुपकारकाः संयोगविभागास्तेन दूरे यच्छ्रोत्रं तेन नोपलभ्यत इति ।

---

र्क्षात्सर्वाञ्शब्दान्घटादौ मीलितं नेत्र समानदेशस्थान्पटादीनिवावबोधयेत् । अय च दोष पूर्वोपक्षिप्तसंस्कारपक्षेऽपि प्रदर्शयितु शक्यते । तथा हि । सर्वेऽपि शब्दा श्रोत्रदेशेऽवस्थितास्तत्रैकस्मिन्संस्क्रियमाणे बलादन्येषामपि सस्कार स्यादेव । न हि समानदेशाना समानेन्द्रियग्राह्याणा कस्यचित्सस्कार कस्यचिच्चासस्कार इति व्यवस्था सभवति, घटादावदर्शनात् । एवमुभयसस्कारपक्षेऽप्युभयेऽपि दोषा समुच्चित्य सभवन्ति । तस्मान्न संयोगविभागाभिव्यङ्ग्य शब्द किं तु तज्जन्य एवासौ प्रादेशिकश्च । तथा च न पूर्वोक्तदोषाणामवकाश इति ।

आकाशविषयत्वादिति । आकाशात्मकश्रोत्रग्राह्यत्वादित्यर्थ । अन्यत्सुगमम् । अत्र समाधत्ते—यस्याप्यभिव्यञ्जन्तीत्यादिना । अभिव्यङ्ग्यत्वपक्षेऽपि पूर्वोक्तदोषा न सभवन्तीत्यर्थ । यत्तूक्त त्रेधा ह्यभिव्यक्ति सभवितेत्यादि । अत्रोच्यते । श्रोत्रसंस्कारेणैव शब्दाभिव्यक्ति सभवति । श्रोत्र च कर्णशष्कुल्येव । सा च प्रतिपुरुष भिन्नेति या कर्णशष्कुली संस्क्रियते सनिहिता तत्रैव शब्दाभिव्यक्ति । यदि वा कर्णशष्कुल्यवच्छिन्नमेकमाकाशमेव श्रोत्र तथाऽपि न तत्साक्षात्संस्क्रियते । किं तु कर्णशष्कुल्यात्मकाधिष्ठानद्वारेण । ततश्च यद्यपि सर्वपुरुषाणामाकाशात्मक श्रोत्रेन्द्रियमाकाशस्यैकत्वादेकमेव तथाऽपि तदधिष्ठानाना कर्णशष्कुलीना नानात्वात्तत्संस्कारव्यवस्थया श्रवणव्यवस्था भविष्यति । यद्वा नावश्यमेकमेव सर्वपुरुषाणा श्रोत्रेन्द्रियम् । तस्याऽऽकाशरूपत्वेऽप्याकाशस्यैकरूपत्वेऽपि च तदवच्छेदकीभूताना कर्णशष्कुलीनां प्रतिपुरुष भिन्नत्वात्तदवच्छिन्नस्याऽऽकाशस्य श्रोत्रत्वात्सत्यपि स्वरूपैकत्वेऽवच्छिन्नरूपाणा भेदाद्व्यवस्था सिध्यत्येव ।

यदप्युक्त सकृच्च सस्कृत श्रोत्र सर्वशब्दान्समानदेशान्प्रकाशयेदिति तत्रा मिधीयते । ध्वनयो हि ताल्वादिस्थानविशेषसपर्काद्विजातीया विलक्षणसामर्थ्या निष्प

नैतदेवम्। अप्राप्ताश्चेत्संयोगविभागाः श्रोत्रस्योपकुर्युः संनिकृष्टविप्रकृष्टदेशस्थौ युगपच्छब्दमुपलभेयाताम्। न च युगपदुपलभेते।

तस्मात्प्राप्ता उपकुर्वन्ति। न चेदुपकुर्वन्ति तस्मादनिमित्तं शब्दोपलम्भने संयोगविभागाविति।

नैतदेवम्। अभिघातेन हि प्रेरिता वायवः स्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान्संयोगविभागानुत्पादयन्ति यावद्वेगमभिप्र-

---

यन्ते। ततश्च कश्चिदेव ध्वनिः कस्यचिच्छब्दस्यानुगुणं संस्कारमाधत्ते न सर्वसाधारणमिति शब्दोपलब्धिव्यवस्था सिध्यत्येव। दृष्टा च समानेन्द्रियग्राह्याणामप्यभिव्यञ्जकव्यवस्थयोपलब्धिव्यवस्था। सावित्रं हि तेजो घटादीनामेवाभिव्यञ्जकं न नक्षत्राणाम्। निम्बत्वक् चन्दनगन्धस्यैवाभिव्यञ्जिका न गन्धान्तराणामिति। ननु संयोगविभागानां ताल्वादिस्थानस्थितानां तत्तच्छ्रोत्रदेशमप्राप्तानां कथं तत्तच्छ्रोत्रोपकारकत्वं संभवति। यदि त्वप्राप्ता अपि श्रोत्रस्योपकुर्युस्ते तदा संनिकृष्टविप्रकृष्टदेशस्थाः सर्वेऽप्यविशेषेण युगपच्छब्दमुपलभेरन्। न च तथोपलभमाना दृश्यन्ते। तस्मात्तत्तच्छ्रोत्रमप्राप्तानां तेषां न तदुपकारकत्वं संभवति।

अतो न संयोगविभागौ शब्दोपलम्भने निमित्तं भवत इति संयोगविभागानां सिद्धान्त्यभिमतं वायवीयत्वमजानानश्चोदयति—नैतदेवमित्यादिना संयोगविभागावित्यन्तेन। न संयोगविभागानां ताल्वादिस्थानस्थितत्वं किंतु वायवीयत्वमेवेति स्वमतरीत्या शब्दश्रवणमार्गं प्रदर्शयन्परिहारमाह—नैतदेवमित्यादिना। अभिघातेन प्रेरिता इति। उच्चारणप्रयत्नेनाभिहता इत्यर्थः। वायव इति—कोष्ठ्या इत्यर्थः। ते च शब्दविशेषाभिव्यक्त्यर्थं ताल्वादिस्थानविशेषसंयोगमनुरुन्धन्ते। स्तिमितानि वाय्वन्तराणीति। मध्ये विद्यमानानि स्थिराणि वाय्वन्तराणीत्यर्थः। ननु कथं पुनर्वायोः स्थिरत्वं सदागतिरिति हि स समाम्नात इति चेत्। सत्यम्। तथाऽपि सूक्ष्मत्वात्पदार्थान्तराण्यचालयन्स्थिर इव भवतीति स्थिर इत्युच्यते। ननु किं पुनरस्य सद्भावे प्रमाणमिति चेन्न। असति तस्मिन्व्यजनादिचालने वायूपलम्भासंभवापत्तेः। न हि तेनासौ जन्यते पार्थिवस्य वायूपादानत्वायोगात्। अतो व्यजना वायवो व्यजनेन संहन्यमाना उपलभ्यन्त इत्येव युक्तम्। प्रतिबाधमाना इति तैः संयुक्ताः सन्त इत्यर्थः। संयोगविभागानिति। स्तिमितवायुभिः साकं स्वात्मावयवानां संयोगविभागानित्यर्थः। एवं संयोगविभागानुत्पादयन्तस्ते यावद्वेगं प्रस्थितास्तत्तच्छ्रोत्रं संप्राप्य तत्र तत्र शब्दश्रवणयोग्यं संस्कारमादधानाः शब्दोपलब्धिहेतवो भवन्तीति भावः। यत्तूक्तमुपरमश्चोप-

तिष्ठन्ते । ते च वायोरप्रत्यक्षत्वात्संयोगविभागा नोपलभ्यन्ते । अनुप रतेष्वेव तेषु शब्द उपलभ्यते नोपरतेषु । अतो न दोषः । अत एव चानुवातं दूरादुपलभ्यते शब्दः ॥ १३ ॥

## प्रयोगस्य परम् ॥ १४ ॥

यदपर कारणमुक्तं शब्दं कुरु मा कार्षीरिति व्यवहर्तारः प्रयुञ्जते । यद्यसंशयं नित्यः शब्दः, शब्दप्रयोगं कुर्विति भविष्यति । यथा गोमयान्कुर्विति संवाहे ॥ १४ ॥

## आदित्यवद्यौगपद्यम् ॥ १५ ॥

यत्त्वेकदेशस्य सतो नानादेशेषु युगपद्दर्शनमनुपपन्नमिति । आदित्यं पश्य देवानां प्रिय । एकः सन्ननेकदेशावस्थित इव लक्ष्यते ।

---

रिहारकथनावसरे न नूनमुपरमन्तीत्याद्यभिसन्ध्यनुद्घाटनपूर्वकं, तामभिसन्धिमुद्घाट्य लाह—ते च वायोरित्यादिना । अत एव चेति । पूर्वोक्तरीत्या शब्दश्रवणमार्गा ङ्गीकारादित्यर्थः ॥ १३ ॥

यत्तु पूर्वपक्षिणा शब्दस्य कृतकत्वे साध्ये करोतिशब्दादिति साधनमुक्तं तद्दूषणार्थमिदं सूत्रम्—प्रयोगस्य परमिति । तद्व्याचष्टे—यदपरं कारणमित्यादिना । अयमाशयः । करोतिशब्दादित्यनेन करोतिकर्मत्वरूपोऽर्थो विवक्ष्यत उत करोतिकर्मत्वेन व्यवहियमाणत्वं वा । आद्येऽस्मान्प्रत्यसिद्धिरुत्तरत्र नित्यत्वस्य साधयिष्यमाणत्वात् । द्वितीये तन्नियाजन्यत्वाभाववति गोमयादौ गोमयान्कुर्विति तद्व्यवहारदर्शनाद्व्यभिचारः । अतो यथा तत्र समाहाराभिप्रायेण तादृशव्यवहारस्तद्वत्प्रकृतेऽपि शब्दं कुर्वित्यादिव्यवहारः शब्दप्रयोगविषयो भविष्यतीति ॥ १४ ॥

यदुक्तमेकस्य नित्यस्य युगपन्नानादेशेषूपलम्भनमनुपपन्नम् । अतो युगपन्नानादेशोपलम्भादनेकत्वमनित्यत्वं चाङ्गीकरणीयमिति । तत्र हेतोरनैकान्तिकत्वप्रदर्शनार्थं सूत्रम्—आदित्यवद्यौगपद्यमिति । तद्व्याख्यानार्थं पूर्वपक्ष्युक्तमनुभाषते—यत्त्वित्यादिनाऽनुपपन्नमितीत्यन्तेन । पूर्वपक्ष्युक्तहेतोरादित्ये व्यभिचारं प्रदर्शयति—आदित्यं पश्येत्यादिना । देवानां प्रिय इति । मूर्ख इत्यर्थः । अनेकत्वाभाववत्यप्यादित्ये नानादेशोपलम्भनहेतोः सत्त्वाद्व्यभिचार इत्युपपादयति—एकः सन्नित्यादिना । कथं पुनरेकस्याऽऽदित्यस्यानेकदेशस्थितत्वावभास इति चेदित्थम् । ये तावद्विन्ध्यनिलया पुरुषा ये च कामरूपे स्थितास्ते सर्वैरपि स्वस्वात्मनः प्राग्भाग एवोद्यन्नादित्यो निरीक्ष्यते । तथाऽस्य यस्य प्रत्यग्भागे निरीक्ष्यते मयाहं च तस्योपरिस्थितो निरीक्ष्यते ।

**कथं पुनरवगम्यत एक आदित्य इति । उच्यते । प्राङ्मुखो देवदत्तः पूर्वाह्णे संपति पुरस्तादादित्यं पश्यति । तस्य दक्षिणतोऽवस्थितो न द्वौ पश्यति । आत्मनश्च संमति स्थितं तिरश्चीनं देवदत्तस्याऽऽर्जवे । तस्मादेक आदित्य इति । दूरत्वादस्य देशो नावधार्यते । अतो व्यामोहः । एवं शब्देऽपि व्यामोहादनवधारणं देशस्य । यदि श्रोत्रं संयोगविभागदेशमागत्य शब्दं गृह्णीयात्तथाऽपि तावदनेकदेशता कदाचिदवगम्येत । न च तत्संयोगदेशमागच्छति । प्रत्यक्षा हि कर्णशष्कुली तद्देशा गृह्यते ।**

---

तेषां च भागभागादयो विस्पष्टं भिन्ना एव वर्तन्ते । अतस्तेषु दृश्यमानस्यास्य भिन्नदेशता विस्पष्टा ।

तथा यस्मिन्यावद्दूरे देशे यैश्चित्सूर्योदयो दृश्यते तद्देशवर्तिनोऽन्येऽपि ततः परस्तात्तावति दूरे पश्यन्त्यतोऽप्यस्ति देशभेद इति । नन्वेक एवाऽऽदित्य इति कथमवगम्यते । युगपदनेकदेशोपलम्भाद्भिन्ना एव भवन्त्वादित्या इति शङ्कते—**कथं पुनरि-त्यादिना ।** समाधत्ते—**उच्यत** इत्यादिना । यदि भिन्ना आदित्या भवेयुस्तदा **पूर्वाह्णे प्राङ्मुख**तया पुरस्तादादित्यमनेकेषु देवदत्तादिषु पश्यत्स्वनेक आदित्या उपलभ्ये-**रन्** । उपलब्धिसाधनानामक्षतत्वात् । न तु तथा केऽप्युपलभन्त इति योग्यानुपलब्धि-बाधितत्वान्न सूर्यनानात्वं युक्तमभ्युपगन्तुमिति भावः । **आत्मनश्च संमति स्थित-मिति** । स्वाभिमुखतया स्थितमेकमित्यर्थः । **तिरश्चीनमिति** । देवदत्तस्याऽऽर्जवे स्थितं स्वस्य तिरश्चीनं तिर्यग्भूततया स्थितमन्यं सूर्यमित्यर्थः । तथा च न कोऽपि द्वौ सूर्यौ पश्यतीति भावः । किं पुनरेकदेशस्यस्यैव सवितुर्नानादेशोपलम्भस्य भ्रान्तित्वे प्रमाणमिति चेत्तत्राऽऽह—**दूरत्वादि**त्यादिना । अयमाशयः । अतिदूरवर्तिनोऽस्याऽऽदित्यस्य यथा-वद्देशमजानन्तः स्वस्वसंनिधिमध्यस्यन्तो देशभेदं मन्यन्ते । अतो दूरत्वदोषेण जायमा-नत्वादस्याः प्रतीतेर्भ्रान्तित्वमिति । एवमेव शब्देऽपि नानादेशोपलम्भो दोषविशेषेण जायमानो भ्रम एवेत्याह—**एवं शब्देऽपी**त्यादिना । अस्याः प्रतीतेर्भ्रान्तित्वे प्रमाण-**माह—यदि श्रोत्रमि**त्यादिना । **संयोगविभागदेश**मिति । वक्तृवक्त्रप्रदेशमित्यर्थः । तथा चायमर्थः । यदि श्रोत्रं भिन्नभिन्नान्वक्तृवक्त्रप्रदेशानागत्य शब्दं गृह्णीयात्ततोऽ-नेकदेशता गम्येतापि । न तु तत्तथा तद्देशमागच्छतीति । श्रोत्रानागमने कारणमाह—**प्रत्यक्षा ही**त्यादिना । तथा च स्वदेशस्थितमेव सच्छ्रोत्रं यदा शब्दं गृह्णाति तदा तस्य देशस्यैकत्वादेकस्मिन्नेव देशे परमार्थतः शब्दः श्रूयते । तं तु देशमनवधारयन्तो दोषविशेषेण वक्तृवक्त्रप्रदेश एव शब्दं मन्वानास्तेषां देशानां भेदाच्छब्दस्यापि भिन्न-देशतां भ्रान्त्या मन्यन्त इति ।

वायवीयाः पुनः सयोगविभागा अप्रत्यक्षस्य वायोः कर्णशष्कुली-प्रदेशे प्रादुर्भवन्तो नोपलभ्यन्त इति नानुपपन्नम्। अत एव व्यामोहो यन्नानादेशेषु शब्द इति। आकाशदेशश्च शब्द इति। एकं च पुनराकाशम्। अतोऽपि न नानादेशेषु। अपि चैकरूप्ये सति देशभेदेन कामं देशा एव भिन्ना न तु शब्दः। तस्मादयमप्यदोषः॥ १५॥

वर्णान्तरमविकारः॥ १६॥

न च दध्यत्रेत्यत्र प्रकृतिविकारभावः। शब्दान्तरमिकाराद्यकारः। न

---

ननु वक्तृवक्त्रप्रदेशं प्रति श्रोत्रानागमने यत्कारणमुक्तं प्रत्यक्षा हि कर्णशष्कुली तद्देशस्था गृह्यन्त इति। तदयुक्तम्। न हि श्रोत्रं तत्स्वरूपं येन गमनाभावो निश्चीयेत। किं तु तदवच्छिन्नो नभोभाग एवेति। तस्य च गमनाभावोऽप्रत्यक्षत्वात्कथं निश्चीयत इति चेन्न। यतः कर्णशष्कुल्यवच्छिन्ननभोभागस्य श्रोत्रत्वेऽपि तादृशश्रोत्रेन्द्रियस्याधिष्ठानभूतकर्णशष्कुलीबहिर्भोगे कार्यकारणशक्तेर्यत्र देशे शब्दो गृह्यते श्रोत्रेन्द्रियेण तत्राधिष्ठानभूतकर्णशष्कुल्योऽपि गमनपक्षे गृह्येरन्न तु तथा गृह्यन्त इति। नन्वभिव्यञ्जकाना सयोगविभागाना श्रोत्रदेशेऽभावात्कथं तत्र शब्दग्रहणमिति चेत्तत्राऽऽह—वायवीयाः पुनरित्यादिना। न तावत्सयोगविभागास्ताल्वादिदेशस्था एव किं तु वायवीयाः सन्तः कर्णशष्कुलीदेशपर्यन्तं प्रादुर्भवन्ति। तेषां चाप्रत्यक्षत्वा यवीयत्वादुपलब्धिः परं न भवति। वर्तन्त एव श्रोत्रदेशे इति नानुपपन्नं तत्र शब्दग्रहणमिति भावः। अत एवेति। यतः पूर्वोक्तरीत्या श्रोत्रदेश एवैकस्मिञ्शब्दो गृह्यते न त्वनेकेषु वक्तृवक्त्रप्रदेशेषु ततः एवेत्यर्थः। प्रकारान्तरेणापि शब्दस्यैकदेशस्थतामाह—आकाशदेशश्चेत्यादिना।

ननु यत्र श्रोत्रैकत्वं वक्तृबहुत्वं च तत्र पूर्वोक्तरीत्या नानादेशोपपलब्धिर्भवतु भ्रान्तिः। यत्र तु श्रोतृबहुत्वं तत्र परमार्थत एव देशभेदाच्छब्दस्वरूपमपि भिद्येत। आकाशदेशत्वेऽपि च शब्दस्याऽऽकाशप्रदेशाना भेदान्नानुपपन्ना नानादेशता। अतश्च युगपन्नानादेशोपलम्भाच्छब्दस्य भेदो भेदाच्च कार्यता च सिध्यतीत्यत आह—अपि चेत्यादिना। ऐकरूप्ये सतीति। स एवायमित्येव प्रत्यक्षप्रत्यभिज्ञयैकरूप्यावगमान्न देशभेदेन लिङ्गेन शब्दभेदानुमानं संभवति प्रत्यक्षविरोधादिति भावः॥ १५॥

यत्तूक्तं प्रकृतिविकृत्योश्चेति सूत्रेण यकारादिरूपेणेकारादेर्विक्रियमाणत्वादनित्यत्वम्। विक्रियमाणत्वं च प्रकृतिसादृश्याभ्यामिति तत्परिहारार्थं सूत्रम्—वर्णान्तरमविकार इति। तद्व्याचष्टे—न चेत्यादिना। न तावद्दध्यत्रेत्यादाविकारयकारयो

हि यकारं प्रयुञ्जाना इकारमुपाददते । यथा कटं चिकीर्षन्तो वीरणानि। न च सादृश्यमात्रं दृष्ट्वा प्रकृतिविकृतिर्बोच्यते । न हि दधिपिटकं दृष्ट्वा कुन्दपिटकं च प्रकृतिविकारभावोऽवगम्यते । तस्मादयमप्यदोषः ॥ १६ ॥

## नादवृद्धिपरा ॥ १७ ॥

यदेतद्बहुभिर्भेरीमाधमद्भिः शब्दमुच्चारयद्भिर्महाञ्शब्द उपलभ्यते, तेन प्रतिपुरुषं शब्दावयवप्रचय इति गम्यते । नैवम् । निरवयवो हि शब्दः । अवयवभेदानवगमान्निरवयवत्वाच्च महत्त्वानुपपत्तिः । अतो न वर्धते शब्दः । मृदुरेकेन बहुभिश्चोच्चार्यमाणे तान्येवाक्षराणि कर्णशष्कु-

---

प्रकृतिविकृतिभावः किं तु वर्णान्तरमिकारायकारः । कुत इति चेदित्थम् । न तावदिको यणचीति सूत्रेणेकारयकारयोः प्रकृतिविकृतिभावः सिध्यति । तादृशसूत्रस्य हि नायमर्थो यदिकारपरिणामेन यकारः कर्तव्य इति । कुत इति चेत् । एवं हि शास्त्राद्यक्तम्—सिद्धे शब्दार्थसंबन्धे नियमार्थं व्याकरणमिति । प्रकृतिविकृतिभावकथनेऽसिद्धस्यैव शब्दस्य साधनापत्तिः। अतो नायमर्थः । किं त्वयमर्थः—अचि परतो न इक्प्रयोगः साधुः किं तु यण्प्रयोग एवेति । लोकदृष्टचनुसारेणापीकारयकारयोः प्रकृतिविकृतिभावो न सिध्यतीत्याह—न हीत्यादिना । यथा कटं चिकीर्षन्तो वीरणाख्यांस्तृणविशेषानुपाददाना उपलभ्यन्ते तृणविशेषकटयोः प्रकृतिविकारभावस्य प्रसिद्धत्वान्न तथा यकारप्रयोगं कुर्वाणा इकारं स्वीकुर्वते । नातस्तयोः प्रकृतिविकृतिभाव इत्यर्थः ।

स्मृतिबलेन प्रकृतिविकृतिभावासिद्धावपि सादृश्यमात्रेण सिध्यतु ॥ इति शङ्कामनैकान्तिकत्वप्रदर्शनेन निराकरोति—न चेत्यादिना । दधिपिटककुन्दपिटकयोः सत्यपि धावल्यादिना सादृश्ये प्रकृतिविकारभावो नावगम्यत इति तत्र व्यभिचार इति भावः॥१६॥

यदुक्तं वृद्धिश्च कर्तृभूम्नाऽस्येति सूत्रेणोच्चारयितृबाहुल्याल्पत्वाभ्यां शब्दे महत्त्वाल्पत्वप्रतीत्या सावयवत्वावद्यकत्वादनित्यत्वमिति, तादृशहेतोरसिद्धत्वकथनार्थं सूत्रम्—नादवृद्धिपरेति । तदेतत्सूत्रं व्याचक्षाणः पूर्वपक्षयुक्तमनुभाषते—यदेतदित्यादिना गम्यत इत्यन्तेन । पूर्वपक्ष्यभिमतं प्रतिपुरुषं शब्दावयवप्रचयं निराकरोति—नैवमित्यादिना । उत्तरत्र सिद्धान्तसूत्रेण शब्दनित्यत्वस्य प्रसाधयिष्यमाणत्वात्तदभिप्रायेणाऽऽह—निरवयवो हीत्यादिना न वर्धते शब्द इत्यन्तेन । कथं तर्हि कर्तृबाहुल्याल्पत्वाभ्यां शब्दे महत्त्वाल्पत्वप्रतीतिरित्यत आह—मृदुरेकेनेत्यादिनोपलभ्यन्त इत्यन्तेन । अयमाशयः । बहुभूच्चारयतसृत्पद्यमाना वायवीयाः संयोगविभागा नादशब्दवाच्याः पृथक्पृथक्शब्दमभिव्यञ्जयन्तः स्वगतमुपचयं शब्दे समारोपयन्तो

लीमण्डलस्य सर्वां नेमिं व्याप्नुवद्भिः संयोगविभागैर्नैरन्तर्येणानेकशो ग्रहणान्महानिवावयववानिवोपलभ्यन्ते । संयोगविभागा नैरन्तर्येण क्रियमाणा शब्दमभिव्यञ्जन्तो नादशब्दवाच्याः। तेन नादस्यैषा वृद्धिर्न शब्दस्येति ॥ १७ ॥

## नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ १८ ॥

नित्यः शब्दो भवितुमर्हति। कुतः। दर्शनस्य परार्थत्वात्। दर्शनमुच्चारणं तत्परार्थं परमर्थं प्रत्याययितुम्। उच्चरितमात्रे हि विनष्टे शब्दे न चान्योऽन्यानर्थं प्रत्याययितुं शक्नुयात्। अतो न परार्थमुच्चार्येत।

---

महत्त्वादिवृद्धिमुपजनयन्ति । न स्वतः शब्दे वृद्धिरुपपद्यते । तस्य वक्ष्यमाणरीत्या नित्यत्वेन निरवयवत्वादिति। सूत्रस्थनादशब्दार्थं विवृणोति—संयोगविभागा इत्यादिना। वायवीया संयोगविभागा शब्दाभिव्यञ्जकीभूता नादशब्दवाच्या इत्यर्थः । तथा चायं सूत्रार्थः —या पूर्वपक्षयुक्ता शब्दस्य वृद्धिः सा नादवृद्धिपरा नादस्यैवैषा वृद्धिर्न शब्दस्य । निरवयवत्वादिति ॥ १७ ॥

एवं तावत्पञ्चभिः सूत्रैः परपक्षं प्रतिक्षिप्य तावन्मात्रेण स्वसिद्धान्तासिद्धिं मन्यमानः स्वपक्षसाधकयुक्तिमाह भगवान्सूत्रकारः —नित्यस्तु स्याद्दर्शनस्य परार्थत्वादिति। एतत्सूत्रं व्याचष्टे–नित्यः शब्द इत्यादिना। अत्र च दर्शनस्य परार्थत्वादिति न शब्दे नित्यत्वानुमापकं लिङ्गं, येन हेतोः पक्षधर्मता न सिध्येत्। परार्थत्वस्य दर्शनमात्रधर्मत्वात्। किं त्वर्थापत्तिप्रदर्शनपरमिदम्। तथा चायमर्थः —यदि शब्दो नित्यो न भवति तदा परार्थं परानर्थं प्रत्याययितुं दर्शनमुच्चारणं नोपपद्येतेति । एतादृशार्थापत्तिप्रदर्शनपरतया दर्शनस्य परार्थत्वादित्यश व्याचष्टे—दर्शनमुच्चारणमित्यादिना। दृश्यते शब्दोऽनेनेति व्युत्पत्त्या दर्शनशब्द उच्चारणार्थकः। तच्चोच्चारणं न स्वतः फलरूपम्। अतोऽवश्यं केनचित्फलेन भवितव्यम्। तदालोचनाया फलवतो गवानयनादिव्यापारस्याङ्गभूतो यो गवानयनादिरूपार्थप्रत्ययः स तत्फलेनैव फलवानिति शब्दस्योच्चारणसंस्कृतस्य फलसाकाङ्क्षस्य फलमिति योग्यतयाऽवधार्यते। तादृशार्थप्रत्ययफलकत्वं च शब्दस्य नित्यत्व एवोपपद्यते न त्वनित्यत्व इत्याह—उच्चरितमात्र इत्यादिना। अयमाशयः। प्रत्युच्चारणमन्यस्यान्यस्य क्रियमाणस्य शब्दस्यार्थप्रत्यायकत्वं नैव संभवति। सम्बन्धग्रहणासंभवात्। अगृहीतसम्बन्धस्य च नैवार्थप्रत्यायकत्वम्।

**अथ न विनष्टस्ततो बहुश उपलब्धत्वादर्थावगम इति युक्तम्।**

**अर्थवत्सादृश्यादर्थावगम इति चेत्। न कश्चिदर्थवान्सर्वेषां नवत्वात्। कस्यचित्पूर्वस्य कृत्रिमसंबन्धो भविष्यतीति चेत्। तदुक्तं सदृश इति चावगते व्यामोहात्प्रत्ययो व्यावर्तेत शालाशब्दान्मालाप्रत्यय इव।**

---

तथात्वे सर्वस्यापि शब्दस्य सर्वार्थप्रकाशकत्वापत्तेः। नाप्यन्यस्मिन्ज्ञातसंबन्धे सत्यन्यस्य प्रत्यायकत्वं संभवति। गोशब्दे गृहीतसंबन्धे सत्यश्वशब्दस्य प्रत्यायकत्वादर्शनात्। अतो न क्षणिकस्य शब्दस्य संबन्धज्ञानं भवितुमर्हतीति दूरापास्तमर्थप्रत्यायकत्वमिति। शब्दस्य नित्यत्वाभ्युपगमे तु पूर्वोक्तसर्वदोषपरिहारः संभवतीत्याह—**अथ न विनष्ट** इत्यादिना। शब्दस्य नित्यत्वे तु तस्यैव शब्दस्य पुनःपुनरुच्चारणे बहुश उपलभ्यमानत्वात्संभवति संबन्धग्रहणमर्थप्रत्यायकत्वं चेति भावः।

नन्वसदृशस्य शब्दान्तरस्यार्थप्रत्यायकत्वासंभवेऽपि यः शब्दो गृहीतसंबन्धेनार्थवता शब्देन सदृशः स त्वन्योऽप्यर्थं प्रत्याययत्येवेत्याशयेन शङ्कते—**अर्थवत्सादृश्यादित्यादिना।** परिहरति—**न कश्चिदित्यादिना।** न हि क्वचिदप्यनुपलब्धस्य शब्दस्य संबन्धग्रहणं संभवति। अन्वयव्यतिरेकाभावात्। तथा च कस्यापि शब्दस्य संबन्धग्रहणपूर्वकार्थप्रत्यायकत्वस्य दुर्घटत्वात्केन शब्देन गृहीतसंबन्धेनार्थवता कस्य शब्दस्य सादृश्यं वर्णनीयमिति न सदृशशब्दादर्थावगतिसिद्धिरिति भावः। ननु इतरशब्दानां सादृश्यप्रतियोगित्वासंभवेऽपि कस्यचिदेकस्य जगदादिवर्तिनः शब्दस्य कृत्रिमः संबन्धो भविष्यतीति तस्यार्थवत्त्वसंभवेन तत्सादृश्यादुत्तरोत्तरशब्दानामर्थप्रत्यायकत्वं भवत्येवेत्याशयेन शङ्कते—**कस्यचिदित्यादिना।** परिहरति—**तदुक्तमित्यादिना।**

सर्वशब्देष्वप्रसिद्धार्थेषु संबन्धकरणं नैव शक्यमिति संबन्धाकरणे या युक्तिः प्रदर्शिता सैवात्राप्यनुसंधेयेति भावः। सदृशादर्थप्रतीतौ दोषान्तरमपि दर्शयति—**सदृश इत्यादिना मालाप्रत्यय** इवेत्यन्तेन। अयं भावः। यदि सादृश्यनिबन्धनोऽयमर्थावगमस्तदा बाप्पदर्शनजनिताग्निबुद्धिवच्छालाशब्दजनितमालाप्रत्ययवच्च कदाचिद्बाध्येत। न तु तथा बाध्यते। गवादिशब्दजनितगवाद्यर्थावगमस्य कदाचिदप्यबाध्यमानतया सर्वसंप्रतिपन्नत्वात्। न च सादृश्यनिबन्धनस्यापि ज्ञानस्य बाधाभावादेवाभ्रान्तत्वं शङ्क्यम्।

तद्वदेव शब्दैकत्वस्यापि प्रत्यभिज्ञावगतस्य बाधकाभावाद्भ्रान्तिविषयत्वायोगात्।

यथा गावीशब्दात्सास्नादिमति प्रत्ययस्यानिवृत्तिस्तद्वद्भविष्यतीति चेत्। न हि। गोशब्दं तत्रोच्चारयितुमिच्छा। नेहान्यशब्दोच्चिचारयिषा। न चैकेनोच्चारणायत्नेन संव्यवहारश्चार्थसंबन्धश्च शक्यते कर्तुम्। तस्माद्दर्शनस्य परार्थत्वान्नित्यः शब्दः ॥ १८ ॥

## सर्वत्र यौगपद्यात् ॥ १९ ॥

गोशब्द उच्चरिते सर्वगवीषु युगपत्प्रत्ययो भवति। अत आकृतिवचनोऽयम्। न चाऽऽकृत्या शब्दस्य सम्बन्धः शक्यते कर्तुं, निर्दिश्य ह्याकृतिं कर्ता संबध्नीयात्। गोपिण्डे च बहूनामाकृतीनां सद्भावा-

---

ननु सदृशजनितस्यापि प्रत्ययस्य क्वचिदव्यावृत्तिदर्शनात्तद्वदत्रापि भविष्यतीति शङ्कते—यथा गावीशब्दादित्यादिना। परिहरति—नहीत्यादिना। अत्र नहीति च्छेद। उक्तशङ्का न कार्येत्यर्थ। गोशब्दमित्यादि। या गाव्यादिशब्दाद्गोबुद्धि सा न सादृश्यनिबन्धना किं तु तदुपस्थापितमूलभूतगोशब्दजनिता। इयं तु गावीशब्दाद्युक्तिर्मूलभूतगोशब्दोच्चारणाशक्तिप्रयुक्तैवेति भाव।

ननु मा भूदनुच्चरितस्योच्चरितनष्टस्य वा सबन्धकरणमुच्चार्यमाणस्य तु क्रियतां व्यवहारोऽपि तदैव क्रियत इति सबन्धकरणमाशङ्क्याऽऽह—न चैकेनेत्यादिना। उच्चारणसबन्धकरणव्यवहारक्रियाणां क्रमस्वभावत्वात्क कुर्याद्युगपत्कश्चिदितिभाव। इदं च भाष्य तदुक्तमिति भाष्यानन्तर भवितुमुचित सदर्भसागत्यसिद्धयै। प्रकृतमुपसहरति—तस्मादिति ॥ १८ ॥

सिद्धान्ते युक्त्यन्तरकथनार्थं सूत्रम्—सर्वत्र यौगपद्यादिति। तद्व्याचष्टे—गोशब्द उच्चरित इत्यादिना। गोशब्दोच्चारणे सति सर्वगोविषयक प्रत्ययो युगपज्जायते।

ततश्च गोशब्दादिराकृतिवचन इत्यवगम्यते। अन्यथा व्यक्तिवचनत्वे तद्व्यक्तिमात्रप्रत्यय एव भवेत्। इत्येव सूत्राक्षरार्थमुपवर्ण्य तत्तात्पर्यलब्ध शब्दनित्यत्व प्रति पादयितुमाह—न चेत्यादिना। शब्दस्य विना प्रयोगबाहुल्येन सकृच्छ्रूयमाणस्य गवादिशब्दस्यानित्यत्वेनाभिमतस्य आकृत्या वाच्यभूतया संबन्धः सङ्गासादि लक्षण कर्तुं न शक्यते कथयितु ग्रहीतु वा न शक्यत इति भाष्यार्थ। कथमिति चेदाह—निर्दिश्य हीत्यादिना। कर्ता सबध्नीयादिति। सबन्धकथयिता सबन्धं कथयेदित्यर्थ। अङ्गुल्यादिनाऽऽकृतिविशेषनिर्देशपूर्वकमनित्यस्यापि शब्दस्य सबन्धकथन कुतो न सभवतीत्यत आह—गोपिण्डे चेत्यादिना। अयमाशय। एकस्मि-

च्छब्दमन्तरेण गोशब्दवाच्यां विभक्तामाकृतिं केन प्रकारेणोपदेक्ष्यति। नित्ये तु सति गोशब्दे बहुकृत्व उच्चरितः श्रुतपूर्वश्चान्यासु गोव्यक्तिष्व-न्वयव्यतिरेकाभ्यामाकृतिवचनमवगमयिष्यति। तस्मादपि नित्यः॥ १९॥

संख्याभावात्॥ २०॥

अष्टकृत्वो गोशब्द उच्चरित इति वदन्ति नाष्टौ गोशब्दा इति। किमतो यद्येवम्। अनेन वचनेनावगम्यते प्रत्यभिजानन्तीति। वयं तावत्प्रत्य-भिजानीमो न नः करणदौर्बल्यम्। एवमन्येऽपि प्रत्यभिजानन्ति स

---

न्गोपिण्डे पार्थिवत्वद्रव्यत्वादिरूपाणां बह्वीनामाकृतीनां सद्भावाच्छब्दिना प्रयोगमा-हुस्येन गोशब्दवाच्यां गोत्वरूपामाकृतिं विभक्तां गोशब्दादिरन्वयव्यतिरेकाभ्यां नावगमयेदिति। नित्ये शब्देऽभ्युपगम्यमाने तस्य बहुकृत्व उच्चारणश्रवणसंभवादन्व-यव्यतिरेकाभ्यां तत्तदाकृतिविशेषावगमकत्वं सुलभमित्याह—नित्ये त्वित्यादिना। उपसंहरति—तस्मादित्यादिना। एतत्सूत्रस्थभाष्यस्यार्थान्तरोपपादनं तन्निराकरणं च वार्तिके द्रष्टव्यम्॥ १९॥

सिद्धान्ते युक्त्यन्तरकथनार्थं सूत्रम्—संख्याभावादिति। तद्व्याचष्टे—अष्टकृत्व इत्यादिना। अत्राष्टकृत्व इत्येवं कृत्वसुच्प्रयोगात्तस्य च क्रियाभ्यावृत्तिगणने विहि-तत्वात्पूर्वोच्चरितशब्दस्यैव पुनरुच्चारणमावर्तते।

न ह्ययमुच्चारणावृत्तिः शब्दान्तरत्वे भवितुमर्हति। शब्दभेदे ह्यङ्गीक्रियमाणेऽष्टौ गोशब्दा इत्येव प्रयोगः स्यान्न च तथा दृश्यत इति भावः। किमतो यद्येवमिति। अस्य भाष्यस्यायमर्थः। भुक्तवन्तोऽष्टकृत्वो ब्राह्मणा इत्यादौ ब्राह्मणादिद्रव्यभेदेऽपि कृत्वसुच्प्रत्ययदर्शनादनैकान्तः कृत्वसुच्प्रत्ययो न द्रव्यैक्यसाधक इति। एतच्छङ्कां परिहरन्नाह—अनेन वचनेनेत्यादिना। अयं भावः। नायं कृत्वसुच्प्रत्ययप्रयोगः स्वरूपेणैव शब्दाभेदे लिङ्गतयोच्यते। येनानैकान्तिकत्वमुच्येत। किं तु प्रायेण प्रत्य-भिज्ञासाहचर्यं कृत्वसुच्प्रत्ययस्यास्तीति तादृशप्रत्यभिज्ञाज्ञापनार्थोऽयं कृत्वसुजुपन्यास इति। ननु स्वसंवेद्यमेव प्रत्यभिज्ञानं किमत्र कृत्वसुजुपलक्षणेनेत्यत आह—वयं ताव-दित्यादिना। सत्यमात्मीयप्रत्यभिज्ञानं स्वसंवेद्यम्। तस्य तु करणदोषाशङ्कानिरा-करणाय सर्वजनीनत्वं साधयितुं कृत्वसुजुपलक्षणमिति भावः। न नः करणदौर्बल्यमिति। यतोऽन्येऽपि स एवायमिति प्रत्यभिजानन्त्यतोऽस्माकं करणदौर्बल्याशङ्का न कार्येत्यर्थः।

एवागामीति। प्रत्यभिजानानाः प्रत्यभिजानन्ति चेद्वयमिवान्येऽपि नान्य इति वक्तुमर्हन्ति। अथ मतमन्यत्वे सति सादृश्येन व्यामूढाः स इति वक्ष्यन्ति। तन्न। न हि ते सदृश इति प्रतियन्ति किं तर्हि स एवायमिति। विदिते च स्फुटेऽन्यत्वे व्यामोह इति गम्यते। न चायमन्य इति प्रत्यक्षमन्यद्वा प्रमाणमस्ति। स्यादेतत्। बुद्धिकर्मणी अपि ते प्रत्यभिज्ञायेते। ते अपि नित्ये प्राप्नुतः। नैष दोषः। न हि ते प्रत्यक्षे। अथ प्रत्यक्षे नित्ये एव। ह्यस्तनस्य शब्दस्य विनाशादन्योऽद्यतन इति चेत्।

---

अत प्रत्यभिज्ञानमहिम्नैक्यमेव शब्दस्याऽऽश्रयणीयमित्याह—प्रत्यभिजानाना इत्यादिना। ननु इन्द्रियदोषनिमित्ता भ्रान्ति पूर्वोक्तसर्वजनीनतया निराकर्तुं शक्यते। सादृश्यादिरूपविषयदोषनिमित्ता भ्रान्तिस्तु सर्वेषामपि स्यादेवेति नानया सर्वजनीनयाऽपि प्रत्यभिज्ञया शब्दैक्यसिद्धिरित्याशयेन शङ्कते—अथ मतमित्यादिना। तामिमां शङ्कां परिहरति—तन्नेत्यादिना। अयमाशय। यत्र सदृश एवेति नित्य दृढा मति, कदाचित्स इति प्रत्यभिज्ञान तत्र तस्य भ्रान्तित्वमवकल्पते। इह तु स एवाय शब्द इत्येव नित्य दृढ विज्ञान जायते न तु कदाचिदपि तत्सदृश इति। अतो नास्या प्रत्यभिज्ञाया भ्रान्तित्व युज्यत इति। इममाशय स्फुटयन्नाह—विदिते चेत्यादिना।

ननु प्रत्यभिज्ञारूपाल्लिङ्गेन यदि शब्दे नित्यत्व साध्यते तदाऽनित्यत्वेनाभिमतयोर्बुद्धिकर्मणोरपि प्रत्यभिज्ञायमानत्वान्नैकान्तिकत्व हेतोरिति शङ्कते—स्यादेतदित्यादिना। समाधत्ते—नैष दोष इत्यादिना। प्रत्यभिज्ञाया लिङ्गत्वेऽपि नानैकान्तिकत्व प्रत्यक्षत्वेन विशेषणात्। न हि धीकर्मणो प्रत्यक्षत्वमस्तीत्याशयेनाऽऽह—न हि ते प्रत्यक्षे इत्यादिना। प्रत्यक्षत्व चात्र श्रौत्रप्रत्यक्षत्व विवक्षित नातो घटादिषु व्यभिचार। न चैवमपि वायुधर्मभूतेषु ध्वनिषु व्यभिचार इति शङ्क्यम्। ध्वन्यन्यत्वेनापि विशेषणात्। न चैवमपि कर्मण प्रत्यक्षत्वादप्रत्यक्षत्वाभिधान कथमिति वाच्यम्। परमाण्वाद्याश्रितकर्माभिप्रायेण तदभिधानात्। बुद्धेश्च ज्ञानरूपाया अप्रत्यक्षत्व शून्यवाद एव साधितम्। प्रत्यक्षद्रव्यवर्तिनीना तु क्रियाणा शब्दवदेव प्रत्यक्षत्व नित्यत्व चेष्टमेवेति विपक्षत्वाभावान्न तत्र व्यभिचार इत्याशयेनाऽऽह—अथ प्रत्यक्षे नित्ये एवेति। नन्वेवमपि बुद्धेर्ज्ञानरूपाया कथ प्रत्यक्षत्व कथ वा नित्यत्वमिति चेदित्यम्। बुद्धिशब्देनात्र चैतन्यम्वभाव प्रमातैव लक्षणयाऽभ्यते। स च प्रत्यक्षो नित्यश्चेति न कोऽपि दोष। ननु ह्यस्तनस्य शब्दस्याद्यानुपलम्भाद्विनष्ट एव स इति अन्योऽयमद्यतन शब्द। अत प्रत्यभिज्ञा व्यामोहरूपैवेति शङ्कते—ह्यस्तनस्येति। समा

**नैष विनष्टः । यत एनं पुनरुपलभामहे । न हि प्रत्यक्षदृष्टं मुहूर्तमदृष्ट्वा पुनरुपलभ्यमानं प्रत्यभिजानन्तो विनष्टं परिकल्पयन्ति । परिकल्पयन्तो द्वितीयसंदर्शने मातरि जायायां पितरि वा नाऽऽश्वस्युः । न ह्यनुपलम्भमात्रेण नास्तीत्यवगम्य नष्ट इत्येव कल्पयन्ति । अप्रमाणतायां विदितायां नास्तीत्यवगच्छामः । न हि प्रमाणे प्रत्यक्षे सत्यप्रमाणता स्यात् । अस्तीति पुनरव्यामोहेनावगम्यमाने न कश्चिदप्यभावः । न चासिद्धेऽभावे व्यामोहः । न च सिद्धोऽभावः । तस्मादसति व्यामोहे नाभावः । तदेतदानुपूर्व्या सिद्धम् । तस्मात्पुरस्तादनुच्चारितमनुपलभमाना अपि न विनष्ट इत्यवगन्तुमर्हन्ति । यथा गृहान्निर्गताः सर्वगृहजनमपश्यन्तः पुनः प्रविश्योपलभमाना अपि न प्रावसवेशाद्विनष्ट इत्यवगच्छन्ति । तद्वदेनमपि नान्य इति वक्तुमर्हन्ति ।**

**येऽपि सर्वेषां भावानां प्रतिक्षणं विनाशमभ्युपगच्छन्ति तेऽपि न**

---

धत्ते—नैष विनष्ट इति ।

अयमाशयः । यदि शब्दे भवन्त्याः प्रत्यभिज्ञाया व्यामोहत्वं तदा स्यादेतदेवम् । न त्वस्य भ्रान्तित्वे कारणं बाधकज्ञानादिकं शब्दभेदबोधकं वा प्रमाणमनन्यथासिद्धमस्ति । यदि प्रत्यभिज्ञाभ्रान्तित्वेनैव शब्दभेदः साध्यते तर्हि तादृशभेदसिद्ध्यधीनं प्रत्यभिज्ञाभ्रान्तित्वमिति सुव्यक्तं परस्पराश्रयत्वम् । अतः प्रत्यभिज्ञामहिम्ना पूर्वोपलब्ध एव शब्दः पुनः पुनरुपलम्भकसामग्र्यनुरोधेनोपलभ्यत इति नित्य एव शब्द आश्रयणीय इति । अमुमेवार्थं विशदयति—न हीत्यादिना वक्तुमर्हन्तीत्यन्तेन । भाष्यमत्र सुगमम् । ननु सर्वभावाना क्षणिकत्वात्कथं शब्दस्य नित्यता । किं पुनः प्रमाणं सर्वभावानां क्षणिकत्व इति चेत् । अर्थापत्तिरिति ब्रूमः । तथा हि । प्रयत्नरक्षितानामपि घटादीनां कियताऽपि कालेनावयवक्षयविश्लेषवशेन विनाशो दृश्यते विनैव मुसलप्रहारादिभिः । सोऽयं विनाश उत्पत्तिप्रभृति किंचित्किंचिदन्यथात्वमन्तरेण नोपपद्यत इति घटादयो भावाः प्रतिक्षणं विनाशिन इति शब्दोऽपि भावस्तथैव भवितुमर्हतीति सौगतमतेनाऽऽशङ्क्य परिहरति—येऽपीत्यादिना । इतरभावानामन्ते क्षयदर्शनात्कथंचित्क्षणिकत्वेऽपि शब्देऽन्तस्यैवाभावेन क्षयस्याप्यदर्शनेन पूर्वोक्तरीत्या प्रत्यभिज्ञाप्रमाणेन नित्यत्वमेवाऽऽस्थेयम् ।

वस्तुतस्त्वितरभावेष्वपि क्षणिकत्वं दुःसाधम् । तथापि स्थायित्वसाधिकाया अबाधितप्रत्यभिज्ञाया दर्शनादित्येतत्सम्यक् इत्यनेन भाष्यकारेण सूचितम् । एवं च प्रत्यभिज्ञारूपेण प्रत्यक्षप्रमाणेन शब्दस्यैकत्वे नित्यत्वे च सिद्धेऽनुमानाद्भेदोऽनित्यत्वं च न

शवनुवन्ति शब्दस्य वदितुम् । अन्ते हि क्षयदर्शनाचे मन्यन्ते। न च शब्दस्यान्तो न च क्षयो लक्ष्यते । स इति प्रत्यक्षः प्रत्ययः सदृश इत्यानुमानिक । न च प्रत्यक्षविरुद्धमनुमानमुदेति। स्वकार्यं वा साधयति । तस्मान्नित्यः ॥ २० ॥

## अनपेक्षत्वात् ॥ २१ ॥

येषामनवगतोत्पत्तीनां द्रव्याणां भाव एव लक्ष्यते तेषामपि केषांचिदनित्यता गम्यते, येषां विनाशकारणमुपलभ्यते । यथा अभिनवं पटं दृष्ट्वा । न चैनं क्रियमाणमुपलब्धवान् । अथ वाऽनित्यत्वमवगच्छति रूपमेव दृष्ट्वा । तन्तुव्यतिषङ्गजनितोऽयं तन्तुव्यतिषङ्गविनाशात्तन्तुविनाशाद्वा विनश्यतीत्यवगच्छति । नैवं शब्दस्य किंचित्कारणमवगम्यते यद्विनाशाद्विनङ्क्ष्यतीत्यवगम्यते ॥ २१ ॥

## प्रख्याभावाच्च योगस्य ॥ २२ ॥

इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम् । ननु वायुकारणकः स्यादिति वायुरुद्गतः संयोगविभागैः शब्दो भवतीति । तथा च शिक्षाकारा

---

युक्तमङ्गीकर्तुं प्रत्यक्षविरुद्धस्यानुमानस्योत्पत्तेरेवासंभवेन कार्यसाधकत्वस्य दूरापास्तत्वा दित्याशयेन प्रकृतसूत्रार्थोपवर्णनमुपसंहरति—स इतीत्यादिना ॥ २० ॥

एवं यदा प्रत्यभिज्ञया शब्दस्य श्रवणकालमतिक्रम्य कालान्तरेऽप्यवस्थानं साधितं तदा स्वारसिके नाशे निरस्ते हेत्वन्तरस्य नाशकस्याभावादपि नित्यत्वमेवैष्टव्यमित्यभिप्रायेणाऽऽह—अनपेक्षत्वादिति । इदं सूत्रं व्याचष्टे—येषामित्यादिना । यथा पटादिष्वेष्वनवगतोत्पत्तिष्वपि विनाशकारणीभूतानामुपलम्भाद्विनाशिताऽवगम्यते, नैवं शब्दस्य किंचित्कालमवस्थायिनः पश्चाद्विनाशकारणमवगम्यते । अतोऽनपेक्षत्वादपेक्षितविनाशकारणाभावान्नित्य एव शब्द इति भावः ॥ २१ ॥

ननु वायुरापद्यते शब्दतामित्यादिशिक्षाकारवचनात्पटादिवद्वायवीयोऽवयविद्रव्यविशेषः शब्दः । अतस्तद्व्देवावयवसंयोगविशेषविनाशात्संभवत्येवास्य विनाश इति शङ्कानिराकरणार्थं सूत्रम्—प्रख्याभावाच्च योगस्येति ।

तद्व्याचष्टे—इदं पदेभ्य इत्यादिना । पदेभ्यः केभ्यश्चिदिति । शङ्काबोधकेभ्य उत्सूत्रतया कल्पितेभ्यः पदेभ्य इत्यर्थः ।

शङ्कामुपपादयति—नन्वित्यादिना । सूत्रार्थप्रदर्शनपुरःसरमुक्तशङ्कां परिहरति—

आहुः—वायुरापद्यते शब्दतामिति। नैतदेवम्। वायवीयश्चेच्छब्दो भवे-द्वायोः संनिवेशविशेषः स्यात्। न च वायवीयानवयवाञ्शब्दे सतः प्रत्यभिजानीमो यथा पटस्य तन्तुमयान्। न चैवं भवति। स्याच्चेदेवं स्पर्शनेनोपलभेमहि। न च वायवीयानवयवाञ्शब्दगतान्स्पृशामः। तस्मान्न वायुकारणकः। अतो नित्यः॥ २२॥

**लिङ्गदर्शनाच्च॥ २३॥**

लिङ्गं चैवं भवति, वाचा विरूपनित्यया इति। अन्यपरं हीदं वाक्यं वाचो नित्यतामनुवदति। तस्मान्नित्यः शब्दः॥ २३॥

**[७]उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात्॥ २४॥ पू०॥**

यद्यप्यौत्पत्तिको नित्यः शब्दः संबन्धश्च तथाऽपि न चोदनालक्षणो

---

नैतदेवमित्यादिना। सूत्रस्य चायमर्थः। प्रकृष्टा ख्या ख्यातिः प्रख्या। प्रत्यक्षा-त्मिका प्रत्यभिज्ञेति यावत्। योगस्येति। वायवीयावयवयोगस्येत्यर्थः। तथा च शब्दस्य वायुकारणकत्वपक्षे वायुकार्यत्वेनाभिमते शब्दे तन्तुकार्यत्वेनाभिमते पटे तन्तु-संयोगस्येव कारणीभूतवायवीयावयवसंयोगस्य प्रात्यक्षिकप्रत्यभिज्ञाभावान्न वायुकारण-कत्वं शब्दस्येति नानित्यत्वमिति भावः॥ २२॥

सिद्धान्ते युक्त्यन्तरकथनार्थं सूत्रम्—लिङ्गदर्शनाच्चेति। तद्व्याचष्टे—लिङ्गं चेत्यादिना। लिङ्गं नामान्यपरं सदन्यार्थद्योतकं वाक्यम्। तच्चेह दृश्यत इत्याह—वाचा विरूपनित्ययेति। विरूपा च सा नित्या चेति विग्रहः। रूपयतीति रूपं कर्ता। विगतं रूपं यस्या इति कर्तृरहितेत्यर्थः। अत एव नित्या वागित्यर्थः। इयं च श्रुतिरग्निस्तुतिपरा सती वाचो नित्यत्वं द्योतयतीति लिङ्गं भवतीति। प्रकृतं शब्द-नित्यत्वसिद्धान्तमुपसंहरति—तस्मादिति॥ २३॥

इति शब्दनित्यत्वाधिकरणम्॥ ६॥

अत्राधिकरणे चोदनारूपाणि वेदवाक्यानि विषयः। तेषां धर्माधर्मयोः प्रामाण्य-मस्ति न वेति संदेहः। न संभवतीति पूर्वः पक्षः। चोदनाप्रामाण्यनिरूपणात्पादान्याय-संगती स्पष्टे। पूर्वाधिकरणोपरि स्वाक्षेपिकी। इमां संगतिं प्रदर्शयन्प्रकृतपूर्वपक्षसूत्रं व्याचष्टे—यद्यपीत्यादिना। औत्पत्तिक इत्यस्यैव विवरणं नित्य इति। औत्पत्तिक इति च सूत्रघटकोत्पत्तिपदविवरणम्। वाशब्दविवरणं—यद्यपीति। अवचना इत्यस्य विवरणं—न चोदनालक्षण इति। अयं चात्र भाष्यार्थः। यद्यप्याकृतिग्रन्थे पदा-र्थस्य शब्दाधिकरणसंबन्धाक्षेपपरिहारग्रन्थयोः पदसंबन्धयोश्च नित्यत्वं प्रसाधितं तथाऽपि

**धर्मः । चोदना हि वाक्यम् । न ह्यग्निहोत्रं जुहुयात्स्वर्गकाम इत्यतो वाक्यादन्यतमात्पदादग्निहोत्रात्स्वर्गो भवतीति गम्यते । गम्यते तु पदत्रय उच्चरिते । न चात्र चतुर्थः शब्दोऽस्त्यन्यदतः पदत्रयसमुदायात् ।**

**न चायं समुदायोऽस्ति लोके । यतोऽस्य व्यवहारादर्थोऽवगम्यते । पदान्यमूनि प्रयुक्तानि तेषां नित्योऽर्थः । अप्रयुक्तश्च समुदायः । तस्मात्समुदायस्यार्थः कृत्रिमो व्यामोहो वा । न च पदार्था एव वाक्यार्थः।**

चोदनासूत्रे यद्वाक्यार्थे वेदवाक्यानां प्रामाण्यं प्रतिज्ञातं तन्न सिध्यति । वक्ष्यमाणप्रकारेण वाक्यार्थप्रतिपत्तौ मूलाभावात् । अनिमित्तायाश्च प्रतीतेरुत्पन्नाया अपि प्रतिभावद-प्रामाण्यापातात् । अतः शब्दनित्यत्वप्रतिपादनप्रयासोऽनर्थक एव । पदर्थोऽप्य प्रयासतस्तस्यैव मूलाभावादसिद्धिरिति पुनराक्षिप्यत इति । वाक्यार्थप्रतीतिर्निर्मूलेत्येतदुपपादयितुमारभते—**चोदना हि वाक्यमित्यादिना** । अत्र प्रत्येकं पदानि वाक्यार्थमवगमयेयुरथवा श्रूयमाणपदसंघातव्यतिरिक्तमन्यत्किंचिदाहोस्वित्पदसंघातरूपं वाक्यमुत पदार्था इति विकल्प्याऽऽद्यं निराकरोति–**न हीत्यादिना पदत्रय उच्चरित इत्यन्तेन** । गम्यते च पदत्रय उच्चरित इत्येतद्भाष्यं प्रत्येकं पदानां मूलत्वं न समवतीत्येतत्परम् । न तु यथाश्रुतरीत्या समुदायस्य मूलत्वाभिधानपरम् । यत समुदायस्य मूलत्वमुत्तरत्र निराकरिष्यते । द्वितीयं पक्षं निराकरोति—**न चात्रेत्यादिना समुदायादित्यन्तेन** ।

तृतीयं निराकरोति—**न चायं समुदाय इत्यादिना** । इदं च भाष्यं न वैदिकपदसमुदायमात्राभिप्राय सर्ववाक्यानां वाक्यार्थमूलत्वनिराकरणपरत्वात् । तेनायं भाष्यार्थः । अयमेवजातीयः समुदायो नाम लोके नास्तीति । न च लोके गामानयेत्यादिसमुदायस्य विद्यमानत्वात्कथमसत्त्ववचनमिति वाच्यम् । यतोऽर्थसंबन्धाधीना हि पदानां समुदायापत्तिः । अन्यथा गौरश्व इत्यादिष्वपि तत्प्रसङ्गात् । संबन्धश्च पदानां स्वरूपेणार्थसंबन्धद्वारा वा केनापि प्रकारेण न संभवतीत्येव पदानि तावद्वर्णा वा स्वरूपेणैव कदाचन ( श्लो० वा० पृ० ८४९ श्लो० ११ ) । विशेषणविशेष्यत्व न स्याच्छुक्लत्वगोत्वयो ( श्लो० वा० पृ० ८५४ श्लो० २९ ) । इत्यादिना च वार्तिक एव विस्तरेण प्रपञ्चितस्तत्रैव द्रष्टव्य । अतः सत्त्वेनाऽऽपाततः प्रतिभासमानोऽपि लोके पदसमुदायः परमार्थतः सत्त्वेनाज्ञायमानत्वादसन्नित्युच्यत इति । **यत इति** । येन विद्यमानत्वेन कारणेनेत्यर्थः । **अस्य**–समुदायस्य । **व्यवहारात्**–वृद्धव्यवहारात् । समुदायस्यासत्त्वमेवोपपादयति—**पदान्यमूनीत्यादिना** । समुदायस्य मूलत्वाभावमुपसंहरति—**तस्मादित्यादिना** । ननु गामानयेत्यादौ गवादिपदार्था एव वाक्यार्थः । तादृशपदार्थानां च पदमूलत्वान्न निर्मूलो वाक्यार्थ इत्याशङ्क्य परिहरति—**न च पदार्था एवेत्यादिना** । परिहारभाष्यस्यायमाशयः । न तावत्पदार्था एव वाक्यार्थः ।

सामान्ये हि पदं प्रवर्तते विशेषे वाक्यम्। अन्यच्च सामान्यमन्यो विशेषः। न च पदार्थाद्वाक्यार्थावगतिः। असंबन्धात्। असति चेत्संबन्धे कस्मिंश्चित्पदार्थेऽवगतेऽर्थान्तरमवगम्येत। एकस्मिन्नवगते सर्वमवगतं स्यात्। न चैतदेवं भवति। तस्मादन्यो वाक्यार्थः।

स्यादेतत्। अप्रयुक्तादपि वाक्यादसति संबन्धे स्वभावादर्थावगम इति। यदि कल्प्येत शब्दो धर्ममात्मीयं व्युत्क्रामेत्। न चैष शब्दधर्मो यदप्रयुक्तादपि शब्दादर्थः प्रतीयते। न हि प्रथमश्रुतात्कुतश्चिच्छब्दात्केचिदर्थं प्रतियन्ति। तदभिधीयते पदधर्मोऽयं न वाक्यधर्मः। वाक्याद्धि प्रथमावगतादपि प्रतियन्तोऽर्थं दृश्यन्ते।

नैतदेवम्। यदि प्रथमश्रुतादवगच्छेयुरपि तर्हि सर्वेऽवगच्छेयुः पदार्थं-

---

पदं हि सामान्यरूपेऽर्थे वर्तते। वाक्यं तु अर्थान्तरान्वितरूपे विशेषे। तथा च सामान्यमात्रं पदार्थ इति स्थिते क्वचिदनेकपदोच्चारणे सत्यपि द्वित्वादिसामान्यज्ञानमेव केवलं भवेत्। न तु विशेषरूपवाक्यार्थावधारणमिति। ननु तथाऽपि पदार्थावगममूलको वाक्यार्थावगमोऽस्त्वित्येवं चतुर्थपक्षमाशङ्क्य निराकरोति—न च पदार्थादित्यादिना। असंबन्धादिति।

पदार्थानां वाक्यार्थस्य च धूमाग्न्योरिव नियतसंबन्धाभावादित्यर्थः। अत्रायमाशयः। किमेकैकशः पदार्थो वाक्यार्थमवगमयन्त्युत संहताः। आद्य एकैकपदार्थस्य बहुवाक्यार्थसाधारणत्वान्न नियमेनैकविशिष्टरूपवाक्यार्थप्रत्यायकत्वं संभवति। द्वितीये संहतानां तेषां तद्वाक्यार्थव्यतिरेकेणान्यत्र क्वचिदपि प्रागनवगतानामसाधारणानैकान्तिकता स्याद्भूर्नित्या गन्धवत्त्वादित्यादौ गन्धवत्त्वादिवदिति।

परस्परमसंबन्धेऽपि प्रत्याय्यप्रत्यायकभावेऽङ्गीक्रियमाणे दोषमाह—असति चेत्संबन्ध इत्यादिना। अन्यो वाक्यार्थ इति। संभावितसम्मूलको न भवतीत्यर्थः। ननु पूर्वमप्रयुक्तात्प्रथमश्रुताद्वाक्यात्स्वार्थे संबन्धग्रहाभावेऽपि स्वभावात्स्वार्थावगमः सिध्यतीत्याशयेन शङ्कते—स्यादेतदित्यादिना। परिहरति पूर्वपक्षी—यदि कल्प्येतेत्यादिना प्रतियन्तीत्यन्तेन। यद्येवं कल्प्यते तर्ह्यगृहीतसंबन्धात्प्रथमश्रुतादपि शब्दादर्थप्रतीतिः स्यात्। न त्वेवं प्रतियन्तो दृश्यन्त इति भावः। यद्यपि पदमज्ञातसंबन्धं न प्रत्यायकं तथाऽपि पदसंघातो वा पूर्वपूर्ववर्णजनितसंस्कारसहितो वाऽन्त्यवर्णो वा संबन्धग्रहणानपेक्ष एव प्रथमश्रुत एव सन्वाक्यार्थं प्रत्याययिष्यतीति शङ्कते—तदभिधीयत इत्यादिना दृश्यन्त इत्यन्तेन। परिहरति—नैतदेवमित्यादिना। यदि प्रथमश्रुताद्वाक्यार्थावग-

विदोऽन्ये च । न त्वपदार्थविदोऽवगच्छन्ति । तस्मान्नैतदेवम् । ननु पदार्थविद्भिरप्यवगच्छद्भिरकृत एव वाक्यार्थसंबन्धो भविष्यति । पदार्थवेदनेन हि संस्कृता अवगमिष्यन्ति यथा तथैव पदार्थे द्वितीयादिश्रवणेनेति । नेति ब्रूमः । यदि वाक्येऽन्त्यो वर्णः पूर्ववर्णजनितसंस्कारसहितः पदार्थेभ्योऽर्थान्तरं प्रत्याययति, उपकारस्तु तदा न पदार्थज्ञानादवकल्पते । तस्मात्कृत्रिमो वाक्यार्थप्रत्ययो व्यामोहो वा । न पदार्थद्वारेण संभवति वाक्यार्थज्ञानमिति ।

नन्वेवं भविष्यति सामान्यवाचिनः पदस्य गौरिति वाऽश्व इति वा, विशेषकं शुक्ल इति वा कृष्ण इति वा पदमन्तिकादुपनिपतति यदा, तदा वाक्यार्थोऽवगम्यते । तन्न । कथमिव गौरिति वाऽश्व इति वा सामान्यवाचिनः पदात्सर्वगवीषु सर्वाश्वेषु च बुद्धिरुपसर्पन्ती श्रुति-

---

तिरिष्यते तर्हि पदार्थविदोऽन्ये च वाक्यार्थमवगच्छेयुर्न तु तथाऽपदार्थविदो वाक्यार्थमवगच्छन्तो दृश्यन्त इति भावः ।

ननु तथाऽपि वाक्यार्थावगमं प्रति पदार्थवेदनमप्यङ्गमिष्यते । नातोऽपदार्थविदां वाक्यार्थावगतिरित्याशयेन शङ्कते—नन्वित्यादिना । द्वितीयादिश्रवणेनेत्यन्तेन । समाधत्ते—नेति ब्रूम इत्यादिनाऽवकल्पत इत्यन्तेन । यदि हि पदेभ्योऽर्थान्तरभूतं वाक्यं पदार्थव्यतिरिक्तं च वाक्यार्थं परम्परसंबन्धरहितं साक्षादेव प्रतिपादयति कस्तदा पदार्थवेदनस्योपयोगः । तदनुपयोगे च पदार्थव्युत्पत्तिरनर्थिका वाक्यार्थं प्रतिपित्सताम् । पदार्थैर्वाक्यार्थावगमस्त्वसंबन्धादेव निराकृतः ।

तस्मात्प्रथमश्रुताद्वाक्यादगृहीतसंबन्धाद्वाक्यार्थावगमो दुर्लभ इत्याशयः । अतश्च विचार्यमाणे मूलविशेषानिश्चयाद्वृद्ध्यादिपदार्थप्रतीतिवद्वाक्यार्थप्रत्ययोऽपि सामयिकः । यद्वा निर्मूलोऽपि सन्वाक्यार्थो याज्ञिकपरिभाषासिद्धो न तु सन्मूलक इत्याह—तस्मादित्यादिना वाक्यार्थज्ञानमित्यन्तेन । ननु तथाऽपि सामान्यवाचिनो गवादिपदस्य विशेषवाचिना शुक्लादिपदेन सह समभिव्याहारो यदा क्रियते तदा कृष्णादिनिवृत्तिरूपो वाक्यार्थोऽवगम्यत एवेतीतरव्यवच्छेदस्य वाक्यार्थत्वाभिमानेन शङ्कते—नन्वेवमित्यादिना । दूषयति—तन्नेत्यादिना अपवर्तेतेत्यन्तेन । अयं भावः । गौरित्यादिश्रुतिस्वभावात्सर्वगोविषयिणी भवन्ती बुद्धिर्न शुक्लपदेनैकवाक्यतावशेन कुतश्चिद्विशेषादपवर्तेत । श्रुतिर्हि वाक्याद्बलीयसी बलाबलाधिकरणोक्तन्यायादिति ।

ननु तथाऽपि शुक्लादिपदस्य कृष्णाद्यपोहवचनत्वमङ्गीकृत्येतरव्यवच्छेदोऽपि

जनिता, वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तेत । न च शुक्ल इत्यादेर्विशेषवचनस्य कृष्णादिनिवृत्तिर्भवति शब्दार्थः । न चानर्थको मा भूदित्यर्थपरिकल्पना शक्या । अतो न पदार्थजनितो वाक्यार्थः । तस्मात्कृत्रिमः । पदसंघाताः खल्वेते संघाताश्च पुरुषकृता दृश्यन्ते । यथा—नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः । नीलकौशेयसंवीताः प्रनृत्यन्तीव कादम्बाः । अतो वैदिका अपि पुरुषकृता इति ॥ २४ ॥

## तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥२५॥ सि०

तेष्वेव पदार्थेषु भूतानां वर्तमानानां पदानां क्रियार्थेन समुच्चारणम् । नानपेक्ष्य पदार्थान्पार्थगर्थ्येन वाक्यमर्थान्तरप्रसिद्धम् । कुतः । प्रमाणा-

---

श्रौतः स्यादित्याशङ्क्य निराकरोति—न चेत्यादिना । शब्दानामपोहवाचित्वस्यैवासंभवात्संभवेऽपि वा कृष्णाद्यपोहमात्रस्य शुक्लादिपदेनाभिधानेऽपि तस्य गौणत्वं पदसंनिधिरूपाद्वाक्यादेवेति तस्य च दुर्बलत्वान्नेतरव्यवच्छेदो वाक्यार्थ इति भावः । यथा चापोहस्य न शब्दार्थता तथा वार्तिकेऽपोहवादे स्पष्टम् ।

न चायं पदसमभिव्याहारो व्यर्थो मा भूदिति लोभेनाप्रतीयमानस्य शब्दार्थत्वपरिकल्पना संभवतीत्याह—न चेत्यादिना । उपपादितं वाक्यार्थस्य पदार्थमूलत्वाभावमुपसंहरति—अत इत्यादिना । तस्मात्कृत्रिम इति । व्याख्यातमिदम् । उक्त एव पौरुषेयत्वेऽनुमानमपि दर्शयति—पदसंघाताः खल्वित्यादिना । अयमत्र प्रयोगः । वेदाः पौरुषेयाः, पदसंघातरूपत्वान्नीलोत्पलादिकवनवदिति । नीलोत्पलेत्यादिश्लोकोत्तरार्धे " रामः कौशेयसंवीताः कादम्बा इव शोभनाः " इति पाठान्तरं न्यायरत्नमालायामुपलभ्यते ॥ २४ ॥

अत्र सिद्धान्तसूत्रम्—तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वादिति । तद्भूतानामिति पदं व्याचष्टे—तेष्वेवेत्यादिना । क्रियार्थेनेति । क्रिया साध्यसाधनेतिकर्तव्यताविशिष्टा भावना । अर्थः—प्रयोजनम् । तथा च तादृशविशिष्टक्रियाप्रतीतिरूपप्रयोजनोद्देशेनेत्यर्थः ।

समुच्चारणमिति । समाम्नायपदविवरणम् । तथा चायं सूत्रार्थः । लोकसिद्धेषु पदार्थेषु वर्तमानानामेव पदानां विशिष्टक्रियारूपवाक्यार्थज्ञानोपायत्वान्न पृथग्वाक्यस्य वाचकत्वम् । अत एव न वाक्यार्थो निर्मूल इति । तमेतं सूत्रतात्पर्यार्थं निरूपयन्नाह—नानपेक्ष्येत्यादिना । न हि लोके गामानयेत्यादिवाक्यं प्रतीयमानगवादिपदार्थान्विहाय पदार्थेभ्योऽत्यन्तभिन्नेऽर्थान्तरे प्रसिद्धमस्तीत्यर्थः । अप्रसिद्धिमेव प्रश्नपूर्वकमुपपादयति—कुत इत्यादिना । वाक्यस्यानपेक्षितपदार्थस्य पदार्थेभ्योऽर्थान्तरे वाक्यार्थे

---

१ प्रनृत्यन्तीति ।

भावात्। न किं चन प्रमाणमस्ति येन प्रमिमीमहे। न ह्यनपेक्षितपदार्थस्य वाक्यान्त्यवर्णस्य पूर्ववर्णजनितसंस्काररहितस्य शक्तिरस्ति पदार्थेभ्योऽर्थान्तरे वर्तितुमिति।

नन्वर्थापत्तिरस्ति, यत्पदार्थव्यतिरिक्तमर्थमवगच्छामः। न च शक्तिमन्तरेण तदवकल्प्यत इति। तन्न। अर्थस्य तन्निमित्तत्वात्। भवेदर्थापत्तिर्यद्यस्यामपि शक्तौ नान्यन्निमित्तमवकल्प्येत। अवगम्यते तु निमित्तम्। किम्। पदार्थाः।

पदानि हि स्वं स्वं पदार्थमभिधाय निवृत्तव्यापाराणि। अथेदानीं पदार्था अवगताः सन्तो वाक्यार्थं गमयन्ति। कथम्। यत्र हि शुक्ल

---

शक्ति॰ प्रमाणाभावान्नाभ्युपगन्तु युक्तेत्याह—न हीत्यादिना वर्तितुमित्यन्तेन। ननु यद्यपि नास्ति प्रमाणान्तरं तथाऽप्यर्थापत्तिरस्ति। तथा हि लोके वाक्योच्चारणानन्तरं तत्तत्पदार्थव्यतिरिक्तं विशिष्टमर्थमवगच्छामः। स चायमर्थावगमोऽसत्यां तस्मिन्वाक्ये शक्तौ नावकल्पेतेत्यभिप्रायेण शङ्कते—नन्वित्यादिना। इमां शङ्कामर्थस्य तन्निमित्तत्वादिति सूत्रावयवार्थप्रतिपादनेन निराकरोति—तन्नेत्यादिना। इतरप्रमाणान्तमयकाले ह्यर्थापत्तिप्रमाणप्रवृत्तिः प्रकृते च वाक्यार्थावगमः पूर्वोक्तार्थापत्तिकल्प्यवाक्यशक्तिमन्तरेण यदि नोपपद्येत भवेदप्यर्थापत्तिस्तत्कल्पिका। उपपद्यते हि प्रमाणान्तरेण पदार्थावगमरूपेण। अतो न वाक्यार्थावगमोपपत्त्यर्थमर्थापत्त्या वाक्यशक्तिकल्पनेति भावः।

पदार्थानां वाक्यार्थावगममूलत्वमुपपादयति—पदानि हीत्यादिना। अयमाशयः। यद्यपि प्रयुज्यमानानि तानि तानि पदानि स्वस्वार्थमात्रप्रतिपादकानि न विशिष्टरूपं वाक्यार्थमवबोधयितुं पारयन्ति तथाऽपि तेषां पदानां न पदार्थप्रतिपादनमात्रे तात्पर्यं तेषां प्रमाणान्तरासिद्धत्वात्। अतोऽभिधाव्यापारः परं पदार्थेष्वेव पर्यवस्येत्। तात्पर्यव्यापृतेरपर्यवसितत्वया वाक्यार्थपर्यन्तत्वादुक्तरीत्या पदैः प्रतीताः पदार्था एव सामान्यविशेषभावादिना परस्परं संबद्धं वाक्यार्थं गमयन्तीति सिद्धं शब्दप्रमेयतया वाक्यार्थस्य शाब्दत्वम्। तमिमं वाक्यार्थावगमस्य पदार्थावगममूलत्वप्रकारमुदाहरणविशेषे प्रदर्शयन्नाह—यत्र हि शुक्ल इत्यादिना विशिष्टार्थसंप्रत्ययश्च वाक्यार्थ इत्यन्तेन। ननु पूर्वोक्तरीत्या यदि सर्वत्र पदानां विशिष्टभावनारूपवाक्यार्थावगतिरूपप्रयोजनोद्देशेनैव समाम्नायः, कथं तर्हि भाष्ये शुक्लो गौरिति निष्क्रियमेव वाक्यं वाक्यार्थोदाहरणं दर्शितमिति चेत्। सत्यम्। नोदाहरणमिदं यथाश्रुतमादरणीयम्।

इति वा कृष्णं इति वा गुणः प्रतीतो भवति । भवति खल्वसावलं गुणवति प्रत्ययमाधातुम् । तेन गुणवति प्रत्ययमिच्छन्तः केवलं गुणवचनमुच्चारयन्ति । संपत्स्यत एषां यथासंकल्पितोऽभिप्रायः । भविष्यति विशिष्टार्थसंप्रत्ययः । विशिष्टार्थसंप्रत्ययश्च वाक्यार्थः । एवं चेदवगम्यतेऽन्यत एव वाक्यार्थः को जातुचिददृष्टा पदसमुदायस्य शक्तिरर्थादवगम्यत इति वदिष्यति ।

अपि चान्वयव्यतिरेकाभ्यामेतदवगम्यते, भवति हि कदाचिदियमवस्था मानसादप्याघातात् । यदुच्चरितेभ्यः पदेभ्यो न पदार्था अवधार्यन्ते । तदानीं नियोगतो वाक्यार्थं नावगच्छेयुर्यदस्यापार्थगर्थ्यमम-

---

यतः पदार्थानामस्ति परस्परं संबन्ध इत्येतावन्मात्रप्रतिपादनपरमिदं भाष्यं न तु पारमार्थिकम् ।

न हि प्रयोजनापेतं वाक्यमुच्चार्यते क्वचित् ।
प्रयोजनक्षमं नापि पदमाख्यातवर्जितम् ॥ (श्लो० वा० वा० ३४१)

इत्यादिवार्तिकप्रदर्शितन्यायात् । अतोऽत्राप्यानीयतामित्यादिक्रियापदाध्याहारेणैव वाक्यपूरणमिति । एवं च पूर्वोक्तरीत्या पदार्थेभ्य एव वाक्यार्थप्रतीतेः संभवात्तदर्थोपपत्त्या पदसमुदायरूपवाक्यस्यादृष्टा वाचकत्वशक्तिः कल्पयितुं युक्तेत्याह—एवं चेदित्यादिना वदिष्यतीत्यन्तेन ।

किं चान्वयव्यतिरेकाभ्यामपि वाक्यस्यावाचकत्वं पदार्थानां च मूलत्वमभ्युपगन्तव्यमित्याह—अपि चेत्यादिना नावगच्छन्तीत्यन्तेन । अस्य भाष्यस्यायमाशयः । कदाचिन्मानसादपचाराउच्चरितेभ्योऽपि पदेभ्यो यदा पदार्था नावधार्यन्ते तदा वाक्यार्थो नावगम्यते । अतो वाक्यान्वयेऽपि पदार्थव्यतिरेके व्यतिरिच्यमानो वाक्यार्थोऽन्वयव्यतिरेकाभ्यां पदार्थनिमित्त एवेति निश्चीयत इति । अपार्थगर्थ्यमिति । पृथगर्थत्वाभाव इत्यर्थः । यदि वाक्यार्थावगमः पदार्थावगममूलक एव स्यान्न तद्भिन्नवाक्यमूलकस्तदा पदार्थावधारणाभावे वाक्यार्थं नावगच्छेयुरिति पूर्वेणान्वयः । वस्तुतः पदार्थावधारणाभावे वाक्यार्थं नावगच्छन्ति । अतः पदार्थावगममूलक एव वाक्यार्थावगम इति ।

त्रिप्यत्। नियोगतस्तु नावगच्छन्ति। अपि चान्तरेणापि पदोच्चारणं यः शौक्ल्यमवगच्छत्यवगच्छत्येवासौ शुक्लगुणकम्। तस्मात्पदार्थप्रत्यय एव वाक्यार्थो नास्य पदसमुदायेन संबन्धः। यत्तु श्वेतः पदार्थो न वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तितुमर्हतीति। सत्यमेवैवमेतत्। यत्र केवलः पदार्थः प्रयुज्यमानः प्रयोजनाभावादनर्थकः संजायत इत्यवगतं भवति तत्र वाक्यार्थोऽपि तावद्भवत्विति विशिष्टार्थताऽवगम्यते न सर्वत्र। एवं च सति गुणान्तरप्रतिषेधो न शब्दार्थ इत्येतदपि परिहृतं भवति।

---

ननु यत्र मानसादपचारात्पदार्थग्रहण तत्र वाक्यमपि न गृहीतमिति वाक्यरूपमूलाभावादेव वाक्यार्थावधारणाभावो न तु पदार्थावगमाभावमूलक इति न पूर्वोक्तान्वयव्यभिचार इत्याशङ्कानिराकरणायाऽऽह—अपि चान्तरेणापीत्यादिना संबन्ध इत्यन्तेन। अयमाशय। श्वेत कश्चिदव्यक्त पदार्थं गवाश्वादिरूपं दूरादुपलभमानस्तस्मिन्नेव प्रदेशे हेषया खुरशब्देन चाश्वजातिं गतिं चानुमिमानो वस्त्वन्तराणामनुपलब्ध्या च तस्मिन्प्रदेशेऽभावमवगच्छन्गुणजातिक्रियाणामर्थान्तरान्वयमपेक्षमाणानां योग्यानामर्थापत्त्या परस्पर संसर्गं बुध्यते श्वेतोऽश्वो धावतीति। अत एतादृशस्थले वाक्योच्चारणाभावेऽपि पदार्थावगममात्रेण तत्संसर्गरूपवाक्यार्थावगमदर्शनाद्व्यतिरेकव्यभिचारापत्त्या न वाक्यग्रहणमूलको वाक्यार्थावगम· किं तु पदार्थावगममूलक एव पदार्थान्वयेऽन्वीयमानत्वात्तद्व्यतिरेके व्यतिरिच्यमानत्वादिति।

यत्तु पूर्वपक्षिणा गौरिति वाऽश्व इति वा सामान्यवाचिनः पदाच्छ्रुत्या सर्वगवाश्वविषयिणी बुद्धिर्जायमाना शुक्ल इत्यादिपदान्तरसमभिव्याहाररूपवाक्यानुरोधेन न कुतश्चिद्विशेषात्कृष्णादिरूपादपवर्तितुमर्हति श्रुतिवाक्ययोर्विरोधे श्रुते. प्राबल्यादिति तदनुभाषते––यत्त्वित्यादिनाऽर्हतीतीत्यन्तेन। उक्त विरोधमङ्गीकृत्यैव परिहरति—सत्यमित्यादिनाऽवगम्यत इत्यन्तेन। यद्यप्यस्ति विरोधस्तथाऽपि तादृशवाक्यस्य विशिष्टार्थप्रत्यायनस्याभावे पदार्थमात्रस्य पूर्वमेवावगतत्वेन तत्प्रतिपादन आनर्थक्यापत्ते· 'आनर्थक्यप्रतिहतानां विपरीत बलाबलम्' इति न्यायेन दुर्बलवाक्यगम्योऽपि विशिष्टार्थरूपो वाक्यार्थ. स्वीकार्य एवेति भावः।

न सर्वत्रेति। यद्दि सामान्यत. प्रवृत्ताया श्रुतेर्वाक्यवशेन विशेषे व्यवस्थापनं तदपि न सर्वत्र। क्वचिद्धि श्रुत्यवस्थायामेव विशेषावगमात्। तत्र सामान्यश्रुतिरलब्धात्मिकैव भवतीति न श्रुतिवाक्ययोर्विरोध इति भाव।

उक्तरीत्या विशिष्टार्थस्यैव वाक्यार्थत्वाङ्गीकारेण शुक्लादिश्रुतेर्न गुणान्तरप्रतिषेधो वाच्यो भवितुमर्हतीत्यादिदूषणमपि परास्तं भवतीत्याह—एवं च सतीत्यादिना।

अपि च प्रातिपदिकादुच्चरन्ती द्वितीयादिविभक्तिः प्रातिपदिकार्थो विशेषक इत्याह । सा च विशेषश्रुतिः सामान्यश्रुतिं बाधेत । यच्चैते पद-संघाताः पुरुषकृता दृश्यन्त इति । परिहृतं तदस्मरणादिभिः । अपि चैवंजातीयकेऽर्थे वाक्यानि संहर्तुं न किंचन पुरुषाणां बीज-मस्ति ॥ २५ ॥

## लोके सन्नियमात्प्रयोगसंनिकर्षः स्यात् ॥ २६ ॥ [सि०]

लौकिकेषु पुनरर्थेषु प्रत्यक्षेणार्थमुपलभ्य सान्नियमः सन्निबन्धनं शक्यं तत्र संहर्तुमेवंजातीयकानि वाक्यानि नीलोत्पलवनेष्वद्य इति ।

---

पूर्वोक्तश्रुतिवाक्यविरोधाभाव उदाहरणविशेषं प्रदर्शयति—अपि च प्रातिपदिकादि-त्यादिना बाधेतेत्यन्तेन । इदमत्राऽऽकूतम् । गामित्यादौ द्वितीयादिविभक्त्यन्त-स्थले प्रकृत्यर्थभूतगोविशेषनिष्ठकर्मत्वविशेष एव प्रतीयते । प्रत्ययानां प्रकृत्यर्थानुरक्त-स्वार्थबोधकत्वस्वाभाव्यात् । न तु तत्र प्रथमतः प्रतीयमानस्य सामान्यस्य पश्चात्प्रती-यमानप्रातिपदिकार्थमहिम्ना विशेषे व्यवस्थापनमिति ।

यच्चोक्तं पदसंघातात्मको वेदः पुरुषकृतः पदसंघातरूपत्वान्नीलोत्पलादिवाक्य-वदिति तदनूद्य परिहरति—यच्चैत इत्यादिना । परिहृतं तदस्मरणादिभिरिति । अवश्यं स्मर्तव्यस्य कर्तुरस्मरणात्पुरुषकृतत्वं साधयितुमशक्यम् । अनेन चेदं प्रत्यनुमानं सूचितम् । वेदोऽपौरुषेयः कर्त्रस्मरणादिति । पूर्वपक्ष्याभिमतानुमाने च स्मर्यमाणकर्तृक-त्वजन्यज्ञानमूलकत्वादिना सोपाधिकत्वं ज्ञेयम् । यद्यप्यत्र भाष्ये पूर्वत्र वेदानां कर्तृ-स्मरणाभावादिना कृतकत्वं न निराकृतं किं तु संबन्धस्यैव संबन्धाक्षेपपरिहारग्रन्थे तेन हेतुना तन्निराकृतं तथाऽपि तुल्यन्यायत्वाद्वेदानामपि कृतकत्वं निराकृतमेव भव-तीत्येवमभिप्रायकमिदं भाष्यम् ॥ २५ ॥

लौकिकवाक्यवद्वैदिकवाक्यमपि पौरुषेयमित्युक्ते वैषम्यप्रदर्शनार्थं सूत्रम्—लोके सन्नियमात्प्रयोगसंनिकर्षः स्यादिति । इदं सूत्रमवतारयति—अपि चेत्यादिना । सूत्रे लोक इत्यस्य संनिकर्षपदेन साकं संबन्धं, सन्नियमादिति पदे पञ्चम्याः प्रथमात्वेन विपरिणामं, प्रयोगपदे प्रथमान्ततया पृथक्पदत्वं, संनिकर्षपदे प्रथमायाः पञ्चमीत्वेन विपरिणामं चाभिप्रेत्य सूत्रं व्याचष्टे—लौकिकेषु पुनरित्यादिना । पुनरित्यनेन वैदिकवाक्यापेक्षया लौकिकवाक्येषु वैलक्षण्यमुक्तम् । तदेव वैलक्षण्यमाह—प्रत्यक्षेणा-र्थमुपलभ्येति । इदं च संनिकर्षपदविवरणम् ।

तथा चायं सूत्रार्थः । लोके गवादिरूपस्यार्थस्य चक्षुरादिसंनिकर्षसंभवाच्चक्षुरादिना

तस्मादग्निहोत्रं जुहुयात्स्वर्गकाम इत्येतेभ्य एव पदेभ्यो येऽर्था अवगतास्तेभ्य एवैतदवगम्यतेऽग्निहोत्रात्स्वर्गो भवतीति । पदेभ्य एव पदार्थप्रत्ययः पदार्थेभ्यो वाक्यार्थ इति ॥ २६ ॥

[८] वेदांश्चैके संनिकर्षं पुरुषाख्याः ॥ २७ ॥ [पू०]

उक्तं चोदनालक्षणोऽर्थो धर्म इति । यतो न पुरुषकृतः शब्दस्यार्थेन संबन्ध । तत्र पदवाक्याश्रय आक्षेपः परिहृतः । इदानीमन्यथाऽऽक्षेप्स्यामः । पौरुषेयाश्चोदना इति वदामः ।

संनिकृष्टकालाः कृतका वेदा इदानींतनाः, ते च चोदनानां समूहाः, तत्र पौरुषेयाश्चेद्वेदा असंशयं पौरुषेयाश्चोदनाः । कथं पुनः कृतका वेदा इति केचिन्मन्यन्ते । यतः पुरुषाख्याः पुरुषेण हि समाख्यायन्ते वेदाः काठकं कालापकं पैप्पलादकमिति । न हि संबन्धादृते समाख्यानं,

---

तमर्थमुपलभ्य तदर्थप्रतिपादकशब्दप्रयोग संनियम —संनिबन्धनरूप उपपद्यते । तदि-दमाह–शक्यं तत्र संहर्तुमित्यादिना । वेदे तु न तथा भवतीत्याह–तस्मादित्यादिना । तस्मात्—वैदिकस्यार्थस्य चक्षुःसंनिकर्षाभावादित्यर्थः । प्रकृताधिकरणसिद्धान्तमुपसं-हरति–पदेभ्य एवेत्यादिना ॥ २६ ॥

इति पदार्थमूलतया वाक्यार्थप्रामाण्याधिकरणम् ॥ ७ ॥

एवं पदपदार्थसंबन्धनित्यतया वाक्यार्थस्य पदार्थमूलकत्वेन च चोदनानां प्रामाण्या-क्षेपे परिहृतेऽधुना वेदशाखानां काठकादिसमाख्यया पौरुषेयत्वावगमात्तदवयवानां चोद-नानामपि पौरुषेयत्वात्पुनः प्रकारान्तरेण प्रामाण्याक्षेपार्थं सूत्रम् । वेदांश्चैके संनिकर्षं पुरुषाख्या इति । एतत्सूत्र संगतिप्रदर्शनाय वृत्तानुवादपुरःसरं व्याख्यातुं वृत्तं कीर्त-यति— उक्तमित्यादिना परिहृत इत्यन्तेन । यदुक्तं चोदनासूत्रे धर्मे चोदना लक्षण-मिति तदेतावता ग्रन्थजातेन न्यक्षम्यापितं पदपदार्थसंबन्धनित्यत्वप्रतिपादनेन वाक्या-र्थस्य पदार्थमूलकत्वप्रतिपादनेन च पदवाक्याश्रय आक्षेपः परिहृत इति भावः । किमर्थं तर्हीदमधिकरणमित्यत आह—इदानीमित्यादिना । तथा चैवमत्र संदेहः, वेदाः किं पौरुषेया उतापौरुषेया इति । तत्र पूर्वपक्षसूत्रम्–वेदांश्चैक इति । तद्व्याचष्टे—पौरुषेयाश्चोदना इति । इदं च सूत्रस्थसंनिकर्षपदेन उक्तमित्याशये-नाऽऽह–संनिकृष्टकाला इति । तथा चाय सूत्रार्थः । एके–पूर्वपक्षिणः, वेदान् संनि-कर्षं–संनिकृष्टकालान्कृतकानित्यर्थः ।

न च पुरुषस्यान्यः शब्देनास्ति संबन्धो यदतः कर्ता पुरुषः कार्यः शब्द इति। ननु प्रवचनलक्षणा समाख्या स्यात्। नेति ब्रूमः। असाधारणं हि विशेषणं भवति, एक एव हि कर्ता, बहवोऽपि प्रब्रूयुः। अतोऽस्मर्यमाणोऽपि चोदनायाः कर्ता स्यात्। तस्मान्न प्रमाणं चोदनालक्षणोऽर्थो धर्म इति ॥ २७ ॥

अनित्यदर्शनाच्च ॥ २८ ॥

जननमरणवन्तश्च वेदार्थाः श्रूयन्ते। 'बबरः प्रावाहणिरकामयत' 'कुसुरुबिन्द औद्दालकिरकामयत' इत्येवमादयः। उद्दालकस्यापत्यं गम्यत औद्दालकिः। यद्येवं प्रागौद्दालकिजन्मनो नायं ग्रन्थो भूतपूर्वः। एवमप्यनित्यता ॥ २८ ॥

उक्तं तु शब्दपूर्वत्वम् ॥ २९ ॥ [सि०]

---

मन्यन्त इति शेषः। तत्र युक्तिप्रदर्शनार्थं पुरुषाख्या इति सूत्रावयवं प्रश्नपूर्वकं व्याचष्टे--कथं पुनरित्यादिना। यतः पुरुषाख्या वेदा अतः कृतका इति योजना। ननु काठकादिसमाख्या नावश्यं कर्तृकार्यभावरूपसंबन्धपरा प्रवचनाद्यर्थान्तरपरत्वस्यापि संभवात्। अतो न समाख्यया कृतकत्वसिद्धिरित्याशङ्क्य परिहरति---नन्वित्यादिना। न तावदिह समाख्या प्रवचननिमित्ता संभवति। प्रवचनस्यासाधारणत्वासंभवात्। भवितव्यं च विशेषणेनासाधारणेन। अतः कर्तृप्रापिकैव सा। कर्ता त्वसाधारणो भवितुमर्हतीति भावः। यद्यपि स्मर्तव्यस्य तादृशकर्तुः स्मरणं न विद्यतेऽथापि समाख्याबलेनैव कृतकत्वमाश्रयणीयमित्याशयेनाऽऽह---अत इत्यादिना। तथा च वेदस्यैव समाख्याबलेन पौरुषेयत्वात्तद्घटकचोदनानामपि पौरुषेयत्वादप्रामाण्यमेवाऽऽपद्यत इति चोदनालक्षणोऽर्थो धर्म इति प्रतिज्ञातार्थो न सिध्यतीत्येवमाक्षेपसंगत्या प्रकृताधिकरणपूर्वपक्ष इत्याह---तस्मान्न प्रमाणमित्यादिना ॥ २७ ॥

पूर्वपक्षे युक्त्यन्तरकथनार्थं सूत्रम्। अनित्यदर्शनाच्चेति। तद्व्याचष्टे---जननमरणवन्तश्चेत्यादिना। जननमरणवतां प्रवाहणाद्यपत्यानां बबरादीनां वेदे प्रतिपादनमुक्तमुत्पत्त्यनन्तरमेव वेदजन्मप्रतीत्याऽनित्यत्वमेव वेदस्याऽऽस्थेयमिति भावः ॥ २८ ॥

सिद्धान्तप्रतिपादनार्थं सूत्रम्---'उक्तं तु शब्दपूर्वत्वम्' इति।

तद्व्याचष्टे---उक्तमित्यादिना। शब्दपूर्वत्वमिति। शब्दशब्देनात्र शब्दजन्यमध्ययनं विवक्षितम्। तथाचायमर्थः। सर्वेषामध्ययनमध्ययनान्तरपूर्वकमित्यौत्पत्तिकसूत्रादावुक्तमित्यर्थः। सर्वे हि यथैव गुरुणाऽधीतं तथैवाधिजिगांसन्ते, न पुनः स्वातन्त्र्येण कश्चिदपि प्रथमोऽध्येता वेदानामस्ति यः कर्ता स्यात्। तस्मात्कर्तृस्मरणाभावादपौरुषेया वेदा इति भावः। एवं च पूर्वमेव वेदापौरुषेयत्वस्य सिद्धत्वात्तद्विषये

उक्तमस्माभिः शब्दपूर्वत्वमध्येतॄणाम्। केवलमाक्षेपपरिहारो वक्तव्यः सोऽभिधीयते॥ २९॥

आख्या प्रवचनात्॥ ३०॥

यदुक्तं कर्तृलक्षणा समाख्या काठकादीति। तदुच्यते। नेयमर्थापत्तिः। अकर्तृभिरपि ह्येनामाचक्षीरन्।

प्रकर्षेण वचनमनन्यसाधारणं कठादिभिरनुष्ठितं स्यात्तथाऽपि हि समाख्यातारो भवन्ति। स्मर्यते च वैशम्पायनः सर्वशाखाध्यायी, कठः पुनरिमां केवलां शाखामध्यापयांबभूवेति। स बहुशाखाध्यायिनां संनिधावेकशाखाध्याय्यन्यां शाखामनधीयानस्तस्यां प्रकृष्टत्वादसाधारणमुपपद्यते विशेषणम्॥ ३०॥

परं तु श्रुतिसामान्यमात्रम्॥ ३१॥

यच्च प्रावाहणिरिति। तत्र। प्रवाहणस्य पुरुषस्यासिद्धत्वान्न प्रवाहण-

---

पुनः प्रयत्नो न करणीय इति केवलं समाख्यावलम्बनेन कृतस्याऽऽक्षेपस्य परिहारो वक्तव्योऽभिधीयत इत्येवमुत्तरसूत्रमवतारयति—केवलमित्यादिना॥ २९॥

यदुक्तं काठकं कालापकमित्यादिसमाख्याबलेन कठादिकर्तृकत्वमेवाऽऽश्रयणीयं वेदानामिति तत्परिहारार्थं सूत्रम्। 'आख्या प्रवचनात्' इति।

तद्व्याख्यानार्थं पूर्वपक्ष्युक्तमनुभाषते—यदुक्तमित्यादिना। कर्तृलक्षणेति-कर्तृनिमित्तेत्यर्थः। परिहारमाह—तदुच्यत इत्यादिना। यदि हि काठकमित्यादिसमाख्या कर्तृसंबन्धं विनाऽनुपपन्ना स्यात्तदा तयैवार्थापत्त्या कर्तारमपि कल्पयेत्। न त्वियमनुपपद्यमाना भवति। अकर्तृभिरपि प्रकर्षेण वचनमनन्यसाधारणं कृतवद्भिरप्येवं समाख्या भवति। अतो न सा कर्तृसापेक्षेत्याह—नेयमर्थापत्तिरित्यादिना।

उपपद्यते च कठादिषु एकैकशाखाध्येतृषु बहुशाखाध्यायिपुरुषापेक्षया प्रवचनेऽसाधारण्यमित्याह—स्मर्यते चेत्यादिना॥ ३०॥

यत्तूक्तं जननमरणवन्तो वेदार्थाः श्रूयन्त इति, तत्परिहारार्थं सूत्रम्—'परं तु श्रुतिसामान्यमात्रम्' इति। तद्व्याख्यानार्थं पूर्वपक्ष्युक्तमनुवदति—यच्च प्रावाहणिरिति। परिहाराभिप्रायं विवृणोति—तत्रेत्यादिना। प्रावाहणिशब्दस्य बबरशब्दस्य च नानित्यपुरुषपरत्वं तथा कुत्राप्यप्रसिद्धं। किं तु प्रतीयमानयौगिकार्थपर्यालोचनया प्रावाहणिशब्दः प्रकर्षेण वाहयतीत्यर्थपरो नित्यसिद्धवाय्वादिवाचको बबर इति तस्यैव वायोः शब्दानुकृतिरित्येवं नित्यार्थाभिधायित्वमेव तादृशवाक्यानामित्येतत् प्रतिपादयति—प्रवाहणस्य पुरुषस्येत्यादिना। सूत्रस्यायमर्थः। परं तु—अनित्यदृ-

स्यापत्यं प्रावाहणिः । प्रशब्दः प्रकर्षे सिद्धो वहतिश्च प्रापणे । न त्वस्य समुदायः कचित्सिद्धः । इकारस्तु यथैवापत्ये सिद्धस्तथा क्रियायामपि कर्तरि । तस्माद्यः प्रवाहयति स प्रावाहणिः । 'बबर' इति शब्दानुकृतिः । तेन यो नित्योऽर्थस्तमेवैतौ शब्दौ वदिष्यतः । अत उक्तं परं तु श्रुति-सामान्यमात्रमिति ॥ ३१ ॥

कृते वा विनियोगः स्यात्कर्मणः संबन्धात् ॥ ३२ ॥

अथ कथमवगम्यते नायमुन्मत्तबालवाक्यसदृश इति । तथा हि पश्यामः, 'वनस्पतयः सत्रमासत' 'सर्पाः सत्रमासत' इति । यथा 'जरद्गवो गायति मत्तकानि' कथं नाम जरद्गवो गायेत् । कथं वा वनस्पतयः सर्पा वा सत्रमासीरन्निति । उच्यते । विनियुक्तं हि दृश्यते परस्परेण संबन्धार्थम् । कथम् । 'ज्योतिष्टोमः' इत्यभिधाय 'कर्तव्यः' इत्युच्यते । केनेत्याकाङ्क्षिते सोमेनेति । किमर्थमिति स्वर्गायेति । कथमिति । इत्थमनयेतिकर्तव्यतयेति । एवमवगच्छन्तः पदार्थैरेभिः संस्कृतं पिण्डितं वाक्यार्थं कथमुन्मत्तबालवाक्यसदृशमिति वक्ष्यामः ।

---

र्शनादिति यदपरं कारणमुक्तं तत् श्रुतिसामान्यमात्रम् । श्रुतेः—शब्दस्यैवात्र साम्यमात्रं न तु प्रवाहणस्यापत्यं प्रावाहणिरित्यार्थकत्वम् । किं तु भाष्यकारोक्तरीत्या प्रकर्षेण वहनक्रियाकर्तृपरत्वमिति ॥ ३१ ॥

ननु 'वनस्पतयः सत्रमासत' 'सर्पाः सत्रमासत' 'गावो वा एतत्सत्रमासत' इत्यादीनि वाक्यान्युन्मत्तबालप्रलापसदृशानि श्रूयमाणानि कथमिव कृत्स्नस्य वेदस्याप्रामाण्यं नाऽऽपादयेयुरिति शङ्कानिराकरणार्थं सूत्रम्—'कृते वा विनियोगः स्यात्कर्मणः संबन्धात्' इति । एतत्सूत्रसूचितामेतत्सूत्रेणैव निवर्तनीयां शङ्कां प्रदर्शयति—अथ कथमवगम्यत इत्यादिना । यथा 'जरद्गवो गायति मत्तकानीति । जरद्गवः कंबलपादुकाभ्यां द्वारि स्थितो गायति मत्तकानि । तं ब्राह्मणी पृच्छति पुत्रकामा राजन्कुमार्यां लशुनस्य कोऽर्घः' । इत्याद्यसंबद्धप्रलापसदृशानीत्यर्थः । परिहाराभिप्रायमाह—उच्यत इत्यादिना । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'सोमेन यजेत' इत्यादीनि वाक्यानि परस्परं संबद्धार्थकानि दृश्यन्ते । साध्यसाधनेतिकर्तव्यताविशिष्टार्थभावनाविषयकविधिनिषेधप्रतिपादकत्वात् । अतः कथमिमानि वाक्यान्युन्मत्तबालवाक्यसदृशानीति वक्तुं प्रभवाम इति भावः । ननु तेषां वाक्यानामुपपन्नार्थकत्वेऽपि

नन्वनुपपन्नमिदं दृश्यते, 'वनस्पतयः सत्रमासत' इत्येवमादि । नानुपपन्नम् । नानेन 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्येवमादयोऽनुपपन्नाः स्युः । अपि च 'वनस्पतयः सत्रमासत' इत्येवमादयोऽपि नानुपपन्नाः । स्तुतयो ह्येताः सत्रस्य, वनस्पतयो नामाचेतना इदं सत्रमुपासितवन्तः किं पुनर्विद्वांसो ब्राह्मणाः । तद्यथा लोके, सन्ध्यायां मृगा अपि न चरन्ति, किं पुनर्विद्वांसो ब्राह्मणा इति । अपि चाविगीतः सुहृदुपदेशः सुप्रतिष्ठितः कथमिवाऽऽशङ्क्येतोन्मत्तबालवाक्यसदृश इति । तस्माच्चोदनालक्षणोऽर्थो धर्म इति सिद्धम् ।

इति श्रीमच्छबरस्वामिनः कृतौ मीमांसाभाष्ये प्रथमाध्यायस्य प्रथमः पादः ॥

---

'वनस्पतय सत्रमासत' इत्येवमादीनामनुपपन्नार्थकत्व दुर्वारमित्याशङ्कामनूद्य परिहरति—नन्वित्यादिना । यद्यपि वनस्पत्यादिवाक्यान्यनुपपन्नार्थकानि भवन्तु । तथाऽप्यनेनाग्निहोत्रादिवाक्यानि नानुपपन्नार्थकानि भवितुमर्हन्ति । तेषां सुस्पष्ट परस्परसम्बद्धार्थकत्वस्यैवोपलम्भात् ।

ननु तथाऽपि वनस्पत्यादिवाक्यानामप्रामाण्यमशक्यपरिहारमित्यत आह—अपि चेत्यादिना । न वनस्पत्यादिवाक्यान्यप्यनुपपन्नार्थकानि । उत्तरत्र विधीयमानस्य सत्रस्य स्तुतिसापेक्षस्यापेक्षितस्तुतिसमर्पकत्वेन प्रामाण्यसम्भवादित्यभिप्रेत्य स्तुतिप्रकारमाह—वनस्पतयो नामेत्यादिना । उक्तार्थे लोकप्रसिद्धस्तुतिवाक्य संवादतयोदाहरति—तद्यथेत्यादिना । सन्ध्याकाले मृगा अपि कर्त्तव्याकर्त्तव्यविवेकविधुरा स्वच्छन्दविहार परिहृत्यैकत्र स्वस्थतया तिष्ठन्ति । किं वक्तव्य विद्वद्भिर्ब्राह्मणैस्तथा कर्तव्यमिति दृष्टान्तभागाशय । किं चाविगीतशिष्टाध्येतृपरम्परयाऽवगम्यमानोऽत्यन्तसुहृदुपदेशतुल्य सर्वथाऽनाशङ्कित दोषलेशो वेद कथमिवोन्मत्तबालवाक्यसदृश इति वैयात्येनाऽऽशङ्क्यते। सर्वथा दुराशङ्का न कार्येत्याशयेनाऽऽह—अपि चेत्यादिना । तस्मादपौरुषेयत्वाच्चोदनानां प्रमाणता । चोदनेति प्रतिज्ञार्थः पादेनानेन साधितः ॥ इत्यभिप्रायेण पादार्थमुपसंहरति—तस्माच्चोदनालक्षणोऽर्थो धर्म इति । सूत्रस्यायमर्थ । चाकार पूर्वपक्षनिवृत्त्यर्थकः । भूत इति भावे क्त, कर्मणीत्यर्थ । कर्मणि—सत्रादिरूपे, 'वनस्पतय सत्रमासत इत्यादीना प्रशसाद्वारा विनियोगः—अन्वय स्यात् । कुत इति चेदाह—कर्मणः सम्बन्धादिति—सत्रादे कर्मण प्रशसासापेक्षस्य सन्निधिपठितत्वरूप सम्बन्धसत्त्वादिति ॥ ३२ ॥

इति वेदापौरुषेयत्वाधिकरणम् ॥ ८ ॥

इति श्रीमीमांसाकण्ठीरवमीमांसारत्नेत्याद्युपाधिविभूषितश्रीवैद्यनाथशास्त्रिकृतौ शाबरभाष्यटिप्पण्या प्रभाभिधाया प्रथमाध्यायस्य प्रथम पादः ।

## सतन्त्रवार्तिकशाबरभाष्यसहिते मीमांसादर्शने प्रथमाध्याये द्वितीयपादः ।

### [ १ ] आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १ ॥ [पू०]

'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम् । प्रजापतिरात्मनो वपामुदखिदत् । देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्' इत्येवमादीनि समाम्नातारः समामनन्ति वाक्यानि । तानि किं कंचिद्धर्मं प्रमिमत उत नेति भवति विचारणा । तदभिधीयते । क्रिया कथमनुष्ठेयेति तां वदितुं समाम्नातारो वाक्यानि समामनन्ति । तत्रेमानि वाक्यानि क्रियां नावगमयन्ति क्रियासंबद्धं वा किंचित् । एवमेव भूतमर्थमन्वाचक्षते रोदितवान्रुद्रो, वपामुत्खेद प्रजापतिः, देवा वै दिशो न प्रजज्ञिरे इत्येवंजातीयकानि, तानि कं धर्मं प्रमिमीरन् । अथोच्येत, 'अध्याहारेण वा विपरिणामेन वा, व्यवहितकल्पनया वा, व्यवधारणकल्पनया वा, गुणकल्पनया वा कश्चिदर्थः कल्पयिष्यत इति । स कल्प्यमानः कः कल्प्येत रुद्रः किल रुरोद, अतोऽन्येनापि रोदित-

---

सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः ।
विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते ॥

सामान्यतः प्रामाण्ये सिद्धेऽधुना विभज्य विनियोगः प्रतिपाद्यते । अवधृतप्रामाण्यस्य वा वेदस्येदानीं समस्तस्य विध्यर्थवादमन्त्रनामधेयात्मकस्य यथाविभागं धर्मं प्रत्युपयोगः प्रतिपाद्यते । तत्र पूर्वपक्षवाद्यभिप्रायः । चोदनालक्षणोऽर्थो धर्म इत्युपक्रान्तस्य ज्ञानमुपदेश इति परामर्शात्सङ्कुलाना क्रियार्थेन समाम्नाय इत्युपसंहाराद्विधिप्रतिषेधयोरेव प्रामाण्यं प्रतिपादितं, न च तद्व्यतिरिक्तशब्दगम्यत्वं धर्माधर्मयोः, नाप्यनधिगतार्थबोधनं मुक्त्वाऽन्यः शब्दस्य व्यापारोऽस्तीत्युक्तमेव । अतश्च यावन्त्येव साध्यसाधनेतिकर्तव्यताबोधित्वेन विधिप्रतिषेधान्तर्गतानि तेषां भवतु प्रामाण्यं यानि त्वतिरिक्तार्थान्यर्थवादमन्त्रनामधेयानुपातीनि सोऽरोदीदिषे त्वोर्जे त्वोद्भिदेत्येवमादीनि तानि सत्यप्यपौरुषेयत्वेऽर्थाभिधानसामर्थ्ये च धर्माधर्मयोरप्रमाणमतदर्थत्वात् । यथाश्रुतगृहीतानां तावत्प्रतीत्यनुपलब्धेः प्रसिद्धमेवातदर्थत्वम् । अथ कथंचिच्छब्दवृत्त्या तादर्थ्यं कल्प्येत, एवमपि व्यवस्थाहेत्वभावान्न धर्माधर्मयोरवधारणं स्यात् । यदेव हि वाक्यं गृहीतं तदेवाध्याहारविपरिणामादिभिर्यथेष्टं कल्पयितुं शक्यते । तद्यथा सोऽरोदीदित्येवमेव तावद्गम्यं विशिष्टपुरुषाचरितोपन्यासद्वारा रोदनकर्तव्यतापरम् । अथ वा महता-

---

( १ तै० सं० १-५-१ । २ तै० सं० २-१-१ । ३ तै० सं० ६-१-५ । )

र्थक्यम् । उत्खिदेदाऽऽत्मवपां प्रजापतिरतोऽन्योऽप्युत्खिदेदात्मनो वपाम् । देवा वै देवयजनकाले दिशो न प्रज्ञातवन्तोऽतोऽन्योऽपि दिशो न प्रजानीयादिति ।

तथाऽऽनर्थक्यम् । इष्टवियोगेनाभिघातेन वा अश्रु बाष्पनिर्मोचनं तद्रोदनमित्युच्यते । न च तदिच्छातो भवति । न च कश्चिदात्मनो वपामुत्खिद्य तामग्नौ प्रहृत्य तत उत्थितेन तूपरेण पशुना यष्टुं शक्नुयात् । न च देवयजनाध्यवसानकाले केचिद् दिशो मुमुहुः । अत एषामानर्थक्यम् । तस्मादेवंजातीयकानि वाक्यान्यनित्यानीत्युच्यन्ते ।

---

मप्येवंविधाः प्रमादाः संभवन्ति, तस्मात्प्रयत्नेन वर्जयितव्यमिति । अतो विधिप्रतिषेधयोरस्फुटत्वाद्धर्माधर्मत्वेन निर्णये शक्त्यभावः । शास्त्रदृष्टविरोधादयश्च स्थिता एव । यत्तु भूतान्वाख्यानमात्रं यथावस्थितः प्रतिपाद्यते तत्र यद्यपि सत्यत्वमस्त्येव तथाऽपि न तेन प्रयोजनमित्यानर्थक्यम् । अपि च । धूम एवाग्नेर्दिवेत्यादीनां स्वार्थेऽप्यप्रामाण्यं वक्ष्यते । विध्येकवाक्यत्ववशेनैव तेषां रूपभङ्गः क्रियते । न च तस्यापि किंचित्प्रमाणमस्ति । भिन्नैरपि हि तैः किंचित्प्रतिपादयितुं शक्यमेव । न च तत्प्रतिपादयतां निष्प्रयोजनत्वेऽविज्ञायमानप्रयोजनवदर्थान्तरकल्पना शक्या । न हि लोष्टं पश्यतस्तद्दर्शनं निष्प्रयोजनमिति सुवर्णदर्शनता कल्प्यते । सर्वाण्येव च प्रमाणान्युपयुज्यमानमनुपयुज्यमानं वाऽर्थमात्मगोचरतापन्नं गमयन्ति । तेनैव चैषां हानोपादानोपेक्षाबुद्धयः फलत्वेन वर्ण्यन्ते । अन्यथा ह्युपादानमेवैकं फलं स्यात् । अपि च प्रमाणोत्पत्त्युत्तरकालं प्रयोजनवत्त्वमप्रयोजनवत्त्वं वा विज्ञायते न तु तद्वशेन प्रमाणोत्पत्तिः । तस्माद्यो यद्रूपोऽर्थः प्रतीयते स तथैव प्रयोजनवत्त्वमप्रयोजनवत्त्वं वा प्रतिपद्यते । न हि प्रयोजनवदेव प्रमातव्यमिति कश्चिन्नियमहेतुरस्ति । यत्रापि तावत्स्वाधीनः प्रमाणविनियोगस्तत्राप्येतद्दुर्लभं किमुताबुद्धिपूर्वनित्याम्नातवेदोत्थापितज्ञानमात्रे । न च वेदस्य प्रयोजनवदर्थाभिधानशक्तिः प्रथममवधृता । अयमेव हि परीक्षाकालो वर्तते कीदृशं पुनर्वदतीति । तच्च विदित्वा यथानुरूपमनुष्ठातुं क्षमा वयं न तु वेदं पर्यनुयोक्तुं किमयं निष्प्रयोजनमभिदधाति तद्वाऽभिदधाति व्यर्थं प्रयत्नेन धार्यत इति । सर्वपुरुषाणां केवलं प्रतिपत्तृत्वेन पारतन्त्र्याद्वेदस्य ग्रहणोत्तरकालं च परीक्षावसरात् । न ह्यनधीतवेद एवाऽऽदौ परीक्षितुं क्षमः । पश्चात्परीक्षमाणस्य तु नाबुद्धिपूर्वनिर्वृत्तमध्ययनं प्रकरणमन्यायेन निष्फलहेतुर्भवति । तस्मादर्थवादमन्त्रादिवाक्यानां गम्यमानप्रयोजनवत्त्वादानर्थक्यं निष्प्रमाणकमिति नाऽऽश्रीयते तथैषां प्रयोजनवत्त्वं नाऽऽश्रयितव्यम् । न हि यथाऽऽगमात्स्वागमादन्यास्त्रिवि-

यद्यपि च नित्यानि, तथाऽपि न नित्यमर्थं कुर्वन्तीति । स एष वाक्यैकदेशस्याऽऽक्षेपो न कृत्स्नस्य वाक्यस्य । नन्वेकदेशाद्विना साकाङ्क्षः पदसमूहो न पर्याप्तः स्वस्मै प्रयोजनाय । अत आक्षिप्त एवेति । नैवम् । भवति हि कश्चित्पदसमूहो योऽर्थवादेभ्यो विनाऽपि विदधाति कंचिदर्थम् । यानि पुनस्तैः सह संयुज्यार्थान्तरे वर्तन्ते तान्येकदेशाक्षेपेणाऽऽक्षिप्यन्ते ॥ १ ॥

शास्त्रदृष्टविरोधाच्च ॥ २ ॥

स्तेनं मनः, अनृतवादिनी वागित्येवंजातीयकानां धर्मं प्रत्यप्रामाण्यम् ।

---

त्साधीय परीक्षकाणाम् । योऽपि च क्लेशेन स्तुतिनिन्दात्मकोऽर्थः कल्प्येत स भाव नयाऽऽज्ञातयानन्तपातित्वान्न गृह्यते । तथा चागृहीतः न विधिप्रतिषेधावाश्रयेत । तदनाश्रितं च दूरे पुरुषार्थाद्भवतीति । अपि चैषविधेषु स्तुतिनिन्दाकल्पनायामितरेतराश्रयप्रसङ्गः । स्तुतिनिन्दात्मकत्वेनैव ह्येकवाक्यता तया चानुमीलितस्तुतिनिन्दोत्प्रेक्षाश्रयणम् । न चान्यतरमूलप्रसिद्धिरस्ति यतो व्यवतिष्ठेत । तस्मात्पृथगवस्थितानां दृष्टत्वादानर्थक्यमेवोपपन्नतरमिति । स एष वाक्यैकदेशस्येति । विध्युद्देशातिरिक्तस्य सिद्धान्ताभिप्रायेणैकदेशत्वं न तु पूर्वपक्षे, भिन्नवाक्यत्वाभ्युपगमात् । अथ वा वाक्यानां मध्ये एकदेशाक्षेप कतिपयानामित्यर्थः । तत्र यानि तावत्केवलविधियुक्तानि तेषु नैवाऽऽशङ्का । यान्यपि छिद्यादिमन्ति प्रागर्थवादेभ्यो विधिसमर्थानि ते संयुज्यार्थान्तरे स्तुतिस्तुत्यसम्बन्धे वर्तन्ते तेषामर्थवादाभावे तन्मात्रमेव हीयते न तु विधित्वेन पुरुषार्थताऽपि । यानि तु वर्तमानापदेशयुक्तानि स्तुतिनिरपेक्षविध्यसमर्थानि यथा "यस्य खादिरः स्रुवो भवति स च्छन्दसामेव रसेनावद्यति" इत्येवमादीनि तान्येकदेशद्वारेण समस्तान्याक्षिप्यन्ते ॥ १ ॥

वाङ्मनसयोर्विद्यमानमविद्यमानं वा स्तेयानृतवदनमुच्यमानं धर्मे स्वार्थेऽपि वा न प्रामाण्यं प्रतिपद्यते । अथ त्वभ्याहारादिभिरेव कल्प्येत वाङ्मनसयोः सर्वशरीरेषु चेष्टां प्रति प्राधान्यादितरभूतेन्द्रियैरपि तच्चरितमनुवर्तितव्यमिति । तत शास्त्रविरोधः । तत्रैतत्स्यात् । विहितप्रतिषिद्धत्वात्षोडश्यादिवद्विकल्प इति । इतरस्तु कल्पनीयक्लृप्तत्वेन वैषम्यमाह । ननु चात्यन्तदुर्बलोऽपि विधिस्तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवतीति "प्रतिषेध प्रदेशेऽनारभ्य विधाने च"[1] इत्यत्र वक्ष्यते । सत्यम् । यस्य शास्त्रमन्तरेणाप्राप्तिरहित तत्रैतदेवम् । यत्पुनरर्थप्राप्तं निषिध्यते तत्र विध्यनभ्यनुज्ञयैव लब्धात्मानः प्रतिषेधा बलीयांसो भवन्तीति तत्रैव वक्ष्यतेऽर्थप्राप्तवदिति चेदिति । स्तेयानृतवादयोश्च विनैव शास्त्रेण प्रवृत्तयोर्विधिनिरपेक्षोऽवस्थित प्रतिषेध इति कल्प्य विधिं बाधते ।

---

[1] ( अ० १० पा० ८ अ० १ )

भूतानुवादात् । विपरिणामादिभिरपि कल्प्यमाने स्तेयं मृषोद्यं च कर्तव्यमित्यापतति । तच्चाशक्यं स्तेयानृतवादप्रतिषेधमबाधमानेनानुष्ठातुम् । न च विकल्पः, वैषम्यात् । एकः कल्प्यो विधिरेकः प्रत्यक्षः ।

अथ दृष्टविरोधः । 'तस्माद् धूम एवाग्नेर्दिवा ददृशे नार्चिः । तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूम इति ।' 'अस्माल्लोकादुत्क्रमाभिरादित्यं गता, रात्रावादित्यस्त्वम्' इत्येतदुपपादयितुमिदम् । उभयमपि दृष्टविरुद्धमुच्यते । तस्मान्नापाऽवधारणा सिध्यतीति । अपरो दृष्टविरोधः । न चैतद् विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा इति ।

---

तस्मादानर्थक्यम् । अतः परं स्वार्थे नैवाऽऽनर्थक्यं प्रतिपादयति । रात्रिंदिवं धूमार्चिषोरपि दर्शनात् "धूम एवार्चिरेवेति" नैतद्द्वयमपि प्रत्यक्षविरोधादवधारणं न संभवति । अथ वा यदनेन प्रतिपाद्यते दिवाऽग्निरादित्यमनुप्रविशति रात्रावादित्योऽग्निमिति तदवधारणं नोपपद्यते । पूर्वोक्तस्य हेतोरसिद्धत्वात् । ततश्चाग्निसूर्ययोर्नक्तंदिवं व्यवस्थितज्योतिष्ट्वप्रतिपादनाय स्तुतिरप्यसत्यत्वान्नावकल्पत इत्येषा वाऽनवधारणा । अथ वा सूर्यो ज्योतिरिति प्रातरयं मन्त्रोऽग्निर्ज्योतिरित्येष सायमित्येषा मन्त्रयोरवधारणा न सिध्यति । अथ वा समस्तो वेदः प्रमाणमित्येषाऽवधारणा न सिध्यतीत्यभिप्रायः । शास्त्रविरोधो दृष्टविरोधद्वयं पुनः शास्त्रदृष्टविरोध इति यत्, सहदान्यायानि सन्ति क्रमभेदेन चोद्यन्ते तत्परिहारसूत्रक्रमभेदानुरोधेन । न चैतद्विद्म इत्यार्षेयवरणशेषोऽभिमतः । स चायं क्रियातत्संबन्ध्यनभिधानात्तद्विषयत्वेनाप्रमाणम् । न हि ब्राह्मणत्वाज्ञानसंदेहविपर्ययाः केनचिदंशेन कर्मण्युपयुज्यन्ते । न च प्रत्यक्षविरुद्धा स्तुतिः संभवति । न च स्वतन्त्रब्राह्मणत्वाज्ञानप्रतिपादनेन प्रामाण्यम् । कथं पुनरयं दृष्टविरोधो यदा समानाकारेषु पिण्डेषु ब्राह्मणत्वादिविभागः शास्त्रेणैव निश्चीयते । नायं शास्त्रविषयो लोकप्रसिद्धत्वाद्वृक्षत्वादिवत् । कथं पुनरिदं लोकस्य प्रसिद्धम् । प्रत्यक्षेणेति ब्रूमः । यस्मात्पुनर्मातापितृसंबन्धानभिज्ञाश्चक्षुःसंनिकृष्टेषु मनुष्येष्वनाम्नातं न प्रतिपद्यन्ते । शब्दाभावात् । यथा वृक्षत्वं प्रागभिधानव्युत्पत्तेः । नैतत्तुल्यं वृक्षत्वं प्रागभिधायकव्यापाराज्जात्यन्तरव्यवच्छिन्नं स्वव्यक्तिष्वनुगतं शाखादिमद्रूपेण दृश्यते । न तु ब्राह्मणत्वम् । अपि च व्युत्पन्नशब्दोऽपि निमित्तान्तरादृते नैव प्रतिपद्यते । न चोपवीताध्ययनादि निमित्तम् । वर्णत्रयसाधारणत्वात् । अत्यापनाद्यपि भिक्षाचारक्षत्रियवैश्यप्रातियोगित्वात्संदिग्धम् । सर्वं च दुष्टदृष्टेषु संभाव्यमान-

Secondly, if it actually means that 'we

अक्रियार्थत्वादनर्थकम् । अथायमर्थो नैवैतज्ज्ञायते, किं वा ब्राह्मण उताब्राह्मणा वेति, प्रत्यक्षविरुद्धमप्रमाणम् । अपरः प्राप्तदृष्टेः

स्थादनिश्चितम् । यस्त्वविचारितसिद्धमेव प्रतिपद्येत स शुक्तिकामपि रजतं मन्यमानः क्रीणीयात् । नैष दोषः । कश्चिद्धि काचिज्जातिग्रहण इतिकर्तव्यता भवतीति वार्णितमेतत् । तेन यथैवाऽऽलोकेन्द्रियमनेकपिण्डानुस्मृतिशब्दस्मरणव्यक्तिमहत्त्वसंनिकर्षाकारविशेषादयोऽन्यजातिग्रहणे कारणं तथैवात्रोत्पादकमातृस्मरणम् । अयं चोत्पाद्योत्पादकसंबन्धो मातुरेव प्रत्यक्षोऽन्येषां त्वनुमानाप्तोपदेशाद्यवगतः कारणं भवति । न चावश्यं प्रत्यक्षावगतमेव प्रत्यक्षनिमित्तं भवति चक्षुरादेरनवगतस्यापि निमित्तत्वदर्शनात् । आन्तरालिकस्मृतिव्यवहितमपि चेन्द्रियसंबन्धानुसारि प्रत्यक्षमित्येतत्साधितम् । न च यत्सहसा सर्वस्य प्रत्यक्षं न भवति तन्निपुणतोऽपि पश्यता न प्रत्यक्षमित्येतदप्युक्तमेव । अपचाराच्च दुर्ज्ञानोऽयं संबन्ध इति स्वयमेव वक्ष्यति । न च तावन्मात्रेण प्रत्यक्षता हीयते । न हि यद्गिरिशृङ्गमारुह्य गृह्यते तदप्रत्यक्षम् । न च स्त्रीणां कश्चिद्व्यभिचारदर्शनात्सर्वत्रैव कल्पना युक्ता । लोकविरुद्धानुमानासंभवात् । विशिष्टेन हि प्रयत्नेन महाकुलीनाः परिरक्षन्त्यात्मानमनेनैव हेतुना राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपारम्पर्याविस्मरणार्थं समूहलेख्यानि प्रवर्तितानि । तथा च प्रतिकुलं गुणदोषस्मरणात्तदनुरूपाः प्रवृत्तिनिवृत्तयो दृश्यन्ते । न च भर्तृव्यतिरेककृतेन वर्णसंकरोऽपराधेन भवति । दृश्यते ह्यपराधिनीनामपि स्वभर्तृनिमित्तः प्रसवः । तदपराधनिमित्तस्तु तासामशुभफलोपभोगो भवेन्नत्वपत्यानां वर्णसंकरः । न च नियोगतो वर्णान्तरैरेव सह प्रमादः । सवर्णेन चोत्पादितस्य नैव वर्णान्तरत्वापत्तिः । संकरजातानामपि च पुनरुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वाऽन्यतरवर्णापत्तिः स्मर्यते । तत्र त्वेतावन्मात्रमागमिकं प्रत्येतव्यम् । न ह्ययं पुरुषेयत्तानियमो लौकिकप्रमाणगम्यः । तस्मात्सत्यपि सारूप्ये यथा केनचिन्निमित्तेन स्त्रीपुंस्कोकिलादिविभागज्ञानं तथैव दर्शनस्मरणपारम्पर्यानुगृहीतप्रत्यक्षगम्यानि ब्राह्मणत्वादीनीति भवत्यज्ञानवचनस्य प्रत्यक्षविरोधः । येषामप्याचारनिमित्ता ब्राह्मणत्वादयस्तेषामपि दृष्टविरोधस्तावदस्त्येव न ह्याचारनिमित्तवर्णविभागे प्रमाणं किंचित् । सिद्धाना हि ब्राह्मणादीनामाचारा विधीयन्ते, तनेतरेतराश्रयता भवेत् । ब्राह्मणादीनामाचारस्तद्वशेन ब्राह्मणादय इति । स एव शुभाचारकाले ब्राह्मणः पुनरशुभाचारकाले शूद्र इत्यनवस्थितत्वम् । तथैकेनैव प्रयत्नेन परपीडानुग्रहादि कुर्वतां युगपद्ब्राह्मणत्वाब्राह्मणत्वविरोधः । एताभिरुपपत्तिभिरेतदयं प्रतिपाद्यते । न तपआदीनां

पराधः। को हि तद्वेद, यद्यमुष्मिँल्लोकेऽस्ति वा न वेति। यदि प्रश्नोऽ-
यम्, अक्रियार्थत्वादनर्थकः। अथानवक्लृप्तिः, शास्त्रदृष्टेन विरोधः। अतः
प्रत्यक्षविरुद्धमप्रमाणम् ॥ २ ॥

## तथा फलाभावात् ॥ ३ ॥

गर्गत्रिरात्रब्राह्मणं प्रकृत्योच्यते, शोभतेऽस्य मुखं य एवं वेदेति।
यदि भूतानुवादः, अनर्थकः। अथाध्ययनफलानुवादः, ततोऽसदनुवादः।
कालान्तरे फलं भविष्यतीति चेत्। न ह्यत्र प्रमाणमस्ति। विधिः
स्यादिति चेत्। नैष विधिपरः। द्रव्यसंस्कारकर्मस्विति चिन्तयिष्य-
त्येतदुपरिष्टात्, किं फलविधिरुतार्थवाद इति। इह तु किं भूतानुवा-
दः क्रियार्थो वेति। तेन न फलविधित्वान्निराकृतस्येहानर्थकोऽर्थवा-
दविचार इति। आऽस्य प्रजायां वाजी जायते य एवं वेदेति चो-
दाहरणम् ॥ ३ ॥

## अन्यानर्थक्यात् ॥ ४ ॥

पूर्णाहुत्या सर्वान् कामानवाप्नोति, पशुबन्धयाजी सर्वाँल्लोकानभि-

---

समुदायो ब्राह्मण्यम्। न तज्जनितः संस्कारः। न तदभिव्यङ्ग्या जातिः। किं तर्हि
मातापितृजातिज्ञानाभिव्यङ्ग्या प्रत्यक्षसमधिगम्या। तस्मात्पूर्वेणैव न्यायेन वर्णविभागे
व्यवस्थिते मासेन शूद्रीभवतीत्येवमादीनि कर्मनिन्दावचनान्यथ वा वर्णत्रयकर्महानिप्र-
तिपादनार्थानीति वक्तव्यम्। पूर्ववच्चात्रापि क्लृप्तत्वात्प्रत्यक्षस्य कल्प्येनाज्ञानविधिना सह
विकल्पो न संभवति। अपि च तत्रानुष्ठानात्मकत्वाद्भवेदपि न त्वत्र वस्तुरूपाणामैका-
न्त्येनाविकल्प्यत्वात्। को हि तद्वेदेति पूर्ववद्वेद्याज्ञानसंशयविपर्ययाणामनौपयिकत्वादा-
नर्थक्यम्। निश्चितवेदप्रामाण्यैश्च त्रैविद्यवृद्धैर्निज्ञायमानत्वात्स्वार्थेऽप्यानर्थक्यम्। विक-
ल्पाभावश्चानन्तरोक्तवत् ॥ २ ॥

यदि तावद्गर्गत्रिरात्रब्राह्मणवेदानुमन्त्रणज्ञानकाले विद्यमानयोरेव मुखशोभावाजि-
जन्मनोः संकीर्तनं न धर्मं प्रति प्रमाणम्। अथ त्वविद्यमानयोस्ततः स्वार्थेऽपि। वर्त-
मानापदेशाच्च प्रत्यक्षानुपलब्धिविरोधः, कर्मानुष्ठानयोग्यपुरुषकरणाद्विद्यासंस्कारस्य दीक्षि-
तनीर्थस्नानादिवन्निराकाङ्क्षत्वात्फलविधित्वं निराकरिष्यते। पौनरुक्त्यात्तर्ह्यत्र न विचार-
णीयमत आह तेन फलविधित्वान्निराकृतस्येहाऽऽनर्थक्यार्थवादत्वविचार इति। स्तुत्य-
र्थताऽपि चामर्थ्यस्य नास्तीति व्यवस्थितमेव ॥ ३ ॥

अनन्तरेणैव पूर्णाहुत्यादिफलवचनानि व्याख्यातानि विधित्वाभ्युपेत्यवादेन तु दोषा-

---

१ तै० सं० (७—२—२)। २ (ता० ब्रा० २०—१६—६)

जयति, तरति मृत्युं, तरति ब्रह्महत्यां योऽश्वमेधेन यजते, य उ चैन-
मेवं वेदेति । यदि भूतानुवादमात्रमनर्थकम् । अथ फलविधिः, इतरेषा-
मानर्थक्यम् । न ह्यकृत्वा पूर्णाहुतिमग्निहोत्रादयः क्रियन्ते । न चानिष्ट्वा
अग्नीषोमीयेन सोमेन यजन्ते । न चानयोस्त्यागेऽश्वमेधेन यजन्ते । तद्यथा,
पथि जातेऽर्के मधु संसृज्य तेनैव पथा मध्वर्थिनः पर्वतं न गच्छेयुस्ता-
दृशं हि तत् । अपि चाऽऽहुः । अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेदिति ॥ ४ ॥

अभागिप्रतिषेधाच्च ॥ ५ ॥

न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीत्यप्रतिषेधभागिनमर्थं प्रति-
षेधन्ति । विज्ञायत एवैतदन्तरिक्षे दिवि चाग्निर्न चीयत इति । पृथिवी-
चयनप्रतिषेधार्थं च यद्वाक्यं भवेच्चयनप्रतिषेधार्थमेव तत् । अथाप्रमाणम् ।
नैष विरोधो भवति । कथं तत्प्रमाणं यद्विध्यन्तरमाकुलयेत्, स्वयं

न्तरमभिधीयते । पूर्णाहुतेरग्निसंस्कारत्वात्पशुबन्धस्य च ज्योतिष्टोमोपकारकत्वादश्वमे-
धस्थानस्य च संस्कारत्वान्न तावत्फलविधित्वावसरः । यदि पुनरिष्यते ततोऽन्यानर्थ-
क्यम् । समानफलान्यपि कर्माणि यानि परस्परानपेक्षाणि क्रियन्ते तेषां यथारुच्यनुष्ठा-
नान्नान्यानर्थक्यकरत्वम् । पूर्णाहुतिपशुबन्धयोस्त्वकृतयोरितरकर्मानधिकारात् ।
प्रथमं वा नियम्येतेत्यनेन न्यायेनावाप्ते फले नोत्तरकर्मानुष्ठानप्रयोजनमस्तीति तद्विध्यान-
र्थक्यम् । तथा च दृष्टान्तोऽपि तेनैव पथा मध्वर्थिन इति यत्रान्यः पन्था, पर्वतस्य तत्र
गच्छेयुरपि न तु तेनैव गच्छन्ति । तस्माद्भूयसां लक्षणानां विधीनामनुग्रहाय वरं कल्प्या-
नामेवानर्थकत्वम् । न च फलविशेषार्थिनः पराणि कर्माण्यविशेषश्रवणात् । न हि समा-
नायां श्रुतावप्रत्यक्षः सन् फलविशेषः कर्मविशेषेभ्यः शक्यः कल्पयितुम् । न च स्तुति
रसत्यत्वादिति स्थितमेव ॥ ४ ॥

त्रीण्यपि पृथिव्यादिवचनान्यप्रतिषेधभागिनमर्थं प्रतिषेधन्ति । अन्तरिक्षे दिवि च तावद-
प्राप्तत्वात्प्रतिषेधाविषयत्वम् । अतश्च पर्युदासिनञ्याभावान्न पर्युदासः । अनन्तरिक्षे ह्यदिवि
च पृथिव्यां नित्यं चयनं प्राप्तमिति तद्विधिरनर्थकः । अथापि नित्यानुवादस्तथाऽप्यक्रिया-
र्थत्वमेव । पृथिवीचयनप्रतिषेधपर्युदासौ तु चयनविध्यबाधेनाशक्यौ । बाधे च विध्या-
नर्थक्यम् । विकल्पेऽपि पक्षे बाधः । कामसंयोगाच्चाग्नेरस्त्येव पाक्षिकत्वम् । दुर्बलश्च
प्रतिषेधः । पृथिवीपरत्वे सति चयने कल्प्यत्वात् । एतदेवास्य स्वयमाकुलत्वम् । विध्य-

१ (तै० सं० ५—२—७ ।)

चाऽऽकुलं स्यात् । न चेतव्यं हिरण्यं निधाय चेतव्यमिति॑ ॥ ५ ॥

अनित्यसंयोगात् ॥ ६ ॥

अनित्यसंयोगश्च वेदप्रमाण्ये सति । परं तु श्रुतिसामान्यमात्रमिति परिहृतः । इदानीं वेदैकदेशानामाक्षिप्तानां पुनरुपोद्बलक उत्तिष्ठति, बबरः प्रावाहणिरकामयतेति ॥ ६ ॥

विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥७॥ [सि०]

इदं समाम्नायते वायव्यं श्वेतमालभेत भूतिकामः । वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयतीति ।

---

नन्तरमिव हिरण्यं निधाय चेतव्यमिष्टकाभिरग्निं चिनुत एतच्चाऽऽकुलयेत् । प्ररोचनाबुद्धिरत्र नैवोत्पद्यते ॥ ५ ॥

सर्वोपाख्यानेष्वन्यपरत्वात्सम्भवात्स्वरूपप्रतिपादनादनित्यसंयोगः । स च समस्तवेदप्रामाण्ये सति कथंचिदन्यथा नीयेत । यदा तु यथैव प्रमाणानां मध्ये शब्दस्तत्रापि च वेदः प्रमाणं तथैव वेदेऽपि विधिमात्रं युक्त्या कल्प्यते तदेतदेकदेशवदनित्यार्थैकदेशाप्रामाण्यं यथाश्रुतार्थग्रहणादापन्नं किं निवार्येत । तन्माडिवमादीनामनपेक्ष्यार्थमध्ययनमात्रादेव फलं कल्प्यम् । अथ वा यथैतान्युपेक्षाफलानि तथा तद्विषयं प्रत्यक्षमपि प्रतिपत्तव्यम् । अथ कस्मान्मन्त्रवदयाप्रकरणं प्रयोगकाले न प्रयुज्यते । प्रयोगरूपसामर्थ्याभावात् । न हि मन्त्राणां पाठमात्रेण विनियोगः किं तर्हि तत्सामर्थ्यात् । न चात्र तदस्ति । अथ वा यथा तेषां पूर्वपक्षे कार्यान्तराभावाद्रूपमात्रं ग्रहीष्यते तथाऽस्यास्तु । यत्तु सूत्रकारेणानित्यत्वमुक्तं तत्प्रामाण्यापेक्षया नाप्रयोज्यतया ॥ ६ ॥

पूर्वपक्षोदाहृतेष्वेव वाक्येषु सिद्धान्तेऽभिधातव्ये किमर्थं वायव्यवाक्यमुपन्यस्यते । केचिदाहु. । समानन्यायत्वादिदमपि तत्र तान्यपि चेहोदाहृतानि द्रष्टव्यानीति । यद्यप्येवं तथाऽप्यपूर्वोदाहरणमभिप्रायान्तरमाकाङ्क्षति । तदभिधीयते । पूर्वोदाहृतेषु सर्वत्र स्वार्थासत्यत्वमप्याशङ्क्यते । तत्र क प्रथममेव तत्प्रतिपादनक्लेशमङ्गीकुर्यादिति प्रसिद्धस्वार्थसत्यत्वानां स्तुतिद्वारैकवाक्यभावेन धर्मप्रमाणशेषत्वमात्रप्रतिपत्तिसौकर्यार्थं वायव्यवाक्योपन्यासः । तत्र भाष्यकारा. प्रसिद्धेनैवैकवाक्यत्वेन स्तुत्यर्थोपयोगं वदन्ति । एतावत्त्वत्र प्रथमं वक्तव्यम् । किमर्थं रूपभङ्गो न बलादेकवाक्यता पुरुषार्थत्वं वा वेदस्योच्यत इति । लौकिकवाक्ये तु दृष्टत्वादिति यद्युच्येत तत्राभिधीयते । युक्तं लोके वाक्यार्थस्य प्रमाणान्तरगम्यत्वादन्यथाऽपि कल्पनम् । इह त्वत्यन्तातीन्द्रियत्वाद्यथाश्रुतादीपदप्यन्यथात्वे पौरुषेयत्वमापद्येत । लोकेऽपि च यानि प्रमाणान्तरानवगतार्थानि

---

१ ( तै० स० ७-१-१० ) २ ( तै० सं० २-१-१ )

आप्तप्रत्ययमात्रेण श्रोतृणां प्रमाणानि भवन्ति तेषां नैवान्यथात्वकल्पनं लभ्यते। तत्र केचिद्वदन्ति। "तुल्यं च सांप्रदायिकम्" इति वक्ष्यति तेन समस्तो वेदः पुरुषार्थ इति साध्यते। न ह्यात्मानुपकारिणं सन्तमेनं बुद्धिपूर्वकारिणः पुरुषाः प्रयत्नेन धारयेयुः। यद्यपि च केषांचिदज्ञानं भवेत्तथाऽप्यस्मत्पूर्वातिक्रान्ताऽनेकपरीक्षकप्रमादकल्पना निष्प्रमाणिका। तस्माद्यथा यथा पुरुषार्थता भवति तथा तथा भङ्क्त्वाऽपि रूपं व्याख्यायत इति। न त्वेतदुक्तमिव। कुतः, पुरुषाधीनप्रामाण्यप्रसङ्गात्। यदि ह्यक्षरानुपात्तोऽप्यर्थोऽस्मदादिभिरेवं कल्प्यते। यस्माद्वयं प्रयत्नेन धारयामस्तस्मादस्य पुरुषार्थतेति। तथा सत्यात्मचेष्टितवशेन प्रामाण्यमभ्युपगतं स्यात्। अथ पुरुषान्तरधारणमुच्येत। एवमपि तद्वशेन तैरप्येवमन्यवशेनेत्यनादित्वेऽपि सत्यन्धपरम्परान्यायेन सर्वेषां परप्रत्ययान्न कचित्प्रामाण्यावस्थानम्। सर्वत्र ह्येवमयं पुरुषो वेदेति प्रत्ययो नैवमयमर्थ इति। तेन यद्यपि तेषु तेष्वध्येतृषु नूनं पुरुषार्थं वेदं मन्यन्त इत्यभिप्रायोऽनुमीयते। तथाऽपि निर्मूलत्वात्तन्मात्रेणासिद्धिः। अतो यावद्वेद एव पुरुषार्थतया सकलमात्मानं न प्रतिपादयति तावदप्रमाणम्। तदुच्यते। सकलस्य तावद्वेदस्य स्वाध्यायोऽध्येतव्य इत्यध्ययनभावना विधीयते। तत्र किं भावयेदित्यपेक्षायामध्ययनमित्यागतमपि पुरुषप्रवर्तनाशक्तियुक्तेन विधायकेनापुरुषार्थसाध्यायां भावनायां प्रवर्तनाशक्तिप्रसक्तेस्तदंशान्निराक्रियते। तत्रश्चाध्ययनेनेत्यविरोधात्तन्निवेशश्च करणांशे निविशते। तेन किमित्यपेक्षिते यच्छन्दयत इत्युपबन्धादक्षरग्रहणमित्यापतति। तस्याप्यपुरुषार्थत्वात्तेन किमिति पदावधारणमित्युपतिष्ठते तेनापि पदार्थज्ञानं तेन वाक्यार्थज्ञानं तेन चानुष्ठानमनुष्ठानेन स्वर्गादिफलप्राप्तिरित्येतावति प्राप्ते निराकाङ्क्षी भवति। एवं सर्वविधीनां प्राक् पुरुषार्थलाभात्पर्यवसानम्। न च सहसैव विधिदर्शनात्स्वर्गाद्येव फलं कल्प्यते। योग्यतया हि यस्य यदनन्तरभाविनि व्यापारो लक्ष्यते तदेव तस्य कार्यमित्यवधार्यते। तत्र यदि तावत्तदनुसारेणैव क्रियत्यप्यध्वनि फलमासाद्यते ततो नान्तरा कल्पनमर्हति। पारम्पर्यप्रयोजनेनापि श्रुतविध्युपपत्त्याऽन्यथानुपपत्तिलक्षणार्थापत्त्यनुत्पादात्। यत्र त्वनन्तरं दृष्टं कार्यं न स्वयं पुरुषार्थो नापि पारम्पर्येण तमाप्नोति यथा होमस्याऽऽहवनीयप्राप्तिर्भस्मसाद्भावो वा तत्र तदतिक्रमेण साक्षात्कर्मण एवादृष्टकल्पना। सर्वत्र चैतल्लक्षयितव्यम्। यत्र तु विहिते फलाकाङ्क्षिणि तदनात्मककार्यपरम्परायां सत्यामन्तरालिकं किंचित्क्रतवे पुरुषार्थाय वा चोद्यते तत्र तदेव तत्साधनं पूर्वस्य तु विधेस्तदुपकारार्थतया पर्यवसानम्। यानि तूत्तरविधेः कार्याणि प्राक्तानि साध्यसाधनभावेनाचोदितत्वान्नान्तरीयकत्वेन काष्ठादीनामिव ज्वलनादीनि पूर्वविहितकर्मस्वव्यापारमात्रतया मन्तव्यानि। यत्र तु पारम्पर्यजन्यं न किंचिदन्तरा विधीयते तत्र सर्वाणि स्वव्यापाराहित्य निवेयस्यैव स्वयं फल-

साधनता । तत्र यानि तावत्क्रतुप्रकरणस्य विष्यमाणपुरुषार्थसाधनविधिवाक्यानि तानि तत्प्रतिपादनं यावत्स्वाध्यायाध्ययनविधिना नीयन्ते परतस्तु फलवत्त्वं ज्ञातमेवेति न तद्यावदाप्यन्ते । यानि तु तत्प्रकरणे पठ्यन्ते तान्यपि तथैवाक्षरग्रहणादिक्रमेण स्वार्थावबोधन यावद्गतानि न साक्षात्फलवन्ति भवन्ति । कुत । कथमित्यदृष्टोपायापेक्षेण क्रतुना दृष्टार्थत्वादक्षराद्यभिधानक्रमजना तद्विहितकर्ममात्रमेव हि प्रयोजनद्वारेणोपादीयते नान्यत् । अत प्रधानवाक्यतुल्यान्यङ्गानि भवन्ति । तद्वाक्यानि तु बाह्यनराण्यध्ययनादिवत् । एव प्रोक्षणादिवाक्यानां व्रीह्यादिसंस्कारमात्रफलावसितानां तण्डुलपिष्टपुरोडाशाद्यवदानादिभिर्व्यवहिततरं प्रधानमङ्गत्व । एवमेवानारभ्याधीतारादुपकारकसामवायिकाङ्गवाक्यानि योजयितव्यानि । तत्र स्वेनात्मनाविशेष । यत्प्रकरणस्थत्वादक्षराण्यपूर्वात्प्रधानमर्थैरेव सम्बध्यन्ते यानि त्वाधानादिवाक्यानि तान्यपि फलवत्त्वङ्गाहवनीयादिसंस्कारप्रतिपादनावमायीनि दूरस्थेनैव फलेन निराकाङ्क्षी क्रियन्ते । एतेन क्रत्वर्थकर्तृप्रतिपादनद्वारेणोपनिषदां नैराकाङ्क्ष्यं व्याख्यातम् । मन्त्रनामधेययोस्तु स्वाधिकारे योजना वक्ष्यते । तेन सर्वेषां भावनान्तर्गतनिरपेक्षता । यत्त्वर्थवादानां भावनाशब्दयानन्तर्यानित्वादग्रहणमिति । तत्राभिधीयते । सत्यमतिरिक्त न गृह्यते । अस्ति त्वन्तर्गतिः । कथम् । इह हि लिङादियुक्तेषु वाक्येषु द्वे भावने गम्येते । शब्दात्मिका चार्थात्मिका च । तत्रार्थात्मिकयाऽर्थवादा नापेक्ष्यन्ते शब्दात्मिकया तु ग्रहीष्यन्ते । सा ह्येव प्रवर्तते । स्वाध्यायाध्ययनविधिनेतरे सर्वे विधायका स्वाध्यायपदोपात्तश्चाऽऽत्मा नियुज्यते भावयेदिति । तत्र लिङादीनां प्रयोजककर्तृत्व पुरुषस्य प्रयोज्यस्यानेन किमित्यपेक्षायां पुरुषप्रवर्तनमिति सम्बध्यते । अथ तु योऽयमर्थेत्र लिङादिविषया क्रियोच्यते प्रवर्तयेदिति तत्र किमित्यपेक्षिते पुरुषमित्येव सम्बध्यते । यद्यपि चाचेतनत्वाल्लिङादिष्वेवंविधं प्रयोजकत्वं न सम्भवति तथाऽपि पुरुषस्य प्रयोजकस्य प्रयोजकत्वानुपपत्तेस्तद्गतचैतन्यद्वारेण विधायकानां प्रयोजकता । यदि चैव न कल्प्येत नैवैषां विधायकत्वव्यपदेशो भवेत् । अथ केनेत्यपेक्षिते पूर्वसंबन्धानुभवापेक्षेण विधिविज्ञानेनेति सम्बध्यते । कथमिति प्राशस्त्यज्ञानानुगृहीतेनेति । कुत एतत् । बुद्धिपूर्वकारिणो हि पुरुषा यावत्प्रशस्तोऽयमिति नावबुध्यन्ते तावन्न प्रवर्तन्ते । तच्च विधिविभक्तिरवगमयतीति ता प्राशस्त्यज्ञानमुपलभ्नाति । तच्च पुरुषार्थात्मके फलांशे सर्वस्य स्वयमेवानुष्ठानं भवतीति प्रसिद्धत्वान्न वेदादुत्पद्यमानमपेक्ष्यते । साधनेतिकर्तव्यतयोस्तु प्रवृत्तपुरुषनियोगाच्छास्त्रमेव प्राशस्त्यप्रतिपादनायाऽऽकाङ्क्ष्यते । तत्पुन केन क्रियेतेति साधनापेक्षायां यदि वा कल्पनेन निवर्त्येत प्रशस्तोऽयं भूतिफलत्वात् । अथ वा विधिनैव स्वोपादानाद्विनिर्मुक्तत्वेन विहितत्वादिति । अथ वा विशिष्टशब्दान्वयेनेतिकर्तव्यतायुक्तत्वादिति । तत्र कल्पनाशक्तिसामर्थ्यान्तरानवयोगात्पुनःपुनःप्रयोगो न युज्यते ।

विध्युत्तरकाला चेयमाकाङ्क्षा पूर्वं च फलपदादिनिवेशः । तस्मादपि न तैर्निवर्त्यते । लक्षणा चैतेभ्यः कल्प्यते । न च श्रौतार्थसंभवे सा युक्ता । युगपच्चोभयवृत्तिविरोधात्प्राशस्त्यपरत्वे फलादीनि न स्युः । न ह्यन्यशास्त्रे सत्युपायमात्रत्वेनोपात्तानामैकान्तेन पारमार्थिकत्वमिति वक्ष्यते । अत एव चार्थाद्गम्यमानमन्यपरत्वाच्छब्दानां न प्राशस्त्यं प्रयोजनं भवति । न हि यद्यत्प्रतीयते तत्तच्छास्त्रफलमवसीयते । यथा पूर्वौ धावतीत्युक्ते पश्चात्परो गम्यते तथाऽपि न कार्येण युज्यते तद्वत्प्ररोचना गम्यमानाऽपि न कार्यान्तरोपयुक्तशास्त्रार्थत्वेनावतिष्ठते । अन्यथानुपपत्त्या चेयं तेभ्यः कल्प्येत । सर्वप्रमाणप्रत्यस्तमये चान्यथानुपपत्तिर्भवति । प्रमाणाभावश्च यः सर्वप्रकारं प्रयतमानस्य स प्रमाणम् । तद्यदि केनचिदुपदेशेन वाऽतिदेशेन वा न लप्स्यामहे ततो दर्विहोमन्यायेन विध्युद्देशस्यैव द्वे शक्ती कल्पयिष्यामः । अथ तु केनचिद्दूरस्थेनापि सेत्स्यति ततस्तदनुसारस्तावत्कर्तव्य इत्येवं साकाङ्क्षो विधिरास्ते । तथा वायुर्वै क्षेपिष्ठा देवतेत्येवमाद्यपि स्वाध्यायाध्ययनविधिना पुरुषार्थतयोपनीतं यच्छक्यते तत्कुर्यादित्युपबन्धाच्च सहसैव तेनासंबध्यमानमपुरुषार्थत्वेन च पूर्ववदक्षरादिष्वपर्यवस्यद्भूतान्वाख्यानवाक्यार्थं यावद्भूतम् । तत्रापि तु साकाङ्क्षमेवेति यस्तेन लक्ष्यमाणः साधनानुरूपसाध्योत्पत्तिद्वारेण क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीति प्राशस्त्यरूपोऽर्थः सोऽनन्तरप्रवृत्तविध्युद्देशाकाङ्क्षितत्वात्पुरुषार्थे द्वारतां शक्नोति प्रतिपत्तुमिति परिगृह्यते । सोऽयं नष्टाश्वदग्धरथवत्संप्रयोगः । एवं च न प्ररोचनाऽन्यकृता कर्मार्द्धम् । न चार्थवादपदैः प्रयोजनान्तरं साधनीयमित्याम्नानसामर्थ्यादुभयोर्नियमः । एतेन प्रतिषेधापेक्षितद्वेषसिद्ध्यर्थं निन्दापदसंगतिर्व्याख्याता । तत्रापि हि न द्वेषादृते विहितान्निवर्तते । द्वेषश्चाप्रशस्तप्रत्ययाधीनोत्पत्तिः । न चाप्रशस्तज्ञानं नकारादिभिः पदैः प्रशस्ताप्रशस्तानभिधानेन निषेधतत्फलेतिकर्तव्यतामात्रपर्यवसितैः शक्यमवलम्बितुमित्यनन्यप्रयोजननिन्दावाक्यगम्यमेव भवति । अतश्चैकवाक्यत्वसिद्धिः । नित्यं च विधिप्रतिषेधयोः क्रमेण वाक्यशेषाः स्तुतिनिन्दानिर्णयहेतवो भवन्ति । न हि स्तुतिनिन्दे नाम व्यवस्थिते निन्दारूपासु स्तुतिषु स्तुतिरूपास्वपि च निन्दासु विपर्ययदर्शनात् । यथा वक्ष्यति नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतुमिति । तथा त्रैयम्बकवाक्येषु “ यदभिघारयेद्रुद्राया ऽऽस्ये पशूनभिदध्यात्” इति स्तुतमप्यभिघारणं नाऽऽश्रयिष्यते निन्दितमपि चान्ते विधिदर्शनादभिघारणमेव प्रशस्तं भविष्यति । संदिग्धस्तुतिनिन्दानामपि च प्रक्रमादेव निर्णयो यथा वक्ष्यति न वयं निन्दितानिन्दितान्वाऽसुरान्विद्मः । कदाचिद्धि यस्मादसुरानप्येषा वशीकृत्याऽऽनयति क्रिया तस्मान्नूनं प्रशस्तेति स्तुतिः स्यात् । अथ वा विध्वंसकासुरागमननिमित्तत्वादशोभनेति निन्दा । तत्रान्ते सामविधानात्तत्प्रशंसार्थमृचां निन्देति गम्यते । सर्वत्र

वायुर्वै क्षेपिष्ठा देवतेत्यतो यद्यपि क्रिया नाऽवगम्यते क्रियासंबद्धं वा किंचित्। तथाऽपि विध्युद्देशेनैकवाक्यत्वात्प्रमाणम्। भूतिकाम इत्यै

---

च किंचित्पदं स्तौति निन्दति चेतराणि त्वेकवाक्यतया तादर्थ्यं प्रतिपद्यन्ते। यत्रापि तादृशं पदं न स्यात्तत्रापि लक्षणा लक्षितलक्षणा वाऽन्यथानुपपत्तेराश्रयणीया। विधिप्रतिषेधयोश्च स्तुतिनिन्दाभ्यामविनाभावादन्यतरदर्शनेनेतरदनुमाय वाक्यं पूरयितव्यम्। एवं भारतादिवाक्यानि व्याख्येयानि। तेषामपि हि श्रावयेच्चतुरो वर्णानित्येवमादिविध्यनुसारेण पुरुषार्थत्वान्वेषणादक्षरादि व्यतिक्रम्य धर्मार्थकाममोक्षाधर्मानर्थेषु रससारसाध्यसाधनप्रतिपत्तिरुपादानपरित्यागाङ्गभूता फलम्। तत्रापि तु दानराजमोक्षधर्मादिषु केचित्साक्षाद्विधयः केचित्पुनः परकृतिपुराकल्परूपेणार्थवादाः। सर्वोपाख्यानेषु च तात्पर्ये सति श्रावयेदिति विधेरानर्थक्यात्कथंचिद्गम्यमानस्तुतिनिन्दापरिग्रहः। तत्परत्वाच्च नातीवोपाख्यानेषु तत्त्वाभिनिवेशः कार्यः। वेदप्रस्थानाभ्यासेन हि वाल्मीकिद्वैपायनप्रभृतिभिस्तथैव स्ववाक्यानि प्रणीतानि। प्रतिपाद्यानां च विचित्रबुद्धित्वाद्युक्तमेवैतत्। इह केचिद्विधिमात्रेण प्रतिपद्यन्ते। अपरे सार्थवादेनापरेऽल्पेनार्थवादेनापरे महता। सर्वेषां च चित्तं ग्रहीतव्यमित्येवमारम्भः। तत्र तु केचिद्विधिप्रतिषेधाः श्रुतिमूलाः केचिदर्थसुखादिषु लोकमूलास्तथाऽर्थवादाः केचिद्वैदिका एव केचिल्लौकिका एव केचित्तु स्वयमेव काव्यन्यायेन रचिताः। सर्वे च स्तुत्यर्थेन प्रमाणम्। ये तु वाक्यशेषत्वं न प्रतिपद्यन्ते तेऽपि केचित्स्वयमेव श्रूयमाणगन्धमादनादिवर्णकप्रभृतयः प्रीतिं जनयन्ति। ये तु युद्धवर्णकास्ते सर्वेषां शूराणां भीरूणां चोत्साहकराः पार्थिवानामुपयुज्यन्ते। यत्र तु न किंचिद्दृष्टमुपलभ्येत तत्र विशिष्टदेवतादिस्तुतिद्वारमदृष्टं कल्पनीयमित्येषा दिक्। विध्युद्देशेनैकवाक्यत्वादिति। केचिदाहुः। किमर्था स्तुतिरिति चेत्कथं रोचेत नोऽनुष्ठीयेतेत्येवं स्तुतिनिन्दाभ्यां प्रवृत्तिनिवृत्तिप्रतिपादनं लिङादिभिश्चाभिधानमतस्तुल्यार्थत्वम्। न च तुल्यार्थानां समुच्चयः। तत्र ये तावदर्थवादरहिता लिङादयस्तद्रहिताश्चार्थवादास्तेषां यथाविषयं व्यवस्थितं निवर्तकत्वं प्रवर्तकत्वमविरुद्धम्। यत्र तु द्वयसंनिपातस्तत्रान्यतरेण कृतार्थत्वादवश्यावहेयेऽन्यतरस्मिन्भूयसामनुग्रहो युक्तः। स्यमेदेवं तुल्यार्थे इतिवद्विधिरित्यय परित्यज्यते। केवलप्रकृतिप्रयोगाभावात्तदनुग्रहार्थं प्ररोचनालक्षणविधित्वानुवादेन प्रवर्तते। यथा राजादुदवसाय पृष्ठ्यशमनीयेन यजेरान्निति वत्वाऽन्यथासिद्धप्रवृत्त्यनुवादकत्वं वक्ष्यते। तस्माद्वायव्यं श्वेतमालभेत इत्येतावन्मात्रं विव

---

१ धर्मादीनां साध्यानां साधनप्रतिपत्तिरिति विग्रहः। धर्मादिचतुष्टयसाधनप्रतिपत्तिरुपादाना ङ्गभूता। धर्मादिचतुष्टयसाधनप्रतिपत्तिः परित्यागाङ्गभूतेत्यर्थः।

थमन्तो विध्युद्देशः। तेनैकवाक्यभूतो वायुर्वै क्षेपिष्ठा देवतेत्येवमादिः। कथमेकवाक्यभावः। पदानां साकाङ्क्षत्वाद्विधेः स्तुतेश्चैकवाक्यत्वं भवति। भूतिकाम आलभेत। कस्माद्यतो वायुः क्षेपिष्ठेति। नायमभिसंबन्धो विवक्षितो भूतिकामेनाऽऽलब्धव्यमिति। कथं तर्हि, आलभेत। यतस्ततो भूतिरिति भिन्नाविभावर्थावुभयाभिधाने वाक्यं भिद्येत।

किमर्था स्तुतिरितिचेत्। कथं रोचेत नोऽनुष्ठीयेतेति। ननु प्राक् स्तुतिवचनादनुष्ठानं भूतिकामान्तात्सिद्धं, स्तुतिवचनमनर्थकम्। न हि। यदा स्तुतिपदासंनिधाने तदा पूर्वेणैव विधिः, यदा स्तुतिपदसंबन्धो न तदा भूतिकामस्याऽऽलम्भो विधीयते। यथा पटो भवतीति पट उत्पद्यत इत्यर्थः। निराकाङ्क्षं च पदद्वयम्। यदा च तस्मिन्नेव रक्त इत्यपरं श्रूयते तदा रागसंबन्धो भवतीत्यर्थः। भवति च रक्तं प्रत्याकाङ्क्षा। एवं यदा न स्तुतिपदानि, विधिशब्देनैव तदा प्ररोचना, यदा स्तुतिवचनं तदा स्तवनेन। नन्वेवं सति किं स्तुतिवचनेन यस्मि-

---

क्षितम्। स एव च विध्युद्देशः फलादिसंबन्धोत्तरकालं स्तूयत इत्येतद्भूतिकाम इत्येवमन्तो विध्युद्देश इत्यनेन कथ्यते। अन्यथा पुनरुद्देशग्रहणमनर्थकमेव स्यात्. सूत्रोक्तेन तु विधिनैकवाक्यत्वं न संभवतीत्यतिक्रम्य तद्विषयः परिगृह्यते। तथ चाऽऽह—नायमभिसंबन्ध इति। विधिविधेयसंबन्धनिषेधेन स्तुतिस्तुत्यसंबन्धं विवक्षितं वदति यतस्ततो भूतिरिति। सैव च भूतिनिमित्तस्य योजना। भिन्नाविभावेति पूर्वोक्तौ संबन्धावभिधत्ते। किमर्था स्तुतिरिति चोदिति। प्रत्ययश्चेदुत्पन्नस्तेनाविधीयमानस्य किं स्तुत्येति। अथ वा यदनया साध्यते तत्प्रत्ययेनैव सेत्स्यतीति मनसि कृत्वा वदति। आचार्यस्तूत्पन्नेऽपि प्रत्ययेऽर्थवादादेव तदर्थावाप्तिमुभयसंभवे चार्थवादानुग्रहं मत्वाऽऽह—कथं रोचेतेति। इतरः प्रश्नाभिप्रायं विवृणोति। प्रागेव सिद्धेः स्तुतिवचनमनर्थकमिति। नहीति ग्रन्थच्छेदः। सर्वत्रावान्तरवाक्यानि महावाक्येष्वप्रमाणं महासंख्यास्विवावान्तरसंख्या भवन्ति। तान्येव तु यदा केवलानि प्रयुज्यन्ते तदा निरपेक्षत्वाद्भवन्ति प्रमाणम्। यथा पटो भवतीति। न च कदाचिदेतावन्मात्रेण समाप्तैर्नैराकाङ्क्ष्यदर्शनात्सर्वत्र नैराकाङ्क्ष्यम्। योग्यपदान्तरानुच्चारणेन हि सर्ववाक्यानि पर्यवस्यन्ति। इतरथा पुनः श्रुतपदातिरेकेणापि निपुणदृशां भवत्येवापेक्षा। सा चानुपकल्प्या निवर्तते। तथा ■ यत्रोपकल्प्यन्ते तत्रैकवाक्यतां गमयिष्यन्ते। अन्यथा ह्यसौ तदुच्चारणेऽपि न स्यात्। तदिह महावाक्येन विनाऽवान्तरवाक्यं प्रमाणं तदभावे तु नेत्येतदाह—यदा न स्तुतिपदानीति। नन्वेवं सतीति। यत्र महावा-

न्नस्त्यविधायकं मा भूत्तत् । तदभावेऽपि पूर्वविधिनैव प्ररोचयिष्यत इति । सत्यं, विनाऽपि तेन सिध्येत्प्ररोचनम् । अस्ति तु तत्, तस्मिन् विद्यमाने योऽर्थो वाक्यस्य सोऽवगम्यते स्तुतिः प्रयोजनं तयोः । तस्मिन्नविद्यमाने विधिना प्ररोचनमिति । ननु सत्स्वपि स्तुतिपदेषु पूर्वस्य विधिस्वरूपत्वाद्विधिरभिप्रेतः स्यान्न विवक्षयैव स्तुतिपदसंबन्धः । आह—स्तुतिपदानि ह्यनर्थकान्यभविष्यन्साकाङ्क्षाणि । भवन्त्वनर्थकानीति चेत् । न गम्यमानेऽर्थेऽविवक्षितार्थानि भवितुमर्हन्ति । योऽसौ विध्युद्देशः, स शक्नोति निरपेक्षोऽर्थं विधातुं, शक्नोति च स्तुतिपदानां वाक्यशेषी भवितुम् । प्रत्यक्षश्च वाक्यशेषभावः । अतोऽस्माद्विधेः स्तुतिमवगच्छामः । ननु निरपेक्षादपि विधिमवगमिष्यामः ।

---

क्यावान्तरवाक्ययोः फलं भिद्यते यथा पटभवनराजभवने, तत्रैव युक्तमिह त्वनतिरिक्तार्थस्य सतः त्रिमवान्तरवाक्यनिराकरणमेव महावाक्यस्य युक्तं फलम् । तदेतदाह—**यस्मिन् सत्यविधायकमवान्तरवाक्यं भवति मा भूत्तन्महावाक्यमिति । सत्यं विनाऽपि तेनेति ।** यो नाम वेदस्य कर्ता स्यात्स एव पर्यनुयुज्येत लघुनोपायेन सिद्धे किं महावाक्यमाश्रयसीति । तदभावान्न पर्यनुयोगः । परिहारपथग्रामगमनवच्च श्रमातिरेकमात्रं स्यान्नार्थानवाप्तिः । दृष्टं चैवंजातीयकेषु गौरवाश्रयणम् । यथा तमेवार्थं स्वमित्येतावता सिध्यन्तमाकाशप्रभृतिभिरभिपठन्ति न च आलस्यं लभन्ते तथाऽत्र लिङादिभिरपि सिध्यन्तमर्थवादेभ्यो गृह्णन्ति । शक्यते चेदमिह वक्तुं यथैवानेकोपायप्रसक्ते मन्त्रेण स्मृतं क्रियमाणमभ्युदयकारि भवति तथाऽन्येनापि विधिसिद्धावर्थवादप्रतिपादितविधिविहितमिति । **ननु सत्स्वपि स्तुतिपदेष्विति ।** यत्र लघुमुपायमनुपादाय गुरूपाय आश्रीयते तत्र तथाऽपि भवेदत्र तु पूर्वमेव लघुतर आश्रितः समर्थतरश्च तन्मात्रयैव प्रयुक्ते सशब्दे नाऽऽकाङ्क्षाशाठ्यस्तदानीमेव प्रयुज्यन्ते तथाऽत्र विधौ सति स्तुतिर्नाऽऽश्रयितव्येति । तत्रोत्तरसाकाङ्क्षत्वात्स्तुतिपदान्यनर्थकानि स्युरिति । भवन्त्विति चेत् । नोक्तेन न्यायेनार्थवत्त्वादविवक्षितार्थता युक्तेति । द्वयमपि हि प्रत्यक्षादेकवाक्यत्वादर्थवादानुग्रहो युक्त इति । ननु सत्स्वपीत्यनेन गतार्थत्वान्ननु निरपेक्षादित्ययमवाच्यम् । तदुच्यते । तत्रार्थवादपरित्यागायोक्तमिदानीं तु भवतु नाम स्तुतिसंबन्धः समस्तस्य पूर्वस्यापि तु स्वरूपावगतो विधिसंबन्धो न बाधितव्य । अथास्य क्वचिदपि शक्तिरपह्रियते तत्र प्रतिप्रसवहेत्वभावात्सर्वत्राशक्तत्वप्रसङ्ग इति । तदभिधीयते । भवतु पूर्वस्य विधिशक्तिर्न त्विष्ट क्वचिद्वाधितेत्यन्यत्रापि बाध्यते । कदा

भवत्वेवम् । नैवं सति कश्चिद्विरोधः, किंत्ववाक्यः स्तुतिपदसंबन्धे सति विध्यर्थो विवक्षितुम् । वाक्यं हि संबन्धस्य विधायकं, द्वौ चेत्संबन्धौ विदध्याद्भूतिकाम आलभेत, आलम्भेन चैष गुणो भविष्यतीति । भिद्येत तर्ह्येवं सति वाक्यम् । अथ यदुक्तं न क्रिया गम्यते न तत्संबद्धं वा किंचिदिति । स्तुत्यर्थेन विधीनां स्युः । स्तुतिशब्दाः स्तुवन्तः क्रियां प्ररोचयमाना अनुष्ठातॄणामुपकरिष्यन्ति क्रियायाः । एवमिमानि सर्वाण्येव पदानि कंचिदर्थं स्तुवन्ति विदधति ।

---

चिदाविर्भूतेति सर्वत्राऽऽविर्भवति । यत्र त्वर्थान्तरस्तुत्यादि नोपादीयते तत्राऽऽविर्भूता शक्तिः कार्यमारभते । यत्र त्वपवादभूतशक्त्यन्तराभिव्यक्तिस्तत्र वाक्यभेदप्रसङ्गात्पूर्वा तिरोधीयते । प्रश्नोत्तरत्वेनायं पूर्वोक्त एव वाक्यभेदः परामृश्यते । तस्मादैकार्थ्यात्प्ररोचनयैवात्र विधिरिति । प्ररोचयमाना अनुष्ठातॄणामिति । "हव्यपीनां प्रीयमाणः" इति संप्रदानत्वं कस्मान्न भवति । प्ररोचयतेः प्रकृत्यन्तरत्वादिति चेन्न । तत्रापि रुचिसंबन्धानपह्नवात् । अथ सामान्यविवक्षया षष्ठ्युच्यते । साऽप्युपात्ते विशेषे दुर्लभा । तस्मादनुष्ठातॄणां क्रियाया इति संबन्धः केभ्यः प्ररोचयमाना इत्यपेक्षितेऽर्थात्तेभ्य एवेति गम्यते । अथ चानुष्ठातॄणामुपकरिष्यन्तीति संबन्धः । क्रियाया इति पञ्चमी क्रियातोऽपि हि त एव प्ररोचका इति । अथ वा क्रियार्थमिति षष्ठ्यर्थः कल्प्यः । कंचिदर्थं स्तुवन्तीति शत्रन्तं कंचिदिति विधेयं तत्संबन्धिनं वा कंचिद्वा विदधति क्रियां तत्संबन्धिनं वा तत्र स्तुतिद्वारेणेत्युपपन्नं प्रत्ययोद्धारेणार्थवादप्रामाण्यम् । इदं तु व्याख्यानं नानुमन्यन्ते । यदि हि प्रत्ययोत्स्तुतिः स्यात्ततः केन स्तुतिराकाङ्क्ष्येत न तावच्छब्दभावनाकर्मभावोऽस्ति । याऽपि कस्मादित्यपेक्षा कल्प्येत साऽपि विधीतिकर्तव्यताविषयैव तदनुग्रहार्थत्वात् । शब्दान्तरव्यपदेशमात्रं तु भिद्यते । साऽपि च नियुज्यमानस्यैव पुरुषस्य भवति न क्रियामात्रश्रवणात् । न हि वायव्यश्वेतालम्भ इत्युक्ते कर्तव्यताऽकर्तव्यतोक्तेः [illegible]क् प्रशस्तोऽप्रशस्त इति वाऽपेक्ष्यते । तदनपेक्षितं च श्रुतिमात्रेणैव वदन्तो नार्थवादाः प्रतिपादयन्ति । न च धात्वर्थेन सह कस्यचित्संबन्धोऽपेक्षा वा विद्यते । सर्वस्य भावनागामित्वात् । भावना तु प्रत्ययोद्धारेणापनीता किमपेक्षेत । तस्माद्वृत्ताशब्दयोच्छेदान्न भूतिः फलं न यागः करणं न वेतिकर्तव्यता काचित्स्यात् । इष्टेऽपि च प्राशस्त्ये कस्मादित्यनपेक्षितत्वात्प्रशस्तोऽयमित्येतावन्मात्रेऽवधृते प्रशस्तत्वादित्यनुच्यमाने कर्तव्यताबुद्धिर्नैव स्यात् । भवन्ती वा तन्निष्ठा भवेत्प्रशस्तोऽयं कर्तव्यः पटो रक्तः कर्तव्य इतिवत् । अकल्पिते विधावानर्थक्यमेव स्यात् । प्रत्ययपक्षं च विधिमुत्सृज्य पारम्पर्यलक्षणयाऽर्थवादेभ्यः परिगृह्णन इत्यपूर्वा

चैतत्कल्पनावसरोऽस्त्यन्यत सिद्धत्वात् । अनुक्तो हि सन्नर्थवादादेव विधिः कल्प्येत यद्य न्यथा नोपपद्येत । प्रत्यक्षप्रत्ययोपपन्नत्वान्नान्यथानुपपत्तिस्तथाऽर्थवादोऽपि यद्युपाख्याना- दिवद्विध प्ररोचनाया निष्प्रयोजनः स्यात्ततो दूरं नीयेत । यथोक्तेन तु न्यायेन प्ररोचनोपयो गान्नान्यत्र गच्छतीत्यवश्यकर्तव्या च प्ररोचना यद्यन्यत सिध्येत्ततोऽर्थवादान्नापेक्षेत । साऽपि त्वनन्यगतिकत्वात्तमेवाऽऽश्रयति । सर्वत्र च वैदिकेऽर्थेऽर्थापत्त्या शब्दः कल्प्येत ततोऽर्थसि द्धिस्तेन प्ररोचनया विधिशब्दः कल्प्येत नार्थः, तत्कल्पनावेलायां च यथेन्द्रवाय्वादिवा क्येषु सोमेन यजेतेत्यस्मिन्नुपतिष्ठमाने नान्ययजिकल्पना तथैवाऽऽलभेतेत्यनेनान्यानुमानप्र तिबन्धः । तुल्यार्थयोश्च बाधविकल्पौ भवतः प्रत्ययार्थवादयोः पुनरत्यन्तभिन्नानुग्राह्यानुग्रा हकार्थविषयत्वेनार्थभेदात्समुच्चय इत्येकवाक्यता । यदि च प्रत्यययोस्ख्यातिः स्यात्ततः कर्तृ सङ्ख्योपग्रहविशेषावगतक्रियाफलस्वार्थपरार्थत्वाद्युच्छेदप्रसङ्गः । स्यादेतत् । विधित्वमात्र- मविवक्षयित्वा शेषविवक्षया कर्तृसङ्ख्यादिलाभ इति । एतच्चाशक्यं यतस्तदर्थमप्युपात्त प्रत्ययः सामर्थ्याद्विधित्वं वदत्येव । प्रतीतस्य च दुःखेनाविवक्षा विध्यसंस्पर्शो वा ग्रहैकत्ववदनुवादत्वं वैन्द्रियकामहोमवत् । न तावद्विधेरविधित्वं नाम किंचित् । नाप्यनुवादस्तस्यामवस्थायामप्राप्ते । न ह्येवं संभवति योऽयं वायव्यश्वेतालम्भः कर्तव्यः स प्रशस्त इति । भवति त्वेव कर्तव्यः प्रशस्तत्वादिति । यत्तूद्वसानीयवदिति तत्रापि क्त्वावशेन विधिप्रतिषेधावनपेक्ष्य क्रियामात्राक्षेपाद् विधित्वमाश्रितमेवेत्यदृष्टान्तता । यदि च विध्यविवक्षा स्यात्ततः प्रत्यासत्तेर्धात्वर्थ एव साध्यांशे निपतेदिति निष्फलत्वं स्यात् । तस्मात्सूत्राविनाशेनैव विधिनैकवाक्यत्वम् । तथा च भाष्यकारः । सविधिक मेव भूतिकाम इत्येवमन्तो विध्युद्देश इत्याह । अन्यथा धात्वर्थ इत्येवावक्ष्यत् । तत्रास्य क्रियामात्रतया वि युद्देशत्वं शक्यते वक्तुम् । तस्मात्प्रत्यय एव विध्यविधायित्वा द्विध्युद्देशः । विध्यर्थेन त्वेकवाक्यत्वासंभवात्सूत्रातिरेकेणोद्देशग्रहणम् । भूतिकाम इत्येवमन्त इति च फलादिसंगत्युत्तरकालं स्तुत्यवसरप्रदर्शनार्थम् । नन्वेवं सति वर्त मानापदेशेष्वनाकाङ्क्षणादर्थवादा न संबध्येरन् । एवमेवैतत् तथाऽपि तु प्रमाणान्तर प्राप्त्यभावात्कश्चित्प्रयोगवचनेन कश्चित्पञ्चमलकारेण । अथवा श्रुतवर्तमानान्यथानुप पत्त्या कल्पिते विधित्वेऽर्थवादसंगतिः । यत्रापि केवलार्थवाददर्शनादेव विधित्वं तत्रा प्यन्यथानुपपत्तिमात्रं शरणम् । संभवन्त्या तु गत्या नातिगौरवं युक्तमिति । यस्त्वस्मि न्पक्षे वाक्यभेदः सम्बन्धद्वयाश्रयणादिति स आलभेत प्रशस्तत्वादित्येवमसंप्रतिपत्ते परिहृतः । विधीयमानस्यैव हि स्तुत्याकाङ्क्षेत्यवैरूप्यात्तदुपपन्नं तत्त्रयम् । यदि चैवंविधे सम्बन्धभेदे वाक्यं भिद्येत ततो भाव्यसाधनेतिकर्तव्यतासम्बन्धैरपि भिद्येत ।

अतः प्रमाणमेवंजातीयकानि, वायुर्वै क्षेपिष्ठा देवतेति ॥ ७ ॥

तुल्यं च सांप्रदायिकम् ॥ ८ ॥

तस्मान्नायमभिसंबन्धो विवक्षित इत्यादिभाष्यमेवं नेतव्यम् । न पूर्वेणैव साङ्गविधि-पर्यवसानं विवक्षितम् । विधिस्यादिद्वारप्ररोचनाकल्पनायामतिगौरवनिमित्ताद्वाक्यभेदात् । किमर्था स्तुतिरिति । पूर्वेणैव प्ररोचनाऽपि सिद्धेत्यभिमानात् । कथं रोचेतेति—विध्यनुग्रहकथनम् । ननु प्रागिति—पूर्वाभिप्रायविवरणम् । न हीति । स्तुत्यभावे तस्य शक्तिद्वयमगत्याऽऽश्रीयते न संभवन्त्यामपीत्येतच्च तदा भूति-कामस्य विधिः समाप्यत इत्याह—यथा पट इति । गतार्थम् । विधि-शब्देन तदा प्ररोचनेति विवृतं कार्यनानात्वं विधिस्तुत्योः । नन्वेवमिति । अस्ति चेत्प्ररोचयितुमपि शक्तिः कस्मादन्यदपेक्ष्यत इति । सत्यमिति । तस्माद्विद्यमाने तस्मिन्नविद्यमाने योऽर्थः स गम्यते । कश्चासौ । स्तुतिः प्रयोजनं तयोः । न तस्यैव पूर्वस्यापीत्यर्थः । स्तुतिविषयोपकल्पनाच्च विधेरपि स्तुतिप्रयोजनव्यपदेशः । न हि निर्विषया स्तुतिरुपपद्यते । अर्थवादाभावे त्वगत्या केवलोऽपि गौरवमङ्गीकरिष्यति । ननु सत्स्वपीति । पूर्ववदेव व्याख्येयम् । अतोऽस्माद्विधेरिति । इदानीं षष्ठी, वाक्य-शेषसंबन्धादित एवास्य स्तुतिमवगच्छामो न स्वत इत्यर्थः । ननु निरपेक्षादपीति । यदि कश्चिदनितिकर्तव्यताकस्य विधेः प्रवर्तनशक्तिः कस्मादन्यदपेक्षते तेन सत्स्वप्य-नादरः स्यात् । आचार्यस्तु सोपहासमाह यत्रासौ केवलः प्रयुज्यमानो निरपेक्षस्तत्र भवतु न कश्चिद्विरोधः । इह तु न तत्संभवः साकाङ्क्षैः पदान्तरैराक्षिप्तत्वात् । वाक्यं ह्येकमेकस्यैव संबन्धस्य विधायकं तत्र यदि द्वौ विध्युद्देश एव कुर्यात्तथा सति भिद्येत । विध्युद्देशोत्थापितानामेवैष हि गुणो भवतीति प्ररोचनां दर्शयति । तस्माद्विधिनैकवाक्य-त्वात्तदनुग्रहेणार्थवन्तोऽर्थवादा इति ॥ ७ ॥

चशब्दव्याख्यानार्थं परिचोदनोपन्यस्ता । आनर्थक्यमेवास्त्विति तत्रैव । कुतः । पूर्वोक्तेन न्यायेनार्थस्यावगम्यमानत्वात् । अथ वा तत्रेत्यवच्छिद्यैवमर्थावगमादित्युक्त-

१ नायमभिसंबन्धो विवक्षित इत्यादि, भिद्येतेत्यन्तभाष्यस्यायमर्थः—भूतिकाम आलभेत कस्मात्ततो वायुः क्षेपिष्ठेत्यनेन यः सार्थवादकस्य विध्युद्देशस्य विधिस्तुतिसंबन्धरूपो विशिष्टोऽर्थो दर्शितः, नायं विध्युद्देशमात्रेण विवक्षितः किं तु सार्थवादकेनेति । तर्हीत्यर्थं भिद्येतेत्यनेनान्वेति । आलभेतेति प्रथमप्रतीकेन विध्युद्देशोपलक्षणम् । यतस्ततो भूतिरित्यर्थवादस्योपलक्षणम् । तथाच विधेयविशेषणरूपाभिधाविभावयो विध्युद्देशार्थवादाभ्यां प्रतिपाद्यमानौ यद्येकेन विध्युद्देशेन प्रतिपि-पादयिषितौ तर्हि गौरवलक्षणो वाक्यभेद इति । २ यतो वाक्यशेषोऽस्तो विधेः—विधिसंबन्धिनोऽ-स्माद्वाक्यशेषाद्विधेयस्य स्तुतिमवगच्छाम इत्यर्थः । अत्वनेन भाष्येण विधिरेव स्तुतिप्रतिपादक इत्यु-पसंहियते । पूर्वग्रन्थविरोधापत्तेरिति ।

अथोच्येत—प्राक् स्तुतिपदेभ्यो निराकाङ्क्षाणि विधायकानि विधिस्वरूपत्वात्। स्तुतिपदानि तु प्रमादपाठ इति। तन्न। एवमर्थावगमात्। तुल्यं च साम्प्रदायिकम्। संप्रदायः प्रयोजनं येषां धर्माणां सर्वे ते विधिपदानामर्थवादपदानां च तुल्याः। अध्यायेनाध्यायते गुरुमुखात्प्रतिपत्तिः। शिष्योपाध्यायता च सर्वस्मिन्नेवंजातीयकेऽविच्छिन्नार्थे तुल्यमाद्रियन्ते। स्मरणं च दृढम्। अतो न प्रमादपाठ इति॥ ८॥

**अभागि चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥ ९ ॥**

अपि च येषाऽनुपपत्तिरुक्ता शास्त्रदृष्टविरोधादित्येवमाद्या सा, सोऽ-

---

प्रकारपरामर्शः। किं च तुल्यं चेति योजना। सम्प्रदायानुग्रहार्थं धर्मजातम्। तस्य तदर्थस्मरणात्। स्वर्गाद्यसंयोगाच्च। न चास्य प्रयोजनवत्सन्निहिताध्ययनपरित्यागेनान्यार्थत्वे प्रमाणमस्ति। सम्प्रदायाङ्गत्वेऽपि चाविघ्नस्याऽऽकाङ्क्षितत्वात्। तादर्थ्यस्मरणाच्चाविघ्नार्थत्वम्। न ह्यन्यत्कल्प्यमानं स्वाध्यायेतिकर्तव्यतानुगुणं भवति। यदि तावत्स्वर्गः कल्प्येत ततः पुरुषार्थत्वमेवाऽऽपद्यते। अथ पुनः क्रतुफलसिद्धिरेव पठिते वेदे भवतीति। एवमपि दूरस्थोपकारितैव। तस्मात्सम्प्रदायस्याक्षरग्रहणं साधयतो नियमजातमनुग्राहकम्। न च निष्प्रयोजनस्याविघ्नेन कार्यं वरं तादृशस्य विघ्नमेवोत्पन्नं येन क्लेशोऽपि तावन्न स्यात्। यतस्ते सप्रयोजनैर्विधिवाक्यैस्तुल्यमेवाऽऽद्रियन्ते। तेनावश्यं तद्वदेव प्रयोजनवन्त्यपीति। नियमस्मृतेश्च वेदमूलत्वाद्वेदकृत एवायमादरः। स च प्रयोजनवत्त्वादृते नोपपद्यत इति प्रयोजनवत्त्वमपि सामान्येनानुमायार्थाद्वा कल्पनैकदेशत्वादिति। सामर्थ्यतोऽर्थवादानां स्तुतिर्नाम प्रयोजनविशेषो लभ्यते। स्मरणं च दृढमित्येतदेवाऽऽह। अथ वा यदेवेदं ग्रन्थस्मरणं परिपालनात्मकं तेनाध्येतृपुरुषप्रयोजनवत्त्वाभिप्रायप्रतिपत्तिपूर्वकं प्रयोजनवत्त्वानुमानम्। सभायने च कुतश्चिद्वाक्यादियं प्रतिपत्तिरिति नाप्रमाणम्। अन्यथा हि निष्प्रयोजनान्येतानीति केचित्परित्यज्यार्थवादान्विधिमात्रं प्रतिपद्येरन्। तत्र दृढस्मरणमेतेषु न स्यात्। अस्ति तु तत्। तस्मान्न प्रमादपाठः। ततश्चार्थवन्त इति। तुल्यं च साम्प्रदायिकमित्यस्यापरा व्याख्या। सम्प्रदायः प्रयोजनं यस्य वाक्यस्य येन प्रवर्तितः सम्प्रदायस्तस्मात्स्वाध्यायोऽध्येतव्य इत्येतस्मात्स्वाध्यायत्वाविशेषाद्विध्यर्थवादयोस्तुल्यमतः प्रागुक्तेन न्यायेन प्राक् पुरुषार्थसिद्धेरवस्थानं न लभ्यत इति शास्त्रानुसारेण स्थितमर्थवादानां स्तुत्यर्थत्वमिति ॥ ८ ॥

उक्तदोषपरिहारोऽन्यः परः। शास्त्रदृष्टविरोधिका याऽत्रानुपपत्तिर्विधिकल्पनायामुक्ता

रोदीदित्येवमादिषु न प्राप्नोति । कुतः । प्रयोगे हि स्तेयादीनामुच्यमाने विरोधः स्यात् । शब्दार्थस्त्वप्रयोगभूतः । तस्मादुपपद्यते—स्तेनं मनोऽनृतवादिनी वागिति ॥ ९ ॥

## गुणवादस्तु ॥ १० ॥

यदुक्तं विधेयस्य प्ररोचनार्था स्तुतिरिति । तदिह कथमवकल्प्येत यत्रान्यद्विधेयमन्यच्च स्तूयते । यथा वेतसशाखयाऽवकाभिश्चाग्निं विकर्षतीति वेतसावके विधीयेते । आपश्च स्तूयन्ते—आपो वै शान्ता इति । तदुच्यते । गुणवादस्तु । गौण एष वादो भवति, यत्संबन्धिनि स्तोतव्ये संबन्ध्यन्तरं स्तूयते । अभिजनो ह्येष वेतसावकयोः । ततस्ते जाते । अभिजनसंस्तवेन चाभिजातः स्तुतो भवति । यथाऽस्मकाभिजनो देवदत्तोऽश्मकेषु स्तूयमानेषु स्तुतमात्मानं मन्यते । एवमत्रापि द्रष्टव्यम् ।

---

तामस्मत्पक्षमप्राप्तां मन्यामहे । अथवेदं स्तुतिव्याख्यानं तामनुपपत्तिमप्राप्तमिति व्याख्येयं येषां ह्रस्वः पाठः । प्रयोगे ह्यनुष्ठाने रोदनवपोत्खननहिङ्मोहस्तेयानृतवादादीः कल्प्यमाने विरोधः स्यात् । अस्माकं तु पुनर्य एषां शब्दानां श्रौतोऽर्थः स नैव विवक्षितः । न चाध्याहारादिभिर्विधिः किं तर्हि स्तुतिमात्रं विवक्षितम् । न च तद्विरुध्यते तस्मादुपपद्येत । अथ वा शब्दार्थस्त्विति विधायकशब्दानुग्रहार्थः सन्नयमर्थवादो न स्वार्थानुष्ठानेन संबध्यते प्रयोगमप्राप्तोऽप्रयोगभूतस्तस्मादुपपद्येत । त्रयोऽत्र पाठाः । अप्राप्तां चानुपपत्तिमित्यत्र मन्यामह इति वाक्यशेषः । अप्राप्तं चानुपपत्तिमित्यपरस्तत्रास्मद्व्याख्यानमित्यध्याहारः । अप्राप्ता चानुपपत्तिरित्यपरस्तत्रास्मत्पक्षे विज्ञेयेति ॥९॥

यत्र तावद्विधिस्तुत्योरेकविषयता तत्रोपपद्यतां नाम, संबन्धे विषयनानात्वे तु कथमिति । गुणादित्याह । यत्क्रियायाः संबन्धिनि स्तोतव्ये तत्संबन्ध्यन्तरं स्तूयते अथ वा यद्विकारे प्रकृतिसंबन्धिनि विधानार्थे स्तोतव्ये तत्संबन्ध्यन्तरं प्रकृतिः स्तूयते तत्र तद्द्वारेणापि लोके वेदे च स्तुतिसिद्धेः प्रकारान्तरता । तस्माददोषः । एतस्यास्तु स्तुतेरर्थमुपरिष्टाद्वक्ष्यति । शान्ताभिरद्भिः संबद्धो विकारः शान्तिहेतुर्भवन्यजमानस्य कष्टं शमयतीति । गुणवादसूत्रेण शुद्धेनैव तावद्रोदनाद्युदाहरणत्रयपरिहारः । शेषसूत्राण्यप्येतदुक्तोपपादनार्थतया संपत्स्यन्ते । तत्रोदाहृतानां गौणतानिमित्तं किंचिदिहैव वक्ष्यते परं

अथ सोऽरोदीदिति कस्य विधेः शेषः। तस्माद् बर्हिषि रजतं न देयमित्यस्य। कुतः। साकाङ्क्षत्वात्पदानाम्। सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वमित्यत्र स इति प्रकृतापेक्षः। तत्प्रत्ययात्। तस्य यदश्रु अशीर्यतेति तस्येति पूर्वप्रकृतापेक्ष एव। उपपत्तिश्चोपरितनस्य, यो बर्हिषि रजतं दद्यात्पुराऽस्य संवत्सराद्गृहे रोदनं भवतीति। अस्य हेतुत्वेनायं प्रतिनिर्दिश्यते—तस्माद्बर्हिषि रजतं न देयमित्येवं सर्वाणि साकाङ्क्षाणि कस्य विधेरुपकुर्वन्तीति। गुणवादेन। रोदनप्रभवं रजतं बर्हिषि ददतो रोदनमापद्यते। तत्प्रतिषेधस्य गुणो यद्रोदनमिति। कथं पुनररुदत्यरोदीदिति भवति, कथं वाऽनश्रुप्रभवे रजतेऽश्रुप्रभवमिति वचनम्, पुराऽस्य संवत्सरादसति रोदने कथं रोदनं भवतीति। तदुच्यते। गुणवादस्तु। गौणा एते शब्दाः। रुद्र इति रोदननिमित्तस्य शब्दस्य दर्शनादरोदीदित्युच्यते। वर्णसारूप्यान्निन्दन्ननश्रुप्रभवमप्यश्रुप्रभवमित्याह। निन्दन्नेव च धनत्यागे दुःखदर्शनात्पुराऽस्य संवत्सराद्गृहे रोदनं भवतीत्याह।

तथा यः प्रजाकामः पशुकामो वा स्यात्स एतं प्राजापत्यं तूपरमालभेत इत्याकाङ्क्षितत्वादस्य विधेः शेषोऽयं—स आत्मनो वपामुद-

तु तत्सिद्धिसूत्रे। सोऽरोदीदिति साकाङ्क्षत्वेनैकवाक्यता विधिस्तुत्योः प्रत्यक्षपक्षे कथ्यते। स इति प्रकृतापेक्ष। कुत। तत्प्रत्ययात्। तद्धि प्रकृतं प्रतीयते। अथ वा तच्छब्दस्य प्रकृतप्राहित्वं प्रसिद्धम्। स इत्युक्ते तच्छब्दप्रत्ययात्स एवार्थ। एवं तस्य यदश्रु तदजतामिति सबन्ध। सर्वा चेयमुपरितनस्य निन्दाग्रन्थस्योपपत्तिरिति तदनन्तरं तदभिधानमुपपद्यते। कोऽसौ ग्रन्थस्तं दर्शयति। यो बर्हिषि रजतं दद्यात्पुराऽस्य संवत्सराद्गृहे रोदनं भवेदिति। केन हेतुना तदेव भवतीति तदुपपादने कारणानुरूपत्वात्कार्यस्य रोदनप्रभवरजतदानाद्रोदनोत्पत्तिस्तस्मान्न देयमिति प्रकृतप्रदानस्योपपत्तिरिति। निन्दया तच्छेषत्वमर्थवत्। गुणवादस्तु शब्दा यत्र रुद्रशब्दोत्थापितविज्ञानवशेन रोदनसामान्यतोऽदृष्टकल्पना। अश्रुणश्च शौक्ल्याद्यदि नाभिनवरजतं भवेत्ततो रजतसदृशं भवेदित्युत्प्रेक्ष्य तत्प्रभवनिन्दा। धनत्यागेनात्यन्तोपरस्यापि गृहजन पीड्यत इति तत्सामान्याद्रोदनोपन्यास। एवं येन येन निन्द्यत्वेन निन्दाविज्ञानोत्पत्ति प्रतिषेधोपकारिणीति मुख्यार्थाभावेऽप्यदोष। एवं यथोपपन्नान्वितयोगना। साम्प्रत्ययो कल्पनेनापि हि विशिष्टप्रयोजनार्थं कर्माणि

विखददिति । कथं गुणवादः । इत्थं नाम, नाऽऽसन्पशवो यदात्मनो वपामुदक्खिदत् ददिति । एतच्च कर्मणः सामर्थ्यं, यदग्नौ प्रहुतमात्रायां वपायामजस्तूपर उदगात्, इत्थं बहवः पशवो भवन्तीति । कथं पुनरनुत्खिन्नायां वपायां प्रजापतिरात्मनो वपामुदखिदददित्याह । उच्यते । असद्वृत्तान्तान्वाख्यानं स्तुत्यर्थेन, प्रशंसया गम्यमानत्वात् । इहान्वाख्याने वर्तमाने द्वयं निष्पद्यते—यच्च वृत्तान्तज्ञानं, यच्च कस्मिंश्चित्प्ररोचना द्वेषो वा तत्र वृत्तान्तान्वाख्यानं न प्रवर्तकं न निवर्तकं चेति प्रयोजनाभावादनर्थकमित्यविवक्षितम् । प्ररोचनया तु प्रवर्तते द्वेषान्निवर्तत इति तयोर्विवक्षा । वृत्तान्तान्वाख्यानेऽपि विधीयमाने आदिमत्त्वादोषो

क्रियन्ते किंमुत बाह्यधनत्यागेनेति स्तुतिः । यथा नेत्रमप्युद्धृत्यार्थं ददातीति लोकेऽपि त्यागिनं स्तुवन्तीति । वृत्तान्तपर्यवसायी च वेदस्तत्र प्रामाण्यमप्रतिपद्यमानः स्तुतौ सत्यत्वासत्यत्वान्वेषणमर्हतीति निष्प्रयोजनोपाख्यानसत्यतया नार्थः । शब्दभावनाङ्गं वाऽर्थवादाः । सा च प्रवृत्तिर्विज्ञानमात्रेणैवोपयुज्यते नार्थेन । अर्पोलिमिकार्यां तु सर्वत्राविसंवादः सिद्ध एव । अथोच्येत, असदन्वाख्यानेन स्तुतिनिन्दात्वमिति सुतरां तत्र प्रतीयते । कामं परमार्थे वक्तारो भवन्ति काऽत्र स्तुतिर्निन्दा वा सत्यमेवैतदिति । असत्ये तु यस्मादन्यत्र दृष्टमप्यवधृतामिह गुणवन्तामिति ब्रवीत्यतो नूनं मे प्ररोचयति तथा गुणवन्तं सन्तं निन्दति निवर्तयितुमिति । ततश्चैवं विदित्वा यो यस्यानतिक्रमणीयस्तदनुरोधेन स तथा प्रवर्तते । वेदश्च प्रमाणमिति स्थितम् । तेन प्रवृत्तिनिवृत्त्यनुग्रहणीये स्वसंवेद्येऽर्थे पुंसः प्रशस्ताप्रशस्तज्ञाने भवतः । [illegible] ते वेदेनोपादिते । तस्मात्तदनुरूपं व्यवहर्तव्यमिति लोकेऽपि यां क्रियां फलान्तरयुक्तां मेधादिहेतुत्वेनाऽऽप्ता मन्यन्ते तस्यां कंचित्प्रवर्तयन्तस्तदभिप्रेतं सौभाग्यादिफलमसत्यमप्युपन्यस्य नियुञ्जते । तत्प्रवृत्तश्चेतरोऽपि क्रियाश्रयं फलं प्राप्नोति । यद्यपि च प्रतिपत्ता जानाति नैतदत्र पारमार्थिकं फलं मदभिप्रायानुसारेणैतैरुपन्यस्तं सर्वथा त्वपुरुषार्थे मां न प्रवर्तयन्ति तदसत्यं नामैतत्किमप्यन्यदवाप्स्यामीति ज्ञात्वाऽनुतिष्ठति । एवं वेदेऽपि विधिना तावत्फलमवगमितमर्थवादास्त्वसत्येन नाम प्ररोचयन्तु न तद्गते सत्यासत्यत्वे किंचिद्दूषणतः प्रवर्तनमात्रोपकारित्वात् । यत्तु परस्माद्भविष्यति तद्विधेरुपरिगतमिति निश्चित्य नैव विद्वांसो न प्रवर्तन्ते । तस्मादुपाख्यानासत्यत्वमतन्त्रम् । न हि शुक्तिकादृष्टरजतो यदि रजतान्तरं तद्देशे लभते ततोऽभिसंधीयते । शुक्तिकावत्तु किंचिदालम्बनं श्रुतिसामान्यमात्रेण सर्वत्र योजनीयम् । यथेह महाभूतानि प्रजाः

( १ ) चैवेनेरिति ' ग. ' पुस्तके ।

अथ सोऽरोदीदिति कस्य विधेः शेषः । तस्माद् बर्हिषि रजतं न देयमित्यस्य । कुतः । साकाङ्क्षत्वात्पदानाम् । सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वमित्यत्र स इति प्रकृतापेक्षः । तत्प्रत्ययात् । तस्य यदश्रुवशीर्यतेति तस्येति पूर्वप्रकृतापेक्ष एव । उपपत्तिश्चोपरितनस्य, यो बर्हिषि रजतं दद्यात्पुराऽस्य संवत्सराद्गृहे रोदनं भवतीति । अस्य हेतुत्वेनायं प्रतिनिर्दिश्यते—तस्माद्बर्हिषि रजतं न देयमित्येवं सर्वाणि साकाङ्क्षाणि कथं विधेरुपकुर्वन्तीति । गुणवादेन । रोदनप्रभवं रजतं बर्हिषि ददतो रोदनमापद्यते । तत्प्रतिषेधस्य गुणो यदरोदनमिति । कथं पुनररुदत्यरोदीदिति भवति, कथं वाऽनश्रुप्रभवे रजतेऽश्रुप्रभवमिति वचनम्, पुराऽस्य संवत्सराद्असति रोदने कथं रोदनं भवतीति । तदुच्यते । गुणवादस्तु । गौणा एते शब्दाः । रुद्र इति रोदननिमित्तस्य शब्दस्य दर्शनाद्यदरोदीदित्युच्यते । वर्णसारूप्यान्निन्दन्ननश्रुप्रभवमप्यश्रुप्रभवमित्याह । निन्दन्नेव च धनत्यागे दुःखदर्शनात्पुराऽस्य संवत्सराद्गृहे रोदनं भवतीत्याह ।

तथा यः प्रजाकामः पशुकामो वा स्यात्स एतं प्राजापत्यं तूपरमालभेत इत्याकाङ्क्षितत्वादस्य विधेः शेषोऽयं—स आत्मनो वपामुद-

---

तु नत्मिद्धिमूने । सोऽरोदीदिति साकाङ्क्षत्वेनैकवाक्यता विधिस्तुत्यो प्रत्यवयवं कथ्यते। स इति प्रकृतापेक्ष । कुत । तत्प्रत्ययात् । तद्धि प्रकृत प्रतीयते । अथ वा तच्छब्दस्य प्रकृतप्रायित्व प्रसिद्धम् । स इत्युक्ते तच्छब्दप्रत्ययात्स एवार्थे । एव तस्य यदश्रु तद्रजतमिति सबन्ध । सर्वो चेयमुपरितनस्य निन्दाग्रन्थस्योपपत्तिरिति तदनन्तर तदभिधानमुपपद्यते । कोऽसौ ग्रन्थस्तं दर्शयति । यो बर्हिषि रजत दद्यात्पुराऽस्य सवत्सराद्गृहे रोदन भवेदिति । केन हेतुना तदेव भवतीति तदुपपाद्यते कारणानुरूपत्वात्कार्यस्य रोदनप्रभवरजतदानाद्रोदनोत्पत्तिस्तस्मान्न देयमिति सकलप्रदानस्योपपत्तिरिति । निन्दया तच्छेषत्वमर्थवत् । गुणवादस्तु शब्दालम्बन रुद्रशब्दोत्थापितविज्ञानवशेन रोदनसामान्यतोऽदृष्टकल्पना । अश्रुणश्च शौक्ल्याद्यदि नाभिनवरजतं भवेत्ततो रजतसदृश भवेदित्युत्प्रेक्ष्य तत्प्रभवनिन्दा । धनत्यागेनात्यन्तोदारस्यापि गृहजन पीड्यत इति तत्सामान्याद्वा रोदनोपन्यास । [illegible] येन केनचित्सम्बन्धेन निन्दाविज्ञानोत्पत्ति प्रतिषेधोपकारिणीति मुख्यार्थाभावेऽप्यदोष । एव सर्वो ग्रन्थनाऽभिवाक्ययोजना । स्वात्मवपोत्कर्तनेनापि हि विशिष्टप्रयोजनार्थं कर्माणि

रूपात्प्रायात् ॥ ११ ॥

हिरण्यं हस्ते भवत्यथ गृह्णातीति साकाङ्क्षत्वादस्य विधेः शेषः—स्तेनं मनोऽनृतवादिनी वागिति । निन्दावचनं हिरण्यस्तुत्यर्थेन यथा किमृषिणा, देवदत्त एव भोजयितव्यः । कथं पुनरस्तेनं मनो निन्दितुमपि स्तेनशब्देनोच्यते, वाचं चाननृतवादिनीमप्यनृतवादिनीति ब्रूयात् । गुणवादस्तु रूपात् । यथा स्तेनाः प्रच्छन्नरूपा एवं च मन इति गौणः शब्दः । मायावानृतवादिनी वागिति ॥ ११ ॥

दूरभूयस्त्वात् ॥ १२ ॥

दृष्टविरोध उदाहरणं तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः । तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूम इति अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातरिति मिश्रलिङ्गमन्त्रयोर्विधानस्याऽऽकाङ्क्षितत्वाच्छेषः । उभयोर्देवतयोः संनिधाने

---

इह सर्वं क्रियमाणं मनसा संकल्प्य वाचा चाभिधाय क्रियते तदत्यन्तान्तरङ्गभूतयोरप्यनयोर्दूरेण हिरण्यादूनत्वं स्तेयानृतवादयोगादिति । या निन्दा तन्मात्रपर्यवसायिनी सा निषेधफला भवति । विधिपरा तु स्तुत्यर्था जायते । तदुपपादनस्य दृष्टार्थत्वात् । यथा वक्ष्यति न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्यादिति ॥ ११ ॥

तस्माद्धूम एवेति दिवाऽग्निरादित्यं गच्छतीत्यस्योपपत्तित्वेन । तदिदं किमर्थमुच्यते । मिश्रलिङ्गाग्निहोत्रमन्त्रविधिस्तुत्यर्थम् । कथं पुनराग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेत्यनयोर्मिश्रलिङ्गत्वम् । यदा विविक्तावेवाग्निसूर्यौ देवताश्वेनोपलभ्येते । केचिदाहुः । अग्निर्ज्योतिरित्यत्र ज्योतिःशब्दः सूर्यवाची सूर्यो ज्योतिरिति पुनराग्निवाची तेनोभौ मिश्रलिङ्गाविति । तदयुक्तम् । ज्योतिःश्रुतेस्तेजःसामान्यवाचित्वेनोभयत्र सामानाधिकरण्येनोपपत्तेः । अन्यतरपर्यायश्च सन्नितरत्र न प्रयुज्येत । न हि यो यत्पर्यायः स तेनैव सह प्रयुज्यते । सूर्यवाची सन्प्रातर्मन्त्रे न प्राप्नोति । अग्निवाची सायंमन्त्रे । तस्मादुदाहरणं भ्रान्तिलिखितमितीमावुदाहर्तव्यावग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहा सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति । तद्विधेश्च स्तुतिः प्रथमविहितकेवलदेवत्यमन्त्रपर्युदासेन मिश्रलिङ्गविधानोपपत्तिरियमुच्यते । यदनयोर्मिश्रत्वं दिवाऽग्नेरनुप्रवेशान्नक्तं चाऽऽदित्यस्येति केवलेज्या न युक्तेति । अस्मिन्नपि तु व्याख्याने पर्युदसनीयत्वेनैव पूर्वमन्त्रोदाहरणम् । इतरौ तु स्तुतिभागिनौ मिश्रलिङ्गाभिधानादेव ज्ञास्येते इति नोच्चारिताविति भाष्यं नेयम् । अथ वोभयोः केवलमिश्रलिङ्गयोर्मध्ये पठितोऽयमर्थवादः ।

होम इति स्तुतेरुपपत्तिः । दूरभूयस्त्वाद् धूमस्याग्नेश्चादर्शने गौणः शब्दः ॥ १२ ॥

## कृयपराधात्कर्तुश्च पुत्रदर्शनम् ॥ १३ ॥

दृष्टविरोध एवोदाहरण न चैतद्विद्म इति । तत्प्रवरे प्रव्रियमाणे देवाः पितर इति ब्रूयादित्याकाङ्क्षितत्वादस्य विधेः शेषः । अब्राह्मणोऽपि ब्राह्मणः प्रवरानुमन्त्रणेन स्यादिति स्तुतिः । दुर्ज्ञानत्वाद-ज्ञानवचन गौणम् । कृयपराधेन कर्तुश्च पुत्रदर्शनेन । अप्रमत्ता रक्षत तन्तुमेनमित्यादिना दुर्ज्ञानम् ॥ १३ ॥ Sin belongs to the progenitor

## आकालिकेप्सा ॥ १४ ॥

शास्त्रदृष्टविरोध उदाहरण को हि तद्वेदेति, दिक्ष्वतीकाशान्करोतीति साकाङ्क्षत्वादस्य विधे. शेषः । One should set up a

---

तत्र उभयदेवत्ययोरन्या प्रशसा, इतरयो पुनरियं, यस्माद्दिवाऽग्निरादित्य गच्छति तस्मा त्सूर्य एव तदा ज्योति । एव नक्तमग्निरतस्तौ व्यवस्थितावेव यष्टव्याविति स्तुति । कथ तु धूम एवेत्यवधारणा । दूरस्थैर्भूम्ना दिवा धूम एव गृह्यते रात्रावग्निरिति येन चिद्देशेन स्तुत्यालम्बनम् ॥ १२ ॥

प्रवरे प्रव्रियमाणे यजमानो वदेद्देवाः पितर इत्यादि । तत्प्रशसार्थमुक्तमब्राह्मणो-ऽपि ब्राह्मणो भवति प्रवरानुमन्त्रणेनेति । तत्र प्रसिद्धब्राह्मणत्वानामेव ब्राह्मण्यलाभो निष्प्रयोजन इति तदुपपत्त्यर्थमुक्त न चैतद्विद्म इति । ज्ञायमाने त्वज्ञानवचन दुर्ज्ञानत्वात् । यत्सुखेनाज्ञान तदज्ञानमेव । तच्च कृयपराधनिमित्तम् । सत्यपि च कृयपराधे यदि मातुरेव क्षेत्रिणो वा पुत्र स्यात्ततस्तयो प्रसिद्धजातित्वान्नैव दुर्ज्ञानता भवेत् । तयोरप्येवमेव तत्पूर्वजयोरित्यनादिन्यायेन जातिरवधार्यैव । यतस्तु माता भस्त्रा पितु पुत्र इति स्मर्तॄणा दर्शन जनयितुश्च नानाजातित्वोपपत्तिस्तेन वर्णसकर । वेदेऽपि चाप्रमत्ता रक्षत तन्तुमेनमिति जातिविच्छेददर्शन कृयपराधकर्तृपुत्रनिमित्तमेवोपपद्यते । अन्यथा ह्यपरिरक्ष्यमाणेऽपि नैव स्वजातितन्तुविच्छेदो भवेत् । तेनास्ति प्रशसा परार्थ इति । निरूढब्राह्मण्यप्रवरसकीर्तनात्तत्प्रभवोऽयमिति ज्ञानाद्ब्राह्मण कृतो भवतीति स्तुति ॥ १३ ॥

यत्तदानीमेवोत्पद्यते तदाकालिकम् । तच्च सर्वेषामस्याभिमत न यच्चिरभावि । तस्मात्प्रत्यक्षफले दिक्ष्वतीकाशकरण प्राभृतप्राप्त्य प्रयुज्यते । तद्धि सद्य फल धूमदर्शनानुमवान् । इतरत्तु कर्मान्तरस्य भवत्प्रसिद्धविषयमिति । कस्तद्वेद शास्त्रमात्रगम्य हि

१।२।२०।

प्रत्यक्षफलत्वेन स्तुतिः । अनवक्लृप्तिवचनं विप्रकृष्टकालफलत्वाद्गौणम् ॥ १४ ॥

## विद्याप्रशंसा ॥ १५ ॥

तथा फलाभावादित्यत्रोदाहृतं शोभतेऽस्य मुखमिति गर्भत्रिरात्रविधेराकाङ्क्षितत्वाच्छेषः । वेदानुमन्त्रणस्य च, आऽस्य प्रजायां वाजी जायत इति शेषः । मुखशोभा वाजिमत्त्वं च गुणवचनत्वाद्गौणः शब्दः । शोभत इव शिष्यैरुद्वीक्ष्यमाणम् । कुले संततमध्ययनश्रवणान्मेधावी जायत इति स प्रतिग्रहादन्नं प्राप्नोतीति ॥ १५ ॥

## सर्वत्वमाधिकारिकम् ॥ १६ ॥

अन्यानर्थक्यवाक्य उदाहरणं पूर्णाहुत्या सर्वान्कामानवाप्नोतीति पूर्णाहुतिं जुहोतीत्याकाङ्क्षितत्वादस्य विधेः शेषः । य उ चैनमेवं वेदेति तरति मृत्युमित्यस्याऽऽकाङ्क्षितत्वाच्छेषः । फलवचनं स्तुतिः, सर्वकामफलस्य निमित्ते सर्वकामावाप्तिवचनं गौणम् । असर्वेषु सर्ववचनमधिकृतापेक्षम् ॥ १६ ॥

तत्, इदं तु सर्वप्रत्यक्षम् । तदपेक्षया च ज्ञायमानेऽप्यज्ञायमानवचनमितरप्रशंसार्थम् । पाठान्तरमाकालिकडायन्तवचन इति । अकालिकमिति वा पाठः । काल इति लोके विप्रकर्ष उच्यते । तत्र भवं कालाट्ठञिति ठञि कालिकं न कालिकमकालिकम् ॥ १४ ॥

अध्ययनविधिशेषत्वादफलविधिः सन्यथाविज्ञातमुखशोभावाजिमत्त्वानुवादो विज्ञास्यते । न चैक एव प्रकारो मुखशोभायाः संस्थानं रमणीयता लावण्यं चेति । स्त्रीविषयं ह्येतत् । विदुषा पुनः पदवाक्यन्यायोद्गारि मुखं शोभते तेनाऽऽत्मना मुख्ययैव वृत्त्या शोभते । पुत्रश्च वाजवान्त्रयीश्रवणद्वारेण । अथापि गौणता तथाऽपि स्तुतिपरत्वाददोषः ॥ १५ ॥

संस्कारकर्मत्वान्न फलविधिः । स्तुतेस्त्वालम्बनं निमित्ते नैमित्तिकवदुपचारात् । सर्वकामनिमित्तानां कर्मणां सामान्यसाधनभूतानग्नीनवाप्नोतीत्यर्थः । सूत्रं चैवं योज्यते । सर्वकामनिमित्तैः कर्मभिराहिताग्नित्वादिदानीमधिकृत इति वक्तव्ये सत्याधिकारिकं सर्वत्वं स्तोतुमवाप्तावुपचरितम् । ननु चाऽऽकाशगमनसुरकन्यालाभादयोऽत्यन्तासन्तः सर्वशब्देन वैदिकेषु कर्मसु निमित्तद्वारेणापि न शक्यन्तेऽनुवदितुमतः पुनः सूत्रमुच्यते । यथैवोदनादिषु सर्वसंरोऽधिकृतापेक्षत्वान्न त्रैलोक्यं गृह्णाति तथाऽत्राग्निकर्माधिकृतफलग्राही भविष्यतीत्यदोषः ॥ १६ ॥

फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात् ॥ १७ ॥

स्यादुरुह वचनमिदं यद्यपि विधिस्तथाऽप्यर्थवत्ता परिमाणतः सारतो वा फलविशेषात् ॥ १७ ॥

अन्त्ययोर्यथोक्तम् ॥ १८ ॥

अभागिप्रतिषेधादित्यादावुदाहृतं न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीति, हिरण्यं निधाय चेतव्यमित्याकाङ्क्षितत्वादस्य विधेः शेषः । पृथिव्यादीनां निन्दा हिरण्यस्तुत्यर्था । असति प्रसङ्गे प्रतिषेधो नित्यानुवादः । यथानित्यदर्शनं बबरः प्रावाहणिरकामयत इति ।

---

तदेतत्समानस्वर्गादिफलेष्वग्निहोत्रादिषूपयोक्ष्यत इत्युपन्यस्तं साधनानुरूपत्वात्साध्यानाम् । सर्वे हि कामाः पूर्णाहुत्याऽवाप्यमानाः स्तोकस्तोकाः प्राप्यन्ते । तत्र फलभूमार्थिनः कर्मान्तरविधिरर्थवान्भविष्यतीति स्थिते चोद्यते । युक्तं लोके कृष्यादिफलाना प्रत्यक्षावगतत्वात्साधनानुरूपं जन्म । पूर्णाहुत्यादिषु त्वत्यन्तशास्त्राधीनत्वादविशेषश्रुते फले किंमूला विशेषकल्पना । न ह्यग्निहोत्रज्योतिष्टोमस्वर्गयोः कश्चिद्विशेषः श्रूयते । न चानुमानमीदृशे विषये समर्थम् । तदभिधीयते । विधिसामर्थ्यादेवेदं सिद्धम् । कथम् । यदि ह्यल्पान्महतश्च कर्मण समं फलं जायेत ततोऽर्के चेन्मधु विन्देतेत्यनेनैव न्यायेनाल्पेन सिद्धे महति न कश्चित्प्रवर्तेत । तत्र विधिशक्तिबाधः स्यात् । अविहतशक्तिस्तु सन् अर्थाद्वा कल्पनैकदेशत्वादिति विधिरेव फलाधिक्यमङ्गीकरोति । अतो यथा विश्वजिदादौ फलसद्भावः प्रमाणवानेवमिह तद्विशेष इति । किं च

कर्मणामल्पमहता फलाना च स्वगोचरः ।
विभागः स्थानसामान्यादविशेषेऽपि चोदिते ॥

यथैव क्रमाम्नातानामङ्गाङ्गिना प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमिति विनियोगव्यवस्था तथैव कर्मगोचरेऽल्पस्य कर्मण परिमाणसामान्येन फलगोचरेऽल्पमेवोपतिष्ठते। मध्यमस्य मध्यमं महतो महदिति स्थानमेव विनियोजकम्। स्मरणमप्येवमेव । चातुर्मास्यसोमेषु च फलार्थवादो यदाऽग्निहोत्रं जुहोत्यथ दश गृहमेधिन आप्नोत्येकया रात्र्येत्यारभ्य न्यूनाग्निहोत्रदशसंवत्सरप्रयोगादिभिरेकदर्शपूर्णमासादिप्रयोगावाप्तिवचनं कर्माल्पत्वमहत्त्वकृतं फलभेदं दर्शयति ॥ १७ ॥

यथैव वाङ्मनसयोर्निन्दा हिरण्यस्तुत्यर्था तथा शुद्धपृथिवीनिषेध प्रकल्प्ततावर्थवादः स्यादित्येवं हिरण्यनिधानस्तुत्यर्थो न प्रतिषेधमात्रफलः । नान्तरिक्षे न दिवीत्यौचित्येन शुद्धपृथिवीनिषेधसमर्थनायैव यथाऽन्तरिक्षे दिवि वा चयनं न प्रसिद्धं तथा हिरण्यरहिताया पृथिव्यामिति स्तवनम् । अनित्यसंयोगो गतार्थः परं तु श्रुतिसामान्य-

तत्परिहृतम् । अर्थवादाक्षेपेण पुनरुत्थितमिदानीमर्थवादप्रामाण्ये तेनैव परिहारेण परिहरिष्यत इति ॥ १८ ॥

विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥ पू०

इह ये विधिवन्निगदा अर्थवादास्त उदाहरणम् । औदुम्बरो यूपो भवति[1] । प्रयोजनं रात्रिसत्रे पूर्वपक्षे स्वर्गः फलं स्यादिति सिद्धान्ते त्वर्थवादस्यमेव फलम् ॥ १८ ॥

इत्यर्थवादाधिकरणम् ।

एवमानर्थक्योपाख्यानादिप्रतियोगिष्वर्थवादेषु व्याख्यातेष्विदानीं विधिप्रतियोगिनो विचार्यन्ते । कुतः संशयः । पूर्वत्र हि स्वार्थानुपयोगित्वेन दूरलक्षितस्तुतिग्रहणमङ्गीकृतम् । तत्संभवे तु स्तुतिरप्यनर्थकतुल्याऽऽपद्यते । विध्यंशश्च न कथंचनान्यस्मात्सिध्यति । प्ररोचना पुनः कथं चिद्विध्युद्देशादप्युपपद्यत इत्युक्तं पुरस्तात् । अपि च प्रधानं विधिरङ्गं स्तुतिस्तत्र प्रधानविशेषणसंभाविनस्तद्ग्राहित्वमेव युक्तम् । समाप्ते च विध्युद्देशेऽर्थवादः प्रवर्तते तत्प्रक्रमावस्थायामेव तु भावनांशाः संनिपतन्ति । विशेषेण तु फलं प्राथम्यप्राधान्याभ्यामित्यादि मन्वानोऽपूर्वत्वादिति वदति । तदपेक्षया च स्तुतिमात्रमनर्थकं मन्यते । ननु चैवंजातीयकः फलविधित्वार्थवाद इति विचारश्चतुर्थेऽपि द्रव्यसंस्कारकर्मस्विति भविष्यति । अतो नेह प्रस्तोतव्यः । तत्र केचिदाहुः । अनेन गतार्थत्वात्तत्रैवैष पर्यनुयोगो युज्यते न त्विदं पुनरुक्तमिति । सत्यमेवं यदि तु तत्कालप्रतीक्षणात्किंचित्परिहारान्तरं लभ्यतेऽतस्तत्रान्विच्छेम । अथ पुनरिहैव शक्यते वक्तुं तथा सतीदानीमप्युच्यमाने मन्दो दोष इति । अत्रापरे वदन्ति तेन फलविधित्वनिराकरणमात्रमिह त्वर्थवत्त्वाय त्वर्थवादः स्यादिति तत्र वक्ष्यति तद्विधित्वनिराकरणमात्रपरमेव द्रष्टव्यम् । तदयुक्तम् । यतस्तेन फलविधित्वात्प्रच्यावितानामानर्थक्यप्रसक्तौ पूर्वाधिकरणेनैव स्तुत्यर्थता साधिता । तथा च दर्शितं शोभतेऽस्य मुखमित्यादिषु । केचित्पुनराहुः । युक्तं वायुर्वै क्षेपिष्ठेत्यादीनां स्तुतित्वम् । ऊर्जोऽवरुद्ध्या इति पुनर्यथा फलविधित्वात्प्रच्याव्यते तथैव विसंवादेन स्तुतित्वादपीति क्षमं विधिर्भवतु येन कालान्तरभावित्वेन कथं चिद्विसंवादो निवर्तेत इत्यारम्भः । तदप्ययुक्तम् । अपि च वेदे व्यक्रमसंवाद इति ह्यप्रामाण्यहेतुरपुनरुक्तः स्यात् । अधिकरणशरीरं तु तदेव । विसंवादोऽपि च गुणवादस्त्वित्यनेन न कश्चिदपरिहृतः । पुनरपि च तावन्मात्रमेवोत्तरं भविष्यति । तस्माद्विधिर्वा स्यादित्यविशेषोपादानाच्चतुर्थे च फलश्रुतिग्रहणादिहाशेषद्रव्यगुणक्रियादिविधिसरूपास्तत्र फलविधिसरूपा एवोदाहरणमित्यपरे । तथा च

[1] जै० ४।३।१

[1]भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोति ऊर्जोऽव- रुद्ध्यै इति । किमस्य विधि. कार्यमुतास्यापि स्तुतिरिति । किं ताव- त्प्राप्तम् । विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् । विधिवन्निगदेष्वेवं

---

विधिश्चानर्थक क्वचित्प्रकरणे च समवन्निति चाप्सुयोनिर्वा अश्वोऽप्सुजो वेतसो यो विदग्ध इति चोदाह्रियते । अन्यथा फलविधिमात्रोपन्यासे तदसबद्धमेव स्यात् । इहापि तस्य तावद्विशेषविषयत्वादिदमगतार्थ भवेत् । अनेन तु सामान्यत सर्वविषयावरोधिना तत्पुनरुक्तमेवेति व्यवस्थया केचिदुदाहरन्ति । अत्र द्रव्यादिविधीनेव तत्र फलविधीनेव भाष्यकारोदाहरणमतन्त्रीकृत्योदाहरणान्तर दातव्यामिति ।अत्र वदाम । किमधिकरणद्व यमवश्यारब्धव्य येनैवमुदाहरणव्यवस्थाऽऽश्रीयते न ह्युदाहरणभेदादधिकरण भिद्यते । भूयथाव्यवस्थितेऽपि खादिरौदुम्बरत्वभेदादपौनरुक्त्यम् । न्यायविषयत्वेन त्वधिकरणाना तद्भेद एवापौनरुक्त्ये हेतु ।

द्रव्यादिविधयोऽपि न सर्वे विचारिता । केचित्तत्सिद्धिसूत्रे । केचिन्निवीताद्यधिकर- णेषु । परकृतिपुराकल्पद्वारेणान्ये षष्ठे । यद्दचा स्तुवत इत्यादयोऽर्थैकत्वाद्विकल्प इति नवमे । जर्तिलगवीधुकविधिसरूपा दशमे । अतश्च न पुनरुक्तता महादोष इत्येव वक्तव्यम् । अथ वैकस्यैव न्यायस्य क्वचित्कश्चिदश शोध्यत इति पुनरारम्भ । स्पष्ट वा विषयनानात्वमेव वर्णनीयम् । सर्वविधिसरूपाणा केवलविधित्वनिराकरणेनार्थवादत्व- मिह सिद्धम् । यस्तु चतुर्थे पुनरारम्भ सोऽर्थवादकल्पिते विधौ फलाकाङ्क्षावेलायामन्या र्थोपात्तमपि क्रतुप्रयोगवचनात्तदेव संनिहिततर फलसबन्धस्य च विशेषमात्र सुकरम् । इतरथा सम्बन्धस्तद्विशेषश्चोपकारकत्व कल्पनीयमिति रात्रिसत्रप्रतिष्ठादिवत्फलविधित्व मपीति पूर्वपक्षाभिप्राय । कथ चित्प्रयोजनान्तरे लभ्यमाने नैकस्यानेकार्थता युक्ता तस्मादर्थवादत्वमेवेति सिद्धान्त । एतेन निवीताद्यधिकरणानि व्याख्यातानि । अथ वौदुम्बराधिकरणपूर्वपक्ष कृत्वा चिन्तास्ता प्रत्येतव्या । विधित्वाभ्युपगमेन हि कस्य दोष नतो पुरुषस्य वेत्यादि विचार्येह सिद्धेनार्थवादत्वेनोपसहार । तथा परकृतिपुरा कल्पयो किं तद्गोत्राणामुत सर्वपुंसामिति चिन्तितम् । एवमूहबाधप्रसङ्गेन नवमदशम गता चिन्ता, तत्सिद्धिसूत्रे तु गुणवादनिमित्तमात्रकथनम् । अथ वा फलविधावेव यत्र भेदेन स्तुतिफलपदानि भवन्ति तदिहोदाहरणम् । यथाऽत्रैषोर्गुदुम्बर ऊर्क्पशव इत्येतै रेव स्तुति । ऊर्जोऽवरुद्ध्या इत्यनेन फलमिति । यत्र पुनस्तावन्मात्रेणैव फल वा स्तुतिर्वा वक्तव्येति भवति ते चतुर्थ इति । अथवा तत्र परार्थत्वादिति हेतुव्यपदेशात्प्रसि द्धेन च हेतुना व्यवहाराद्ये विज्ञातपारार्थ्यास्त उदाहरण यथा यस्य पर्णमयी जुहूरिति । अत्र ह्यवश्य जुह्वनुवादेन पर्णमयीत्व विधातव्य स्वातन्त्र्येण फलसबन्धाशक्ते । सर्वत्र

---

1 तै० सं० २–१–१

जातीयकेषु फलविधिः स्यात् । फलं ह्यवगम्यते । तथा ह्यपूर्वमर्थं विधा-
स्यति । इतरथा स्तुतिवादमात्रमनर्थकं स्यात् । स्तुतश्चास्तुतश्च तावानेव
सोऽर्थः । अपि च ऊर्जोऽवरुद्ध्या इति प्रयोजनं श्रूयते । न च प्रश-

हि गुणः फलाय चोद्यमानः कंचिदाश्रयमपेक्षते । न च प्रकरणमन्तरेणाऽऽश्रयप्राप्तिः । तदिह यदि पर्णमयीत्वेन फलं भावयेदिति वचनं व्यज्येत किमाश्रितेनेत्यपेक्षायां किं संबध्यताम् । जुहूरिति चेन्न । वाक्यमेवप्रसङ्गात् । साऽपि च प्राक्क्रियाश्रमात्रेण निराकाङ्क्षी भवति । न च क्रियासंबन्धे प्रमाणमस्ति । तस्मादनिर्वहणादेतद्वचनव्यक्तिपरित्यागेनेतराश्रयणम् । तत्र च जुह्वा जुहोतीत्यस्याः प्रकरणे निर्ज्ञातप्रयोजनत्वादविहितजातिविशेषायास्तदाकाङ्क्षायां सत्यां यावदेव पर्णत्वजातिरुपनीता तावदविज्ञातप्रयोजनावस्थत्वादङ्गतां प्रतिपद्यते । ततश्च निराकाङ्क्षीभूतायास्तस्मिन्नेव वाक्ये फलकल्पनानिमित्तं नास्तीति युक्तमर्थवादत्वम् । इह पुनर्वैकृतपशुप्रकरणे श्रूयमाणमौदुम्बरत्वमुदाह्रियते । न च तस्य प्रसिद्धं पारार्थ्यं येन चतुर्थाधिकरणविषयता भवेत् । कथम् । अत्र हि न तावदप्राप्ते यूपे जातिविधानं शक्यम् । तत्प्राप्तिश्चेदवश्यं कल्पोपकारप्रकृतखादिरत्वादिनैव निराकाङ्क्षेण भवितव्यम् । तत्कुतो जात्यन्तरस्य तादर्थ्येन विधिरतः फले विधानम् । याऽपि चाऽऽश्रयापेक्षा साऽपि प्राकृतकर्मसंबन्धिचोदकप्राप्तयूपग्रहणान्निवर्तेत इत्यविचारः । तेन प्रागेव पारार्थ्यात्फलसंबन्धप्रसक्तिरवश्यं न्यायान्तरेण निराकर्तव्येत्येतदधिकरणारम्भः । इदमपरं मतम् । औदुम्बरवाक्यं जुह्वादिवाक्यं चोभयमुभयत्रोदाहरणम् । कथं, भावनांशान्तरविचारादपौनरुक्त्यम् । साध्यसाधनसंबन्धस्तावद्द्वयोरपि योग्यत्वेनोपात्तयोरवकल्पते नान्यथा । तत्र चतुर्थे साधनांशयोग्यविचारमनादृत्याभ्युपेत्य वा केवलसाध्यांशविचारः किमीदृशेन कामशब्दोपबन्धरहितेन वर्तमानफलसंबन्धाभिधायिना फलत्वं शक्यते गमयितुं न वेति विचारः । इह पुनः साध्यांशमनादृत्याभ्युपेत्य वा केवलसाधनांशविचारः । किमीदृशेन विधिविभक्तिरहितेन द्रव्यगुणक्रियाः कंचिद्यति साधनत्वेन प्रतिपाद्यन्ते नेति । यच्च यदात्मना प्रतिपादितं भवति तत्प्रतियोगिविशेषापेक्षं सत्पदान्तराद्युपात्तेन तेन संबध्यते । तत्र साध्यमित्यवधृते परिशेषादवशिष्टं साधनं गम्यते । एवं साधनावधारणेऽपीति द्वावप्यंशौ स्वरूपेण निरूपयितव्यौ । तदिह साधनांशे विचार्यमाणे यो नाम फलांशस्य संस्पर्शः स चतुर्थे सिद्धः प्रसङ्गाद्देशत्वेनेति मन्तव्यः । तथा यस्तत्र साधनांशपरामर्शः स इह सिद्धस्तत्र प्रसङ्गादित्यपुनरुक्तम् । नन्वेवं सति विध्युद्देशचिन्तेयमित्यर्थवादाधिकरणेन न संबध्यते । नैष दोषः । तद्दर्शनेनैवार्थपरिच्छेदात् । यदि ह्यसौ विधीयमानतया पूर्वेणावगतस्ततो नार्थवादत्वमथ स्तुत्यर्थतया ततोऽर्थवादत्वमिति । तत्र पूर्वपक्षाभिप्रायः । सर्वथा साध्यसंनिधाने

स्तोऽयमर्थ इति कश्चिच्छब्दोऽस्ति । लक्षणया तु स्तुतिर्गम्यते । श्रुतिश्च लक्षणाया ज्यायसीति ॥ १९ ॥

## लोकवदिति चेत् ॥ २० ॥

इति चेत्पश्यसि—स्तुतिरनर्थिका, न च शब्देनावगम्यत इति । लौकिकानि वाक्यानि भवन्तो विदांकुर्वन्तु । तद्यथेयं गौः क्रेतव्या देवदत्तीया, एषा हि बहुक्षीरा, स्त्र्यपत्या, अनष्टप्रजा चेति । क्रेतव्येत्यप्युक्ते गुणाभिधानात्प्रवर्तन्तेतरां क्रेतारः । बहुक्षीरेति च गुणाभिधानमवगम्यते । तद्वद्वेदेऽपि भविष्यति ॥ २० ॥

## न पूर्वत्वात् ॥ २१ ॥

नैतदेवम् । लोके विदितपूर्वा अर्था उच्यन्ते बहुक्षीरादयः । तेषां विज्ञानमेव न प्रयोजनम् । अतः प्रशंसा गम्यते । अविदितवादे न श्रद्दधीरन्पूर्ववचनादिव । विदितवादेव च प्ररोचयन्ते । वैदिकेषु पुनर्यदि विधिशब्देन न प्ररोचयन्ते नतरामर्थवादेन । जाताशङ्के

रितं तदाकाङ्क्षावशेन ताद्रूप्येणानुपात्तमपि साधनं भवति यथैव यागेनेत्यनुदितं संबध्यते तथैवौदुम्बरेणेति । तत्र विधिः किं कुर्यात्पुरुषं प्रवर्तयेत् । स च फलार्थितयैव प्रवृत्त इति किं विधिना । अथ वा प्रयोगवचनविहितस्य फलसंबन्धमात्रमनेन क्रियते । पञ्चमो वा लकारो विधास्यति । अर्थवादैकदेशो वेत्युक्तमेव । तस्मादूर्जोऽवरुद्ध्या इति तादर्थ्यचतुर्थ्यैवं कामशब्दादपि स्फुटतरं फलमुपात्तमिति तस्मिन्नौदुम्बरताविधिः । न तु फलस्य विधानमिति ग्रहीतव्यं भावार्थाधिकरणे फलविधिनिषेधात् । ऊर्गुदुम्बर इत्यतः स्तुतिरित्यविरोधः । तस्मान्मुख्यविधिसंभवे लक्षणया न स्तुतिः प्रतिपत्तव्येति ॥ १९ ॥

लोके तावद्बुद्धिपूर्वकारिणः पुरुषा मात्रामपि न निष्प्रयोजनां प्रयुञ्जते, तत्र च क्रेतव्येति विहिते बहुक्षीरादिभिर्गुणैः स्तुतिः प्रवृत्तिविशेषनिमित्तत्वेनाऽऽश्रीयते । न च क्षीरादयः फलविषयः प्रत्यक्षविषयत्वादतः स्तुतिः । एवं वेदेऽपि । श्रुत्यसंभवाच्च लक्षणापरिग्रह इत्यदोषः ॥ २० ॥

नायं दृष्टान्तः स्तुतेः प्रमाणान्तरावगत्यपेक्षत्वाल्लोके तत्संभवादुपपत्तिः । वेदे त्वविदितवादत्वान्न श्रद्दधीरन् । अथ वा लोक एव यद्यविदितं कश्चिदुपदेशेत्तदा नैव श्रद्दधीरन् । पूर्ववचनादिवेति । विप्रुद्देशादिव । अथ वा वैधर्म्योपमा । यथाऽविगतपूर्ववचने श्रद्दधते नैवमविदितवादे । न चोक्तिमात्रेणैव बहुक्षीरादयः प्ररोचयन्ते किं तर्हि विदितत्वादेव । वेदे त्वर्थवादासत्यत्वेन विधौ जाताशङ्को न प्रवर्तेत । अथ वा यो विधि-

हि विधिशब्दे स तदानीम्। अथ विधिशब्देन प्ररोचितः, किमर्थवादशब्देन, अपि च वेदे व्यक्तमसंवादः, ऊर्जोऽवरुद्ध्या इत्यप्रसिद्धं वचनम्, ऊर्जा उदुम्बर इति हेतुत्वं चाप्रसिद्धम्। यस्मादूर्गुदुम्बरस्तस्मात्तन्मयो यूपः कर्तव्य इत्यूर्गुदुम्बर इत्यनृतवचनादन्यदप्यनृतमिति परिकल्प्येत ॥ २१ ॥

उक्तं तु वाक्यशेषत्वम् ॥ २२ ॥ सि०

उक्तमस्माभिर्वाक्यशेषत्वं विधिना त्वेकवाक्यत्वादिति। ननूक्तं फलवचनमिह गम्यते न स्तुतिरिति। यदिह फलवचनं तदौदुम्बरस्य यूपस्य। न चाविहित औदुम्बरो यूपोऽस्ति। तत्र फलवचनमेवानर्थकम्। स्तुतिवचनः शब्दो नास्तीति चेत्। इह फलवचनेन फलवत्ता प्रतीयते फलवांश्च प्रशस्त इति।

मुत्क्रम्यार्थवादे प्रार्थ्यते नूनमस्य विधावविश्रम्भ। तत्र चेदनाश्वासोऽर्थवादे कुतः प्रत्यय इति। अपि च वेदे व्यक्तमसंवादो वर्तमानेनोर्जोऽवरोधनेनेय स्तुतिर्न च तदस्ति। तत्राविद्यमानबहुश्रीरसंकीर्तनवदेतस्यात्। स्वरूपतस्तावदुदुम्बरेऽवत्त्व पक्षधर्मेणाप्रसिद्धम्। अन्वयाप्रसिद्धेश्च हेतुत्वाप्रसिद्धिः। न हि यद्यत्र स स यूप इति लोके वेदे वा प्रसिद्धमित्यसम्बद्धम्। तस्मादसंवादाद्वरं विधिरेव किं स्तुत्या संवादापेक्षिण्येति॥२१॥

ऊर्गुदुम्बर इत्यादि तावदूर्जोऽवरुद्ध्या इत्यस्योपपत्तिवचनं वाक्यभूतं न विच्छिन्नं स्तावकम्। न ह्यलमुदुम्बर इत्युक्ते पुरुषं प्रति प्रशस्तता गम्यते। ऊर्जोऽवरुद्ध्या इति तु प्ररोचयति। तदुपपत्तिरितरेति सगच्छते। तस्मात्कृत्स्नेन फलं प्ररोचना वा। तत्र यद्यपि तावल्लिङादि स्यात्तथाऽपि सुतरामर्थवादतया गृह्णीयात्। किमुत वर्तमानापदेशो यो विधिसिद्ध्यर्थमेव। प्रकरणाच्च यागोपकारे प्रयोजने लभ्यमाने किमित्यवाक्यात्फलं कल्पयिष्याम। प्रकरणं वाक्येन बाध्यत इति चेन्न। अविरोधात्। यदि ह्येकाशग्राहित्वेन वाक्यप्रकरणे संनिपतेतां तथा सति बाधः स्यात्। इह तु प्रकरणमौदुम्बरताविधिं गृह्णाति सोऽप्यूर्गुदुम्बर इत्यादिलभ्या प्ररोचनाम्। तत्र तद्विशिष्टौदुम्बरत्वग्राहिणः प्रकरणस्य को विरोधः। तस्मात्फलविधिसामर्थ्याभावात्प्रकरणावाधेन निवेशसम्भवो नातिक्रमितव्यः। प्ररोचनाऽपि च वाक्यशेषादुपपद्यमाना नार्थापत्त्या विध्युद्देशादेव कल्पिता भविष्यति। अन्यत्र विधिरपि हि तावत्ता कल्प्येत। इह तु स्वयमेव दुःस्थितः किं प्ररोचनया करिष्यतीति। न च स्तुत्युपयुक्तस्य पुनः फलेऽपि प्रतिष्ठायामिव व्यापारो युज्यते। रात्रिस-

तत्र फलवत्तायामानर्थक्यमिति यो द्वितीयोऽर्थः प्रशंसा नाम स गम्यते। लक्षणेति चेन्न। लक्षणायामप्यर्थवत्ता भवत्येव। लक्षणाऽपि हि लौकिकी। ननूक्तमसंवादो वेदे, न ह्युदुम्बर इति। गुणवादेन प्ररोचनार्थतां ब्रूमहे। गौणत्वात्संवादः। किं सादृश्यम्। यथाऽन्नं प्रीतेः साधनमेवमिदमपि प्रीतिसाधनशक्तियुक्तं प्रशंसितुं प्रशंसावाचिना प्रीतिसाधनशब्देनोच्यते। शक्यते हि तत्पक्षफलसंबन्धादूर्गिति वक्तुम्॥ २२॥

प्राणा इत्यनन्यपरत्वाद्भूम्यपि कल्पनाऽऽश्रीयते। अत्र तु प्रकरणादस्ति प्रयोजनसिद्धिरित्युक्तम्। जातिविशेषस्य च योग्यतयैव काष्ठाङ्गत्वं प्रसिद्धं न फलार्थता। यूपशब्दोऽपि च कर्माविष्टकाष्ठवचन इत्युपनीतमात्रमेव गृह्णाति। अतश्च प्रसिद्धे पारार्थ्येऽर्थवादता। यत्तु यूपे निराकाङ्क्षो जातिं प्रतीति शरवद्बाधो भविष्यति। न चाबाधप्रकारोऽस्ति। काम्यपक्षेऽपि तदभ्युपगमात्। एतावांस्तु विशेषः। तव पुरुषार्थत्वाद्भिन्नविषयेण सता कथंचित्प्रसङ्गलभ्यसमानाश्रयत्वेन, मम तूभयोः क्रत्वर्थत्वात्समानविषयेणेति। न चात्र जातौ फलाय विधीयमानायां दध्न इव होम आश्रयो मनसि विपरिवर्तते। यो हि पशुयागः प्रकृतः स तावदयोग्यः। पशुनियोजनं च यूपद्वारेण योग्यं तदपि सह यूपेनाप्रकृतम्। न चानर्थक्यात्तदङ्गेषु इति प्रधानादवतीर्य तदङ्गमाश्रीयते। यो हि प्रधानोपकारित्वेन श्रूयते स तदङ्गेऽपि स्थित उपकरोतीत्येवं कल्प्यते न त्विह तथा। अत्र हि प्राधान्याशभाजा गुणेनाऽऽश्रयः प्रार्थ्यते। तत्र प्रधानं संनिहितं तद्यदि न योग्यं ततो वचनव्यक्त्यन्तरमाश्रीयताम्। न चावतरणं संभवति। न चानेनैव वाक्येनाऽऽश्रयो दीयते। वाक्यभेदप्रसङ्गात्।द्वौ हि संबन्धौ तदा स्यातां गुणफलसंबन्धस्तदाश्रयसबंन्धश्चेति। युगपच्चौदुम्बरताफलयूपौ प्रत्युपादीयमानोद्दिश्यमाना विरूपा स्यात्। अथोभयोद्देशेन विधीयते तथाऽपि फलाननुरक्ता यूपेन संबध्येत यूपाननुरक्ता च फलेन। यत्तु विनैव विधायकात्स्वेच्छयैव प्रवर्तिष्यामह इति स्वच्छन्देन सह नास्ति विधिवादः। पुरुषार्थफलत्वं तु न भाविधेः सिध्यति संनिहितत्तरौदुम्बरत्वादिसाध्याशावरोधात्। यत्तु प्रयोगवचनो विधास्यतीति न पुरुषार्थेषु तस्य शक्तिः। असंयुक्तं प्रकरणादिति वक्ष्यति। यदि तु तेन विधीयते सिद्धं कर्मार्थत्वम्। पञ्चमलकाररूपं तु वर्तमानपदेशेन संदिग्धम्। तस्माद्वर्तमानफलाभिधायित्वाच्चतुर्थे चैवंकामशब्दराहितस्य फलविधित्वनिराकरणात्प्रधानफलमेवेदं प्ररोचनार्थं संकीर्त्यत इति युक्तम्। सर्वत्र च स्तुतिपरत्वात्तद्रूपेषु सत्यासत्यान्वेषणं व्यर्थम्। ज्ञानमात्रोपयिकत्वात्। गुणवादेन च संवादात् साधनत्वेऽपि च प्रीतिसाधनत्वेन तृप्तिहेतुत्वेन वा संवादः॥ २२॥

१ जै. १-३-८। २ जै. १-३-४१

विधिश्चानर्थकः क्वचित्तस्मात्स्तुतिः प्रतीयेत
तत्सामान्यादितरेषु तथात्वम् ॥ २३ ॥

अप्सुयोनिर्वा अश्वो अप्सुजो वेतस इति अप्सुयोनिरश्वः कर्तव्य इति विधेरशक्यत्वादानर्थक्यम् । तत्रावश्यं स्तुतिः कल्पयितव्या शमयित्रीभिरद्भिरश्वस्यावकानां च संबन्धो यजमानस्य कष्टं शमयतीति । तत्सामान्यादितरेषु तथात्वं तथेतियावत्, तावत्तथात्वमिति । किं तत्सामान्यम् । विध्यसंभवः स्तुतिसंभवश्च ॥ २३ ॥

प्रकरणे संभवन्नपकर्षो न कल्प्येत विध्यानर्थक्यं
हि तं प्रति ॥ २४ ॥

इतश्च पश्यामः स्तुतिरिति । कुतः । इदं समामनन्ति यो विदग्धः

यदि चैवंजातीयका विधयो भवेयुस्ततः पूर्वोदाहृताः सर्व एव द्रव्यगुणक्रियाविधयो भवेयुः । वायुः क्षेपिष्ठा देवता कर्तव्या, अप्सुयोनिरश्वः कर्तव्यः, अप्सुजो वेतसोऽवकाश्च कर्तव्याः, आपः शान्ताः ऊर्गुदुम्बर इत्यादि । तत्र यद्यपि के चित्क्रियादिविषयः शक्यन्ते कर्तुम् । एते त्वशक्याः स्वभावासिद्धेः प्रयत्नेनापि चानिष्पत्तेः । वायुवेतसावकादिषु स्वभावसिद्धिः । अश्वोदुम्बरादीनामशक्यता । कीदृशी स्तुतिस्ता दर्शयति । शमयित्रीभिरद्भिरित्यादि । तत्रासंगतेरग्रन्थ इति व्याख्यातारः समर्थयन्ते । यस्मादिष्टावकातत्संबन्धयोः शमयितृत्वस्य च नैवोपन्यासः कृतो वेतस उपन्यस्तः सोऽपि स्तुतिवेलायां न प्रदर्शित इति । तत्र त्वियं गमनिका । वेतसोदाहरणेनैव तुल्यत्वादवकादीन्यप्युदाहृतानि । न चायमश्वावकयोः परस्परेण संबन्धः कथ्यते । केन तर्ह्यद्भिः । तावता तु न स्तुतिः का चिदुन्मीलितेत्यर्थवादान्तरापेक्षाप्रवृत्ता तां दर्शयति— आपो वै शान्ता इति । अनेन हि विधित्वात्प्रच्युतेनापां प्राशस्त्यमुच्यते तत्र कस्य चित्प्रसिद्धमसंबन्धस्य तन्मात्रसंकीर्तनात्कृता स्तुतिर्भवति । अन्येषां तु यथाभिप्रसंबन्धात्संबन्धः कीर्त्यते । प्रसिद्धशान्तत्वसंबन्धाभिरद्भिः संबन्धादश्वादिरपि शान्तात्मकस्तत्संबद्धेन च कर्मणा यजमानस्य कष्टं शाम्यतीत्येवंविधप्राशस्त्यज्ञापनार्थम् । एवं क्षिप्रदेवनेन शीघ्रं फलप्राप्तिरन्नमयेन च यूपेनान्नप्राप्तिरिति स्तुतित्वे सिद्धे तत्समानन्यायानामन्येषामास्मकत्वम् ॥ २३ ॥

विधिपक्षे चायमपरो दोषो यदि तावद्यथावस्थितवाक्यग्रहणं ततः प्रकरणगतविदग्धोद्देशेन देवतान्तरविधानादुत्पत्तिवाक्यशिष्टदेवतापकर्षणं स्यात्, इयं वा तामप्यपकर्ष्येतीत्यपकर्षः । तत्र नैमित्तिकत्वादभ्युदितेष्टिवद्बाधोऽपि कल्प्येत यद्यन्यथा न संभवेत्, सति तु संभवे न युक्तमेतत् ।

१ तै. सं. ५-३-१२ । २ तै. सं. ५-४-४ । ---

स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स दैवतः । तस्मादविदहता श्रपयितव्यः स दैवतत्वायेति । यदि स्तुतिर्दर्शपूर्णमासयोरेव शृतः स्तोविष्यते । तथा संभवन्नपकर्षो न कल्प्येत । अपकृष्यत इत्यपकर्षः । विधिपक्षे तु यत्र नैर्ऋतस्तत्र विदग्धता नीयेत । तथा सति प्रकरण बाधितं भवेत् । दर्शपूर्णमासकर्म प्रति नैर्ऋताभावादविदग्धविधानमनर्थकं स्यात् । तस्मात्स्तुतिरेव ॥ २४ ॥

विधौ च वाक्यभेदः स्यात् ॥ २५ ॥

औदुम्बरो यूपो भवतीति विधावेतस्मिन्नाश्रीयमाणे ऊर्जोऽवरुद्ध्या इत्येतस्मिन्नर्थे वाक्यं भिद्येत । इत्थमौदुम्बरो यूपः प्रशस्तः स चोर्जोऽवरुद्ध्या इति । तस्माद्विधिवन्निगदानामपि स्तुतिरेव कार्यमर्थवादानामिति ॥ २५ ॥

[३] हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥ पू०

अथ ये हेतुवन्निगदाः शूर्पेण जुहोति तेन ह्यन्नं क्रियत इत्येवमादयस्तेषु संदेहः । किं स्तुतिस्तेषां कार्यमुत हेतुरिति । किं प्राप्तम् । हेतुः स्यात्प्रकरणं होमस्य ।

---

अथैतद्दोषभीतैरर्थस्याध्यवचनव्यक्त्यन्तर व्यवहितस्त्वनयाऽऽश्रीयेत यो नैर्ऋत स विदग्ध कर्तव्य इति । ततः प्रकरणे नैर्ऋताभावाद्यत्रासौ विहितस्तत्र विदग्धता नीयेत । तत्र प्रकरण बाध्येत । न चाबाधसम्भवे तद्युक्तमतोऽर्थवादत्वादनपकर्ष इति ॥ २४ ॥

स्तुतित्वेन विधिविभक्तिमुपजनय्य पुनस्तेनैव फलकल्पनाया वाक्यभेदस्तस्मादर्थवाद एवेति ॥ २५ ॥

( इत्यौदुम्बराधिकरणम् ॥ २ ॥ )

इह ये हेतुवन्निगद्यन्ते हिशब्दादिभिर्न च परमार्थहेतवस्त उदाहरणम् । तत्र यदि तावद्धेतुत्व विधीयते तत पूर्वेणैव गतम् । यदिह हेतुत्व तच्छूर्पहोमसम्बन्ध प्रति न चाविहितोऽसावस्तीति कस्य हेतुरुच्यते । अथ भूतानुवादमात्रं तत्तु वायुक्षेपिष्ठत्ववद्गतमित्यनारभ्यमेतत् । उच्यते । न तावदनेनैव वाक्येन हेतुत्वं विधीयते । न च भूतानुवादमात्रं किं तर्हि हेतो प्रसिद्धिपूर्वकत्वात्सिद्धवदुपादिष्टस्य यावत्यसिद्ध्याशङ्का तत्रार्थापत्तिलभ्याद्वचनात्सिद्धि । याऽपि चार्थवादाशङ्का कस्मादिति साऽप्यनेनैव हेतुना निवर्त्यत इति मन्यते । अथाप्यर्थवादत्वं तथाऽपि तदन्तर्नीतहेतुत्वमेवेति सर्वप्रकरणविषय विज्ञायते ततश्च हेतुरप्यस्तीति पूर्व पक्ष । सम्बन्धस्य च विधेयत्वात्तद्गत-

---

१ तै० सं० २–६–३ । २ तै० ब्रा० १ । ६ । ५

नन्वप्रसिद्धे कार्यकारणभावे न हेतुपदेशः। सत्यमेवं लोके, विधायिष्यते तु वचनेन वेदे। शूर्पेण होमे कर्तव्येऽन्नकरणं हेतुरित्युपदिश्यते। किं प्रयोजनम्। अन्यदपि दर्वीपिठराद्यन्नकरणं यत्तेनापि नाम कथं होमः क्रियेतेति। कुतः। तस्याप्यन्नक्रियायामर्थवत्ता, शक्यते च तेनाप्येवं कर्तुम्। एतद्धि क्रियत इत्युच्यते। न हि वर्तमानकालः कश्चिदस्ति यस्यायं प्रतिनिर्देशः। हेतौ च श्रुतिः शब्दः स्तुतौ लक्षणा। यदि च दर्वीपिठ·

---

मेव हेतुत्वं होमस्येति वदति। नन्वप्रसिद्धे कार्यकारणभाव इति। केचिदाहुः। कार्यकारणयोरेवानुमानम्। तथा च दध्नेन्द्रियकामस्येत्यत्रापि वक्ष्यति। तदयुक्तम्। अकार्यकारणभूतानामपि कृत्तिकादीनामचिरोद्गतरोहिण्यादिप्रतिपत्तिहेतुत्वदर्शनात्। अतो गम्यगमकत्वमेव कार्यकारणभावं मन्यते। ननु सोऽप्यनुमानोत्तरकालीनत्वादनङ्गम्। सत्यम्। अन्यस्मिन्नेव तु संबन्धे सति पश्चात्प्रसिद्धयन्तमेनमनुमानव्यवहारोपलक्षणत्वेनोपन्यस्यति। यद्वा शक्त्यभिप्रायं ययोरेव हि व्याप्तिग्रहणकाले गम्यगमकसामर्थ्यात्मना कार्यकारणभावित्वेन साऽवधृता तत्रैव हेतुता। अथ वोदाहृतविषयहेतुलक्षणमेतत्।

अविनाभावो ह्यनेककार्यकारणस्वस्वामिसहचरभावादिप्रभेदभिन्नः, तत्रान्नकरणता होमे हेतुत्वेनोच्यमाना संबन्धान्तराभावात्कारणत्वेन स्यात्। तच्चाप्रसिद्धं तस्मान्न हेत्वपदेशः। सत्यं लोके हेतुव्यवहारकालात्प्रथमं प्रमाणान्तरेण संबन्धप्रसिद्धिरपेक्ष्यते वेदे तु हिशब्दप्रतिपादितहेतुत्वान्यथानुपपत्त्या संबन्धाभिधायि दृष्टान्तवचनं कल्प्येत यद्यदन्नकरणं तेन तेन जुहोतीति, तेन चोपपन्नं हेतुत्वम्। किं प्रयोजनमिति। यदि च हेतुरवतिष्ठेतेत्यनेनाभिप्रायेण। अपरस्त्वाह व्याप्तौ सिद्धायां सर्वान्नसाधनसाधनको होमः सिद्धो भवति। कुत इति। स एव सिद्धान्ताभिप्रायः। अथ वा कुतो दर्वीपिठरादेः साधकतमत्वम्। इतरस्त्वाहान्नक्रियायां तावत्तस्यार्थवत्ताऽस्ति तावन्मात्रं चाऽऽश्रयिष्यते। शक्यते च तेनापीति। उपपत्तिशब्दस्यार्थः। पूर्वेण तु समानार्थता गम्यते। तेन विवक्षा। शक्त्यभिप्रायमेतत्। यदेव हि तदुपयोगिमात्रं तदेव शक्यते कथं चित्साधकतमत्वेन विवक्षितुम्। अथवाऽर्थवत्त्व करणविभक्तिनिर्देशाल्लभ्यमनुपपत्त्या पुनर्वर्तमानान्नक्रियस्य हेतुत्वाभिधानात्तादृशस्य होमं प्रत्यनुपपत्त्याशङ्कयोपपत्तिं वदति। शक्यते च तेनेति। तत्र चोदयति। एतद्धि क्रियत इत्युच्यते तत्कथं शक्यत इत्यभिधीयते। वर्तमानक्रियस्यासंभवादित्युक्तम्। यद्वा स्वयमेवाऽऽशङ्क्य परिहरति। यदि च न दर्वीपिठराद्यीति। उभयोः परामर्शः। साध-

रादि न साक्षादन्नं करोतीति नान्नकरणमित्युच्यते । व्यर्थे तस्मिञ्छूर्पस्तुतिरनर्थिका स्यात् । शूर्पमपि हि न साक्षादन्नं करोतीति तेन विनाऽर्थेन शूर्पस्य स्तुतिर्नोपपद्यते ॥ २६ ॥

**स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥ २७ ॥ सि०**

न त्वेतदस्ति । शब्दपूर्वकोऽयमर्थोऽन्नकरणं हेतुरिति । शब्दश्चान्नकरणं शूर्पहोमे हेतुरित्याह । न च दर्वीपिठरहोमे तेन शब्दपूर्वं शूर्पे न च दर्वीपिठरादेश्चोदना ॥ २७ ॥

**व्यर्थे स्तुतिरन्याय्येति चेत् ॥ २८ ॥**

इति पुनर्यदुक्तं, तत्परिहर्तव्यम् ॥ २८ ॥

---

कतमत्त्ववर्तमानत्वे चेत्तत्र न विद्यते शूर्पेऽपि तथैवेति स्तुतिर्न स्यात् नेन यथा तव स्तुत्यर्थः कथं चिद्विद्यते तथा मम हेत्वर्थ इत्यविशेषः । हेतौ च श्रुतिरित्यादि, असंबद्धवाक्यसंनिधिदोषादन्ते द्रष्टव्यम् । स्तुतौ लक्षणेति । अन्नकरणत्वेन सर्वजनाभिमतेन प्राशस्त्यं लक्ष्यते । शूर्पेणेति चास्मिन्पक्षे नित्यानुवादोऽन्नकरणसामान्येनैव प्राशस्त्य । इत्थं वा सूत्रगमनिका । तत्रार्थवत्त्वं तावदर्थवादात्प्रयोजनवत्तरत्वमुपपत्तिरित्यप्रसिद्धं, संबन्धोऽपिकल्पनिकवाक्याश्रयणात् । तस्माद्धेतुः ॥ २६ ॥

शूर्पेणेति तावत्करणविभक्तिश्रुत्यैवावरुद्धो होमो नानुमानिकैर्दर्विपिठरादिभिः सह बाधविकल्पसमुच्चयान्प्रतिपद्यते ।

होमश्च तेन निराकाङ्क्षीभूतो नान्यत्प्रार्थयते । अनुत्थितायामेव च दर्विपिठरादिश्रुतौ शूर्पं प्राप्नुवच्छ्रुत्यनुमानं प्रतिबध्नाति । तेन [illegible]तीति—अचोदना च तस्येति । हेत्वपदेशश्च स्तुत्यैवोपपद्यमानः सन्नश्रुतदृष्टान्तकल्पनार्थे प्रभवति । शूर्पश्रुतिश्च विध्युद्देशापातिन्यनन्यप्रयोजना विस्पष्टा च सती परित्यक्तुं न युज्यते । तस्माद्यद्वाऽन्नकरणत्वादित्येष कर्तव्य इत्यनेनापेक्षितत्वाल्लक्षणयैतत्प्रतिपादयति प्रशस्तत्वादिति । अथ वाऽन्नकरणत्वादिति श्रुतिवृत्तमेव । तत्र यथाश्रुतं विध्युद्देशे हेतुतामप्रतिपद्यमानं तदनन्तराकाङ्क्षितोपप्लुतहेत्वपेक्षप्राशस्त्यहेतुरवधार्यते, अन्नकरणत्वात्प्रशस्त इति । कल्पनाद्वयेऽपि च लोकप्रसिद्धदृष्टान्तलाभान्नाश्रुतनद्वाक्यानुमानप्रसङ्गो भविष्यति । सिद्धं हि प्रशस्तानां कर्तव्यत्वमन्नकरणानां [illegible] प्रशस्तत्वमिति । अचोदना च तस्येति व्याख्यान्तरम् । तत्र हि यद्यदन्नकरणं तच्चोद्यते न च दर्विपिठरादीनां करणता साधकतमस्य पाकादेः करणत्वात् । एवं चोत्तरसूत्रमापतति ॥ २७ ॥

यत्पुनः शूर्पेऽप्यन्नकरणत्वानुपपत्तेः स्तुतिर्न प्राप्नोतीत्युक्तं किं तत्राभिधीयते ॥ २८ ॥

अर्थस्तु विधिशेषत्वाद्यथा लोके ॥ २९ ॥

अस्मत्पक्षेऽर्थोऽस्ति । वाक्यशेषो हि स विधेस्तदा भवति । संवादश्च स्तुतिवचनत्वेन यथा वयं शूर्पेणान्नं क्रियमाणं जानीमस्तथा शूर्पेणान्नं क्रियत इत्येव गम्यते । तदा चावर्तमानं स्तोतुं वर्तमानमित्युपदिशति । त्वत्पक्ष एष दोषो यस्य ते हेतुविधिः । विधौ हि न परः शब्दार्थः प्रतीयते । न च वर्तमानमुपदिशन्वेदः शक्यमर्थं विदध्यात् ।

अस्मत्पक्षे तु एष परशब्दः यत्र वर्तते यथा लोके बलवान्देवदत्तो यज्ञदत्तादीन्मसहत इति । प्रकृष्टबलेऽपि बलवच्छब्दो वर्तमानो न सिंहं शार्दूलं वाऽपेक्ष्य प्रयुज्यते, ये देवदत्तात्तु निकृष्टबलास्तानपेक्ष्य भवति ।

---

अस्मत्पक्षेऽर्थोऽस्ति स्तुत्यालम्बनकरणत्वं नाम, वाक्यशेषो हि भवत्पारतन्त्र्याद्गौणत्वाद्यपि प्रतिपद्यते तदा च विधेयान्तरवशादवश्यमनुवादेन भवितव्यमनुवादश्च यथाविज्ञातस्य भवति । अतः शब्देनैवाभ्यनुज्ञातं यादृशं वयमन्नकरणत्वं शूर्पे पश्यामस्तादृशमिदं संकीर्त्यत इति । अनेन वर्तमानापदेशो व्याख्यातः । तत्रापि हि कृतं वा करिष्यमाणं वा स्तोतुं क्रियत इत्युच्यते । कथं स्तुतिः, सर्वलोकस्य भूतभविष्यदनादरेण वर्तमानोपकारानुरागाद्वर्तमानालोचनेनैव च कालान्तरेऽपि तत्र प्रीतिरिति क्रियत एवानेनान्नमित्युच्यते । अथ वाऽन्नक्रियाशक्तेर्वर्तमानतामन्नक्रियायामेवोपचर्य स्तौति । तत्रापि जनानां शक्त्यतिक्रमेणाभिव्यक्तिप्रियत्वात्क्रियत इत्युक्ते स्तुतिर्भवति । न शक्त्यभिधानात् । तव तु विधिवादित्वान्मुख्यान्नकरणत्ववर्तमानत्वयोरग्रहणे दोषः । किं कारणम् । विधानं ह्यत्यन्तानवगतार्थविषयम् । तत्र यथाश्रुतादन्यथाग्रहणं निष्प्रमाणकम् । एतदेवाऽऽह—विधौ हि न परशब्दार्थः प्रयोजनमिति । परशब्दार्थो हि लक्षणासु प्रयोजनम् । तदिह भूतभविष्यत्क्रियावाचिनः शक्तिवर्तमानतावाचिनो वा स्वार्थे वर्तमानान्नक्रियावाची शब्दः कल्पनीयः ।

तन्निमित्तमात्रे शब्दार्थे साधकतमत्ववाचिनी तृतीया । ननैवंभूतत्वं कुतश्चित्सिद्धमित्यप्रमाणकम् । अथ मुख्यार्थपरिग्रहः । तत्रोच्यते । न च वर्तमानं साधकतमं चोपदिशन्वेदः शक्यमर्थं विदध्यात् । न हि वर्तमानान्नक्रियेण शूर्पादिना साधकतमेन वा पाकेन होतुं शक्यते तस्मादुभयथाऽपि विप्रतिषिद्धम् । अस्मत्पक्षे त्वनुवादत्वात्परशब्दार्थग्रहणम् । यथा लोके बलवान्देवदत्त इति भूम्न्यतिशायने वा मतुप्प्रवृत्तिर्न च विशेष उपात्तोऽमुष्मात्प्रकृष्टबल इति । तत्र सर्वसत्त्वेभ्यः प्रकर्षे मुख्यः शब्दो न च तथा संभवति सिंहादीनां बलवत्तरत्वादिति देवदत्तान्न्यूनतरबलानपेक्ष्यैवमभिधीयते तथाऽत्र विप्रकृष्ट-

एवं तेन ह्यन्नं क्रियत इति प्रकृष्टान्नकरणेन संस्तवः शूर्पस्य, निकृष्टा न्यन्यान्यन्नकरणान्यपेक्ष्य भविष्यति ॥ २९ ॥

यदि च हेतुरवतिष्ठेत निर्देशात्सामान्यादिति चेद-
व्यवस्था विधीनां स्यात् ॥ ३० ॥

यद्यपि च भवेदन्नकरणं हेतुर्दर्वीपिठरप्रकाराणां तथाऽपि शूर्प एवाव-तिष्ठेत । शब्दादन्नकरणं हेतुरिति विज्ञायते । शब्दश्च शूर्पस्याऽऽह न दर्वी-पिठरादीनाम् ।

तद्धि निर्दिश्यते यस्माच्छूर्पेणान्नं क्रियते, तस्माच्छूर्पेण जुहोतीति ।

---

तरान्नसाधनत्वाद्धलाद्यपेक्षया शूर्पं साधकतममित्युच्यते । नन्वेवमापेक्षिकप्रवृत्तेर्मुख्यत्वमेव स्यात्, तथा च देवदत्ते बलवच्छब्दप्रवृत्तिं नैव गौणीं मन्यन्ते । सत्यमेव, यदा ताव न्न्यूनमात्रापेक्षयैव प्रयुज्यते यदा त्वविशेषप्रवृत्तेस्तदधिकेऽप्यपि बलवद्बुद्धिर्जाता तदा स एव शब्दः कुतश्चिदपि न्यूनबले वर्तमानो गौणः सम्पद्यते । तथा यदि विध्युद्देशोपात्ते शूर्पेऽन्नकरणत्वमनूद्यते ततस्तन्न्यूनमात्रापेक्षया वा मुख्यत्वं न्यूनानुपादानाद्वा सामा-न्यतः प्रवृत्तस्य सर्वप्रकृष्टगामित्वबुद्धौ सत्यां गौणता । प्रवृत्तस्त्वपूर्वविधानादत्यन्तसा धकतमत्ववर्तमानत्वयोः क्रियां प्रत्युपादानान्न्यूनापेक्षागौणत्वयोर्निमित्तं नास्तीत्यतिदेश स्यादित्यसमानम् ॥ २९ ॥

। अभ्युपेत्यवादोऽयम् । यद्यपि हेतुविधानं तथाऽपि न दर्विपिठरादेः प्रसङ्गः । कुतः । शूर्पे हि विधायान्नकरणं हेतुरुच्यते । सोऽपि च न लोके प्रसिद्धः, शब्दमेव दृष्टान्त वाचिनमनुमाय साधयितव्यः । तदनुमाने च श्रुतहेतुत्वान्यथानुपपत्तिः प्रमाणं, सा च प्राबल्येव हेतुत्वमुपपन्नं ततोऽधिककल्पनायै न प्रभवति । शूर्पं च होमसम्बन्धित्वेन प्रतिज्ञातेऽन्यधर्मस्याहेतुत्वादवश्यं तद्गतमेवान्नकरणत्वं वक्तव्यम् । सन्निधेश्च तदवच्छिन्न मेव तद्गम्यते । लोकेऽपि च यं धर्मिणं प्रतिज्ञाय यो हेतुरपदिश्यते स प्रथमं तावत्तद्ग-तविशेषात्मनैव प्रतीयते । तद्वात्मकस्य तु साध्यांशानुगमाभावात्सामान्यमात्रं विवक्षित मिति दृष्टान्तप्रयोगवेलायामेवावधार्यते, वेदहेतूनां पुनर्न सामान्यात्मना साध्यसम्बन्धोऽ वगतो न विशेषात्मना सोऽधुनैवार्थापत्त्या कल्पनीयः ।

तत्र विशेषस्योपादानात्सामान्याप्रसिद्धेश्च तत्परित्यागनिमित्तस्याभावादुपात्तवि-शेषमात्रोपसंहृतान्यथानुपपत्तिस्तद्गतमेव दृष्टान्तवचनं कल्पयति । तदकल्पने हि हेतु निर्देशः श्रुतो विरुध्यते । यदि तु दर्विपिठरादिगतान्नकरणत्वहोमसम्बन्धाविनाभावो न कल्प्यते । न किंचिच्छ्रुतं दृष्टं वा नावकल्पते । तस्मादीदृशं दृष्टान्तवचनं कल्प्य

यथा यस्माद्बलवदुपध्मातोऽग्निस्तेन मे गृहं दग्धमिति, नानग्निरपि बलवदुपध्मातो दहतीति गम्यते। अथ मतं, येन येनान्नं क्रियते प्रणाड्या शूर्पादन्येनापि, तेन तेनापि होमः क्रियत इति। अव्यवस्था विधीनां स्यान्न केनचित् प्रणाड्याऽन्नं क्रियते। तत्र यावदुक्तं स्याज्जुहोतीति, तावदेवान्नकरणेन जुहोतीति। अस्मत्पक्षे पुनः शूर्पं स्तूयते। तेन ह्यन्नं क्रियत इति वृत्तान्तान्वाख्यानं न च वृत्तान्तज्ञापनाय, किं तर्हि प्ररोचनायैव। तस्माद्धेतुवन्निगदस्यापि स्तुतिरेव कार्यमिति ॥ २० ॥

## [४] तदर्थशास्त्रात्। पू०

अथेदानीं किं विवक्षितवचना मन्त्रा उताविवक्षितवचनाः। किमर्थप्रकाशनेन यागस्योपकुर्वन्ति, उतोच्चारणमात्रेणेति। यद्युच्चारणमात्रेण

---

यद्यच्छूर्पमन्नकरणं तेन तेन जुहोतीति। तदेतद्विशेषदृष्टमनुमानम्। लोकेऽपि तृणधूमदर्शनात्तृणाग्निरेवानुमीयते नाग्निमात्रम्। यथा च गमनं गोशब्दव्युत्पत्तिनिमित्तत्वेनोपादीयमानं सास्नादिमत्सामान्यप्रत्ययोत्तरकालं तद्गतमेव निमित्तत्वं प्रतिपद्यते न गन्तृमात्रविषयमिति गोशब्दव्यवस्था तथा शूर्पगतान्नकरणहेत्वपदेशान्नान्यगतहेतुत्वप्रसङ्गः। तत्रैतावानर्थः स्यात्। यद्यदन्नकरणसमर्थं शूर्पं तेन तेन होतव्यं न दर्विपिठरादिग्रहणम्। यथा बलवदुपध्मातेऽग्नौ दहनहेतुत्वेनोक्ते स एवानुपध्मातो न दहेन्न तु शङ्खादयो बलवदुपध्माता दहन्ति। तस्माद्व्यवस्था। यदि पुनः शूर्पगतान्नकरणव्यतिरेकेण महासामान्यं विवक्ष्यते ततो यद्गृहीतं तस्य तस्य का चिदन्ननिमित्तता विद्यत इत्यव्यवस्थितत्वाद्धोमासिद्धद्रव्यमात्रानुवादः सन्ननर्थकोऽन्नकरणशब्दः। तस्माद्धेतुत्वेन स्तुतिरेवमेव परमिति ॥ २० ॥

इति हेतुवन्निगदाधिकरणम् ॥ ३ ॥

इहाऽऽनर्थक्यश्रवणात्केचिदेवं संदेहमुपन्यस्यन्ति किमर्थवन्तो मन्त्रा उतानर्थका इति। तदयुक्तम्। स्पष्टे शब्दात्प्रतीतेऽर्थे नानर्थक्यं हि शङ्क्यते। अग्नौ दहति दृष्टे वा दग्धृत्वं किं विचार्यते ॥ सर्वत्र हि कार्यदर्शनाच्छब्दानां शक्तयः कल्प्यन्ते। तथार्थप्रत्यायनं मन्त्रेष्वप्युच्चार्यमाणेषूपलभ्यते। न चाविशिष्टस्तु वाक्यार्थ इत्येवमादिप्रतिज्ञामात्रसाध्योत्तराः पूर्वपक्षा भवन्ति। तस्मादयुक्तोऽयमुपन्यास इति मत्वाऽऽह—किं विवक्षितवचना मन्त्रा उताविवक्षितवचना इति। नन्वनेनैव हेतुनेदमपि न विचारणीयम्। नैष दोषः। अर्थवतामपि वाक्यानां द्वैविध्यदर्शनात्। उच्चारणार्थप्रत्यायने ह्यविनाभूते तत्रान्यतरविवक्षया प्रयुज्यमानेऽपि किंचिन्नान्तरीयकं भवति। यदर्थप्रत्यायनं

---

१ तदर्थशास्त्रादित्यारभ्य मन्त्रानर्थक्यमित्यन्तस्य सूत्रस्यापि व्याख्यातृभिरर्थद्वयवशाद्विभज्य व्याख्यायत इति ज्ञेयम्।

तदा न नियोगतो बर्हिर्देवसदनं दामीत्येष बर्हिर्लवने विनियुज्येत। अभिधानेन चेत्, प्रकरणेन विज्ञाताङ्गभावो नान्यत्रोपरन्तुं शक्नोतीत्यन्तरेणापि वचनं बर्हिर्लवन एव विनियुज्यतेति। तदेवमवगच्छामः। उच्चारणमात्रेणैवोपकुर्वन्तीति। कुतः। तदर्थशास्त्रात्।

विवक्ष्यते तदोच्चारणमर्थात्, अथोच्चारणविवक्षा ततोऽर्थप्रत्यायनमनुपङ्गात्। यथा जपेषु विषविद्यासु चेत्यस्ति विचारावसरः। कथं पुनरस्य प्रमाणलक्षणेन संबन्धः। पूर्वमेवोक्तमेतत्। यथाऽऽम्नायस्य क्रियार्थत्वादित्ययमेवात्र पूर्वपक्ष इति तदुत्तरेणैव च निराकाङ्क्षत्वान्न पुनरभिहितम्। एवं हि मन्यते यत्र सोऽरोदीदित्येवमादेः कथंचित्सबन्धापादनं, तत्र मन्त्रेषु क संदेहस्तस्मादुपयोगविशेष एव चिन्तनीय इति। तत्र विधिस्तुतित्वे तावत्स्वयमेव निराकरिष्यति, अविधिसरूपत्वात्। प्रदेशान्तरविहितस्तुत्यसंभवाच्च। परिशेषात्स्वरूपप्रयोगे सत्यर्थोच्चारणयोः किं विवक्षितमिति विचार्यते। सामसु तु वाचकत्वाभावादात्मप्रयोगमात्राक्षराभिव्यक्तिपरत्वगतसंदेहः। कथं पुनः पूर्वपक्षवादिनः श्रुत्यसंयुक्तानां केषांचिन्मन्त्राणां प्रयोगसिद्धिः। केचिदाहुः। अप्रयोगार्थमेवासावविवक्षितार्थत्वे यतते। न ह्यनाश्रितार्थान्मन्त्रान्कश्चिदपि प्रयुङ्क्ते। अतो यच्च किमुच्चारणमात्रेणोपकुर्वन्तीति सिद्धवत्प्रयोगाभिधानं नैतदङ्गत्वेव द्रष्टव्यम्। अयं हि तत्र दुष्टोऽभिप्रायः। यदि नामोच्चारणमात्रोपकारं वक्ष्यति। तत्र शक्ष्याम्यस्याप्रयोगं वक्तुमिति। यद्यपि प्रयोजनकथने बर्हिर्देवसदनं दामीत्ययं बर्हिर्लवनात्प्रच्याव्यते तदनेन प्रकारेण प्रयोगप्रच्यावनमेव द्रष्टव्यम्। अथ वा याज्ञिकदर्शनेनाविगानात्प्रयोगसिद्धिमविचार्येतरो विचारः। किमर्थं तु याज्ञिकप्रसिद्धिरपेक्षिता यतः सैव तावद्युक्तायुक्तत्वेन न विचार्यते। तत्रायमभिप्रायः। सर्वथा तावद्दृढमेषां स्मृतिन्यायेन प्रयोगित्वमवस्थितं तत्र शक्यं बाधितुं तस्यैव त्विदं मूलं निरूप्यते। तद्यदि पूर्वपक्षो भविष्यति ततोऽन्यप्रमाणाभावाद्विनियोजकश्रुत्यनुमानेन मूलं कल्पयिष्यामः। सिद्धान्ते तु लिङ्गप्रकरणयोरेव मूलत्वाध्यवसानम्। अथ वैवं पूर्वपक्षेऽपि प्रयोगः। स्वाध्यायाध्ययनविधिनैव मन्त्राः पुरुषार्थाय नीयन्ते। तथा हि। दर्शपूर्णमासादिभिः क्रमप्रकरणाभ्यां यावत्संगृह्यते तत्सर्वमुपकारकत्वेन स्वीक्रियते। प्रयाजादिवाक्यानि मन्त्ररूपमपि च।

तत्र प्रयाजादिवाक्यान्यर्थं समर्प्य चरितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोज्यतां न प्रतिपद्यन्ते। मन्त्राः पुनः कर्मोपयिकार्थाभिधायित्वात्तेनाशेनानपेक्षिताः। स्तुतिविधिस्मृतीनां तु प्रकारान्तरेण सिद्धिरिति प्रयोगवचनेनैषां रूपमेवाङ्गीक्रियते। स्वाध्यायाध्ययनचोदनाऽपि प्रत्यासन्नतरमन्त्रस्वरूपमेव समर्प्य चरितार्थत्वान्न विप्रकृष्टमर्थाभिधानं यावद्गच्छति। प्रयाजादिवाक्येष्वपि तावद्रूपग्रहणमेव प्रसक्तमासीत्तत्त्वभिप्रेतार्थज्ञानेन

अथोच्चारणमात्रेण, ततो वक्तव्यो विनियोग उक्तश्च। अतो नार्थाभिधानेन। यथा सास्नः पुरुषः परेण नेनीयते नूनमक्षिभ्यां न पश्यतीति गम्यते।

नन्वर्थवादार्थं भविष्यतीति चेत्। न हि। येन विधीयते तस्य वाक्यशेषोऽर्थवाद इत्युक्तम्। न च निरपेक्षेण विहितेऽर्थवादेन किंचिदपि प्रयोजनं क्रियते। अतो नार्थवादार्थं वचनम्।

तथाऽभ्यादानसमर्था मन्त्रा उदाहरणम्। लिङ्गादेवाऽऽदाने प्राप्ता वचनेन विधीयन्ते। तां चतुर्भिरादत्त इति।[2] चतुः संख्यार्थमिति चेन्न। समुच्चयशब्दाभावात्।

युक्तं न त्विह तथा किंचित्। शब्दे च कार्यस्यासंभवादर्थे कार्यं विज्ञायते। मन्त्रात्तु शब्द एव संभवति। अवश्यं ह्यर्थप्राधान्यपक्षेऽपि पुरुषः शब्दे नियोक्तव्यः। तद्व्यापारोत्तरकालत्वादर्थाभिधानस्य। तस्माद्रूपमेवाङ्गम्। तथा च तदर्थशास्त्रादीन्युच्यन्ते। परिहारसूत्रक्रमानुरोधेन विपर्यस्तान्युदाहरणान्यभ्र्यादानात्प्रभृति द्रष्टव्यानि। भाष्यकारस्तु यथातथोदाहृतैरपि कार्यसिद्धिं मत्वैवमुपन्यस्तवानुरुप्रथस्वेत्यादि। यथासास्न इति। नीलीरोगाद्युपहतेन्द्रियस्य चक्षुरस्त्येवेति परैर्दृश्यते, परेण तु नीयमानमुपलभ्य न पश्यतीति ज्ञायते, तथा मन्त्ररूपमालोचयतामर्थप्रकाशनशक्तिबुद्धिर्यद्यपि भवति तथाऽपि परेण विनियोगं दृष्ट्वा स्वयं विनियोजकशक्तिर्नास्तीति गम्यते। ततश्चार्थामन्त्रत्वम्। अन्यथा स्वयमेव विनियुज्येत। नन्वर्थवादार्थमिति। लिङ्गप्रकरणानुमितमन्त्रविधिस्तुत्यभिप्रायम्। न हीतिच्छेदः। विधिनैकवाक्यतयाऽर्थवादाः स्तुत्यर्थाः कल्पिताः। प्रदेशान्तरस्थस्य तु प्रत्यक्षस्याऽऽनुमानिकस्य वा विधेरात्मनः समीपेऽर्थवादमपश्यतः स्वयं प्ररोचनाशक्तस्याविर्भावेन व्यावृत्तापेक्षत्वान्न दूरस्थया स्तुत्या कार्यम्। तथाऽभ्यादाने रूपादेव प्राप्तत्वान्मन्त्राणां ता चतुर्भिरादत्त इत्यनर्थकं वचनम्। चतुःसंख्यामपि ब्रुवदेतन्मन्त्रगतामेव ब्रूयान्न क्रियागताम्। न ह्यन्यगुणोऽन्यगामी भवति। न च निर्दिश्यस्यास्य कर्माङ्गत्वेनोपदेष्टुं शक्यते। तेनैवं वाक्यं भवेद् एते चत्वारस्तैरभ्यादानं कुर्यात्ते च प्रागेव वचनाच्चत्वार इत्यानर्थक्यम्। क्रियानङ्गत्वादेव च संख्यायाः समुच्चयशब्दाभावाच्च प्रत्येकं च सामर्थ्याद्विकल्पः प्रसज्यमानो न शक्यो वारयितुम्। अस्मत्पक्षे पुनर्वचनगम्यत्वाददृष्टस्य न चतुर्भ्यः प्रागाप्तित्वे प्रमाणमिति युक्तः समुच्चयः।

---

१ वा० सं० (१-११)। २ तै० सं० (५-१-१)।

तथा, इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त इत्युदाहरणम्। रशनादाने प्राप्तस्य रशनादान एव शास्त्रं विनियोजकम्। तद्विवक्षितार्थत्वे न घटेतेति। ननु गर्दभरशनां परिसंख्यास्यति।

न शक्नोति परिसंख्यातुम्। परिसंचक्षाणो हि स्वार्थं च जह्यात्, परार्थं च कल्पयेत, प्राप्तं च बाधेत। तस्मान्न विवक्षितवचना मन्त्राः। अतो न प्रमाणं बर्हिर्देवसदनं दामीत्यस्य रूपं बर्हिर्लवने विनियोगस्य।

## वाक्यनियमात्।

नियतपदक्रमा हि मन्त्रा भवन्ति। अग्निर्मूर्धा दिवः इति, न विपर्ययेण। यद्यर्थप्रत्यायनार्था विपर्ययेणाप्यर्थः प्रतीयत इति नियमोऽनर्थकः स्यात्। अथोच्चारणविशेषार्था विपर्ययेऽन्यदुच्चारणमिति नियम आश्रीयते तेन यतरस्मिन् पक्षे नियमोऽर्थवान् स नूनं पक्ष इति। नन्वर्थवत्स्वपि नियमो दृश्यते। यथेन्द्राग्नी इति। युक्तं तत्र तत्। विपर्ययेऽर्थप्रत्ययाभावात्।

---

उभयोरपि तावद्रशनयोरश्वगर्दभबन्धनार्थमादानमर्थप्राप्तत्वान्न विधीयते। यदि मन्त्रोऽपि रूपात्प्राप्तोऽनर्थकं वचनम्। परिसंख्येति परेर्वर्जनार्थत्वात्तद्विषया बुद्धिरभिधीयते। साऽपि गर्दभरशनाया आदाने वा स्यान्मन्त्रे वा। उभयथा च त्रिदोषा। विधिपरः सन्न गृह्णन इति स्वार्थं जह्यात्। परस्य च वाक्यस्य गर्दभरशनां नेत्यस्यार्थे कल्पेत। प्राप्तं च रूपादर्थाद्वा मन्त्रमादानं वा बाधेत। अदृष्टार्थत्वे त्वन्धन्यायेन यत्रैव नीयते तत्रैव वर्तिष्यते। यदि चाश्वाभिधानीमिति संबन्धः स्यात्ततः परिसंचक्षीतापि न त्वसावस्ति। कारकाणां क्रियापरिहारेणान्योन्यसंबन्धाभावात्। तेन वाक्यमपि क्रिययैव संबध्नीयात्। एका च सा। प्रकरणापूर्वसंयोगश्चाविशिष्टस्तस्मान्न परिसंख्याप्रयोजनं कथयति। अतो न प्रमाणं बर्हिरित्यादि। तदा हि महाप्रयोगवचनेन सर्वे मन्त्राः केवलप्रधानार्थास्तत्प्रयोगाबहिर्भावबुद्धयो नाङ्गैः संबध्येरन्। पाठक्रमानुरोधात्तु तदाऽपि नैव व्युत्क्रमेण प्रयोग. कर्माण्यनादृत्य सकृदेवानुवाकमध्यायं वा पठित्वाऽनुष्ठीयते।

अग्निर्मूर्धेति योऽर्थः प्रतीयते स मूर्धाग्निरित्यनेनापीत्यनर्थको नियमः। यस्य त्वदृष्टार्थता तस्य क्रमान्यत्वे तदुच्चारणजन्यादृष्टप्रमाणाभावात्क्रमान्यत्वं न युक्तमिति नियमार्थवत्ता। अथ नियतप्रत्यायनाददृष्टं कल्प्येत तदुच्चारणादेवोपपद्यते तदधीनत्वान्नियतप्रतीतेः। यत्तु दृष्टार्थेषु प्रकृतिप्रत्ययसमासेषु नियमो दृश्यते यथेन्द्राग्नी नीलोत्पलं राजपुरुषश्चिरगुर्निष्कौशाम्बिरिति। युक्तं तत्र विपर्ययेऽपशब्दार्थान्यत्वानर्थक्यप्रसङ्गात्। अनाद्यन्तविशेषणत्वादिनिमित्तो हि तत्र नियतः पूर्वनिपातः स्मर्यते तेनाग्नी-

---

१ तै० सं० ([illegible]-१-२)। २ तै० सं० (४-४-४)। ३ तै० सं० (६-३-१)।

बुद्धशास्त्रात्।

बुद्धे खल्वपि प्राठादर्थे तदभिधानसमर्थो मन्त्रो भवति। अग्नीदग्नीन् विहरेति। स बुद्धे किं बोधयेत्। अथ नूच्चारणविशेषार्थाः, बुद्धेऽप्युच्चारणविशेषोऽवकल्प्येतेति। ननु पुनर्वचनात्संस्कारविशेषो भविष्यति। एवमस्मत्पक्षमेवाऽऽश्रितोऽसि। वचनमुच्चारणम्। तद्धि शक्यते कर्तुं नार्थमस्यायनम्। तत्प्रतीतेऽशक्यम्। यथा सोपानत्के पादे द्वितीयामुपानहमशक्यत्वान्नोपादत्ते।

अविद्यमानवचनात्।

यज्ञे साधनभूतः प्रकाशयितव्यः। न च तादृशोऽर्थोऽस्ति यादृशमभिवदति। यथा चत्वारि शृङ्गा इति। न हि चतुःशृङ्गं त्रिपादं द्विशिरस्कं सप्तहस्तं किंचिद्यज्ञसाधनमस्ति। तदत्राभिधानार्थः किमभि-

---

न्द्रावित्यसाधुत्वं पुरुपराज इत्यर्थान्यत्वं कौशाम्बिनिरित्यनर्थकत्वम्। यस्त्वग्नी-द्राविति क्वचित्प्रयोगः स च्छान्दसोऽग्नेर्वाऽभ्यर्हितत्वस्य विवक्षयेति मन्तव्यम्। तुल्यकक्षार्थप्रतीताविन्द्राग्नीपदमेव व्यवस्थितम्। नन्विहापि क्रमान्यत्वादमन्त्रत्वं स्यात्। तदेवार्थपरत्वे सति तदविनाशे तु किं निमित्तमिति न विद्मः। तेन मन्त्रप्रसिद्धौ वाक्यनियमादित्यपि सूत्रम्। अथ वाऽस्वप्रकरणाधीतवाक्यनियमात्। न ह्यर्थाभिधाने ऽन्यदीयस्याऽऽत्मीयस्य च विशेषः।

अथ वा मन्त्रपौरुषेयवाक्ययोस्तुल्येऽर्थाभिधानसामर्थ्ये मन्त्रवाक्यनियमोऽदृष्टार्थः। अथ वाऽनेकध्यानादिस्मरणोपायप्रसङ्गे वाक्यनियमात्। न हि दृष्टेऽर्थे मन्त्रस्य ध्यानादेर्वा कश्चिद्विशेष इत्यदृष्टार्थता।

न ह्यविद्वान्विहितोऽस्तीत्यवश्यं तावज्ज्ञेयाऽऽत्मीयाः पदार्थाः प्रागेव कर्मप्रक्रमादवगन्तव्याः। तत्र प्रैषः पिष्टपेषणन्यायेनार्थं ज्ञापयितुमशक्नुवन्नदृष्टार्थो भवति। अथ स्मारको मन्त्र इत्युच्यते। तदपि नास्ति। ब्राह्मणज्ञानाभ्यासपाटवनिमित्तसंस्कारादेव तत्सिद्धेः। संस्काराभिव्यक्तिहेतुरपि पूर्वपदार्थसमाप्तिर्ब्राह्मणमेव वा भविष्यति नार्थो मन्त्रैः। तत्र यदुच्यते संस्कारविशेषो भविष्यतीति नासावदृष्टादन्यः संभवत्यतः पूर्वपक्षापत्तिः। यदि हि प्रतीतोऽप्यर्थो नैव दृष्टं साधयति ततो यत्तद्दूरमपि गत्वाऽवश्यं कल्पनीयं तदुच्चारणादेव वरमिति।

चतुःशृङ्गादि किंचित्कर्म तत्संबन्धि वा प्रकृतौ विकृतौ वा विद्यते। यद्यपि च गुणवादेन किंचित्स्यात्तथाऽपि तदनुष्ठानाभावान्न तत्स्मृत्या कार्यम्। न च ज्ञायते

---

१ तै० ब्रा० (१०—१०—१४)। २ जै० सू० (२-८-८)।

दध्यात्। उच्चारणार्थे त्ववकल्प्यते। तथा मा मा हिंसीरित्यसत्यामपि हिंसाया निमित्तं दध्यात्। do not oc, do not hurt (shall no add... to the altar)

## अचेतनेऽर्थबन्धनात्।

अचेतनेऽर्थे खल्वर्थं निबध्नन्ति, ओषधे त्रायस्वैनमिति। अभिधानेनोपकुर्वन्त एवञ्जातीयका ओषधिं पशुत्राणाय प्रतिपादयेयुः। न ह्यसावचेतना शक्या प्रतिपादयितुम्। उच्चारणार्थे तु नैष दोषो भवति। तस्मादुच्चारणार्थाः। शृणोत ग्रावाण इति चोदाहरणम्।

## अर्थविप्रतिषेधात्।

(contradiction)

अर्थविप्रतिषेधोऽपि भवति। अदितिर्द्यौरदितिरन्तरिक्षमिति। सैव द्यौस्तदेवान्तरिक्षमिति को जातुचिदवधारयेत्। अनवधारयंश्च किमभिधानेनोपकुर्यात्। उच्चारणमात्रे तु नैष विरोधो भवति। तस्मादुच्चारणार्था मन्त्राः। एको रुद्रो न द्वितीयोऽवतस्थे, असंख्याताः सहस्राणि ये रुद्रा अधिभूम्यामिति चोदाहरणम्।

## स्वाध्यायवदवचनात्।

(a certain ... in teaching ...)

स्वाध्यायकाले पूर्णिकाऽवहन्ति करोति। माणवकोऽवहन्तिमन्त्रमधीते। नासौ तेन मन्त्रेण तदभिधानमभ्यस्यति अक्षरानुपूर्व्या अवधारण एव यतते। येन च नाम प्रयोजनं तदभ्यासितव्यम्। अत

---

च प्रदेशे प्रयुज्यतामिति। तत्र मन्त्रपाठक्रमानुरोधेनोच्चारणमापततीति सिद्धं पूर्वपक्ष। मा मा हिंसीर्मा मा सनाप्तमित्यादीनि वेदिहविर्धानादिविषयत्वादचेतनेऽर्थबन्धनादित्यस्याप्युदाहरणम्। इह त्वप्रमत्ताया हिंसाया प्रतिषेधानर्थक्यम्।

ओषधे त्रायस्व, शृणोत ग्रावाण इति च सम्बोधनं कार्यनियोगाभिमुख्यकरणार्थम्। न चाचेतनस्याऽऽभिमुख्यं सम्भवति। न च पशुत्राणे प्रातरनुवाकश्रवणे वा प्रैषेण प्रवृत्तिरुपपद्यत इत्यानर्थक्यमर्थविवक्षायाम्।

द्युत्वमन्तरिक्षत्वं चादितेरेकानेकत्वं च रुद्रस्य विप्रतिषिद्धम्। न चैष विप्रतिषिद्धोऽर्थं कर्मोपयिक। कथं वाऽदितिर्देवताऽन्तरिक्षं द्यौर्वा भवेत्। न च स्तुत्यर्थतयाऽपि हेतुद्वयं परिहर्तुं शक्यं ब्राह्मणे हि विधिशेषभूता स्तुतयोऽर्थवन्त्यो भवन्ति। मन्त्रस्तुतिस्त्वप्रयोजनत्वान्नाऽऽदर्त्तव्या।

स्वाध्यायाध्ययनस्य कर्मार्थत्वात्कर्मण्युपयोक्ष्यते तदभ्यासितव्यं तथैव विद्वांसन्तो वृद्धाः शिष्यानक्षरावधारण एव प्रवर्तयन्ति सन्निहितेऽप्यर्थे न तद्वचनाभ्यासे।

---

१ तै० सं० (१-२-१३)। २ तै० आ० (१-१३)। ३ वा० सं० (१६-५४)।

उच्चारणाभ्यासादुच्चारणेन प्रयोजनमित्यवगच्छामः ।

अविज्ञेयात् ।

अपि च केषांचिन्मन्त्राणामशक्य एवार्थो वेदितुम् । यथा, अम्यक् सात इन्द्र ऋष्टिरस्मे इति, सृण्येव जर्भरी तुर्फरीतू इति, इन्द्रः सोमस्य काणुका इति च । एते किं प्रत्याययेयुः । उच्चारणार्थे तु न दोषः । तस्मादुच्चारणार्था मन्त्रा इति ।

अनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ ३१ ॥

अनित्यसंयोगः खल्वपि भवेन्मन्त्रेष्वभिधानार्थेषु । यथा किं ते कृण्वन्ति कीकटेषु गाव इति । कीकटा नाम जनपदाः । नैचाशाखं नाम नगरम् । प्रमगन्दो राजेति ।

यद्यभिधानार्थाः, प्राक् प्रमगन्दान्नायं मन्त्रोऽनुभूतपूर्व इति गम्यते । तदेतैस्तदर्थशास्त्रादिभिः कारणैर्मन्त्राणामविवक्षितवचनता ॥ ३१ ॥

---

तेनावश्यं तेषामुच्चारणमेवाङ्गत्वेनाभिप्रेतमिति ।

केचित्पदार्था ज्ञानेनाविज्ञेयाः । केषांचित्तु वाक्यार्थ एव न ज्ञायते । न च मन्त्रार्थः सत्तामात्रेणोपकरोति क्रियावेलायामस्मर्यमाण इति यदेकान्तेन शक्यं कर्तुमुच्चारणं तदेव कार्यमित्यवधार्यते ।

अर्थप्रकाशनपक्षे यस्य योऽर्थः स एव तेन प्रकाशयितव्यः । केचिच्चानित्यैरकर्माङ्गभूतैश्चार्थैरर्थवन्तो मन्त्रा लक्ष्यन्ते यथा किं ते कृण्वन्ति कीकटेषु गाव इति । अयं हि दृब्धनाच्येतॄणां स्मरणेन विश्वामित्रस्याऽऽर्ष गम्यते । तेन किल कर्मार्थं धनं प्रार्थयमानेनेन्द्रोऽभिहितः । त्रैलोक्याधिपते याः कीकटेषु जनपदेषु गावस्तास्तव किं कुर्वन्ति । ते हि नास्तिकाः किं क्रतुनेति वदन्तो न किंचित्कर्मानुतिष्ठन्ति । अतश्च ता नाऽऽशिरं सोमसंस्कारार्थं दुह्रते न घर्मं तपन्ति । न घर्मतपने पयोदानेन साधनीभवन्ति । तस्मात्प्रमगन्दस्य कीकटाधिपतेर्वेद्वेषिणं तदस्माकं नैचाशाखं नगरमामर । हृग्रदीर्घश्छन्दसीति मकारः । अथ वाऽस्मान्प्रति तद्विभ्रहि धारय पोषय चेत्येतस्मै धनमस्मभ्यं साधयास्मानिति । छान्दसं दीर्घत्वम् । यद्येतद्विवक्षितं तथा सत्यादिमदर्थाभिधानाद्वेदस्य कृत्रिमत्वेनाप्रामाण्यं प्रसज्यते । न चान्यो मन्त्रार्थः शक्यते वक्तुमप्रतीतेः । अतोऽर्थसदसद्भावापनादत्यक्षरोच्चारणं फलवदाश्रयणीयमिति ॥ ३१ ॥

---

१ ऋ० सं० ( १-८ ) । २ ऋ० सं० ( ८-६-२ ) । ३ ऋ० सं. ( ३-३-२१ ) ।

, presence in the Vedic Text becomes useless

## अविशिष्टस्तु वाक्यार्थः ॥ ३२ ॥ सि०

अविशिष्टस्तु लोके प्रयुज्यमानानां वेदे च पदानामर्थः । स यथैव लोके विवक्षितस्तथैव वेदेऽपि भवितुमर्हति। नैवम्। लोके तैरर्थैरवबुद्धैः सव्यवहारः। इह देवताभिरमत्यप्त्राभिर्यज्ञाङ्गैश्चाचेतनैः सलापे न कश्चिद्यज्ञस्योपकारः। यत्त्वदृष्टं परिकल्प्येत, उच्चारणादेव तद्भवितुमर्हति। यद्धि कर्तव्यं, तत्प्रयोजनवत्, उच्चारणं च न कथंचित् कर्तव्यं, यत्पूर्वापरपर्यायं। यदर्थो न प्रत्याय्यते न किंचिदनर्थकम्। यदि न प्रयुज्यते समाम्नानानर्थक्यम्। तस्मादुच्चारणादपूर्वम्। तथा च तदर्थशास्त्राद्युक्तम्। तदुच्यते। अर्थप्रत्यायनार्थमेव यज्ञे मन्त्रोच्चारणम्। यदुक्तं न देवताभिर्यज्ञाङ्गैश्च संलापे प्रयोजनमस्तीति।यज्ञे यज्ञाङ्गप्रकाशनमेव प्रयोजनम्। कथम्। न ह्यप्रकाशिते यज्ञे यज्ञाङ्गे च यागः शक्योऽभिनिर्वर्तयितुम्।

---

मन्त्रोच्चारणं तावदक्षरग्रहणेन निराकाङ्क्षीकृतं न साक्षात्तत्त्वद्भत्वं प्रतिपद्यते। अक्षराणां च प्रयत्नदनितिकर्तव्यतात्मकत्वात्प्रकरणेनाग्रहणम्। एवं पदार्थज्ञानस्य वाक्यार्थप्रत्ययेन नैराकाङ्क्ष्यान्ग्रहणम्। वाक्यार्थप्रत्ययस्त्वकृतार्थः प्रकरणे विपरिवर्तमानः क्रियात्मकत्वात्प्रयोगवचनाकाङ्क्षितः कर्मसमवेतानुष्ठास्यमानार्थस्मृतिफलत्वेनेतिकर्तव्यता भवति। तत्रादृष्टकल्पनानिमित्ताभावः। समाम्नानान्यथानुपपत्त्या हि तत्कल्प्येत नोपपद्यतेऽर्थवत्त्वे। यद्यपि च तत्कल्पनावसरो भवेत्तथाऽपि काम वाक्यार्थप्रत्ययात्तेव न त्वपायेऽवार्थप्रतीतिनिराकाङ्क्षाद्वाक्यात्। अवश्यं च दृष्टादृष्टयोर्विनियुज्यमानस्य प्रमाणमुपन्यसितव्यम्। इह च प्रकरणाददृष्टार्थता लिङ्गाच्च दृष्टार्थता। न च प्रकरणमशक्येऽर्थे विनियोक्तुमर्हतीत्येकान्तेनैतदापतति यच्छक्नुयात्तन्मन्त्रेण कुर्यादिति। न चासावदृष्ट शक्नोतीति लौकिकं वैदिकं वा प्रमाणं विद्यते। तस्मादुभयोर्लिङ्गप्रकरणयोर्दृष्टार्थप्रयोगेणैकवाक्यता। एवं च सति याज्ञिकप्रयोगप्रसिद्धेर्न मूलान्तरकल्पनाक्लेशो भविष्यति। अत स्वाभाविकमेवार्थप्राधान्यमवस्थितम्। नेत्यमिति। न दृष्टोऽर्थो निर्वृत्त इत्येतावतैव तादर्थ्यमवसीयते। पुरुषार्थानुपयोगेन स्वाध्यायाध्ययनविधेरानर्थक्यात्। न च बुद्धशास्त्रविधमानवचनाचेतनार्थवचनान्मन्त्रार्थोपयोग। तत्र यदि दूरेऽप्यदृष्टपरम्परातो न मुच्यामहे ततोऽतिक्रमकारणाभावादुच्चारणान्येव कल्पनीयम्।

उभयवादिसिद्धत्वादुच्चारणकर्तव्यतायास्तत्प्रभवत्वाच्चादृष्टकल्पनस्य। तत्रोच्यते यज्ञे यज्ञाङ्गप्रकाशनमेव प्रयोजनमिति। यद्यपि लोकवत्तैर्न व्यवहारस्तथाऽपि तत्स्व

तस्मात्तन्निर्वृत्त्यर्थमर्थप्रकाशनं महानुपकारः कर्मणः, तच्च करोतीत्यव- गम्यते । तस्माद्दस्त्यस्य प्रयोजनम् । तच्च दृष्टं न शक्यमपवदितुं नार्था- भिधानं प्रयोजनमिति । नन्वर्थाभिधानेनोपकुर्वन्तु, तां चतुर्भिरादत्त इत्येवमाद्यनर्थकं भवति । काममनर्थकं भवतु न जातुचिदपजानीमहे दृष्ट- मर्थाभिधानस्योपकारकत्वम् ॥ ३२ ॥

अथ किं तच्छास्त्रमनर्थकमेव । न हि—

गुणार्थेन पुनः श्रुतिः ॥ ३३ ॥

यदुक्तं, तां चतुर्भिरादत्त इति समुच्चयशब्दाभावाच्च समुच्चयार्थ- मिति । चतुःसंख्याविशिष्टमादानं कर्तव्यमिति वाक्यादवगम्यते । तदे- केन मन्त्रेण गृह्णन् यथाश्रुतं गृह्णीयादिति ॥ ३३ ॥

परिसंख्या ॥ ३४ ॥

रूपप्रकाशनमात्रमेवानुष्ठातृणामुपकरिष्यति । अतश्च यावन्मात्रमेवानौपयिकं संबोधनादि कामं तत्र विवक्ष्येत न तु तद्द्वेषेण सर्वमेव त्यक्तव्यं न ह्येकरूप्यं नाम केनाचिन्नियतम् । तस्माद्यथादर्शनाभ्युपगमाद्बर्हिर्देवसदनं दामीत्येवमादीना तावदविहतमर्थप्राधान्यम् । तां चतुर्भिरादत्त इत्यत्रापि वदामः ॥ ३२ ॥

यद्यपि मन्त्राः प्राप्ताः सामर्थ्येन तथाऽपि चतु.संख्यामादाने विधास्यति । तस्मात्पौ- र्वाह्णायनीन्यायेन परस्परानियमे सति मन्त्रगतचतु.संख्याविशिष्टमादानं चोदितं समुच्चया- द्दृते कर्तुं न शक्यत इत्यर्थात्समुच्चयफलम् । अथ वा यावल्लिङ्गानुमिताः श्रुतयः प्रतिमन्त्रं कल्पयितुमारभ्यन्ते तावदनेन प्रत्यक्षवचनेन चतु संख्याविशिष्टास्ते विहितास्तेनामात्रवि- धिरेव वचनम् । तत्र तु विनाऽप्येतेन मन्त्रेष्वर्थात्प्राप्तवत्सु तत्परत्वे मन्दं फलमित्यनन्य- लभ्यचतु·संख्यार्थं तन्त्रोपदेशः ॥ ३३ ॥

यावद्धि मन्त्राम्नानमनवगतप्रयोजनं प्रकरणी चाकृतार्थस्तावदत्तत्सिद्ध्यर्थं कल्प्यते तत्सर्वं वैदिकं भवति । नैराकाङ्क्ष्योत्तरकाले तु कल्पितमपि पौरुषेयत्वादप्रमाणं स्यात् ।

न च श्रुतिमकल्पयित्वा लिङ्गादेः स्वातन्त्र्येण प्रामाण्यमिति वक्ष्यते । तदेतदाह । सति च वाक्ये लिङ्गं विनियोजकं तच्चास्य नास्तीति । यदैव हि प्रकरणादनेन यजेत रशनां वा गृह्णीयादिति कल्पयितुमिष्यते तदैवाश्वाभिधानीमित्यनेनापहारो मन्त्रस्य । यद्यपि नैवं संबन्ध इत्यादत्त इति कथं गृह्णीयादश्वाभिधानीमिति । तत्कारकसंबन्धासंभवात्क्रिययैव

मिति । लिङ्गाद्रशनामात्रे शब्दात्तु विशेषेऽश्वाभिधान्यामिति । सति च वाक्ये लिङ्गं विनियोजकम् । तच्चास्य प्रकरणाम्नानानुमितं वाक्यं नास्ति । कुतस्तत् । एतेन मन्त्रेणाऽऽदानं कुर्यादिति यस्मिन्सति रशनामात्रं लिङ्गात्प्राप्नोति । अश्वाभिधान्यां तु प्रत्यक्षमेव वचनम् । अस्मि-

---

सह सामान्याभिप्रायेण द्रष्टव्यम् । तस्मान्नाऽऽदानमात्रे विधीयते किं तर्ह्यश्वाभिधानीविशिष्टे । अथ वा फलतः पश्चात्तनकारकसंबन्ध उपन्यस्यते । सर्वथा दर्शोपाख्यना नास्ति । यदि हि यदेव मन्त्रवचनात्प्राप्नुयात्तदेव प्रत्यक्षवचनेनोच्यते ततो वयमुपालभेमहि । नन्वेवमप्राप्तविधिरेवायं संजात इति न वक्तव्यं परिसंख्येति । फलेनैवमभिधानाददोषः । सर्वत्र हि परिसंख्याशब्दादेवकाराद्वा विना न श्रुत्या परिसंख्या नियमो वोच्यते विधिरेव त्वेवंजातीयकस्य फलेनैवं व्यपदेशः । कस्तर्हि विधिनियमपरिसंख्यानां भेदः । उच्यते । विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्ते परिसंख्येति कीर्त्यते ॥ विधिरेव हि केनचिद्विशेषेणैवं भिद्यते । तत्र योऽत्यन्तमप्राप्तो न च प्राप्स्यति प्राग्वचनादित्यवगम्यते तत्र नियोगः शुद्ध एव विधिर्यथा व्रीहीन्प्रोक्षतीति । यत्र तु प्राग्वचनात्पाक्षिकी प्राप्तिः संभाव्यते तत्राप्राप्तिपक्षं पूरयन्यो विधिः प्रवर्तते स नियन्तृत्वान्नियम इत्युच्यते यथा व्रीहीनवहन्तीति । तण्डुलनिष्पत्त्यर्थाक्षेपादेव तत्सिद्धेर्न तत्प्राप्तिमात्रं विधेः फलं किं तर्ह्यप्राप्तांशपूरणम् । तदप्राप्तिपक्षे च तण्डुलैरुपायान्तराण्याक्षिप्येरन्, पूरणे तु सति या तेषां निवृत्तिरसाववर्यान्न वाक्यात् । न च तद्वारणं नियमः । परिसंख्या हि तथा स्यात् । प्रत्यासन्ना वाऽवहन्तिनियतताममुत्सृज्य नान्यनिवृत्तिफलकल्पनावसरः । तत्प्रसक्तिद्वारा त्ववहन्तेरनियतिरासीदिति नियमान्तर्गतैवार्थान्निवृत्तिर्गम्यते । न च प्राप्ते सति विधिरयं प्रवृत्तो येनास्यान्यनिवृत्त्यर्थता कल्प्येत । प्रागेव तु प्रवर्तमानेनार्थस्य प्रापकशक्तिनिरोधादन्याप्राप्तिः कृता सा चार्थलभ्येति न तथैव व्यपदिश्यते । यः पुनः प्राङ्नियोगात्तत्र चान्यत्र च प्राप्नुयादिति संभाव्यते यत्र वा यश्चान्यच्च सा परिसंख्या यथाऽत्रैवोदाहृते यथा च गृहमेधीये पञ्चमे पक्षे । अत्रापि च न प्राप्ते सत्येषा प्रवर्तते प्रापकस्य शास्त्रस्यानुमितस्यात् । कथं तर्हि । यद्येतद्वाक्यं नाभविष्यत्तत एवं प्राप्स्यदिति । सर्वस्य प्रत्यक्षस्य वाक्यस्य नानुमानिकवाक्यप्रतिबन्धमात्रं फलमिष्यते । किं हि तेन पठितेन यस्यान्यतोऽप्यर्थः सिध्यति तदर्थं गर्दभरशनानिवृत्तिः फलं कल्प्यते । तेनैवं कल्प्यते कृत्वाचिन्तान्यायेन यदि नाभवं वाक्यं न भवेत्ततः कीदृशमनुष्ठानं स्यात् । तत्र मन्त्रप्राप्तिस्तावदेकान्तेन सिध्येदश्वाभिधान्यां तद्वदेव तु गर्दभरशनायामपि प्रसज्येत ।

न्सति तदानुमानिकं नास्ति । तेन मर्दभरस्यनायां न प्राप्तिरेवेति॥३४॥

## अर्थवादो वा ॥ ३५ ॥

उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयतीत्यर्थवादार्थेन पुनः श्रुतिः, यज्ञपतिमेव तत्प्रथयतीति । ननु नायं मन्त्रस्य वाक्यशेषो न च प्राप्तस्य स्तुत्या प्रयोजनम् । सत्यम् । नायं मन्त्रस्य विधिर्न संस्तवः । प्रथनमेव तत्र स्तूयते । मन्त्रः पुना रूपादेव प्राप्त इहानूद्यते प्रथनं स्तोतुम् । इत्थं प्रथनं प्रशस्तं यत्क्रियमाणमेवंरूपेण मन्त्रेण क्रियते । कस्तदा भवति गुणः । यज्ञपतिमेव तत्प्रजया पशुभिः प्रथयति । किमेतदेवास्य फलं भवति । नेति ब्रूमः । स्तुतिः कथं भविष्यतीत्येवमु-

यदा स्वनेन वाक्येन प्रत्यक्षेण नैराकाङ्क्ष्यादविशेषाद्विनियोगसमर्थवाक्यानुमानं निषिद्धं तदा केवलाभिधानीविषयत्वसिद्धिरित्यपौनरुक्त्यादर्थवद्वाक्यम् ॥३४॥

यद्यपि प्रदेशान्तरस्थत्वान्मन्त्रविधानं न स्तूयते तथाऽपि प्रथनविधानात्तत्प्ररोचनया च सकलं वाक्यमर्थवत् । तस्य ह्येतदेवोत्पत्तिवाक्यम् । ननु च पुरोडाशस्यान्यथानुपपत्तिप्राप्तत्वात्प्रथनं न विधातव्यम् । नैतन्नियोगतः प्राप्नोति । द्रुततरं हि पिष्टमप्रथितमपि पच्येत । विधाने तु सति तादृशं कर्तव्यं येन प्रथयितव्यं भवति । एवं चाध्वर्युकर्तृकताऽपि सिध्यति । पठ्यमानं ह्याध्वर्यवसमाख्यां लब्ध्वा कर्तृविशेषं नियच्छति । अर्थप्राप्तं त्वसमाख्यातत्वान्न नियामकं स्यात् । एवमर्थं च यद्यप्येकान्ततोऽर्थात्प्राप्नुयात्तथाऽपि वाक्येनैव प्रापयितव्यम् । तस्मादुपपन्ना प्रथनस्तुतिः । एवमपि यज्ञपतिमेव तत्प्रथयतीत्यनेन स्तुतौ सिद्धायां मन्त्रग्रहणमनर्थकम् । न । मन्त्रस्यैव स्तुत्यर्थमुपादानात् । प्रथनं कर्तव्यं तस्य हि क्रियमाणस्यायं मन्त्रः साधनं भवति । तत्र चोरु ते यज्ञपतिः प्रथतामित्येतान्यक्षराणि प्रयुज्यन्ते तथा सति यज्ञपतिः प्रथितो भवतीति गुणो लभ्यते । किमेतदेवास्य फलमिति नेत्याह । स्तुत्यर्थमेव तद्द्रव्यसंस्कारकर्मस्विति न्यायात् । यद्यप्यत्र करणमन्त्राभिहितत्वात्फलं कल्प्यते तथाऽपि ब्राह्मणे तावत्तत्संकीर्तनमेकान्तेन स्तावकम् । मन्त्रोऽपि तु लिङ्गविनियोज्यो न फलकल्पनायै प्रभवति । करणविभक्तिविनियुक्तानां हि सकलोपयोगान्यथानुपपत्त्या फलसाधनता युक्ता लिङ्गानुमिता पुनः श्रुतिराकाङ्क्षावशेन क्रियाप्रकाशनमात्रविनियोगायैव ज्ञायते । तेनैवंजातीयको

---

१ भट्टपादैः भाष्येण ब्राह्मणगतस्य वाक्यस्य मन्त्रकाण्डाम्नातमन्त्रविशेषगतलिङ्गप्रकरणानुमितविधिशेषत्वाभ्युपगमादर्थवादत्वं न युक्तमित्येव पूर्वपक्षोक्तामाशङ्कामनुभाष्य सत्यमित्यादिना मन्त्रस्तुत्यसंभवेऽपि प्रथनस्तुतिर्भविष्यतीति समाधत्ते ।

च्यत । कथमसात प्रथने प्रथयतीति शब्दः । मन्त्राभिधानात् । मन्त्रेण पुरोडाशमध्वर्युः प्रथस्वेति ब्रूते । यश्चैवं प्रथस्वेति ब्रूते स प्रथयति यथा यः कुर्विति ब्रूते स कारयति ॥ ३५ ॥

---

मन्त्रोऽपि प्रधानफलसंकीर्तनात्मिका स्तुतिरेवाभ्युपगन्तव्या । कथमसति प्रथन इति कस्यायं प्रश्नः किं विध्युद्देशवर्तिनः पुरोडाशप्रथनस्यायार्थवादगतस्य यजपतिप्रथनस्येति । द्विधाऽपि चायुक्तं पुरोडाशप्रथनं तावद्विधीयमानत्वादेव न प्रष्टव्यम् । न च मन्त्राभिधानात्तस्यास्तित्वं किं तर्हि स्वरूपसद्भावादित्युत्तरमप्यसंबद्धम् । अथ पुनरितरार्थवादन्यायेन कथमरुदतीतिवत्प्रश्नः । तथाऽप्युत्तरमसंबद्धम् । मन्त्रेणाध्वर्युः पुरोडाशमिति पुरोडाशेन संबध्यते न यजमानेन । तस्मादग्रन्थ इति केचित् । उभयथाऽपि स्विदमदुष्टम् । अस्तु तावत्पुरोडाशप्रथने । तत्र हि याज्ञिकानां केषांचिदयं मन्त्रः कृत्वा प्रथनमभिमर्शने प्रयुज्यते सोऽयं स्वसिद्धान्तेन पृच्छति कथमसति—वृत्ते प्रथने प्रयुज्यमानेनानेन प्रथयतीति ।

तत्राभ्युपेत्यवादेनोत्तरं मन्त्राभिधानादिति । यद्यपि प्रथनं प्रथमकृतत्वान्नास्ति मन्त्रेण तु सत्तयोच्यत इत्युपपन्नः शब्दार्थः । अथ वा सर्वप्रयोजकव्यापाराणां प्रयोज्यव्यापारपूर्वकत्वमर्थरूपेण स्थितमिति शब्देरपि तथैव प्रवर्तितव्यम् । इह च स्तुतिविषयसिद्ध्यर्थं प्रथयतीत्येतद्विधीयत इत्युक्तम् । तत्राऽऽह नायं विधिः संभवति विषयानुपपत्तेः । प्रयोजकव्यापारो हि प्रतीयमानस्तद्गोचरः स्यात् । स चानुपात्तप्रयोज्यव्यापारत्वान्न प्रतीयते तेन यथा यजेतेत्यनुक्ते याजयतीति नोच्यते तथेह प्रथेतेत्यनुक्ते प्रथयतीति न वाच्यम् । न चेह पुरोडाशः प्रथेत तेन वा प्रथितव्यमित्युपादानमस्ति । तस्मिन्नसति प्रथयतीत्यनुपपन्नम् । तदुपपादयति मन्त्राभिधानादिति प्रतीकगृहीतमन्त्रोपात्तप्रयोज्यव्यापारं हि ब्राह्मणं प्रथयतीति विधत्ते । यश्च प्रथस्वेति ब्रूत इत्यनेन पुरोडाशकर्तृकां क्रियामध्वर्युः प्रेप्यतीत्येतद्दर्शयति । यद्यपि च संभाव्यमानक्रियाणां प्रयोज्यानामनुपादायापि व्यापारं शब्देन प्रयोजकव्यापारः सिध्यतीत्येतदप्युत्तरं संभवति तथाऽपि तूत्तरविभागादुपादानपूर्वकतैवोक्ता । अथ वाऽस्तु यजमानप्रथने कथमसतीति सर्वस्तुतीनां किंचिच्छब्दगतमर्थगतं वाऽऽलम्बनमुक्तम् । तदत्र किंनिबन्धना स्तुतिरिति । तदभिधीयते । मन्त्रोक्तमर्थमाश्रित्य स्तुतिः प्रवर्तिष्यते । मन्त्रेणाध्वर्युः पुरोडाशं ब्रूत इति न पुरोडाशप्रथनोपादानाभिप्रायं किं तर्हि पुरोडाशं प्रथीति, उरु ते यज्ञपतिः प्रथतामिति । प्रथन्वेत्यपीतिकरणः प्रभृत्यर्थो न शब्दपदार्थतायै । यश्च प्रथस्वेति ब्रूत इत्यपि तदार्थ एव । प्रथतामिति ब्रूत इत्यर्थः । यश्चैवं ब्रूते स प्रथयत्यनेनैव । गुणवादात् । अथ वा तदाचष्ट इत्येवं मुख्यमेव प्रथयतीत्यर्थमाश्रित्य प्रथनबुद्ध्या सिद्धा स्तुतिः ॥ ३६ ॥

अविरुद्धं परम् ॥ ३६ ॥

यदुक्तं पदनियमस्यार्थवत्त्वाद्विवक्षितार्था मन्त्रा इति। काममनर्थको नियमो न दृष्टमप्रमाणम्। नियतोच्चारणमदृष्टायेति चेत्, अविरुद्धा अदृष्टकल्पनाऽस्मत्पक्षेऽपि। एवं मत्याऽध्ययनमभ्युदयकारि भवतीति ॥ ३६ ॥

संप्रैषे कर्मगर्हानुपालम्भः संस्कारत्वात् ॥ ३७ ॥

अथ यदुक्तं प्रोक्षणीरासादयेति बुद्धबोधनमशक्यमत उच्चारणाददृष्टमिति। तन्न। कर्तव्यमित्यपि विज्ञातेऽनुष्ठानकाले स्मृत्या प्रयोजनम्। उपायान्तरेणापि सा प्राप्नोति। अतोऽनेनोपायेन कर्तव्येति नियमार्थमाम्नानम्। संस्कारत्वात् ॥ ३७ ॥

अभिधानेऽर्थवादः ॥ ३८ ॥

चत्वारि शृङ्गा इत्यसदभिधाने गौणः शब्दः। गौणी कल्पनाप्रमाणपरत्वात्। उच्चारणाददृष्टमप्रमाणम्। चतस्रो होत्राः शृङ्गाणीवाऽस्य। त्रयोऽस्य पादा इति सवनाभिप्रायम्। द्वे शीर्षे इति पत्नीयजमानौ। सप्त हस्तास इति च्छन्दांस्यभिप्रेत्य। त्रिधा बद्ध इति त्रिभिर्वेदैर्बद्धः। वृषभः कामान्वर्षतीति, रोरवीति शब्दकर्मा, महो देवो मर्त्यानाविवे- [illegible] यथा चक्रवाकस्तनी हंसदन्तावली [illegible] ाः स्तुतिः। यज्ञसमृद्धये साधनानां

---

अदृष्टार्थोच्चारणवादिनोऽपि तन्नियमादपरमवश्यं कल्पनीयमदृष्टं तन्ममापि प्रत्यार नियमाद्भविष्यतीत्यविशेषः। एतेन मन्त्रत्वादिनियमः प्रत्युक्तः। सत्स्वप्युपायान्तरेषु विशिष्टानुपूर्वीकमन्त्रविशेषाम्नानादुपायान्तरनिवृत्तौ नियमादृष्टमात्रकल्पनया सिद्धमर्थाभिधानम् ॥ ३६ ॥

येयं संप्रैषे अग्नीदग्नीन्नित्यत्र बुद्धबोधनासंभवादभिधानकर्मगर्हाऽभिहिता साऽप्यनुपालम्भः। स्मरणसंस्कारार्थत्वात्। बुद्धीनां हि क्षणिकत्वात्स्वाध्यायकालोत्पन्ना न प्रयोगकालं यावदवस्थानं तत्रावश्यं केन चिद्ध्यानादिनाऽनुसंधाने कर्तव्ये मन्त्रो नियम्यते।

अथ वा संस्कारत्वादिति। यदि हि बोध एवावतिष्ठते ततोऽनवकाशत्वं भवेदिह तु तदीयसंस्कारमात्रावस्थानात्तदभिव्यक्तिद्वारेणास्ति ज्ञानोत्पत्त्यवसर इति न मन्त्रानर्थक्यम् ॥ ३७ ॥

चत्वारि शृङ्गेति रूपकद्वारेण यागस्तुतिः कर्मकाल उत्साहं करोति। हौत्रे त्वयं विषुवति होतुराज्ये विनियुक्तः। तस्य चाऽऽग्नेयत्वादहश्चाऽऽदित्यदेवतत्वसंस्तवादादित्यरू-

---

१ गवामयनान्तर्गत एकाहो विषुवानिति।

चेतनसादृश्यमुपपादयितुकाम आमन्त्रणशब्देन लक्षयति ओषधे त्राय-स्वैनमिति, शृणोत ग्रावाण इति। अतः पर प्रातरनुवाकानुवचनं भवि-ष्यति, यत्राचेतनाः सन्तो ग्रावाणोऽपि शृणुयुः, किं पुनर्विद्वांसोऽपि ब्राह्मणा इति। इत्थंचाचेतना अपि ग्रावाण आमन्त्र्यन्ते॥ ३८॥

## गुणादविप्रतिषेधः स्यात॥ ३९॥

अदितिर्द्यौरिति गौण एष शब्दः। अतो न विप्रतिषेधः। यथा त्वमेव माता पितेति, तथैकरुद्रदैवत्ये एको रुद्रः, शतरुद्रदैवत्ये शतं रुद्रा इत्य-विरोधः॥ ३९॥

## विद्यावचनमसंयोगात्॥ ४०॥

यत्त्वकर्मकालेऽवहन्तिमन्त्रेण माणवको न पूर्णिकाऽवहन्ति प्रकाश-यितुमिच्छतीति। अयज्ञसयोगाद्, न यज्ञोपकारायैतत्प्रकाशयितुमि-च्छति। ननु प्रकाशनानभ्यासोऽक्षराभ्यासश्च परिचोदितः। उच्यते। सौकर्यात्प्रकाशनानभ्यासो दुर्ग्रहत्वाचाक्षराभ्यासः॥ ४०॥

## सतः परमविज्ञानम्॥ ४१॥

विद्यमानोऽप्यर्थः प्रमादालस्यादिभिर्नोपलभ्यते। निगमनिरुक्तव्या-

---

पेणाग्निस्तुतिरुपवर्ण्यते। तत्र चत्वारि शृङ्गेति दिवसयामाना ग्रहणम्। त्रयो अस्य पादा इति शीतोष्णवर्षाकाला। द्वे शीर्षे इत्ययनाभिप्रायम्। सप्त हस्ता इत्यश्वस्तुति। त्रिधा बद्ध इति सवनाभिप्रायेण। वृषभ इति वृष्टिहेतुत्वेन स्तुति। रोरवीति स्तन-यित्नुना। सर्वलोकप्रसिद्धेर्महान्देवो मर्त्यानाविवेशेत्युत्साहकरणोपकारेण सर्वपुरुषहृदया-नुप्रवेशात्। एवमनेन मार्गेणास्ति तावद्धर्मसाधनस्मृति॥ ३८॥

अदितिर्द्यौरादितिरिति। नात्र द्युत्वादीनि विवक्षितानि किं तर्ह्यदितौ प्रकाशयि-तव्यायामविद्यमानविप्रतिषिद्धधर्मोपादान स्तुत्यर्थम्। गुणवादेन त्वौदुम्बराधिकरण वत्सर्वादो योजयितव्य॥ ३९॥

यद्यपि पूर्वपक्षेऽयमभिप्रायो नोपन्यस्तस्तथाऽपि समवादुपन्यस्यते। यदि हि स्वाध्या यकालेऽर्थवचनमुपयुज्येत ततस्तदाश्रीयेत न त्वेवमस्ति कर्मभिरसयोगात्। तदनभ्यासस्तु प्रोक्षणादिवत्सौकर्यात्॥ ४०॥

यत्तु पर कारणमविज्ञेयत्वमुक्त तदयुक्तम्। सत एवार्थस्य पुरुषापराधेनाविज्ञानात्। तत्र चार्थप्रकरणसूक्तदेवतार्षनिगमनिरुक्तव्याकरणज्ञानान्यधिगमोपाया। तेषा त्वेवमर्थ मेव परिपालनम्। यथैव च व्याकरणेन नित्यपदान्वाख्याने क्रियमाणे लोपाविकारादीना मुपायत्वेनोपादानमयुत्पन्नाश्च तैरेव पदोत्पादनमिव मन्यन्ते। तथाऽत्र नित्यवाक्यार्थ-

करणवशेन धातुतोऽर्थः कल्पयितव्यः। यथा सृण्येव जर्भरी तुर्फरीतू इत्येवमादीन्यश्विनोरभिधानानि द्विवचनान्तानि लक्ष्यन्ते। अनेन अश्विनोः काममप्रा इत्याश्विनं सूक्तमवगम्यते। देवताभिधानानि च

---

प्रतिपत्तावार्षोपाख्यानमनित्यवदाभासमानमुपायत्वं प्रतिपद्यते। तत्र यथा कश्चिद्व्याचक्षाणः पदतदवयवादीनां चेतनस्येवाभिधेयस्य विशेषबाधादिव्यापारं निरूपयत्येतेनैवमुक्तोऽयमेवं प्रत्याहेति। यथा च पूर्वपक्षोत्तरपक्षवादिनौ व्यवहारार्थं कल्पितावेवमन्यार्थेऽपि विषया कल्पना। अथ वा परमार्थेनैवेदमृषिभिस्तथोक्तं न तु स मन्त्रस्तैरेव कृतस्तदानीं वा पुरुषान्तरेष्वसत्त्वेन तेषामाविर्भूतः। किं तर्हि यथाऽद्यत्वेऽपि कश्चित्प्रकृतार्थविवक्षायां तदर्थं वाक्यमुपादित्समानस्तदर्थसरूपं मन्त्रं श्लोकं वाऽन्यदीयं स्मृत्वा स्ववाक्यस्थाने प्रयुङ्क्ते तत्प्रत्ययेन चान्ये तदर्थमवधारयन्त्येवमिहापि वेदार्थविद्भिस्तद्भासितान्तःकरणैर्भृग्वादिभिरात्मीयव्यवहारेषु श्रुतिसामान्यरूपेण विशिष्टार्थप्रत्यायनार्थं मन्त्राः प्रयुक्तास्तद्बलेन चास्मदादीनां तदनुरूपाऽनित्यार्थप्रतिपत्तिर्भवति। प्रत्ययदृढत्वार्थमेव चाऽऽर्षस्मरणम्। तत्रैवमुपाख्यानं स्मरन्ति। यथा किल मूतांशो नाम कश्चिदार्षेर्जरामरणनिराकरणार्थी सृण्येवेत्येवमादिना सूक्तेनाश्विनौ स्तुतवान्। मूतांशो अश्विनोः काममप्रा इति चान्ते संकीर्तनात्तस्याऽऽर्षमाश्विनं सूक्तमिति च द्योतितम्। तत्र सृणिरङ्कुशः सरणसाधनत्वात्तमर्हन्तौ तत्र वा साधू इति सृण्यावर्थात्कुञ्जरौ। आकारश्छन्दसि द्विवचनादेशः। ताविवात्यर्थं जृम्भमाणावष्टाङ्गप्रहरणव्यापृतौ जर्भरी। तुर्फरीतू हिंसन्तौ। नैतोशातिर्वधकर्मा तत्कारिणौ नैतोशौ—योद्धारौ ताविव तुर्फरी—त्वरमाणौ हिंसकाविति वा। पर्फरीका—शोभायुक्तौ। उदन्यातिः पिपासार्थः, तत्र जातौ, उदन्यजौ प्रावृषिजौ चातकौ जेमना—उदकवन्तौ जेमशब्दात्सामादिविहितो मत्वर्थीयो नप्रत्ययः। तौ यथोदकलाभेन मत्तौ भवतस्तथा यौ मदेरू तौ मे जरायुमरायु जरामरणधर्मकमर्थाच्छरीरमजरममरं च कुरुतमिति वाक्यशेषः। तेनैवं वाक्यार्थो यावङ्कुशचोदिताविव कुञ्जरौ सर्वतो जृम्भमाणौ शत्रूणां निहन्तारौ भवतो हिंसाविव च हिंसनव्यापृतौ दाक्ष्येण च शोभेते चातकाविव चोदकलाभेन मदात्प्रीयेते तावुभावपि जरामरणयोः कुपिताविवाजरत्वस्यामरत्वस्य वा प्रीतावजरममरं मे शरीरं विधत्तामिति। "अम्यक्सा त" इत्यगस्त्यार्षं तेन किलेन्द्रोऽमरत्वं धनं प्रार्थितस्तथा चोपरितन्यामृचि "त्वं तू न इन्द्र तं रयिं दा" इति श्रूयते। तदेवास्यामृच्यध्याहारेण द्रष्टव्यम्। इयं च च्छन्दोमद्वितीयेऽहनि मरुत्वतीये शस्त्रे विनियुक्ता। तत्राम्यगित्यमाशब्दोऽव्ययं साहित्यवाची यतोऽमात्य इति भवति सहाचतीत्यम्यक्सा त इन्द्र, ऋष्टिरायुधविशेषः पाणिक्षेप्य:, अस्मे इति—अस्माकं सनेमि—पुराणम्। अभ्वं—तोयं मरुतो जुनन्ति—क्षिपन्ति। अग्निश्चिदित्युपमार्थो हि स्म, अतसे—शुष्कतृणे शुशुकान्—दीप्त-

यन्ते जर्भरीत्येवमादीनि । अवयवप्रसिद्ध्या च लौकिकेनार्थेन विशे- ष्यन्ते । एवं सर्वत्र ॥ ४१ ॥ *and the special significance is determined by the etymology & common usage*

उक्तश्चानित्यसंयोगः ॥ ४२ ॥

परंतु श्रुतिसामान्यमात्रमित्यत्रेति ॥ ४२ ॥

लिङ्गोपदेशश्च तदर्थवत् ॥ ४३ ॥

आग्नेय्याऽऽग्नीध्रमुपतिष्ठत इति विधानाद्विवक्षितार्थानामेव मन्त्राणां भवति लिङ्गेनोपदेशः । यदि तेऽग्नियोजनास्ततस्त आग्नेय्या नाग्निश- ब्दसंनिधानात् ॥ ४३ ॥ *Because they are capable of signifying the duty [illegible] & not because they contain the word [illegible]*

ऊहः ॥ ४४ ॥

*modification*

ऊहदर्शनं च विवक्षितार्थानामेव भवति । किमूहदर्शनम् । न पिता वर्धते न मातेति । अन्ये वर्धन्त इति गम्यते । प्रत्यक्षं कौमारयौवन-

---

वान् आप इव द्वीपं दधाति प्रयांसि—अन्नाद्यानि । वाक्यार्थे तु प्रथमतृतीययोर्द्वितीयच- तुर्थयोश्च पदानां संबन्धः । तत्र सेत्येतदाक्षिप्तो यच्छब्दस्तृतीयपादे कल्प्यते । शुष्कतृणे दीप्तोऽग्निरिव या लक्ष्यते तव सहचारिणी नित्यमृष्टिस्तव वल्लभा सा तावत्त्वत्प्रसादेनास्मा- कमेव । येऽप्यमी पुराणं जलं वृष्टिरूपेण विक्षिपन्त आप इव द्वीपमन्नाद्यानि धारयन्ति तव प्रियसखास्तेऽप्यस्माकमेव स त्वमेवं साधारणद्रव्यः सन्नमरत्वं न केवलं देहि । एकया प्रतिधाऽपिबदितीन्द्रस्यैव स्तुतिः । एकेन प्रयत्नेनापिबत्साकं—यौगपद्येन, सरांसि—पा- त्राणि सोमस्य पूर्णानि इन्द्रः काणुका—कामयमान.कामुकशब्दस्य छान्दसो वर्णव्यत्ययः। आकारस्तु विभक्त्यादेशः । अथ वा कान्तकानीत्यादयो निरुक्तोक्ताः काणुकाशब्दवि- कल्पा योजनीयाः । तदेवं सर्वत्र केनचित्प्रकारेणाभियुक्तानामर्थोत्प्रेक्षोपपत्तेः प्रसिद्धत- दर्थाभावेऽपि वेदस्य तदभ्युपगमात्सिद्धमर्थवत्त्वम् ॥ ४१ ॥

परं तु श्रुतिसामान्यमात्रमिति । यजमानस्तावत्प्रार्थयिता इन्द्रश्च प्रार्थ्यमानः सर्व- दाऽस्ति । कीकटा नाम यद्यपि जनपदास्तथाऽपि नित्याः । अथ वा सर्वलोकस्थाः कृपणाः कीकटाः । प्रमगन्दः—कुसीदवृत्तिः स हि प्रभूततरमागामिष्यतीत्येवं ददाति । नैचाशाखः—पण्डस्तदीयं धनं नैचाशाखम् । तच्च सर्वमयज्ञाङ्गभूतं तेषां कर्मण्यप्रवृ- त्तेस्तदस्माकमाहरेति । शेषं गतार्थम् ॥ ४२ ॥

आग्नेय्येत्यग्निना देवतया लिङ्गेन तदभिधानसामर्थ्येन वा य उपदेशः स तदर्थाहतां मन्त्रस्य द्योतयति । देवतानद्धितो ह्यत्र स्मर्यते यं चार्थप्राधान्येन मन्त्रः प्रकाशयति सा तस्य देवता नाभिधानमात्रेण । एकदेवत्येऽपि मन्त्रेऽनेकदेवतान्तरपदप्रयोगे सति तद्देवत्यव्यपदेशाभावात् । प्राधान्याभिधानं च नार्थपरत्वेन विनोपपद्यते ॥ ४३ ॥

ऊहदर्शनं न माता वर्धत इति । अर्थे च दृष्ट्यादिवृद्धेः प्रत्यक्षत्वात्प्रतिषेधासंभवा-

स्यादिरेवर्धन्ते मात्रादयः । शब्दो न वर्धत इति ब्रूते । का पुनः शब्दस्य वृद्धिः । यद्द्विवचनबहुवचनसंयोगः ॥ ४४ ॥

विधिशब्दाश्च ॥ ४५ ॥

विधिशब्दाश्च विवक्षितार्थानेव मन्त्राननुवदन्ति । शतं हिमाः शतं वर्षाणि जीव्यासमित्येतदेवाऽऽहेति ॥ ४५ ॥

इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये प्रथमाध्यायस्य द्वितीयः पादः ।

---

॥ अथ प्रथमाध्यायस्य तृतीयः पादः ॥

[१] धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥ १ ॥ पू०

एवं तावत्कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम् । अथेदानीं यत्र न वैदिकं शब्दमुपलभेमहि अथ च स्मरन्त्येवमयमर्थोऽनुष्ठातव्य एतस्मै च प्रयोजनायेति । किमसौ तथैव स्यान्न वेति । यथा अष्टकाः कर्तव्याः, गुरु-

---

दानर्थक्यात्तदङ्गेष्विति शब्दे विज्ञायते । तत्रापि स्त्रीत्वादिवृद्धवचसमत्वादाधिकार्यवान्वित्वेन द्विवचनबहुवचनयोः प्रतिषेधः । स चार्थपरत्वे सर्वपशुविशेषणमात्राद्युपादित्सायां सत्यामवकल्पते । या चान्यपदवृद्धिसद्भावप्रतीतिरियं च । यद्यपि मातृप्रभृतीनां पाराय्यर्संबन्धिभेदादेव च भेदसिद्धेरनूह्यत्वं सदेवानुवदति तथाऽपि न्यायावगतानूहसंकीर्तनान्न्यायरहितेपूहसंप्रत्ययात्प्रकृतौ विवक्षितार्थता विज्ञायते । अन्यथा तु तददृष्टमाविकृतैरेव साध्येत । तथा यद्यप्यन्यदेवत्यः पशुराग्नेय्येवमनोता कार्येत्यूहप्राप्तिदर्शनं, एवमुस्राणां वपानामित्येवमादीनां यथार्थमूहितानामेवाऽऽम्नानमपि विवक्षितार्थं भविष्यति । इतरथा प्राकृतपदत्यागेऽन्यकल्पने चादृष्टद्वयं कल्प्येत ॥ ४४ ॥

विधिरेव च ब्राह्मणाभिधस्तत्र तत्र पर्यायैरवयवान्वाख्याननिर्वचनादिभिश्चार्थप्रकाशनपरत्वं दर्शयति । अर्थानाश्रयणे हि सर्वं तदनर्थकं स्यात् । तस्माद्विवक्षितवचना मन्त्रा इति सिद्धम् ॥ ४५ ॥

( इति मन्त्राधिकरणम् ) ॥ ४ ॥

इति श्रीमद्भट्टकुमारिलस्वामिविरचिते मीमांसाभाष्यव्याख्याने तन्त्रवार्तिके प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

एवं तावद्विध्यर्थवादमन्त्रनामधेयात्मकस्य वेदस्य धर्मं प्रत्युपयोगः साधित इदानीं पौरुषेयीषु स्मर्यमाणार्थोविधिषु मन्वादिप्रणीतनिबन्धनासु स्मृतिष्वनिबद्धेषु चाऽऽचारेषु चिन्ता । तत्र किंचिदुदाहृत्य विचारः कर्तव्य इत्यष्टकादिस्मरणानि मन्वादिस्थानि

---

१ अर्थपरत्वेऽवकल्पत इत्यनुषङ्गः ।

रनुगन्तव्यः, तडागं खनितव्यम्, प्रपा प्रवर्तयितव्या, शिखाकर्म कर्तव्यमित्येवमादयः। तदुच्यते। धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादिति। शब्दलक्षणो धर्म इत्युक्तम्। चोदनालक्षणोऽर्थो धर्म इति।

---

तद्ग्रन्थसमर्पितानि प्रमाणाप्रमाणविचारविषयत्वेनोदाह्रियन्ते। संदेहहेतुश्चाभिधीयते।

पारतन्त्र्यात्स्वतो नैषां प्रमाणत्वावधारणा।

अप्रामाण्यविकल्पस्तु द्रढिम्नैव विहन्यते॥

मन्वादिवचनं स्मृत्यपेक्षं स्मृतिश्च मूलप्रमाणापेक्षिणीति नैकस्यापि वेदवन्निरपेक्षप्रामाण्यनिश्चयः। यतस्तु वेदवादिनामेवाविभागेनाविच्छिन्नपारम्पर्यपरिग्रहदार्ढ्यमतो नाप्रामाण्याध्यवसानमिति युक्तः संदेहः। तत्र पूर्वपक्षवादी वदति नैषां प्रामाण्यमेवापेक्षितव्यमिति। कुतः।

पूर्वविज्ञानविषयं विज्ञानं स्मृतिरुच्यते।

पूर्वज्ञानाद्विना तस्याः प्रामाण्यं नावधार्यते॥

सर्वस्मरणानि हि प्रत्यक्षाद्यवगतेऽर्थे तदानुरूप्येणोपजायमानान्यर्थं समर्पयन्ति। तदिहाष्टकादीनां स्वर्गादिसाध्यसाधनभावं प्रत्यक्षादीनि तावन्न गृह्णन्तीति साधितम्। शब्दोऽपि यथाऽग्निहोत्रादिषु प्रत्यक्षेणोपलभ्यते नैवं मन्त्राः।

प्रत्यक्षानुपलब्धे च शब्दे सद्भावकल्पना।

धर्मास्तित्वप्रमाणाद्धि विप्रकृष्टतरा भवेत्॥

शब्दस्य तावदेकमेव प्रत्यक्षं प्रमाणम्। तेनानवगम्यमानोऽप्ययमस्तीत्युच्यते ततो वरं धर्मास्तित्वमेव निष्प्रमाणकमभ्युपगतमिति।

न चाऽऽनुमानमप्यस्मिन्नष्टकाश्रुतिकल्पने।

न हि स्मृतिस्तया व्याप्ता दृष्टाऽन्यत्राऽनुमापकम्॥

यथैव धर्मे संबन्धादर्शनान्न किंचिल्लिङ्गं क्रमते तथाऽष्टकादिश्रुतावपि।

न चाऽऽगमेन तद्बोधो नित्येनं कृतकेन वा।

विप्रलम्भः कृतके नास्ति नित्यो नैवोपपद्यते॥

यद्यप्यैन्द्रियकत्वादष्टकादिस्मृतीनां पौरुषेयागमगम्यत्वं संभवति। तथाऽपि विप्रलम्भभूयिष्ठत्वादश्रद्धेयवचनेषु पुरुषेष्वनध्यवसानम्। दृश्यन्ते ह्यनागमिकानप्यर्थानागमिकत्वाध्यारोपेण केचिद्वदत्वेऽप्यभिदधानाः। तेन मन्वादिभिरपि किमष्टकाश्रुतीरुपलभ्य वेदमूलत्वं स्वनिबन्धनानां प्रतिज्ञातमुतानुपलभ्यैव श्रद्धेयत्वार्थमिति दुष्टपुरुषाकुलितचेतसां भवति संदेहः। तावता च प्रामाण्यविघातः। नित्यस्य वचनस्याऽऽदिमत्स्मरणमूलप्रतिपादने व्यापार एव नास्ति। न च मन्त्रलिङ्गानि स्वयं मूलत्वं प्रतिपद्यन्ते।

अतो निर्मूलत्वान्नापेक्षितव्यमिति । ननु ये विदुरित्थमसौ पदार्थः कर्तव्य इति कथमिव ते वदिष्यन्त्यकर्तव्य एवायमिति । स्मरणानुपपत्त्या । न ह्यननुभूतोऽश्रुतो वाऽर्थः स्मर्यते, न चास्यावैदिकस्यालौकिकस्य च स्मरणमुपपद्यते पूर्वविज्ञानकारणाभावादिति । या हि वन्ध्या स्मरेदिदं मे दौहित्रकृतमिति न मे दुहिताऽस्तीति मत्वा न जातुचिदसौ

विधिशून्यत्वात् । न च मूलान्तरं न्यायागतं सूचय । अन्यपरत्वात् । न च सर्वेषां स्मृतिप्रणयिनामविगानम् । येन पौरुषेयागमबलादुपलब्धपूर्वश्रुतिमूलत्वं स्यात् ।

न च विज्ञायते वाक्यं कीदृशं तैर्निरूपितम् ।
अर्थवादादिरूपाद्धि पश्यामो भ्राम्यतो बहून् ।

यदि ह्येतदेवमन्तेन गम्येत यथाविधि वाक्यान्येव मन्वादिभिरुपलब्धानीति । ततः काऽपि कल्पना स्यादद्यत्वेऽप्यन्यपरार्थवादादिवचनेभ्योऽपि भ्राम्यन्तः पुरुषा दृश्यन्ते । तेन तेष्वप्याशङ्का भवति । मृतसाक्षिकव्यवहारवच्च प्रक्षीणशाखामूलत्वकल्पनायां यस्मै यद्रोचते तत्प्रमाणीकुर्यात् । तस्मान्नाऽऽगमेनापि मूलोपलब्धिः ॥

उपमानं त्वदृष्टेऽर्थे सदृशे चानिरूपिते ।
नैवेष्टमिति तेनापि न मूलश्रुतिसाधनम् ॥
अर्थापत्त्याऽपि यत्किंचिन्मूलमित्यवगम्यते ।
तत्राप्रमाणपक्षेऽपि भ्रान्त्यादि न विरुध्यते ॥

यदि हि श्रुतिकल्पनेन विना स्मृतिर्नोपपद्यते ततः सम्यङ्मूला स्यात् । संभवति तु स्वप्नमूलत्वेन तेनानेकान्त्यादर्थापत्तेः सामान्यतो दृष्टस्य वाऽनवकाशः । तस्मादनुपलब्धिगोचरापन्नायां श्रुतौ सत्स्वपि मूलान्तरेष्वभिप्रेतमूलाभावान्निर्मूलत्वाभिधानम् । ननु ये विदुरेवमितिकर्तव्यताक एवंफलकश्चासौ पदार्थः कर्तव्य इति । अथ वा ये कर्तव्योऽसावित्येवं विदुस्ते तथा विजानन्तस्तादृशाः कथमिवास्मान्विप्रलब्धुं न कर्तव्योऽसाविति वदेयुः । नन्वन्य एवं वदन्ति कर्तव्य इत्यन्ये न वा कर्तव्य इत्याहुः । कथमन्यत्वं यदा तेषामप्येवमयं स्मर्यत इति कथिते भवत्येवं प्रतिपत्तिः । अथ वा ये मन्वादयो विदुरकर्तव्योऽयं पदार्थ इति कथमिव ते विनाऽपराधेन लोकं वञ्चयितुं वदिष्यन्ति कर्तव्य एवायमिति । स्मरणानुपपत्त्येति । ये तावन्मन्वादिभ्योऽर्वाञ्चः पुरुषास्तेषां यज्ज्ञानं तत्तावदनवगतपूर्वार्थत्वान्न स्मृतिः । मन्वादीनामपि यदि प्रथमं किंचित्प्रमाणं संभाव्यते ततः स्मरणं भवेन्नान्यथा । कस्मात्पुनः पुत्रं दुहितरं वाऽतिक्रम्य वन्ध्यादौहित्रोदाहरणं कृतम् । स्थानतुल्यत्वात् । पुत्रादिस्थानीयं हि मन्वादेः पूर्वविज्ञानं

१ यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः । न तन्मम मतं यस्मात्तत्राऽऽत्मा जायते स्वयम् ॥ इत्यादिना वि[illegible]दर्शनादिति भावः ।

इह त्वल्पेन कालेन शुद्धेर्या दीर्घकालता ।
न वर्धयेदघाहानि साऽनेनापि निवार्यते ॥
क्लेशप्राय च त पक्ष नाऽऽश्रयेतैव कश्चन ।
ततोऽनह्नाह्निके तस्मिन् स्यात्तद्वाक्यमनर्थकम् ॥
तेनैते विषयान्यत्वान्न विकल्पोऽवकल्पते ।
स चोक्तो धर्मपीडाख्यस्तत्र चाह्नामवर्धनम् ॥
दन्तजातानुजातान्यकृतचूडेषु च क्रमात् ।
चितिक्रिया त्र्यहैकाहास्तत्र चाह्नामवर्धनम् ॥

तथा गौतमेनाप्युक्तम्— राज्ञां च कार्यविघातार्थं ब्राह्मणानां च स्वाध्यायानिर्वृत्त्यर्थमिति ।

अथ वाऽन्तर्दशाऽऽशौचानिमित्तं किंचिदापतेत् ।
तत्र शेषेण या शुद्धिस्तच्छेषोऽस्य भविष्यति ॥
न वर्धयेदघाहानि निमित्तागमनान्यपि ।
पूर्वस्यैव हि कालस्य प्रसङ्गेन तदङ्गता ॥
प्रवृत्तोऽनपवृत्तश्च दशरात्रादिकोऽवधि ।
अन्तःपतितमाशौचं स व्याप्नोति स्वसंख्यया ॥
नित्यं दश संख्या हि तान्यहानि व्यवस्थिता ।
शक्नोत्येव परिच्छेत्तुमन्तराशौचमागतम् ॥
शुद्ध्यशुद्धी ह्यदृष्टत्वाद्विज्ञायेते यथाश्रुति ।
नन्वेवं भोजनस्यास्ति विषयावधिकारणम् ॥
तत्र दीर्घावधिर्व्यर्थः स्यादल्पावध्यनुज्ञया ।
तस्मादिहापि वैषम्यहेतुर्वाच्योऽवधिद्वये ॥
अत्राप्यसमवेतस्य दीक्षिते वा ददत्यपि ।
तन्नियुक्तकृतान्नं भोज्यं सोमक्रये कृते ॥
आपद्धर्मो यथैवान्ये मुख्यासंभवहेतुकाः ।
तथैव प्राणपीडायां नीचराजकभोजनम् ॥
हन्तैवमप्रमाणत्वमुक्तमन्यप्रकारकम् ।
भगवानत्ति ह्यार्तो विश्वामित्रः श्वजाघनीम् ॥

उच्यते—

एवं विनाऽप्यनुज्ञानान्नियमे गत्यसंभवात् ।
नियमेऽनुज्ञया त्वन्यद्विशेषश्च तयोर्महान् ॥

सामान्येनाभ्यनुज्ञानाद्विशेषश्च विशिष्यते ।
विशेषोऽत्यन्तनिर्दोषः स्नोकद्दोषेतरक्रिया ॥
तथा च मनुनाऽप्युक्तमापद्धर्मगतं प्रति ।
तत्रत्यपापशेषाणामन्ते शौचं भविष्यति ॥
कर्मणा येन केनेह मृदुना दारुणेन वा ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ इति ।
धर्मश्च प्रथमं तावत्प्रायश्चित्तात्मको भवेत् ।
ततस्तेन विशुद्धस्य फलार्थोऽन्यो भविष्यति ॥

यत्तु क्रीतराजकभोज्यान्नत्ववचनं तद्वृत्त्यन्तरासंभवे निर्दोषत्वज्ञापनार्थमेव ज्ञायते । तत्रापि तु ।

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
स नाऽऽप्नोति फलं तस्य परत्रेति विचारितम् ॥

इति निन्दितत्वात्र संभवद्भोज्यान्तरेणापि स्नोकयात्रादिवशेन भोक्तव्यम् ।

यदि वा कालवैषम्यादसत्समविकल्पयोः ।
अर्थभेदव्यवस्थानादविरोधोऽवधार्यते ॥
दीक्षिताश्रमभोज्यं स्यादक्रीते राजनि ध्रुवम् ।
क्रीते त्वभोजनं नाम मनः कर्म नियम्यते ॥
यथैवाश्राद्धभोजित्वं यथा वाऽमांसभक्षणम् ।
श्रेयसे विहितं धर्म्यं न सर्वत्र निषिध्यते ॥
श्राद्धमन्तर्दशाहं हि नियोगेन निषिध्यते ।
एकोद्दिष्टं सदैकेषां न तु विध्यं कदाचन ॥

श्राद्धभोजित्वनियमः स्वर्गायेति विज्ञायते । तथा पञ्चपञ्च मांसभक्षणमैथुनादिक्रियाप्रतिषेधाद्गृहस्थस्यान्यत्र कामचारे प्राप्ते तदकरणनियमः श्रेयसे विहितः । यथाऽऽह ।

न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेषा भूताना निवृत्तिस्तु महाफला ॥ इति

ननु च वाक्यद्वयदर्शनात्तत्र संयोगपृथक्त्वं युक्तमिह त्वेकमेव दीक्षिताश्रमभोजनप्रतिषेधवाक्यं कथं प्राक्क्रयात्प्रतिषेधति तदुत्तरकालं च प्रागग्नीषोमीयसमाप्तेर्निःश्रेयसेन नियच्छतीति ।

तदुच्यते—

स्याद्वाक्यद्वयमेवैतद्वधिद्वयकल्पितम् ।
यः पूर्वः प्रतिषेधोऽत्र संस्थितः क्रीतराजके ॥
परोऽवधिः पुनस्तस्य नैकत्वादवकल्पते ।
द्वितीयात्वादनानुज्ञादर्शनात्तेन गम्यते ॥
अभोजनविधिर्नूनमस्त्यन्योऽप्यान्तरालिकः ।
न हि पूर्वमनुज्ञाते स्यादनुज्ञान्तरं पुनः ॥
वरणादप्यनुज्ञाते निर्वापे किमनुज्ञया ॥

यथाऽध्वर्योर्वरणवेलायामेव सर्वं यजमानेन यज्ञोपयोगि स्वयमनुज्ञातमेवेति निर्वापमन्त्रे प्रभवच्छब्देन तदानीतनयजमानानुज्ञाप्रकाशनं न क्रियते तथेह क्रीतराजकावस्थानुज्ञा-तभोजनानुज्ञावचनमग्नीषोमीयसमाप्तौ पुनरुक्तमित्यवश्यं नियमेन प्रतिषेधान्तरेण वा वारितस्यानुज्ञानार्थमित्यवगम्यते ।

प्रतिषिद्धाप्यनुज्ञा च विकल्पेनैव दृष्यते ।
पर्युदस्ताप्यनुज्ञानं तस्मादिष्टं व्यवस्थया ॥

दीक्षितान्नविशिष्टाभोजननियमो हि श्रेयोर्थिभ्यो विधीयते ।

पाश्चात्यभोजनानुज्ञा नान्यथा ह्युपपद्यते ।
अदृष्टार्थप्रसक्तित्वान्न विधिश्चायमिष्यते ॥
एवं विषयनानात्वादविरोधादबाधनम् ।

अष्टाचत्वारिंशद्वर्षं वेदब्रह्मचर्याचरणस्यापि स्मृतावेव पक्षान्तरविकल्पोपनिबन्धनादा-श्रमान्तरविषयत्वसंभवाद्वा विरोधाभावः । तथा हि—

वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् ।
सामर्थ्याश्रमयोग्यत्वमङ्गीकृत्यैतदुच्यते ।।

गौतमेनापि द्वादशवर्षाण्येकवेदब्रह्मचर्यं चरेदिति प्रथमकल्पमात्रं गार्हस्थ्यप्रतिपत्त्य-र्थमुक्त्वा द्वितीयकल्पे द्वादश प्रतिवेदं वा सर्वेष्वित्यष्टाचत्वारिंशत्परिग्रहः कृतः ।

तथैवं शक्यते वक्तुं येऽन्धपङ्ग्वादयो नराः ।
गृहस्थत्वं न शक्यन्ति कर्तुं तेषामयं विधिः ॥
नैष्ठिकब्रह्मचर्यं वा परिव्राजकताऽपि वा ।
तैरवश्यं ग्रहीतव्या तेनाऽऽदावेतदुच्यते ॥
उपकुर्वाणकेनैव याप्यः कालो महत्तमः ।
संप्राप्य ज्ञानभूयस्त्वं पवित्रैः क्षीणकल्मषैः ॥
सर्वाश्रमातिरिक्तेन स्वाध्यायेनैव शोधितः ।
स्नातैरस्याश्रमार्थैर्गनिमित्ता गमिष्यति ॥

द्वैपायनादयश्चाऽऽहुः—

परिनिष्ठितकार्यस्तु स्वाध्यायेनैव हि द्विजः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥

यानि च प्रतिदिनप्रयुज्यमानऋक्सामयजुर्ब्राह्मणकल्पव्याख्यानादिब्रह्मयज्ञनिमित्तानि फलानि क्रत्वधिकृतपुरुषेभ्योऽन्यानर्थक्यप्रसङ्गाद्व्यावृत्तानि जपध्यानमात्राधिकृतब्रह्मचारि-परिव्राजकविषयत्वेनावतिष्ठन्ते तान्यपि स्वाध्यायविज्ञानभूयस्त्वेन भूयिष्ठानि भविष्यन्तीति प्रतिवेदब्रह्मचर्योपदेशः । यो वा कश्चिन्मेधावितया शीघ्रमेव वेदचतुष्टयमप्यधीत्य यथो-पपत्तिकालं तदर्थज्ञानाभियोगमपरित्यजन्ग्रहणान्तं वेत्येतत्पक्षाश्रयणेन गृहस्थो भवेत्तं प्रति द्वादशाष्टाचत्वारिंशद्वर्षपक्षावनेनैव स्मरणेन पूर्वपक्षीकृताविति नातीव श्रुतिविरुद्ध-त्वेनोदाहर्तव्यौ ।

तेन नैव श्रुतिस्मृत्योर्विरोधोऽतीव दृश्यते ।
श्रुत्योरेव ह्यसौ दृष्टः क्व चिद्वा नैव विद्यते ॥
तेनात्र यदि वा कर्मप्रयोगोऽयं निरूप्यते ।
यदि वा बाध्यमानत्वमुक्तं बाह्यं स्मृतीः प्रति ॥

एतद्धि जैमिनिनाऽत्यन्तं हितोपदेशिना जिज्ञासुभ्यः प्रतिपाद्यते ।

यावदेकं श्रुतौ कर्म स्मृतौ वाऽन्यत्प्रतीयते ।
तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते ॥

व्रीहियवादिष्वपि तावत्प्रत्यक्षश्रुतिविहितेषु यदि कश्चिद्यावज्जीवमप्येकमेव पक्षमाश्रित्य व्यवहरेन्न स कदाचिदप्युपालम्भास्पदं गच्छेत् ।

ततश्च तुल्यकक्षाऽपि यदि नाम स्मृतिर्भवेत् ।
तथाऽपि नैव दोषोऽस्ति श्रुत्यर्थमनुतिष्ठताम् ॥

यानि स्मृतिवचनान्यर्थमात्रमेव प्रतिपाद्य मूलभूताः श्रुतीरनुदाहृत्य निवृत्तव्या-पाराणि तेषु श्रुत्यनुमानव्याजसापेक्षप्रामाण्येषु सत्सु वेदवचनमनपेक्षत्वात्प्रमाणतरत्वेन सुतरां विश्रम्भणीयमिति श्रद्धाविशेषेण ग्राह्यतरार्थं विज्ञायते । सूत्रार्थोऽप्येवं योजयि-तव्यः । श्रौतस्मार्तविज्ञानविरोधे यदनपेक्षमपेक्षावर्जितं यस्य वाऽपेक्षणीयमन्यन्नास्ती-त्येवं पाठद्वयेऽपि पूर्वसूत्रात्प्रमाणशब्दमनुषङ्गेण संबन्ध्य यदनपेक्षं तत्तावत्प्रमाणं स्यादिति तदानींतनव्यवहारमात्रप्रतिपत्त्यर्थमेवोच्यते ।

ततश्च न तावच्छाखान्तरीयविद्यमानश्रुतिमूलत्वाशङ्काया सत्यामेवात्यन्तनिराकर-णपक्षः परिगृहीष्यते । न च प्रत्यक्षश्रुत्यर्थानुष्ठानहानिः । यदा तु कश्चिच्छाखान्तरे

१ हिंसारहित ।

स्मरणं तु श्रुतिरपि प्रत्यक्षा भविष्यति तदोभयोस्तुल्यबलत्वाद्विकल्पो भविष्यत्येव । नन्वनेनैव न्यायेन स्वशाखाविहितविरुद्धं शाखान्तरगतमप्यग्राह्यं स्यात् । सत्यम् ।

वार्तामात्रेण दृष्टा वा तावन्नैव प्रहीयते ।
यदा तु श्रवणं प्राप्तं तदाऽस्मान्न विशिष्यते ॥
अनयैव श्रुतिस्मृत्योर्विशेषोऽनेन दर्श्यते ।
नात्यन्तमेव बाध्यत्वं न चाप्यत्यन्ततुल्यता ॥

( बाह्यग्रन्थानामप्रामाण्यनिरूपणम् । )

यद्वा यान्येतानि त्रयीविद्भिर्न परिगृहीतानि किंचित्तन्मिश्रधर्मकञ्चुकच्छायापतितानि लोकोपसंग्रहलाभपूजाख्यातिप्रयोजनपराणि त्रयीविपरीतासंबद्धदृष्टशोभादिप्रत्यक्षानुमानोपमानार्थापत्तिप्राययुक्तिमूलोपनिबद्धानि सांख्ययोगपाञ्चरात्रपाशुपतशाक्यग्रन्थपरिगृहीतधर्माधर्मनिबन्धनानि विषचिकित्सावशीकरणोच्चाटनोन्मादनादिसमर्थकतिपयमन्त्रौषधिकादाचित्कसिद्धिनिदर्शनबलेनाहिंसासत्यवचनदमदानदयादिश्रुतिस्मृतिसंवादिस्तोकार्थगन्धवासितजीविकाप्रायार्थान्तरोपदेशीनि यानि च बाह्यतराणि म्लेच्छाचारमिश्रकभोजनाचरणनिबन्धनानि तेषामेवैतच्छ्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षणीयत्वं प्रतिपाद्यते । न चैतत्क्वचिदधिकरणान्तरे निरूपितं न चावक्तव्यमेव गाव्यादिशब्दवाचकत्वबुद्धिवद् निष्प्रसिद्धत्वात् ।

यदि ह्यनादरेणैषां न क्रियेताप्रमाणता ।
अशक्यैवेति मत्वाऽन्ये भवेयुः समदृष्टयः ॥
शोभामात्रदेहवृत्तिकारिताल्पदर्शनेन वा ।
यज्ञोक्तपशुहिंसादित्यागभ्रान्तिमवाप्नुयुः ॥

ब्राह्मणक्षत्रियप्रणीतत्वाविशेषेण वा मानवादिवदेव श्रुतिमूलत्वमाश्रित्य सचेतसोऽपि श्रुतिविहितैः सह विकल्पमेव प्रतिपद्येरन् ।

तत्र यद्यपि लभ्येत स्मृतिः काचिद्विरोधिनी ।
मन्वाद्युक्ता तथाऽप्यस्मिन्ननेनैवोपयुज्यते ॥
त्रयीमार्गस्य सिद्धस्य ये ह्यत्यन्तविरोधिनः ।
अनिराकृत्य तान्सर्वान्धर्मशुद्धिर्न लभ्यते ॥
महाजनगृहीतत्वं पित्राद्यनुगमादि च ।
तेऽपि द्वीपान्तरापेक्षं वदन्त्येव स्वदर्शने ॥

तत्र श्रद्धामात्रेणैव व्यवस्थानिमित्तं सर्वेषां स्वपितृपितामहादिचरितानुयायित्वात् । देशे मानवादिस्मृतीनामप्युपन्यस्तवेदमूलत्वादुपन्यस्तवेदमूलत्वागत नान्यानि पुनरा शाक्यादिभि रपि दातव्य न दृष्टं यस्य बहुम । ते हि दत्तानुगादुपदाना बालपरिपिपेपत्तानिपप

कर्तुम् । ततश्च यावत्किंचित्क्रियमाणमपि वेदविरोधाद्विगर्ह्यमाणं प्रसिद्धिं गतं तत्प्रत्यक्षशाखाविसंवादेऽप्युत्सन्नशाखामूलत्वावस्थानमनुभवतुल्यकक्षतया प्रतिभायात् । अत आह— विरोधे त्वनपेक्ष्यं स्यादिति । पारतन्त्र्यं तावदेषां स्मर्यमाणपुरुषविशेषप्रणीतत्वात् तैरेव प्रतिपन्नं शब्दकृतकत्वादिप्रतिपादनादराच्च पार्श्वस्थैरपि ज्ञायते ।

वेदमूलत्वं पुनरेते तुल्यकक्षमूलत्वाक्षमयैव लज्जया च मातापितृद्वेषिदुष्टपुत्रवन्नाभ्युपगच्छन्ति । अन्यच्च स्मृतिवाक्यमेकमेकेन श्रुतिवचनेन विरुध्येत । शाक्यादिवचनानि तु कतिपयदमदानादिवचनवर्जं सर्वाण्येव समस्तचतुर्दशविद्यास्थानविरुद्धानि त्रयीमार्गव्युत्थितविरुद्धाचरणैश्च बुद्धादिभिः प्रणीतानि । त्रयीबाह्येभ्यश्चतुर्थवर्णनिरवसितप्रायेभ्यो व्यामूढेभ्यः समर्पितानीति न वेदमूलत्वेन सम्भाव्यन्ते । स्वधर्मातिक्रमेण च येन क्षत्रियेण सता प्रवक्तृत्वप्रतिग्रहौ प्रतिपन्नौ स धर्ममविप्लुतमुपदेक्ष्यतीति कः समाश्वासः । उक्तं च ।

परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत् ।
आत्मानं योऽतिसंधत्ते सोऽन्यस्मै स्यात्कथं हितः इति ॥

बुद्धादेः पुनरयमेव व्यतिक्रमोऽलंकारबुद्धौ स्थितः । येनैवमाह ।

कलिकलुषकृतानि यानि लोके
मयि निपतन्तु विमुच्यतां तु लोकः, इति ।

स किल लोकहितार्थं क्षत्रियधर्ममतिक्रम्य ब्राह्मणवृत्तं प्रवक्तृत्वं प्रतिपद्य प्रतिषेधातिक्रमासमर्थैर्ब्राह्मणैरननुशिष्टं धर्मं बाह्यजनाननुशासद्धर्मपीडामप्यात्मनोऽङ्गीकृत्य परानुग्रहं कृतवानित्येवंविधैरेव गुणैः स्तूयते तदनुशिष्टानुसारिणश्च सर्व एव श्रुतिस्मृतिविहितधर्मातिक्रमेण व्यवहरन्तो विरुद्धाचारत्वेन ज्ञायन्ते ।

तेन प्रत्यक्षया श्रुत्या विरोधे ग्रन्थकारिणाम् ।
ग्रहीत्राचरितॄणां च ग्रन्थप्रामाण्यबाधनम् ॥

न ह्येषां पूर्वोक्तेन न्यायेन श्रुतिप्रतिबद्धानां स्वमूलश्रुत्यनुमानसामर्थ्यमस्ति ।

न च शाखान्तरोच्छेदः कदाचिदपि विद्यते ।
प्रागुक्ताद्वेदनित्यत्वान्न चैषां दृष्टमूलता ॥

न हि यथोपनयनादिस्मृतीनां शाखान्तरदृष्टश्रुतिसंवादः । एवं चैत्यकरणतद्वन्दनशूद्रसंप्रदानकदानादीनां संवादः संभवति मूलान्तरस्य च प्रागेव प्रत्याख्यातम् ।

लोभादिकारणं चात्र बह्वेवान्यत्प्रतीयते ।
यस्मिन्संनिहिते दृष्टे नास्ति मूलान्तरानुमा ॥
शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेशनाम् ।
हेतुजालविनिर्मुक्ता न कदाचन कुर्वते ॥

वैदिकवचनकल्पनात् ॥ ४ ॥

[ ३ ] शिष्टाकोपेऽविरुद्धमिति चेत् ॥ ५ ॥ सि०

आचान्तेन कर्तव्यं यज्ञोपवीतिना कर्तव्यं दक्षिणाचारेण कर्तव्यमित्येवंलक्षणान्युदाहरणानि । किमेतानि श्रुतिविरुद्धानि न कर्तव्यानि उताविरुद्धानि कार्याणीति । चेत्पश्यसि, नैरपनुह्यमाने·

---

न च तैर्वेदमूलत्वमुच्यते गौतमादिवत् ।
हेतवश्चाभिधीयन्ते ये धर्माद् दूरतः स्थिताः ॥
एत एव च ते येषां वाङ्मात्रेणापि नार्चनम् ।
पाषण्डिनो विकर्मस्था हैतुकाश्चैव एव हि ॥

एतदीया ग्रन्था एव च मन्वादिभिः परिहार्यत्वेनोक्ताः ।

या वेदबाह्याः स्मृतयो याश्च काश्चित्कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रोक्तास्तमोनिष्ठा हि ताः स्मृताः ॥

तस्माद्धर्मं प्रति त्रयीबाह्यमेवंजातीयकं प्रामाण्येनानपेक्ष्यं स्यादिति सिद्धम् ॥ ४ ॥

शिष्टाकोपे—एवं तावत्पुरुषार्थस्मृतीनामविरोधे विरोधे च प्रमाणत्वाप्रमाणत्वे निरूपिते सम्प्रति तु क्रत्वर्थानां यज्ञोपवीताचमनदक्षिणहस्ताचरणस्मृतीनां बहुश्रुत्यर्थसंपातिनीनां विरोधाविरोधमात्रमेव विचार्यते । तन्निर्णये तु कृते पूर्वाधिकरणाभ्यां प्रमाणत्वाप्रमाणत्वसिद्धिः ।

कथं पुनर्विरुद्धत्वं कथं वा न विरुद्धता ।
श्रुत्यर्थविगुणत्वेन तदभावेन चेष्यते ॥

यदि यज्ञोपवीतादीनि क्रतुमनुप्रवेश्यमानानि चोदकप्रयोगवचनाभ्यां न परिगृह्यन्ते निराक्रियन्ते वा ततो विरोधः । यदि पुनरानुगुण्यात्प्रकरणादिपठितवत्स्मृत्यनुमितवाक्यप्रयोगेन क्रतुमनुप्रविशन्ति न च पूर्वगृहीतं किंचिद्बाधन्ते ततो न विरुद्धानीति । अन्यत्तु दर्शनं सत्यपि विरोधे प्रमाणप्रमेयबलाबलनिमित्तादात्मदेहः । तथा हि ।

श्रुतिस्मृत्योर्विरुद्धत्वे ज्ञानमेव बलाबलम् ।
धर्मधर्मिविरोधे च धर्मिणो बलवत्तरम् ॥

वक्ष्यति हि "अङ्गगुणविरोधे च तादर्थ्यादिति"[1] । न चेह स्मार्तैः कस्यचिदपि श्रौतस्य पदार्थस्य बाध आशङ्क्यते क्रमकालपरिमाणानि तु समस्तपदार्थधर्मत्वेन निश्चितानि । तत्र यदि प्रथमतरप्रवृत्तेः बलीयस्तया बलवच्छ्रुतिप्रमेयत्वाद् दुर्बलस्मार्तैरपि क्रमादिभिराचमनादीनां बाधः प्रमेयबलाबलचिन्तायां तु पदार्थधर्मस्य क्रमादेः पदार्थेनाऽऽचमनाद्यो बलीयान् इति मन्यते स्मृत्याख्यप्रमाणे दुर्बलेऽपि बलवदाश्रया·

---

१ इदं सूत्रं १२।२।२७ उपलभ्यते [illegible] ।

वैदिकं किंचिन्न कुप्यति । तस्मादविरुद्धानीति ॥ ५ ॥

न शास्त्रपरिमाणत्वात् ॥ ६ ॥ पू०

नैतदेवम् । शास्त्रपरिच्छिन्नं हि क्रमं बाधेरन् । कथम् । वेदं कृत्वा वेदिं कुर्वीतेतीमां श्रुतिमुपरुन्ध्यादन्तरा वेदं वेदिं चानुष्ठीयमानमाचमनादि । दक्षिणेन चैकहस्तेनानुष्ठीयमानेषु पदार्थेषु कदाचित्प्रधानं

---

नापि स्वरूपेण दुर्बलान्क्रमादीनेव बाधिष्यन्ते ।

किं युक्तमविरुद्धत्वं क्रत्वर्थाङ्गस्मृतेरपि ।
न तदर्थक्रियायां हि श्रुतं किंचन हीयते ॥

यथैव विज्ञातबलाबलैरपि श्रुत्यादिभिः समाख्यापर्यन्तैर्यावन्तः शेषाः प्रमीयन्ते ते सर्वे शेषिकथंभावेन प्रार्थिता इत्थंभावेन सहानारभ्यवादाधीतैर्गृह्यन्ते ।

स्मृत्या तथैव संतुष्ट्या शिष्टाचारेण चार्पिताः ।
गृह्यन्ते भावनाभाव्यैरपूर्वैः साधनांशवत् ॥

कथंभावापेक्षितापूर्वोपकारस्याज्ञातपरिमाणाङ्गसाध्यत्वात् यावत्किंचिद्येन केनचिदपि प्रमाणेन प्राप्नोति तत्सर्वमङ्गं भवति । तस्मादाचमनादीन्यपि यज्ञप्रयोगाङ्गानीत्युपन्यस्तेऽभिधीयते ॥ ६ ॥

न शास्त्रपरिमाणत्वात्पदार्थोऽभ्यधिको भवेत् ।
शास्त्रितं परिमाणं हि कोऽतिक्रमितुमर्हति ॥
शास्त्रेण हि पदार्थानां परिमाणं त्रिधा गतम् ।
क्रमेयत्तानुनिर्माणरूपं तदिह बाध्यते ॥
द्वाभ्यां श्रुत्यादिषट्काभ्यां क्लृप्तेयत्ताक्रमास्थितान् ।
पदार्थाः प्रविशन्तो हि बाधेरन्स्मार्तलौकिकाः ॥

एवं हि पदार्थाः प्रधानकालाच्च विप्रकर्ष्टव्या इति प्रयोगवचनेन प्रतिपादिते तत्र स्मार्तशिष्टलोकाचारप्रमाणकपदार्थानुष्ठानविक्षेपाद्दक्षिणैकहस्ताधीनविलम्बितानुष्ठानाच्च प्रधानप्रत्यासत्तिबाधप्रसङ्गः ।

समस्तप्रयोगकालाश्च पूर्वाह्णमध्यंदिनादयोऽतिक्रम्येरन् । क्रमश्च यः श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिलक्षणैरवगतः स च वैदिकपदार्थारूढतया विज्ञाताश्रयप्रमाणपरिमाणः सन्नन्यथात्वं क्षुतादिनिमित्ताचमनव्यवधानात्प्रतिपाद्येत । एवमाश्वासप्रस्तोपवीतपुनःकरणव्यवधानेऽपि योजनीयम् ।

योह्यमावन्तः स्मार्तैः पदार्थैः क्रियते तदा
तस्य क्रमप्रमाणं हि न श्रुत्याद्यवगम्यते ।

स्वकालमतिनयेत् । उभाभ्यां हस्ताभ्यामनुतिष्ठन्प्रधानकालं संभाव यिष्यति ॥ ६ ॥

अपिवा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ७ ॥ सि०

अपिवेति पक्षव्यावृत्तिः । अगृह्यमाणकारणा एवंजातीयकाः प्रमाणम् । ननु क्रमकालौ विरुन्धन्ति । विरुन्धन्तु । नैष दोषः । आचमनं

---

उक्तपरिमाणस्य क्रमस्य नान्यदपि किंचित्प्रमाणमवकल्पते । तथा श्रुत्यावगतप्रचयत्निष्टपदार्थपरिमाणमवश्यमध्वर्य्वादिभिरविस्मृतसमस्तपदार्थनिर्माणायावधारणीयम् । ततश्च प्रथमापरिकल्पितपश्चादागतस्मार्तपदार्थानुष्ठाने पूर्वावधारणप्रशान्तसमस्तकृताकृतनिरूपणादनिवृत्तवैगुण्याशङ्कस्य सम्यक्कृतत्वदार्ढ्यनिमित्तसंस्कारपाटवाभावादपूर्वदौर्बल्येन न्यूनफलत्वप्रसङ्गः ।

तच्चातिशयवत्सर्वं सार्थवादाद्विधेर्गतम् ।
न्यूनत्वाक्षमयाऽवश्यं विरुद्धा बाधते स्मृतिम् ॥

परिमितश्रुत्याद्युपदेशातिदेशात्मकाङ्गशास्त्रपरिमाणत्वाद्वा न तद्व्यतिरिक्ताङ्गशास्त्रावकाशः । सहकर्तव्यापगतेषु च पदार्थेषु सर्वात्मना त्वरमाणस्य यावानेवात्यन्ताशक्त्या कालविप्रकर्षो भवति तावन्मात्रमेव प्रयोगवचनोऽनुमन्यते । शक्तस्तु क्षणमात्रमपि यदि विक्षेपकुर्यात्तदस्य प्रयोगवचनविधिर्न सहेत । तस्मात्त्रिविधस्यापि शास्त्रपरिमाणस्यान्यथाकरणात्ताऽऽचमनाद्यविरुद्धमिति । उच्यते ॥ ६ ॥

तेष्वदर्शनाद्विरोधस्येति वा समासि । अनन्तरसूत्रे विप्रतिपत्त्युपात्तविरोधाभावोक्तेरनुपयुज्यमानत्वादिह च प्रशान्तविरोधाभावस्यावश्यवचनीयत्वात् । उपयोगसद्भावेऽपि च काकाक्षिवदनुषङ्गेण तन्त्रेण चोभयसंबन्धात् ।

अपिवा कारण दृष्टं यस्मादेषु न गृह्यते ।
तस्मात्ताऽऽचमनादीनां क्रतुश्रुतिविरुद्धता ॥

विरोधस्याजितश्रुतिविरुद्धता । विरोधस्याजितश्रुतिमूलस्य हि स्मरणस्य यस्य मूलान्तरमिदं नामेत्येव समवदुत्प्रेक्षामात्रेणोपप्लवते तत्राल्पेनैव प्रयासेन निराशङ्कमप्रमाणत्वं निर्धार्यते ।

यत्र तूत्प्रेक्षयाऽप्यस्य यत्कारणं नावगम्यते ।
अत्यन्तानन्यमूलत्वाच्छ्रुतिमत्तत्प्रमाणता ॥

न चाऽऽचमनादिस्मृते कामक्रोधलोभद्वेषमानव्याजादिकारणं किंचित्समापतेत् यन्मूलत्वेन श्रुतिमूलत्वमपह्नूयेत ।

अनन्यमूलिकायां च श्रुतौ मूलेऽवधारिते ।
विरोधेऽपि प्रमाणत्वं स्मृतेः श्रुत्या न वार्यते ॥

पदार्थः पदार्थानां च गुणः क्रमः। न च गुणानुरोधेन पदार्थो न कर्तव्यो भवति। अपि च प्राप्तानां पदार्थानामुत्तरकालं क्रम आपतति। यदा पदार्थः प्राप्नोति तदा क्रम एव नास्ति, केन सह विरोधो भविष्यतीति तथा यदि दक्षिणेन नाऽऽचर्यते, कालो मा विरोधीदिति तत्र

इयत्ताक्रमकालाश्च श्रौतत्वाद्बलवत्तराः।
पदार्थधर्मभावात्तु दुर्बलत्वादबाधकाः॥

ननु पूर्वमाविरवास्प्रमाणबलाबलमेव प्रमेयबलाबलाज्ज्यायस्त्वेन प्रतिभाति। उच्यते—

नैव तावच्छ्रुतिस्मृत्योः स्वरूपेण विरुद्धता।
बलाबलपरीक्षा वा प्रमेयद्वारिका हि सा॥

प्रमेयगतं हि विरोधमालोच्य प्रमाणविरोधबुद्धिर्भवति।

तदस्यामेव वेलायां विरोधो दृश्यते तयोः।
प्रमेययोः स्वरूपन्यं तस्मादेव बलाबलम्॥
येषां पदार्थधर्मत्वाद्दौर्बल्यं पूर्वनिश्चितम्।
न तेषां श्रुत्यवष्टम्भात्तत्पश्चादपगच्छति॥
पदार्थत्वेन येषां च बलीयस्त्वं निरूपितम्।
न स्मृतेर्दुर्बलत्वेन पुनस्तदपनीयते॥
नित्यमेवाप्रमाणं यत्तदेवं बाधमर्हति।
आपेक्षिकाप्रमाणं तु स्यात्प्रमाणमपेक्षया॥
न च प्रमेयदौर्बल्यव श्रेयस्त्वनिबन्धनम्।
प्राप्तं स्मृतिप्रमाणत्वं प्रमाणत्वेन बाध्यते॥
न च प्रमेयदौर्बल्ये सत्यपि श्रुतिबाधनम्।
तावता मन्दतेजस्त्वात्स्मृतिस्तां नैव बाधते॥
एतदेव श्रुतेः पार्थाद्दृष्टु यत्र स्मृतिर्नृपा।
महास्मृत्याऽपि वा काचिन्न शक्या बाधितुं श्रुतिः॥
युगपत्प्राप्तिहेतुश्च विरोधस्तुल्यकार्ययोः।
इह तु द्वयमप्येतन्नास्ति तेनाविरुद्धता॥
कालेयत्ताक्रमाणां हि सर्वान्ते प्राप्तिरिष्यते।
गुणमन्यप्रमाणोऽपि पदार्थः पूर्वमश्नुते॥
प्राप्तेषु हि पदार्थेषु क्रमः पश्चादपेक्ष्यते।
यदा प्राप्तेऽप्यसौ लब्धः केन पश्चाद्विरुध्यते॥

(considerations of time did not alter to form of the act)

कालानुरोधेन पदार्थो नाऽन्यथात्वमभ्युपगच्छेत् । प्रयोगाङ्गं हि कालः पदार्थानामुपकारकः । अतो न कालानुरोधेन व्यथयितव्यः पदार्थः । अपि च शौचं दक्षिणाचारता यज्ञोपवीतित्वं चैवंजातीयका अर्था व्यवधातारो न भवन्ति । सर्वपदार्थानां शेषभूतत्वात् । तस्मादाचमनादीनां प्रामाण्यम् ॥ ७ ॥

(my objection cannot on)

माणमपि स्वार्थमविस्मरणसिद्धये
मालोच्यते प्राङ्गैः स्मार्तैः सह तदिष्यते ॥

न केनचित्प्रमाणेन पदार्थेयत्ता परिच्छिद्यते । तत्र यदि तेन विनाऽन्ये समस्त पदार्थस्मृतिहेतवो न स्युस्तत एतदप्येकं कारणमिति परिमाणमपि स्यात्प्येत । तस्यामपि त्ववस्थायां यथा श्रौतमात्रपरिमाणमसमाप्य समाख्यापर्यन्तप्रापितपदार्थगतपरिमाणावधारणमाश्रीयते तथा स्मृत्याचारपर्यन्तावगतपरिमाणमाश्रयिष्यत इति निर्दोषम् ।

कालोऽपि च प्रयोगाङ्ग सर्वान्ते सोऽपि गृह्यते ।
स्मार्तैः सह समाहित्यमाशुत्वं वा प्रपत्स्यते ॥
कालो ह्यथ प्रधानस्य सर्वाङ्गसाहितस्य च ।
अङ्गैरविप्रकृष्टत्वमीदृशस्यैव चोद्यते ॥

तस्माद्यत्किंचनप्रमाणकसर्वपदार्थप्राप्त्युत्तरकालापेक्षितसम्बन्ध कालोऽपि नैव सर्वोपसंहारविरोधीति तेषु क्रमकालपरिमाणेष्वदर्शनाद्विरोधस्येत्युच्यते । यद्वा तेष्वाचमनादिषु क्रियमाणेष्वदर्शनाद्विरोधस्येति सूत्रार्थयोजना । अपि च—

शौचयज्ञोपवीतादेर्न स्वतन्त्रपदार्थता ।
सर्वं ह्यङ्गप्रधानार्थं तेन न व्यवधायकम् ॥

अतदङ्गेन हि तुल्यकक्षेण व्यवधानं भवति न सर्वपदार्थेन ।

वेदं कृत्वा यदा वेदिमकृत्वाऽऽचामति श्रुते ।
वेदिमेव करोतीति स वक्तुं शक्यते तदा ॥
वेदिरेव ह्यनाचम्य कुर्वतो विगुणी भवेत् ।
तामेव सगुणां कर्तुं शुद्ध्या न व्यवधास्यते ॥

इममेवार्थमभिप्रेत्य भाष्यकारेणोक्तं न चैवंजातीयका अर्थाः पदार्थानां व्यवधातारो भवन्तीति । इतरथा ह्यङ्गप्रधानार्थत्वेऽनाश्रीयमाणे शून्यहृदयवचनमेवैतत्स्यात् ।

तस्मादाचमनादीनां स्मृतिभिः सग्रहे सति ।
पश्चात्प्राप्तक्रमेयत्ताकालशास्त्राविरोधिना ॥

( भाष्यकारोक्तोदाहरणाक्षेपः । )

नन्विदं यज्ञोपवीतमुदाहर्तव्यम् । दर्शपूर्णमासादिषु 'उपव्ययते देवलक्ष्ममेव तत्कुरुते' इति क्रत्वङ्गत्वस्य विधानात् । तथा काठके चानारभ्यवादविधिना सर्वयज्ञगतयजनयाजनसम्बन्धोऽध्यापनाध्ययनसम्बन्धश्च श्रूयते । 'प्रसृतेन वै यज्ञेन देवाः स्वर्गं लोकमायन्नप्रसृतेनासुरान्पराभावयन् । प्रसृतो ह वै यज्ञोपवीतिनो यज्ञोऽप्रसृतोऽनुपवीतिनो यत्किं च ब्राह्मणो यज्ञोपवीत्यधीते यजत एव तत्तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्यै इति' । तथाऽऽचमनविधिरपि 'दक्षिणत उपवीयोपविश्य हस्तावनिज्य त्रिराचम्य द्विः परिमृज्य दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङ्मुख उपविश्य स्वाध्यायमधीयीत' इति यद्यपि ब्रह्मयज्ञप्रकरणे श्रूयते तथाऽपि वेदोच्चारणसंबन्धात्तदङ्गत्वेनापि तावज्ज्ञायमानं सर्वयज्ञानां मन्त्रवत्प्रयोगित्वात् तदङ्गं भवति । तथा च "न सोमेनोच्छिष्टा भवन्ति" इति प्रागाचमनप्रतिषेधार्थमेवावधार्यते । दक्षिणाचारत्वं तु—

यत्राऽऽहत्य विधानेन स्यात्सव्याञ्जलिचोदना ।
तस्मादेव निवर्तेत नान्यथाऽऽशङ्क्यतेऽपि तत् ॥

"यथा वै दक्षिणः पाणिरेवं देवयजनम्" इति प्रागुदक्प्रवणविधिपरे वाक्ये देवयजनवद्दक्षिणाङ्गत्वौचित्यादुपमानमवकल्पते । तेन नात्रैकमपि विरोधबाधशङ्कायोग्यमित्यनुदाहरणानि । तस्मान्नैवैतदधिकरणान्तरम् ।

वेदाविरुद्धशाक्यादिवचसामप्रामाण्यनिरूपणम् ।

सूत्राणि तु पूर्वाधिकरणाक्षेपपरिहारसूत्रत्वेनैव व्याख्यातव्यानि । यत्तर्हि वेदविहितं न बाधते शिष्टान्वा वेदविदो न कोपयति । विहाराराममण्डलकरणवैराग्यध्यानाभ्यासाहिंसासत्यवचनदमदानदयादि, तद्बुद्धादिभाषितं प्रमाणेनाविरुद्धमिति चेत् । न । शास्त्रपरिमाणत्वात् ।

परिमितान्येव हि चतुर्दशाष्टादश वा विद्यास्थानानि धर्मप्रमाणत्वेन शिष्टैः परिगृहीतानि वेदोपवेदाङ्गोपाङ्गाष्टादशधर्मसंहितापुराणशास्त्रशिक्षादण्डनीतिसंज्ञकानि, न च तेषां मध्ये बौद्धार्हतादिग्रन्थाः स्मृता गृहीता वा ।

प्रतिकञ्चुकरूपेण पूर्वशास्त्रार्थगोचरम् ।
यत्रान्यत्क्रियते तस्य धर्मे प्रत्यप्रमाणता ॥

१ तै० सं० ( २-५-११ ) । २ तै० आ० ( २-२ ) ।

१ उपवेदाः—आयुर्वेदधनुर्वेदगन्धर्ववेदाः । अङ्गानि—शिक्षादीनि । उपाङ्ग—पूर्वोत्तरमीमांसाद्वयम् । दण्डनीति —अर्थशास्त्रमित्यर्थः ।

तथा च प्रायश्चित्तादिदानकाले यो वाक्यमात्मीयमन्यकविकृतं वा श्लोकं सूत्रं वोच्चार्य मानवादिप्रायश्चित्तं दद्यान्न कश्चिदपि धर्मार्थं प्रतिपद्येत ।

वेदेनैवाभ्यनुज्ञाता येषामेव प्रवक्तृता ।
नित्यानामभिधेयाना मन्वन्तरयुगादिषु ॥
तेषां विपरिवर्तेषु कुर्वतां धर्मसंहिताः ।
वचनानि प्रमाणानि नान्येषामिति निश्चयः ॥

तथा च "मनोर्ऋचः सामिधेन्यो भवन्ति" इत्यस्य विधेर्वाक्यशेषे श्रूयते "मनुर्वै यत्किंचिदवदत्तद्भेषजं भेषजतायै" इति प्रायश्चित्ताद्युपदेशवचनं पापव्याधेर्भेषजम् ।

न चैतच्छ्रुतिसामान्यमात्रं नित्येऽपि संभवात् ।
यद्वेऽध्वर्युरिव ह्यस्ति मनुर्मन्वन्तरे सदा ॥
प्रतिमन्वन्तरं चैवं स्मृतिरन्या विधीयते ।
स्थिताश्च मनवो नित्यं कल्पे कल्पे चतुर्दश ॥
तेन तद्वाक्यचेष्टाना सर्वदैवास्ति संभवः ।
तदुक्तिज्ञापनाद्वेदो नानित्योऽतो भविष्यति ॥
प्रतियज्ञं भवन्त्यन्ये सर्वदा षोडशर्त्विजः ।
आदिमत्त्वं च वेदस्य न तच्चरितबन्धनात् ॥

उक्तं च—

यथर्तावृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भाति युगादिषु ॥ इति ।
इतिहासपुराणं च कृत्रिमत्वेन निश्चिते ।
तथाऽप्यकृत्रिमे वेदे तद्विद्यात्वेन संमतम् ॥

एवं ह्युपनिषत्सूक्तम् । 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्ववेदं चतुर्थमितिहासं पुराणं पञ्चमम्' इति । तेन प्रतिकल्पमन्वन्तरयुगनियतनित्यऋषिनामाभिधेयकृत्रिमविद्यास्थानकारा ये वेदेऽपि मन्त्रार्थवादेषु श्रूयन्ते तत्प्रणीतान्येव विद्यास्थानानि धर्मज्ञानाङ्गत्वेन संमतानि । तथा च ऋग्वेदादिविहितयज्ञाङ्गभ्रेषप्रायश्चित्तविशेषानभिधाय 'यद्यविज्ञात इति' प्रायश्चित्तान्तरं विदधत् त्रैविद्यवृद्धस्मृतिविहितविनष्टोद्देशेनैव विदधातीति गम्यते । अन्यथा हि प्रत्यक्षवेदविहितं सर्वं विज्ञातमूलविशेषत्वादविज्ञातमूलत्वेनानभिधेयमेव स्यात् । यदि च स्मर्यमाणवेदमूलग्रन्थनिबन्धनानामविज्ञातवेदविशे·

पूर्वकत्वेनापि स्थितानां प्रामाण्यं नाऽऽश्रीयेत तथा सति नैवाविज्ञातमूलं किंचिद्धे क्रियत इति तद्विनष्टप्रायश्चित्तविधिर्नैवोपपद्येत ।

तस्माद्यान्येव शास्त्राणि वेदमूलानतिक्रमात् ।
अवस्थितानि तैरेव ज्ञातो धर्मः फलप्रदः ॥
यथैवान्यायविज्ञाताद्वेदाल्लेख्यादिपूर्वकात् ।
शूद्रेणाधिगताद्वापि धर्मज्ञानं न संमतम् ॥
तथाऽतिक्रान्तवेदोक्तमर्यादाव्यवहारिणाम् ।
संवादिष्वपि वाक्येषु नेष्यते धर्महेतुता ॥
स्मर्यन्ते च पुराणेषु धर्मविप्लुतिहेतवः ।
कलौ शाक्यादयस्तेषां को वाक्यं श्रोतुमर्हति ॥
यथा कृतककर्पूरसुवर्णादिषु दीयते ।
यद्दीनं तदपि व्यक्तमग्राह्यत्वात्प्रतीयते ॥

तेन कर्मानुरूप्यसामान्यतो दृष्टार्थापत्तिबलात्तदभिप्रायकल्पितधर्माभासमध्यपतितं सन्मूलमप्यहिंसादि श्वदृति निक्षिप्तक्षीरवदनुपयोग्यविश्रम्भणीयं च तन्मात्रोपलब्धं भवतीत्यवश्यं यावत्परिगणितधर्मशास्त्रेभ्यो नोपलभ्यते तावदग्राह्यं भवति ।

यदा शास्त्रान्तरेणैव सोऽर्थः स्पष्टोऽवधार्यते ।
तदा तेनैव सिद्धत्वादितरत्स्यादनर्थकम् ॥

तस्माद्यावत्परिगणितवेदादिशास्त्रव्यतिरिक्तनिबन्धनं तद्धर्मप्रमाणत्वेन नापेक्षितव्यमिति ।

( सदाचारप्रामाण्यनिरूपणम् । )

यस्त्वेतत् । अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्, इति सूत्रम् । अत्र सदाचारानुदाहृत्य त्रिवर्गसिद्ध्यर्थं विचार्यन्ते । तद्विपरीतसंकीर्णव्यवहारेषु शिष्टेष्वपथ्यकारिवैद्यातुरवदविस्रम्भणीयचरितत्वात्संभाव्यमानवेदमूलत्वाच्च धर्मसंशयं दर्शयित्वा " धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यम् " इति पूर्वः पक्षः सिद्ध " विरोधे त्वनपेक्ष्यम् " इत्येतन्न्यायानुसारेण । सदाचारेषु हि दृष्टो धर्मव्यतिक्रमः साहसं च महतां प्रजापतीन्द्रवसिष्ठविश्वामित्रयुधिष्ठिरकृष्णद्वैपायनभीष्मधृतराष्ट्रवासुदेवार्जुनप्रभृतीनां बहूनामद्यतनानां च । प्रजापतेस्तावत्प्रजापतिरुषसमभ्यैत्स्वां दुहितरम् । इत्यगम्यागमनरूपादधर्माचरणाद्धर्मव्यतिक्रमः । इन्द्रस्यापि[1] । तत्पदस्थस्य च नहुषस्य परदाराभियोगाद्धर्मव्यतिक्रमः । तथा वसिष्ठस्य पुत्रशोकार्तस्य जलप्रवेशात्मत्यागसाहसम् । विश्वामित्रस्य चाण्डालयाजनम् । वसिष्ठवत्पुरूरवसः प्रयोगः । कृष्णद्वैपायनस्य गृहीतनैष्ठिकब्रह्मचर्यस्य विचित्रवीर्यदारेष्वपत्योत्पादनप्रसङ्गः । भीष्मस्य च

१ गौतमधर्मपत्न्यहल्यागमनरूपो धर्मव्यतिक्रमो बोध्यः ।

सर्वाश्रमधर्मव्यतिरेकेणावस्थानम् । अपत्नीकस्य च रामवत्क्रतुप्रयोगः । तथाऽन्धस्य धृतराष्ट्रस्येज्या पाण्डुर्जितैर्धनैरित्यनधिकृतक्रिया । तथा युधिष्ठिरस्य कनीयोर्जितभ्रातृजायापरिणयनमाचार्यब्राह्मणवधार्थमनृतभाषणं च । वासुदेवार्जुनयोः प्रतिषिद्धमातुलदुहितृरुक्मिणी सुभद्रापरिणयनम्, उभौ मध्वासवक्षीबाविति सुरापानाचरणम् । अद्यत्वेऽप्यहिच्छत्रमथुरानिवासिब्राह्मणीनां सुरापानम् । नेमर्यथाऽवतरत्तरोष्ठोभयतोदद्दानप्रतिग्रहविक्रयव्यवहारभार्यापत्यमित्रसहभोजनायुदीच्यानाम् । मातुलदुहितृविवाहासन्दीस्थभोजनादीनि दाक्षिणात्यानाम् । मित्रस्वजनोच्छिष्टस्पृष्टभोजनं सर्ववर्णपरस्परस्पृष्टताम्बूलादनतदवसानानाचमनमिर्णेजकधौतगर्दभारूढवस्त्रपरिधानब्रह्महत्यातिरिक्तमहापातककार्यपरिहरणादीन्युभयेषाम् । अतिस्थूलानि प्रतिपुरुषजातिकुलावस्थितसूक्ष्मस्वधर्मव्यतिक्रमणानि स्वनन्तभेदानि सर्वत्र विगानहेतुदर्शनानि च प्रायेणैव संभवन्तीति नैवंजातीयकमिश्रसदाचारधर्मत्वाध्यवमानसंभवः । किं च ।

> के शिष्टा ये सदाचाराः सदाचाराश्च तत्कृताः ।
> इतीतरेतराधीननिर्णयत्वादनिर्णयः ॥

ननु ।

> सदाचारप्रमाणत्वं मन्वादिभिरपि स्मृतम् ।
> आत्मतुष्टिः स्मृताऽन्या तैर्धर्मे सा चानवस्थिता ॥

यथाभ्यासं ह्याशयवैचित्र्येण शुभाशुभोभयहीनक्रियानुष्ठायिनामात्मतुष्टिरपि विचित्रैव भवति । तथा हि ।

> कस्यचिज्जायते तुष्टिरशुभेऽपि हि कर्मणि ।
> शाक्यस्येव कुहेतूक्तिवेदब्राह्मणदूषणे ॥

तथा हि ।

> पशुहिंसादिसंबन्धे यज्ञे तुष्यन्ति हि द्विजाः ।
> तेभ्य एव हि यज्ञेभ्यः शाक्याः कुप्यन्ति पीडिताः ॥

तथा ।

> शूद्रान्नभोजनेनापि तुष्यन्त्यन्ये द्विजातयः ।
> स्वमातुलसुतां प्राप्य दाक्षिणात्यस्तु तुष्यति ॥
> अन्ये [illegible] सम्यर्लीकेन मनसा तन्न कुर्वते ।

तनश्चानवस्थितत्वाद्यथैवाऽऽत्मनस्तुष्टिरेव चेत्येतन्मनुवचनं कथमप्यन्यथा नेतव्यम् । एवमाचारश्चैव साधूनामित्येतदपीति ।

---

१ उभौ मध्वासवक्षीबौ दृष्टौ मे केशवार्जुनौ ।

स्वयमज्ञातमूलाश्च शिष्टाचारप्रमाणताम् ।
वदन्तोऽपि न शोभन्ते स्मृतिकारास्ततोऽधिकाः ॥

स्मृतिकारवचनार्थो हि शिष्टैराचरितव्यः शिष्टत्वाय । अन्यथा हि तदनपेक्षाः स्वातन्त्र्येण व्यवहरमाणा दुष्टा भवेयुर्न शिष्टाः ।

न च तेषां श्रुतिर्मूलं व्यवहारस्य दृश्यते ।
यदि च स्यात्परोक्षाऽपि स्मर्येतैव ह्यसौ ध्रुवम् ॥

तस्मान्निर्मूलत्वादनपेक्षाणि शिष्टाचरणानीति प्राप्तेऽभिधीयते ।

" अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् "

दृष्टकारणहीनानि यानि कर्माणि साधुभिः ।
प्रयुक्तानि प्रतीयेरन्धर्मत्वेनेह तान्यपि ॥
शरीरस्थितये यानि सुखार्थं वा प्रयुञ्जते ।
अर्थार्थं वा न तेष्वस्ति शिष्टानामेव धर्मधीः ॥
धर्मत्वेन प्रपन्नानि शिष्टैर्यानि तु कानिचित् ।
वैदिकैः कर्तृसामान्यात्तेषां धर्मत्वमिष्यते ॥
प्रदानानि जपो होमो मातृयज्ञादयस्तथा ।
शक्रध्वजमहोयात्रा देवतायतनेषु च ॥
कन्यकानां च सर्वासां चतुर्थ्याद्युपवासकाः ।
प्रदीपप्रतिपद्दानमोदकापूपपायसाः ॥

अनग्निपक्वमाघसप्तमीपौर्णमासीफाल्गुनीप्रतिपद्वसन्तोत्सवादीनां नियमक्रियाप्रमाणं न शास्त्रादृते किंचिदस्ति । स्मृतिकाराश्चाऽऽचारश्चैव साधूनां देशजातिकुलधर्माश्चाऽऽम्नायैरविरुद्धाः प्रमाणमिति ' वेदाविरुद्धानामाचाराणां सामान्यतः प्रामाण्यमनुमन्यन्ते । तथाऽनध्यायाधिकारे ऊर्ध्वं भोजनादुत्सव इति देशनगरोत्सवप्रामाण्याश्रयणम् । वेदेऽपि च महाव्रते प्रेङ्खमारुह्य होता शंसतीत्येतद्वाक्यशेषे श्रूयते, यदा वै प्रजा मह आविशन्ति प्रेङ्खं तर्ह्यारोहन्तीति । महःशब्दवाच्योत्सवप्रसिद्धिरनूदिता । यत्तु परिमितशाखाप्रमेयत्वाद्धर्माधर्मयोरिह च तदसंभवादित्युक्तम् तद्वेदमूलत्वानुमानात्पूर्ववदेव प्रत्याख्येयम् । न च स्मृतिर्निर्मूला । विस्तरवचनानामपि प्रपाठकमात्रेणोपसंहारात्किमुत संक्षेपवचनस्य । शक्यं च स्मृत्यनुरूपमेव वेदवचनमनुमातुम् । तथा हि ।

शिष्टैराचर्यमाणानां सतां गोदोहनादिवत् ।
फलसंबन्धमप्राप्तं बोधयच्छास्त्रमर्थवत् ॥

न हि तदेवैकं शास्त्रप्रमाणकं यस्य स्वरूपमपि तत एवावगन्तव्यम् । अनेकाकारस्य

हि प्रमेयस्य कश्चिदेवाऽऽकारः केनचित्प्रमाणेन प्रमीयते । तत्र प्रत्यक्षाद्यवगतेऽप्याचारस्वरूपे दधिगोदोहनादिवत्फलसम्बन्धः शास्त्रेणावगम्यते । यागादिष्वपि च नैव स्वरूपज्ञानेन शास्त्रमपेक्षितम् । फलसम्बन्धमात्रस्यैवातीन्द्रियत्वेन तदपेक्षितत्वात् । अतो न नामोपलक्षणान्तरेण शास्त्रं प्रवृत्तमुपलभ्य शिष्टाः प्रवृत्ताः सर्वकालं तु शिष्टव्यवहारशास्त्रयोरवियोगाद्व्यवहारादेवापोद्धृत्य केचित्स्वर्गादिसाधनत्वेन नियम्यमाना कादाचित्कत्वपरित्यागेन नित्यप्रयोज्या विज्ञायन्ते । तेषां चाऽऽर्यावर्तनिवासिशिष्टप्रयोज्यत्वमेवोपऊदर्शं वेदेनापि सरस्वतीविनशनप्लक्षप्रस्रवणादिवदुपात्तमिति शक्यमनुमातुम् ।

नतु शास्त्रार्थकारित्वाच्छिष्टत्वं गम्यते यदा ।
शिष्टत्वेन च शास्त्रोक्तिरित्यन्योन्याश्रयं भवेत् ॥
नैव तेषां सदाचारनिमित्ता शिष्टता मता ।
साक्षाद्विहितकारित्वाच्छिष्टत्वे सति तद्वचः ॥

प्रत्यक्षवेदविहितधर्मक्रियया हि लब्धशिष्टत्वव्यपदेशा यत्परम्पराप्राप्तमन्यदपि धर्मबुद्ध्या कुर्वन्ति तदपि स्मार्यत्वाद्धर्मरूपमेव ।

तद्यथा शुश्रुवान्विद्वाननूचानश्च वैदिकः ।
पुनस्तद्रक्षितो वेदे तेनैवाध्ययनादिषु ॥

तेनाहोरात्रपौर्वापर्यवदनादित्वाद्वेदतदर्थानामितरेतराश्रयत्वाप्रसङ्गः । स्मृतिरप्याचारवेदवचनं वोपलभ्याप्यनुष्ठानायैव प्रवृत्तेत्यदोषः ।

यत्तु हेत्वन्तरं दृष्ट्वा वेदमूलनिवारणम् ।
प्रत्यक्षवेदमूलेऽपि तद्दृष्टेस्तदकारणम् ॥

वेदेऽपि हि बहून्येव दृष्टार्थान्यदृष्टानि विधीयन्त इति न तावता वेदमूलत्वाभावः ।

यानि तु म्लेच्छादिसमानानि नियतानियतान्यन्तराण्यर्थसुखसाधनरूपविशेषाणि ज्यार्थानि मृष्टान्नपानमृदुशयनासनरमणीयगृहोद्यानालेख्यगीतनृत्यगन्धपुष्पादिकर्माणि प्रसिद्धानि तेषु नैव कस्यचिद्धर्मत्वाशङ्काऽस्तीति न तत्सामान्यतो दृष्टेनेतरनिराकृतिर्युक्ता, वेदाविरुद्धधर्मत्वाभ्युपगमात्सर्वेषामेव तत्प्रसङ्गः । किं तु—

देवब्राह्मणपूजादि यत्तेषामपि किंचन ।
तस्येष्टमेव धर्मत्वं शिष्टाचारमतं हि तत् ॥
लोके हि कश्चिदाचारः शिष्टत्वेन विशिष्यते ।
कश्चित्तु प्राणिसामान्यप्राप्तैस्तैरपि सङ्गतः ॥
तत्र यः कार्यरूपेण शिष्टानेवानुवर्तते ।
स एव केवलो धर्मो नेतरः प्राणिमात्रगः ॥

एतेन वैदिकानन्तधर्मधीसंस्कृतात्मनाम् ।
आत्मतुष्टेः प्रमाणत्वं प्रसिद्धं धर्मशुद्धये ॥

तथैव बहुकालाभ्यस्तवेदतदर्थज्ञानाहितसंस्काराणां वेदनियतमार्गानुसारिप्रतिभानां नोन्मार्गेण प्रतिभानं संभवतीत्याश्रित्योच्यते । "यद्वै किंचनानूचानोऽभ्यूहत्यार्षं तद्भवतीति" । वैदिकवासनाजनितत्वाद्वेद एव स भवति ।

तथा हि—

यथा रमायां लवणाकरेषु मेरौ यथा वोज्ज्वलरुक्मभूमौ ।
यज्जायते तन्मयमेव तत्स्यात्तथा भवेद्वेदविदात्मतुष्टिः ॥
एवं च विद्वद्वचनाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम् ।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ इति ।

"बहुदिनाभ्यस्तधर्मण्याधात्मनो हि न कथंचिदधर्मकरणरूपात्मतुष्टिरन्यत्र संभवतीति धर्मत्वेनाभ्यनुज्ञायते ।

यद्वा शिष्टात्मतुष्टीनां वचनादेव धर्मता ।
पुण्यकृद्ध्यानवत्तस्मादाचारेष्वपि सा तथा ॥
यथा वा वरदानादौ देवताराधनोद्भवे ।
यद्वक्ष्यसि स मन्त्रस्ते विषघ्न इति मन्त्रिते ॥
लोकः स्मरति तं मन्त्रं विषापहरणादिषु ।
यथा वा सर्पसिद्धान्ते नकुलो यां किलौषधिम् ॥
दन्तैर्गृह्णाति तामाहुः समस्तविषहारिणीम् ।
यथा वा यां भुवं कश्चिदध्यास्ते पुण्यकृत् ॥
तत्संपर्कपवित्रत्वात्सेष्यते पुण्यकारणम् ।
तथाऽऽचारात्मतुष्ट्यादि धर्म्यं धर्मधियात्मनाम् ॥
वेदोक्तमिति निश्चित्य ग्राह्यं धर्मबुभुत्सुभिः ॥ इति ।

यत्तु प्रजापतिरुषसमभ्यैत्स्वां दुहितरमहल्याया मैत्रेय्या इन्द्रो जार आसीदित्येवमादिदर्शनादितिहासदर्शनाच्च शिष्टाचारेषु धर्मातिक्रमं पश्यद्भिः शिष्टाचारप्रामाण्यं दुरध्यवसानमिति । तत्रोच्यते—

श्रुतिसामान्यमात्राद्धि न दोषोऽत्र भविष्यति ।
मनुष्यप्रतिषेधाद्वा तेजोबलवशेन वा ॥
यथा वा न विरुद्धत्वं तथा तद्भविष्यति ॥

प्रजापतिस्तावत्प्रजापालनाधिकारादादित्य एवोच्यते । स चारुणोदयवेलायामुषसमुद्यन्नभ्यैत्, सा तदागमनादेवोपजायत इति तद्दुहितृत्वेन व्यपदिश्यते तस्यां चारुणकिरणाख्यबीजनिक्षेपात्स्त्रीपुरुषयोगवदुपचारः । एवं समस्ततेजाः परमैश्वर्यनिमित्तेन्द्रशब्दवाच्यः सवितैवाहनि लीयमानतया रात्रेरहल्याशब्दवाच्यायाः क्षयात्मकजरणहेतुत्वाज्जीर्यत्यस्मादनेनैवोदितेनेत्यादित्य एवाहल्याजार इत्युच्यते न तु परस्त्रीव्यभिचारात् । नहुषेण पुनः परस्त्रीप्रार्थननिमित्तानन्तरकालाजगरत्वप्राप्त्यैवाऽऽत्मनो दुराचारत्वं प्रख्यापितम् । शच्याश्च पतिभक्तिनिमित्तपुण्यातिशयजनिततन्निराकरणावाप्तप्रभावलाभः ख्यात एव ।

वसिष्ठस्यापि यत्पुत्रशोकाद्व्यामोहचेष्टितम् ।
तस्याप्यन्यनिमित्तत्वान्नैव धर्मत्वमाशयः ॥

यो हि सदाचारः पुण्यबुद्ध्या क्रियते स धर्मादर्शत्वं प्रतिपद्येत यस्तु कामक्रोधलोभमोहशोकादिहेतुत्वेनोपलभ्यते स यथाविधिप्रतिषेधं वर्तिष्यते । तेन विश्वामित्रस्यापि यद्रागद्वेषपूर्वकमपि तपोबलारूढस्य चरितं सत्सर्वं बलवतः पथ्यमित्यनेन न्यायेन महान्ति च तपांसि कृत्वा तानि क्षयं नयत उत्तरकाले वा पापविशुद्धिं प्रायश्चित्तैः प्रतिकुर्वाणस्य जीर्यत्यपि । मन्दतपसा गजैरिव महाबल्काद्यादिभक्षणमात्मविनाशायैव स्यात् । द्वैपायनस्यापि, “ गुरुनियोगादपतिरपत्यलिप्सुर्देवराद्गुरुप्रेरितादृतुमतीयात् ” इत्येवमागमान्मातृवचनाच्च भ्रातृजायापुत्रजननं प्राक्कृतपश्चात्करिष्यमाणतपोबलेन नातिदुष्करम् । अन्योऽपि यस्तादृक्तपोबलो निर्वहेत्स कुर्यादेव । रामभीष्मयोस्तु स्नेहपितृभक्तिवशात् । विद्यमानधर्ममात्रार्थदारयोरेव साक्षाद्व्यवहितापत्यकृतपित्रानृण्ययोर्यागसिद्धिर्हिरण्मयसीताकरणं च लोकापवादभिया त्यक्तसीतागतानृशंस्याभावाशङ्कानिवृत्त्यर्थम् । भीष्मश्च ।

भ्रातृणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत् ॥

इत्येव विचित्रवीर्यक्षेत्रजपुत्रलब्धपित्रानृण्यत्वः केवलयज्ञार्थपत्नीसंबन्ध आसीदित्यपास्याऽनुक्तमपि गम्यते ।

यो वा पिण्डं पितुः पाणौ विज्ञातेऽपि न दत्तवान् ।
शास्त्रार्थातिक्रमाद्भीतो यत्नेतैकावयसौ कथम् ॥

धृतराष्ट्रोऽपि व्यासानुग्रहादाश्चर्यपर्वणि पुत्रदर्शनवत्क्रतुकालेऽपि दृष्टवानेव । शापानुग्रहसमर्था महर्षयः श्रूयन्ते । तथैव तद्वचनादसावन्धो जातो विज्ञायते तथा यज्ञानुमानवचनात्तानि काले दृष्टवानित्यर्थापत्त्या मुक्तानम् । यद्वा, “ यमन्येऽपूजामगति

करणदानेषु " इति दानार्थ एवायं यजिर्भविष्यति क्रतुफलसमानि च दानतपश्चरणादीन्यपि श्रूयन्ते तत्कारणात्क्रतुक्रियोपचारः ।

या चोक्ता पाण्डुपुत्राणामेकपत्नीविरुद्धता ।
साऽपि द्वैपायनेनैव व्युत्पाद्य प्रतिपादिता ॥
यौवनस्थैव कृष्णा हि वेदिमध्यात्समुत्थिता ।
सा च श्रीः श्रीश्च भूयोभिर्भुज्यमाना न दुष्यति ॥

अत एव चोक्तम्—

इदं च तत्राद्भुतरूपमुत्तमं
जगाद विप्रर्षिरतीतमानुषः ।
महानुभावा किल सा सुमध्यमा
बभूव कन्यैव गते गतेऽहनि ॥ इति ।

न हि मानुषीष्वेवमुपपद्यते । तेनातीतमानुषमित्युक्तम् । अत एव वासुदेवेन कर्ण उक्तः " षष्ठे च त्वामहनि द्रौपदी पर्युपस्यास्यति " इति । इतरथा हि कथं प्रमाणभूतः सन्नेवं वदेत् । अथ वा बह्व्य एव ताः सदृशरूपा द्रौपद्य एकत्वेनोपचरिता इति व्यवहारार्थपरया गम्यते ।

यद्वा नार्यर्जुनस्यैव केवलस्य भविष्यति ।
साधारणा प्रसिद्धिस्तु निश्छिद्रत्वाय दर्शिता ॥

यथा युधिष्ठिरोपदेशात्सभामध्यमानीयमाना सहसैव रजस्वलावेषं सपुत्रकस्य धृतराष्ट्रस्यायश उत्पादयितुमात्मानं प्रख्यापयितुं द्रौपदी कृतवती तथैव केवलार्जुनभार्याया एव सत्याः श्रीत्वं च जनेनाविदितं परस्परं संघातविशयं च भेदप्रयोगानवकाशार्थं दर्शयितुं साधारण्यप्रख्यापनमित्येवमादिविकल्पैः सुपरिहरत्वाद्यागलोभकृतव्यवहारस्य च विरोधेन धर्मस्येनापरिग्रहस्योक्तत्वादनुपालम्भः ।

तथा च द्रोणवधाङ्गभूतानृतवादे ' प्रायश्चित्तं कामकृतेऽप्येके ' इत्येवमन्तेऽप्यश्वमेधः प्रायश्चित्तत्वेन कृत एवेति न तस्य सदाचारत्वाभ्युपगमः । यत्तु वासुदेवार्जुनयोर्मद्यपानमातुलदुहितृपरिणयनं स्मृतिविरुद्धमुपन्यस्तं तत्राविकारसुरामात्रस्य त्रैवर्णिकानां प्रतिषेधः ।

सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।
तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ इति ।

मधुसीध्वोस्तु क्षत्रियवैश्ययोर्नैव प्रतिषेधः केवलब्राह्मणविषयत्वात् " मद्यं ब्राह्मणस्य " इति वचनात् ।

यदप्येतत्—

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिः ॥ इति ।

एतदपि ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारित्वनिमित्तत्वात्प्रवचनाश्रयणेन सूत्रवदत्योरेकार्थत्वात्प्रयुक्तब्राह्मणस्यैवामिति नियमाद्यस्यैव प्रवचनं स एव तच्छीलस्तद्धर्मस्तत्साधुकारी वा भवति तस्माद्ब्राह्मणा एव ब्रह्मवादिनः । तथा च मद्यसामान्यप्रतिषेधाद्गनिन्दार्थवादेऽभिहितम् ।

अकार्यमन्यत्कुर्याद्धि ब्राह्मणो मदमोहितः ॥ इति ।

तस्मादेतदुक्तं भवति यथैवैकात्रसुरा त्रयाणामप्यपेया तथा सर्वा ब्रह्मवादिभिरपेयेति। इतरथा यथैवैकेति च ब्रह्मवादिभिरिति चोभयमप्यनर्थकमेव स्यात् । श्लोकान्तरनिर्देशेनैव वर्णत्रयसबन्धलाभात् । तेनोभौ मध्वासवक्षीबावित्यविरुद्धम् । तथा चान्यार्थदर्शनमप्यनुज्ञानवचनम् । "यन्माल्यमासीत्तत्पश्चात्पर्याहत सुरा वै माल्यं ततो राजन्यमसजत तस्माज्ज्यायांश्च स्नुषा च श्वशुरश्च सुरां पीत्वा विलपन्तश्चाऽऽसते पाप्मा वै माल्यं तस्माद्ब्राह्मणः सुरां न पिबेत्पाप्मना न संसृज्या इति तदेतदेतत्क्षत्रियो ब्राह्मणं ब्रूयान्नैनं सुरा पीता हिनस्ति य एवं विद्वान्सुरां पिबति" इति । मधुसीधुविवक्षयैतत् । यत्तु मातुलदुहितृपरिणयनं तयोस्तन्मातृष्वस्रीयादिसंबन्धव्यवधानेऽपि भ्रात्रादिव्यवहारादविरुद्धम् । यद्यपि वासुदेवस्वसेति सुभद्रा ख्याता तथाऽप्युत्पत्तौ बलदेववासुदेवयोरेकानंशायाश्च निजत्वाख्यानान्मातृष्वस्रीया सुभद्रा तस्य मातृपितृष्वस्रीया दुहिता वेति परिणयनाभ्यनुज्ञानाद्विज्ञायते ।

वसुदेवाद्धजाता च कौन्तेयस्य विरुध्यते ।
न तु व्यवेतसंबन्धप्रभवे तद्विरुद्धता ॥

येन ह्यन्यत्रैवमुक्तम्—

मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ।
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ इति ।

स कथं सर्वलोकादर्शभूतः सन् विरुद्धाचारं प्रवर्तयिष्यति । एतेन रुक्मिणीपरिणयनं व्याख्यातम् । यत्त्वयतनानामाहिच्छत्रकमाधुरब्राह्मणीनां सुरापानादि दाक्षिणात्यानां मातुलदुहितृविवाहादि स्मृतिविरुद्धमुपन्यस्तम् । तत्र केचित्तावदाहुः । स्मृत्याचारयोरितरेतरनिरपेक्षवेदमूलत्वेन तुल्यबलत्वाद्विहितप्रतिषिद्धविकल्पानुष्ठानाश्रयणाददोष इति । तत्तु वक्ष्यमाणबलाबलविभागादयुक्तम् । अन्ये त्वेवमाहुः —

सर्वेषामेवमादीनां प्रतिदेशं व्यवस्थया।
आपस्तम्बेन संहृत्य दुष्टादुष्टत्वमाश्रितम्॥
येषां परम्पराप्राप्ताः पूर्वैरप्यनुष्ठिताः।
त एव तैर्न दुष्येयुराचारैर्नेतरे जनाः॥

तथा मनुनाऽप्युक्तम्—

येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति॥

येषां तु यः पित्रादिभिरेवार्यो नाऽऽचरितः स्मृत्यन्तरप्रतिषिद्धश्च ते तं परिहरन्त्येव। अपरिहरन्तो वा स्वजनादिभिः परिह्रियन्ते। ननु गौतमेनाऽऽम्नायविरुद्धानामाचाराणामप्रामाण्यमुक्तम्। आह—

यदि वेदविरोधः स्यादिष्येतैवाप्रमाणता।
स्मृतिराम्नायशब्देन न तु वेदवदुच्यते॥

न त्वेतदपि युक्तं स्मृतिग्रन्थेऽप्याम्नायशब्दप्रयोगात्। स्मार्तधर्माधिकारे हि शङ्खलिखिताभ्यामुक्तम् 'आम्नायः स्मृतिधारकः' इति। ग्रन्थकारगतायाः स्मृतेस्तत्कृतग्रन्थाम्नायः स्मृतिग्रन्थाध्यायिनां स्मृतिधारणार्थत्वेनोक्तः। ततश्च मन्वादिवाक्यप्रतिषिद्धाचाराणां प्रामाण्यमशक्यमभ्युपगन्तुम्। आपस्तम्बवचनं तु बौधायनेन स्मृतिविरुद्धदुष्टाचारोदाहरणान्येव प्रपञ्चता निराकृतम्। स्पष्टक्रमादिहेत्वन्तरदर्शनाच्च विरुद्धाचाराणामापस्तम्बवचनस्य वा श्रुतिमूलत्वोपपत्तिः। आह। येन वा ब्राह्मणीनां सुरापानं प्रतिषिद्धम्।

उच्यते—

तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्॥ इत्यनेन।
ननु पुंलिङ्गनिर्देशात्स्त्रीणां न प्रतिषिध्यते।
सुरापानमतो नात्र स्मृत्याचारविरुद्धता॥

उच्यते—

हननप्रतिषेधेऽपि भवेत्पुंस्त्वं विवक्षितम्।
तथा पुंस्त्ववदेकत्वविवक्षाऽपि प्रसज्यते॥
अहत्वा कंचिदेवैकं ततश्च स्यात्कृतार्थता।
एकेन च सुरापानेऽवर्जिते पूर्ववद्भवेत्॥
आह यत्तावदेकत्वविवक्षागतमुच्यते।
प्रत्येकल्पकिसंनन्धाज्जातेर्वा तत्र दुष्यति॥

एवैकस्या एव हि ब्राह्मणव्यक्तेर्यथाप्रसक्तवधपानयोः प्रतिषेधात् । विवक्ष्यमाणमपि तावदनूद्यमानत्वाद्ब्राह्मणक्रियाविशेषणं वा सम्भवति किमुत यदा जातिगतैकत्वानुवाद एवाय विज्ञायते । आह । हननप्रतिषेधे कर्मभूतस्य ब्राह्मणस्योद्दिश्यमानत्वात्सुरापाने च कर्तृत्वेनोपादीयमानत्वात्स्वर्गकामौदुम्बरीसमानार्थयजमानवत्तुल्यविवक्षाविवक्षयोरप्रसङ्गादुदाहरणवैषम्यम् । तथा हि—

> यो ब्राह्मण इति ब्रूते हननप्रतिषेधतः ।
> ब्राह्मणे प्रतिषेधे वा लिङ्गं नान्यद्विधीयते ॥

प्रतिषेधविधिपरो हि विधायकः शुद्धवधप्रतिषेधासम्भवाद्ब्राह्मणजातिमात्रविशिष्टवधप्रतिषेधं विधाय निवृत्तव्यापारो यदि लिङ्गमपरं ब्राह्मणे वधे प्रतिषेधं वा विदध्यात्तत प्रत्ययावृत्तिलक्षणवाक्यभेदप्रसङ्गः । येषां तु विधिप्रतिषेधौ सामान्यव्यतिरिक्तौ वेदवाक्यार्थौ तेषां प्रत्ययसम्बन्धानुगृहीतशक्तिरभावमात्राभिधानादभ्यधिकव्यापारो नञ्विध्यर्थमपि द्वेषाद्यर्थप्राप्तं पूर्वोक्तन्यायविवक्षितब्राह्मणविशिष्टहननाविशिष्टं चानूदितं प्रतिषिध्य चरितार्थो न लिङ्गमपरं ब्राह्मणवधविधिषु शक्नोत्यनावर्तमानः प्रतिषेद्धुमिति श्रूयमाणमपि लिङ्गं प्रतिषेधं प्रत्यनुपयुज्यमानत्वादविवक्षितं भवति । एषा ह्यत्र वचनव्यक्तिर्यत्, क्रोधादिवशेन ब्राह्मणं हन्याद्ब्राह्मणौ वा हन्तव्यस्तन्नेति । विध्येकत्वपक्षे पुनरीदृशी वाक्ययोजना यद् ब्राह्मणहननं तन्न कुर्यादिति यो वा ब्राह्मणस्तं न हन्यादिति ब्राह्मणविशिष्टहननप्रतिषेधाविधिः शुद्धोद्दिष्टब्राह्मणविषयवधप्रतिषेधविधिर्वेति ।

> सर्वथा ब्राह्मणोद्देशान्नेह मुच्यामहे वयम् ।
> न चोद्दिष्टस्य शक्येते लिङ्गसङ्ख्ये विवक्षितुम् ॥

ब्राह्मणः सुरां न पिबेत्, न पेया ब्राह्मणादिभिरिति निमित्तदेशकालफलसंस्कार्यानुपादेयपक्षव्यतिरेकादेकत्राऽऽख्यातप्रत्ययेनोपात्तगुणीभूतोपादीयमानसङ्ख्यापरिच्छेद्यत्वयोग्यसाधनाशविशेषणत्वेनोपादानादितरत्र च तृतीयाविभक्तिश्रुतिवचनं विवक्षितलिङ्गस्यैव प्रतिषेधकमिति दर्शयितव्यम् ।

> अतश्चाप्रतिषिद्धत्वान्नैव स्त्रीणां विरुध्यते ।
> सुरापानमहिच्छत्रब्राह्मण्यस्तेन कुर्वते ॥
> नैतत्त्वमिहाप्येतत्पुंस्त्वं नैव विवक्ष्यते ।
> ब्राह्मणस्यानुवाद्यत्वात्तद्वधप्रतिषेधवत् ॥
> नोपादेयत्वमेवैकं कारणत्वेन सम्मतम् ।
> विशेषणविवक्षाया कारणं हि महाद्विधि ॥

अनूद्यमानः सर्वो हि यथाप्राप्तमनूद्यते ।
तत्रानाकाङ्क्षितं नान्याद्विधेर्देश्यो विधीयते ॥

यदि हि ब्राह्मणः सुरां पिबेदित्ययमवान्तरवाक्यार्थः प्राक्प्रतिषेधसंबन्धाद्विधिबुद्धि-मवस्थापयेत्ततो गुणस्योपादेयत्वविधिसमवायान्न ब्राह्मणपदे किंचिदविवक्षितं नाम स्यात् ।

यतस्तु रागमोहादेः सुरापानं प्रसज्यते ।
ब्राह्मणादेरतन्तनिमित्त कश्चिद्विधिसंभवः ॥
प्रतिषेधोपसंहारिमहावाक्यतिरस्कृता ।
नावान्तरविधेः शक्तिः प्रादुरस्ति कथंचन ॥

तेनेहापि यत्सुरां ब्राह्मणः पिबेत्तन्नेति वा वचनं व्यज्यते यो ब्राह्मणः स न सुरां पिबेदिति वा सुराविशिष्टपानप्रतिषेधेन प्रतिषेधविधिना वा प्रत्यवायत्पावृत्त्या ब्राह्मणोऽनुगृह्यत इति नास्य पानं प्रतिषेधं वा प्रतिविधेयत्वोपपत्तिः ।

लोके चैतद्यथाप्राप्तं पानं स्त्रीपुंसकर्तृकम् ।
प्रतिषेधपरे वाक्ये तदवश्यमनूद्यते ॥

न च यो ब्राह्मणः पिबेदित्यनूदितं स च पुमानिति विधिव्यापाराद्विना लिङ्गविवक्षाऽवकल्पते ।

न चास्य लिङ्गसंबन्धः केवलः सन्विधीयते ।
न पानप्रतिषेधाद्धि विधिरन्यत्र गच्छति ॥

ततश्चोभयत्राप्यविवक्षितलिङ्गसंख्यत्वं सिद्धम् । नन्वेवं सति ब्राह्मणस्त्रीवधेऽपि पुंब्राह्मणवधवद्ब्रह्महत्याऽस्तीति यदात्रेय्यामेव केवलायां भ्रूणहत्याप्रायश्चित्तविधानं तन्नोपपद्यते ।

उच्यते—

ब्राह्मणस्त्रीवधे को वा ब्रह्महत्यां निषेधति ।
प्रायश्चित्तान्तरे तस्याः स्त्रीत्वमात्रनिबन्धनम् ॥

न च प्रायश्चित्तान्तरेण निमित्तस्य ब्रह्महत्यात्वमपनीयते पुंवधेऽपि लघुतरप्रायश्चित्तविधिदर्शनेन ब्रह्महत्यादोषाभावप्रसङ्गात्तस्मान्न वाचनिकप्रायश्चित्तान्तरेण ब्राह्मणीवधप्रतिषेध एव नास्तीत्याशङ्कितव्यम् । सुरापाने पुनः प्रायश्चित्तविशेषोऽपि न कश्चिदाम्नात इति दूरादपाकृतत्वादस्त्येवास्य स्मृत्या सह विरोधः । याऽपि चाऽऽपस्तम्बस्मृतिवचनात्तुल्यबलताशङ्का भवेत्साऽपि "तस्माद्ब्राह्मणः सुरां न पिबति" प्रत्यक्षश्रुतिविधिना निराकृतेति नैवंविधाचारप्रामाण्यमाशङ्कितव्यम् ।

अथवा सदाचारप्रमाणत्वप्रतिपादनार्थं सूत्रद्वयेनाप्येतदेकमधिकरणं व्याख्यातव्यम्। इह यावन्ति कृष्णमृगसंचरणोपलक्षितार्यावर्तनिवासिचातुर्वर्ण्याचरणानि तान्युदाहृत्य चिन्त्यते—

> धर्मबुद्ध्या यदार्याणां चरित्रमुपलभ्यते।
> किं तथैव प्रमाणं तदथ वा निष्प्रमाणकम्॥ इति।

कुतः संशयः।

उच्यते—

> स्मृतिवत्कर्तृसामान्यात्प्रमाणत्वेन गम्यते।
> अनिबन्धनतायास्तु भवेदप्यप्रमाणकम्॥

ननु च स्मृतिकारैरेवैतत्प्रामाण्यमभ्युपगतं "तद्विदां च स्मृतिशीले" "आचारश्चैव साधूनाम्" "यस्मिन्देशे य आचारः स सदाचार उच्यते"। अतश्च तत्प्रामाण्यादेव सिद्धम्। न। मूलाभावाहेतुदर्शनातिरेकात्। शाखान्तरगतवेदवाक्यदर्शनमूलानि हि स्मरणोपनिबन्धनानि प्रमाणत्वेनाधिगतानि। ननु सदाचारदर्शनात्तन्मूलमात्रप्रवृत्तस्मरणानां मूलान्तरानुमानसंभवः।

> यथैव च वयं तेषां द्रष्टारः केवलं तथा।
> स्मृतिकारास्ततो नैषां गम्यते मूलदर्शनम्॥

यदि हि तैर्मूलान्यद्रक्ष्यन्त ततो यथैवान्यानि स्मरणानि निबद्धानि तथैवैतान्यपि निबद्धान्येवाभविष्यन्यतस्तु स्वयमुपलब्धानुरूपमनिबध्य परप्रत्ययेनैव सदाचाराः प्रमाणमित्याहुः। अतो न दृष्टमूलत्वेनाध्यवसातुं शक्यमिति विचार्यते। तत्र पूर्वाधिकरणद्वयबलेन प्रामाण्यं प्रतिज्ञायते कर्तृसामान्याद्विविस्मृतिविरोधरहितत्वाच्च।

> न हि केचित्सदाचारा श्रौतस्मार्तविरोधिनः।
> अनन्तत्तुल्यकारित्वात्प्रामाण्येनावधारिताः॥
> स्मृतिकाराभ्यनुज्ञानं महदन्यच्च कारणम्।
> तेषामज्ञातमूलानां न ह्यनुज्ञोपपद्यते॥ इति।

तदपाकुर्वन्नाह—

> न शास्त्रपरिमाणत्वाद्धर्माधर्मस्थितेरमी।
> शिष्टाचाराः प्रमाणत्वं लभन्ते शास्त्रवर्जिताः॥

शास्त्रपरिमेयत्वं तावत्परिमाणशब्दवाच्यं धर्माधर्मयोरवस्थितं परिमितानि च शास्त्राणि वेदोपवेदादीनि न च तेषां मध्ये सदाचारशास्त्रं किंचिदस्ति। न च सदाचारः स्वयमेव शास्त्रं नापि तद्दर्शनमनुमानं वाऽत्यन्तपरायत्तत्वात्प्रमेयत्वाच्च। स्मृतेस्त्वेनद्विषयाया निर्मूलत्वमुक्तमेव।

किं च मूलं भवेदेकमनेकमिति चिन्तिते ।
नैव द्विविधमित्येतदनुमातुं हि शक्यते ॥

न तावदेशजातिकुलभेदभिन्नानामपरिमितस्वरूपाणामेकश्रुतिमूलत्वम् ।

न हीदृशी श्रुतिर्येतान् सर्वाचारान् महीष्यति ।
शब्दाभिधेययोस्तेषां व्यक्त्याकृत्योरसंभवात् ॥

यावदाचारं हि वेदवाक्यानि कल्पयतां वेद एवैकः कल्पयितव्यः । एकस्य तु वाक्यस्य नैव कस्यचिदपरिमिताचारविधायित्वमवकल्पते यत आचाराः प्रवर्तेरन् । न च धर्मसूत्रकारैस्तदेव दृष्ट्वाऽऽचारप्रामाण्यमुपनिबद्धम् । शेषधर्मस्मृतिवाक्यतुल्यनिबन्धनप्रसङ्गात् । न चाऽऽचारदर्शनोत्तरकालप्रवृत्ता स्मृतिस्तेषां मूलं भवति । मूलमूलिभावविपर्ययप्रसङ्गात् ।

अतः परिमितं शास्त्रमनुमातुं यतोऽर्हति ।
नाऽऽचाराणां च तन्मूलं बहूनामित्यमूलता ॥
न च स्मृतिसरूपाऽपि श्रुतिरत्रानुमीयते ।
आचाराणामतत्पूर्वप्रसङ्गात्तद्विपर्ययात् ॥

शिष्टाचारः प्रमाणमिति हि श्रुतादनुमीयमानाद्यमाचारः प्रथमं सिद्धो भवेत्तत्पूर्विका श्रुतिः ।

न त्वाचारस्य [illegible] मूलमिति निर्मूलता पुनः ।

शास्त्रपरिमाणत्वादिति वा परिमिते ह्यर्थे शास्त्रं प्रवर्तेत । अपरिमितत्वादाचाराणामुच्छास्त्रत्वमिति । परिमितार्थविषयत्वाद्वा शास्त्रस्य, ‘ अप्राप्ते शास्त्रमर्थवत् ’ इति ।

दृश्यमानान्यहेतुत्वान्नात्र शास्त्रप्रमाणता ।
तस्मादर्थसुखाङ्गत्वान्नाऽऽचारेष्वस्ति धर्मता ॥
[illegible]
परिज्ञाणा यथा चार्थसुखाङ्गत्वं तथाऽस्त्विह ॥
तस्माच्छ्रुतिस्मृती एव प्रमाणे धर्मगोचरे ।
शिष्टाचारास्मशुद्धीनां गोष्ठीहास्यादितुल्यता ॥

यद्वा सूत्रत्रयेणाप्येतदेवाधिकरणं व्याख्यातव्यम् । इहाऽऽर्यावर्तनिवासिशिष्टाचारानेवोदाहृत्य पूर्ववत्प्रामाण्याप्रामाण्यसंदेहे शिष्टाकोपेऽविरुद्धमिति सिद्धान्तस्तावदुपक्रम्यते । तथा हि—

[४] तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥ ८ ॥ पू०

'यवमयश्चरुः, वाराही उपानहौ, वैतसे कटे प्राजापत्यान् संचिनोति' इति यववराहवेतसशब्दान् समामनन्ति। तत्र केचिद्दीर्घशूकेषु यवशब्दं प्रयुञ्जते केचित् प्रियङ्गुषु। वराहशब्दं केचित्सूकरे केचित्कृष्णशकुनौ। वेतसशब्दं केचिद्वञ्जुलके केचिज्जम्ब्वाम्। तत्रोभयथा पदार्थावगमाद्विकल्पः ॥ ८ ॥

---

शिष्टं यावच्छ्रुतिस्मृत्योस्तेन यन्न विरुध्यते ।
तच्छिष्टाचरणं धर्मे प्रमाणत्वेन गम्यते ॥
यदि शिष्टस्य कोपः स्याद्विरुध्येत प्रमाणता ।
तदकोपात्तु नाऽऽचारप्रमाणत्वं विरुध्यते ॥
( इति शिष्टाकोपाधिकरणम् ॥ ३ ॥ )

---

तेष्वदर्शनाद्विरोधस्येत्येवमुपक्रमं वा सूत्रम्। शब्दार्थविषयप्रयोगशिष्टाचारविप्रतिपत्तौ संदेहः।

एकशब्दमनेकार्थं शिष्टैराचर्यते यदा ।
विगानेन तदा तत्र कोऽर्थः स्यात्पारमार्थिकः ॥

यववराहवेतसशब्दाः प्रियङ्गुवायसजम्बूष्वपि किल क्वापि देशान्तरे प्रयुज्यन्ते।

तेन तद्वचनत्वे हि संदेह उपजायते ।
अनिरूपिततत्त्वाना यावद्दृष्टानुसारिणाम् ॥
तत्राऽऽह नैव संदेहः कर्तव्योऽत्र मनागपि ।
प्रयोगं प्रति तुल्यत्वात्सर्वलोकप्रयोगिणाम् ॥
यत्र देशे हि यः शब्दो यस्मिन्नर्थे प्रयुज्यते ।
शक्तिस्तद्गोचरा तस्य वाचिकाख्या प्रमीयते ॥
तस्याश्च सर्वगामित्वं तन्न्यायत्वात्प्रमीयते ।
नैकेषामेव सा ह्यस्ति केषांचिद्वा न विद्यते ॥
ज्ञाताज्ञातविभागस्तु ज्ञातृभेदेऽवकल्पते ।
तस्मादेरपि न ज्ञाता यच्छब्दार्थस्य वाच्यता ॥
तैरप्यभ्युपगन्तव्या स्वप्रसिद्धिसमा हि सा ॥
न चाप्तत्वबहुत्वाभ्यां प्रयोक्तॄणां विशिष्यते ।
वाच्यवाचकभावोऽयमक्षपादादिशब्दवत् ॥

## शास्त्रस्था वा तन्निमित्तत्वात् ॥ ९ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । यवशब्दो यदि दीर्घशूकेषु, सादृश्यात् प्रियंगुषु भविष्यति । यदि प्रियंगुषु, सादृश्याद् यवेषु । किं सादृश्यम् । पूर्वसस्ये क्षीणे भवन्ति दीर्घशूकाः प्रियंगवश्चेतत्तयोः सादृश्यम् । कः पुनरत्र निश्चयः । यः शास्त्रस्थानां स शब्दार्थः । के शास्त्रस्थाः । शिष्टाः । तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च ।

---

विभीतकेऽक्षशब्दो हि यद्यप्यन्यैः प्रयुज्यते ।
तथाऽपि वाचकस्तस्य ज्ञायते शकटाक्षवत् ॥

तथा चोक्तं शवतिर्गतिकर्मा कम्बोजेष्वेव दृष्टो विकारमस्यार्याः प्रयुञ्जते शवमिति मृतशरीराभिधानादित्यादि । बहव एव हि धातवो नामशब्दाश्च प्रतिदेशमर्थभेदेषु व्यवस्थिता दृश्यन्ते तस्मात्समेयमभिधाने विप्रतिपत्तिः स्यात् । एवं च विकृतिषु केषांचिदर्थानां साधारणशब्दवाच्यत्वात्प्रकृताविवाविकृतप्रयोगादार्षे चोदकोऽनुग्रहीष्यते । 'तेष्वदर्शनाद्विरोधस्य' इत्यत्रैव चैतद्व्याख्येयम् । इतरत्र विप्रतिपत्त्यविरोधयोरघटमानत्वात् । तस्मादाचारविप्रतिपत्तेः समत्वाद्विकल्प इति प्राप्तेऽभिधीयते ॥ ८ ॥

शास्त्रस्था तन्निमित्तत्वात्प्रतिपत्तिर्गरीयसी ।
लौकिकी प्रतिपत्तिर्हि गौणत्वेनापि नीयते ॥
नानाविप्रतिपत्तौ हि न लोकस्येह सत्यता ।
या शास्त्रानुगुणा सैव प्रामाण्येनावधार्यते ॥
लौकिकत्वे समानेऽपि शास्त्रेणाभ्यधिका हि सा ।
शास्त्रस्थाः पुरुषा ये वा प्रतिपत्तिस्तदाश्रया ॥
प्रमाणत्वेन मन्तव्या सप्रत्ययनरा हि ते ।
शास्त्रार्थेष्वभियुक्तानां पुरुषाणां हि सर्वदा ॥
स्तोकेनाप्यन्यथात्वेन शास्त्रार्थो निष्फलो भवेत् ।
लौकिकस्त्वन्यथात्वेऽपि नार्थोऽतीव विहन्यते ॥
रसवीर्यविपाकानां भेदाद्वैद्यैर्यवादयः ।
निर्धार्याः स्वार्थतत्त्वेन धर्मसिद्ध्यैव याज्ञिकैः ॥
तस्माद्ये याज्ञिकैर्येषां वैद्यैर्वाऽर्था निरूपिताः ।
तेषां त एव शब्दानामर्था मुख्या हि नेतरे ॥
अनवस्थितशास्त्रार्थसंबन्धः सति संभवे ।

तेन शिष्टा निमित्तं श्रुतिस्मृत्यवधारणे । ते ह्येवं समामनन्ति यवमयेषु करम्भपात्रेषु विहितेषु वाक्यशेषे। यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्तीति दीर्घशूकान् यवान् दर्शयति वेदः । वेदे दर्शनाविच्छिन्नपारम्पर्यो दीर्घशूकेषु यवशब्द इति गम्यते । तस्मात् प्रियंगुषु गौणः । तस्माद् दीर्घशूकाना पुरोडाशः कर्तव्यः । तस्माद्वराहं गावोऽनुधावन्तीति सूकरे वराहशब्दं दर्शयति, अप्सुजो वेतस इति वञ्जुले वेतसशब्दम् । सूकर हि गावोऽनुधावन्ति । वञ्जुलोऽप्सु जायते । जम्बूवृक्षः स्थले गिरिनदीषु वा ॥ ९

---

विकल्पश्चाप्यदृष्टोपत्वान्न कथचन युज्यते ॥
अविप्लुतश्च शब्दार्थो यो वेदेषूपलभ्यते ।
तत्रत्यनिर्णयात्तस्माल्लोके भवति निर्णय ॥

यवमतीभिरद्भिरौदुम्बर्या प्रोक्षणे विधीयमाने वाक्यशेषोऽस्य ‘यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति’ इति बह्वीषु शाखासु श्रूयते भाष्यकारेण वारुणप्राघासिकयवमयकरम्भपात्रवाक्यशेषत्वेनोपलक्षो य स मन्दप्रयोजनत्वात्तया नामास्तु ।

फाल्गुनेऽन्यौषधीना तु जायते पत्रशातनम् ।
मोदमानास्तु तिष्ठन्ति यवा कणिशशालिन ॥
प्रियगव शरत्पकास्तावद्गच्छन्ति हि क्षयम् ।
यदा वर्षासु मोदन्ते सम्यग्जाता प्रियगव ॥
तदा नान्यौषधिम्लानि सर्वासामेव मोदनात् ।
एव वराहवेतसशब्दा अपि शास्त्रस्थप्रयोगादेव निश्चीयन्ते ।

( भाष्यकारोक्तोदाहरणाक्षेप )

ननु चैतान्युदाहरणानि लोकप्रसिद्धेरेव व्यवस्थितत्वादयुक्तानि ।
तथा हि ।

नैवोच्यन्ते यवैर्देशे यवशब्दात्प्रियगव ।
जम्बू न वेतस प्राहुर्वराह नापि वायसम् ॥
अ यारोप्य विचारेण किं मुधा क्रियते मन ।
सन्दिग्धेषु च सर्वेषु वाक्यशेषेण निर्णयम् ॥
वक्ष्यत्येव न तेनापि पृथक्कार्या विचारणा ।

यद्यपि तत्राभिधेयमन्देहमनुदाहृत्योपादानसन्देहनिर्णयोपायव्याख्यान करिष्यति । याव-

द्वाक्यशेषस्यैव स निर्णयो नान्यत्र। अयं त्वविशेषनिर्णय एकत्र च कृतः सर्वत्र च कृत एव भविष्यतीत्येवमपुनरुक्तत्वमापद्यते ।

तथाऽपि न्यायतुल्यत्वाद्यथा कृतपरिग्रहः।
वाक्यशेषात्तथैव स्यान्म्लेच्छार्थविनिर्णयः ॥

तत्सिद्धिसूत्रे च सारूप्यादीनां गौणवृत्तिनिमित्तानामनुक्रमणाद्वेतसशब्दानन्त्यप्रत्ययसिद्धिरशास्त्रार्थत्वेऽपि विज्ञायत एवेति नेहोदाहरणेन कार्यम्।

( आर्यम्लेच्छप्रयोगविप्रतिपत्तिव्यवस्थाचिन्तनम्। )

तस्मादन्यदुदाहृत्य विचार्यमिदमीदृशम्।
यत्र विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगता ॥
तत्र किं तुल्यता युक्ता किमेकस्य बलीयसी।
समा विप्रतिपत्तिः स्याद्दृष्टार्थव्यवहारिणाम् ॥
आर्यास्तावद्विशिष्येरन्नदृष्टार्थेषु कर्मसु।
दृष्टार्थेषु तु तुल्यत्वमार्यम्लेच्छप्रयोगिणाम् ॥

सर्वो हि शब्दोऽर्थप्रत्यायनार्थं प्रयुज्यते। अर्थश्च संव्यवहारप्रसिद्ध्यर्थमभिधीयते।

तत्र यस्य विशिष्टस्य म्लेच्छैरर्थान्तराभिधा।
तत्रापि तस्य सामर्थ्यमनाद्येव प्रतीयते ॥
यथैव ह्यार्यगम्येऽर्थे संबन्धानादिता मतिः।
म्लेच्छगम्ये तथैव स्यादविशिष्टं हि कारणम् ॥
न प्रयोगाविविक्तस्य म्लेच्छेष्वपि हि दृश्यते।
अनाद्योरर्थशब्दयोश्च विशेषो गम्यतां कथम् ॥
यथा च म्लेच्छदेशेऽपि धूमोऽग्नेरवबोधकः।
एवं स्वार्थे प्रयोगादिष्टः शब्दोऽपि वाचकः ॥
तस्मात्पील्वादिशब्दानां वृक्षहस्त्यादिबोधने।
समा विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगतः ॥

इति प्राप्तेऽभिधीयते । शास्त्रस्था वेति पूर्ववदेव सकलसूत्रव्याख्या बोद्धव्या।
किं च।

यथा [illegible] ।
[illegible] म्लेच्छभाषिते ॥

शब्दार्थसंबन्धेऽपि [illegible] अर्थनिर्णया भवन्ति ते शास्त्रसंदेह-

विप्लुतार्थक्रियानिमित्तपुण्यार्थिभिः शक्यन्ते साध्वसाधुकार्षापणमध्यादिवत्परीक्षितुमिति वेदितुम् । अभियुक्तानभियुक्तज्ञानयोश्चाभियुक्तज्ञानं बलवदितरस्य मूलभावापवादत्वात् ।

अतः शास्त्राभियुक्तत्वादार्यावर्तनिवासिनाम् ।
या मतिः सैव धर्माङ्गशब्दार्थत्वप्रमा मता ॥

एतेनाऽऽर्यावर्तनिवासिमध्येऽपि—

अभियुक्ततरा ये ये बहुशास्त्रार्थवेदिनः ।
ते ते यत्र प्रयुञ्जीरन् स सोऽर्थस्तत्त्वतो भवेत् ॥

( स्मृत्याचारविरोधे बलाबलविचिन्तनम् । )

स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये ।
समा विप्रतिपत्तिः स्यान्मूलसाम्याद्द्वयोरपि ॥
यथैव श्रुतिमूलत्वात्स्मरणानां प्रमाणता ।
आचाराणां तथैवेति न विशेषो बलाबले ॥
यद्वाऽऽचारबलीयस्त्वं फलस्थत्वात्प्रतीयते ।
फलाद्वियुज्यमानं हि प्रमाणं दुर्बलं भवेत् ॥
श्रुतिराचारमूला या फलस्था सोपलभ्यते ।
यावद्धि स्मरणं दृष्ट्वा श्रुतिरन्याऽनुमास्यते ॥
तावल्लब्धात्मकं पूर्वमाचारः प्रतितिष्ठति ।
प्रतिष्ठितस्य बाधश्च कीदृशः परिकल्प्यताम् ॥
तेनाऽऽचारबलीयस्त्वं स्मरन्त्येवेह युज्यते ।
स्मृतीनां वा बलीयस्त्वं शास्त्रस्था चेति वर्ण्यते ॥
उभयोः श्रुतिमूलत्वं न स्मृत्याचारयोः समम् ।
सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना ॥
तथा श्रुत्यनुमानं हि निर्विघ्नमुपजायते ।
आचारात्तु स्मृतिं ज्ञात्वा श्रुतिर्विज्ञायते ततः ॥
तेन द्व्यन्तरितं तस्य प्रामाण्यं विप्रकृष्यते ।
न ह्येवं श्रुतिः काचिदाचाराणां प्रवर्तिका ॥
भिन्नाभिर्विप्रकीर्णत्वादाम्नानाभिः प्रवर्तनम् ।
नैकप्रघट्टकेनैव ह्याचाराणां विधिर्स्मिति ॥
क्वचित्प्रकरणे कश्चित् कथंचिदुपलभ्यते ।

तद्यथाऽग्निप्रकरणे 'यत्सप्तदशवतीमुपदधात्यन्नमेवोभयतो दधाति तस्माद्भार्यां हस्ताभ्यां परिगृह्य पुरुषोऽन्नमत्ति' इति। सत्यपि हेतुवन्निगदत्वे प्रसिद्धिरहिते हेत्वसंभवात्। विधायिष्यते तु वेदे वचनेनेत्यनेन न्यायेन विध्यनुमानम्। न चैतन्नियोगतोऽर्थतः प्राप्तं येन 'तस्मात्प्रजा दश मासांन्गर्भं धृत्वा एकादशमनु प्रजायन्ते तस्माद्वृधतर्यः प्रजा' इतिवत् स्वभावप्राप्तत्वेनार्थप्राप्तत्वेन वा 'तस्मादुत्तरे वयसि पुत्रान्पित्तोपजीवति' इतिवदनूद्येतेत्यतो न्यायात्पुरुषधर्मविधिः। एवम् 'अन्नमेव तद्दक्षिणतो दधाति तस्माद्दक्षिणेन हस्तेन पुरुषोऽन्नमत्ति' इति। तथा दीक्षितो नयनं दक्षिणं प्रथममङ्क्ते सव्यं हि मनुष्याः पूर्वमञ्जते विधृत्यै' इति। तथा यूपैकादशिन्या 'द्वे द्वे रशने यूपमृच्छतः तस्मात्स्त्रियः पुंसोऽतिरिक्तास्तस्मादेको बह्वीर्जाया विन्दते नैका बहून् पतीन्' इति। तथा दर्शपूर्णमासप्रकरणेऽग्नीषोमीयविधिसंबन्धवचनेन त्वाष्ट्रवधनिमित्तेन्द्रगतब्रह्महत्यातुरीयविभागप्रतिग्रहप्रस्तावागतरजस्वलाव्रतानां भूमिशयनाञ्जनामांसभक्षणानभ्यञ्जनाञ्जनाविलेखनाकर्तनादन्तधावनानखच्छेदनारज्जुसंसर्जनादीनां त्रिरात्रविषयाणां प्रकरणातिरिक्तस्त्रीधर्मत्वावधारणम्।

एवं च विप्रकीर्णानामशक्यैकत्र संहतिः।
स्मृतिमेव दृष्ट्वा मुक्त्वा तस्मादस्त्यन्तरा स्मृतिः॥
तेनाऽऽचारः स्मृतिं यावदनुमातुं प्रवर्तते।
स्मृतिर्लिङ्गश्रुतिस्तावद्धर्ममेवावधारयेत्॥

तस्मादाचारेभ्यः स्मृतिर्बलीयसी सन्निबन्धनेति।

( लोकवाक्यवेदयोर्विरोधे बलाबलचिन्तनम्। )

त्रिवृच्चर्वेश्ववालादौ लोकेऽन्योऽर्थः प्रतीयते।
वेदे तदभियुक्तैश्च तस्मादन्यो विलक्षणः॥
तत्र किं तुल्यरूपत्वात्पदार्थे लोकवेदयोः।
तथा विप्रतिपत्तिः स्यादथ वैका बलीयसी॥
लोके तावत्त्रिवृच्छब्दस्त्रिगुणत्वस्य वाचकः।
त्रिवृद्रज्जुस्त्रिवृद्वन्धिर्वेदे तु नवके स्थितः॥

त्रिवृद्बहिष्पवमानमित्युक्त्वा तृचत्रयमनुक्रान्तमिति स्तोत्रीयैर्नवकवचन एव त्रिवृच्छब्दो विज्ञायते।

तथाऽयं चरुशब्दोऽपि लोके स्थालीनिबन्धनः।
याज्ञिकानां च वेदे च प्रसिद्धस्त्वोदनं प्रति॥

अनवस्थावितान्तरूप्यपक्वौदनवचनो हि याज्ञिकाना चरुशब्द प्रसिद्धस्तथा वेदेऽपि 'आदित्य प्रायणीय पयसि चरु' इति विहिते पश्चादुक्तमदितिमोदनेनेतिवचनाचोदन वचनत्व ज्ञातम्। एवमाश्ववाल प्रस्तर इत्यश्वजातीयवालमय प्रस्तरो लोकप्रसिद्धचा विज्ञायते। वैदिकवाक्यशेषात्तु काशेष्वश्ववालप्रसिद्धि। एव हि श्रूयते "यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत्सोऽपः प्राविशत्। स वालधौ गृहीतः स वालान्मुक्त्वा विवेश ह। ते वालाः काशता प्राप्ताः" कार्योऽत्र प्रस्तरस्तु ते।

ऐक्षव्यौ विधृती ये च ते इक्ष्ववयवात्मिके।
लोके सिद्धे तथा वेदे काशानामेव मूलके॥
एवमादिषु सर्वेषु प्रतिपत्तिविपर्यये।
प्रतिपत्ते समानत्वाद्विकल्पो हि प्रसज्यते॥

ननु च लोकप्रसिद्धेर्धर्मे प्रत्यनङ्गत्वाद्वेदप्रसिद्धिरेव ज्यायसी॥

नैतदेव पदार्थेषु न हि वेदो विशिष्यते।
अदृष्टहेतुवाक्यार्थे लोकात्स ह्यतिरिच्यते॥
तस्मादुभयत्रापि त्वेषा प्रतिपत्ति समा भवेत्।
यदि वा पूर्वभावित्वाल्लौकिक्येव बलीयसी॥

वेदनिरपेक्षा हि लोकप्रसिद्धिरात्मान लभते वैदिकी पुनर्लोकप्रसिद्धपदान्तरसामानाधिकरण्येन सिध्येत्।

तत्र लोकाविरुद्धा या वैदिकी सैव गृह्यते।
लोकसिद्धिं व्यतिक्रम्य साऽऽत्मान नैव विन्दति॥

'तेष्वदर्शनाद्विरोधस्य' इति च तेषु लौकिकेषु पदार्थेष्वदर्शनाद्विरोधस्यार्थवादाना चान्यपरत्वेन गुणवादप्रायत्वात्। आदित्ययूपयजमानप्रस्तरस्वर्गाहवनीयादिवचनवत्कथमपि प्ररोचनादिपरत्वात् सत्तासंज्ञिसंबन्धकरणव्युत्पादनव्यापाररहितत्वाच्च न पदार्थप्रतिपत्त्यङ्गत्वम व्यवसीयते तदाश्रयणे च विधिविरोधप्रसङ्गात्तेष्वेव वा दर्शनाद्विरोधस्येत्यभिप्राय। तथा शास्त्रस्थमन्वादिप्रसिद्धिरप्यस्मत्पक्षानुगुणैव। यथाऽऽह—

कार्पासमुपवीत स्याद्विप्रस्योर्ध्ववृत त्रिवृत्।
त्रिवृता ग्रन्थिनैकेनेति॥

१ 'शणसूत्रमयं राज्ञो वैश्यस्याऽऽविकमेव च' इत्युत्तरार्धम्। मनु० २ अ० श्लो० ४४।
२ मुञ्जालाभे तु कर्तव्या कुशाश्मन्तकवल्वजैः। त्रिवृता ग्रन्थिनैकेन त्रिभि पञ्चभिरेव वा मनु० अ० २ श्लो० ४३।

तस्मात्समाऽपि तावद्भवत्विति प्राप्तेऽभिधीयते—

> शास्त्रस्था प्रतिपत्तिर्या सैवात्र ज्यायसी भवेत् ।
> धर्मस्य तन्निमित्तत्वात्तत्साधनफलात्मनः ॥
> अर्थवादकृताऽप्यर्थप्रतिपत्तिर्बलीयसी ।
> तद्वाक्यत्वादृते नान्यत्तस्या ह्यस्ति प्रयोजनम् ॥
> गौणो वा यदि वा मुख्यो वेदेनाऽऽश्रीयते हि यः ।
> स धर्मसाधनत्वेन पदार्थोऽध्यवसीयते ॥
> त्रिवृच्छब्दः प्रयुक्तो यस्तोत्रीयानवकं प्रति ।
> यस्त शास्त्रस्तोऽन्यत्र नेष्टु जन्मशतैरपि ॥

तेन यत्र त्रिवृदग्निष्टोम इति श्रूयते तत्र तेनैवार्थेन भवितव्यम् । एवं स्तोमशब्दो यद्यपि ब्राह्मणस्तोम इत्यादिषु समुदायमात्रवचनत्वेन प्रसिद्धस्तथाऽपि 'त्रिवृदेव स्तोमो भवति पञ्चदश स्तोमो भवति' इति वेदे श्रवणात् स्तुतेश्च मानं स्तोम इति याज्ञिकस्मरणात्तथा स्तोमे डविधिः पञ्चदशाद्यर्थ इति व्याकरणशास्त्रप्रसिद्धेरवश्यमेव त्रिवृदादिषु लोकप्रसिद्धिरतिक्रमणीया । यत्तु मनुवचनं तदुभयाश्रयत्वात् समत्वेनापि युज्यते । यद्वा तत्रापि नवतन्तुकमेव त्रिवृच्छब्दात्प्रत्येष्यते तथा रशनात्रिवृत्त्वमपीति । यद्वा यथैवाय नवके दृष्टस्तथाऽयं स्तोत्रीयागतेऽपीति यत्रैव तत्समवस्तत्रैव तत्प्रसिद्ध्यनुपाती भवति । यत्र [illegible] सङ्ख्येयान्तरविषयत्वं तत्र वैदिकोऽर्थो गौणो गृह्यतां लौकिको वा मुख्य इति तादृशे विषये मुख्यार्थत्वाल्लौकिकप्रसिद्धिरेव ग्रहीतव्येत्युत्तरसूत्रे वक्ष्याम । "चोदितं तु प्रतीयेताविरोधात्"[1] इति तथा चरुशब्दोऽप्यन्यान्यानेकार्थाभिधानप्रतिबद्धशक्तित्वादेकत्र नियम्यमानो याज्ञिकवेदप्रसिद्धिस्थापनोऽवचनविषय एव भवति । आश्ववालेसवीशब्दौ तु यदि तावद्वैदिकप्रयोगलब्धसमुदायप्रसिद्धिस्तेन लौकिकीमवयवप्रसिद्धिं जहीतस्तत सिद्धमेव शास्त्रस्थप्रतिपत्तिबलीयस्त्वम् । अथापि श्येननात्युपायितप्रसिद्धश्येनयागे गौणत्वद्वारा वाऽऽसन्नप्रसिद्धिः 'समानमितरच्छ्येनेन' इत्यादिभिर्वाऽऽश्रीयते । तथाऽपि शास्त्रकल्पितत्वाद्धर्मं प्रति बलीयस्त्वम् ।

> अथापि शब्दगौणत्वं तथाऽपि बलवत्तरम् ।
> स्वतन्त्रस्य हि वेदस्य छन्दो नैव निवार्यते ॥
> गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा स्वयम् ।
> वेदो यमाश्रयत्यर्थं को नु [illegible] प्रतिकूलयेत् ॥

न चात्र 'सन्दिग्धेषु वाक्यशेषात्' इत्येतेन तुल्यार्थत्वं प्रतिपत्तिद्वयस्याप्यसन्दिग्धत्वात् ।

१ जै० सू० १-३-१९ ।

[ ५ ] चोदितं तु प्रतीयेताविरोधात् प्रमाणेन ॥ १० ॥ सि०

अथ याञ्छब्दान् आर्या न कस्मिंश्चिदर्थे आचरन्ति म्लेच्छास्तु कस्मिंश्चित् प्रयुञ्जते यथा पिक—नेम—सत—तामरसादिशब्दास्तेषु संदेहः। किं निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः कल्पयितव्य उत यत्र म्लेच्छा आचरन्ति स शब्दार्थ इति। शिष्टाचारस्य प्रामाण्यमुक्तं

लौकिकी प्रतिपत्तिर्हि स्यार्थे नि सराया स्थिता।
वैदिक्यपि तथा स्यार्थे बाधतेऽसो विपर्ययात्॥
तस्माच्छास्त्रस्थितैर्नैका प्रतिपत्तिर्बलीयसी।
न समा मुक्तकाचारैर्विप्रकृष्टं ससङ्करे॥ इति॥ ९॥

( इति यववराहाधिकरणम्॥ ४॥ )

---

ये शब्दा न प्रसिद्धाः स्युरार्यावर्तनिवासिनाम्।
तेषां म्लेच्छप्रसिद्धोऽर्थो ग्राह्यो नेति विचिन्त्यते॥

तथा—

निरुक्तव्याक्रियाद्वारा प्रसिद्धिः किं बलीयसी।
समुदायप्रसिद्धिर्वा म्लेच्छस्यैवाथ वा भवेत्॥

म्लेच्छप्रसिद्धिव्यवहर्तृदौर्बल्येऽपि समुदायरूढित्वेन स्वरूपगतेन ज्यायसी प्रतिभाति।

तत्र प्रयोक्तृदौर्बल्यस्वरूपबलवत्तयोः।
किं नु स्यादन्तरं युक्तं ज्ञातुमित्यत्र चिन्त्यते॥

तथा—

निरुक्तव्याक्रियाद्वारा किं शास्त्रस्था बलीयसी।
किं वाऽवयवविश्लेषजननात्सैव दुर्बला॥
एवं नामोपपत्तित्वात्संदेहे तावदुच्यते।
निरुक्तव्याक्रियाद्वारा प्रतिपत्तिर्बलीयसी॥
शास्त्रस्था वेत्यनेनासौ कल्प्याऽपि हि बलीयसी।
तन्मूलस्य प्रमाणत्वं साक्ष्यस्यापि चिरं स्थितम्॥
न सिद्धमप्यमन्मूलमाश्रयेण हि दूषितम्।
अथ वेद्यते शब्दैर्म्लेच्छस्थोऽर्थः प्रतीयते॥
येषां दर्शनमात्रेऽपि वेद एव न पठ्यते।
ममाप्यसि च न म्लेच्छे महाऽऽर्यावर्तवासिनाम्॥

नाशिष्टस्मृतेः । तस्मान्निगमादिवशेनार्थकल्पना । निगमादीनां चैवमर्थवत्ता भविष्यति । अनभियोगश्च शब्दार्थेष्वशिष्टानामभियोगश्चेतरेषाम् । तस्माद्धातुतोऽर्थः कल्पयितव्य इत्येवं भाष्ये ब्रूमः । चोदितमशिष्टैरपि

तत्र तेषु प्रसिद्धोऽर्थः कथमार्यैः प्रतीयताम् ।
एवं च सति यस्यापि प्रसिद्धिर्नोपलभ्यते ॥
तस्यापि म्लेच्छदेशेषु सर्वेष्वन्वेष्यतां व्रजेत् ।
ततश्च निगमादीनां न कश्चिद्विषयो भवेत् ॥
अनन्तम्लेच्छदेशांश्च कः सर्वोऽनुपलप्स्यते ।
[illegible] एव स्यादनन्विष्टस्तत्र शङ्का प्रसज्यते ॥
अनन्तेषु हि देशेषु कः सिद्धः केति गम्यताम् ।
निगमादिवशाच्चाद्य धातुतोऽर्थः प्रकल्पितः ॥
द्वित्रेष्वहःसु बाध्येत प्रयोगान्म्लेच्छचोदितात् ।
म्लेच्छाचाराप्रमाणत्वमथ त्वध्यवसीयते ॥
आर्यावर्ते ततः शक्या प्रसिद्ध्यन्वेषणक्रिया ।
तस्याश्चाल्पेन कालेन सदसद्भावनिर्णयः ॥
ततश्च निगमादीनां सुज्ञातः स्वार्थगोचरः ।
तस्मात्तदर्थवत्त्वाय म्लेच्छाचाराप्रमाणता ॥
धर्मे चानादरात्तेषां अश्येतार्योऽपि शब्दवत् ।
न चास्ति संस्कृतः शब्दः कश्चिन्म्लेच्छापभाषणे ॥
संस्कृतप्रतिरूपा हि तद्भाषार्थान्तरे स्थिता ।
न भाषात्मकरूपाणां वाचकत्वं कथंचन ॥
आर्याश्च म्लेच्छभाषाभ्यः कल्पयन्तः स्वकं पदम् ।[1]
पदान्तराक्षरोपेतं कल्पयन्ति कदाचन ॥
न्यूनाक्षरं कदाचिच्च प्रक्षिपन्त्यधिकाक्षरम् ।

तद्यथा द्राविडादिभाषायामेव तावद्व्यञ्जनान्तभाषापदेषु स्वरान्तविभक्तिस्त्रीप्रत्ययादिकल्पनाभिः स्वभाषानुरूपानर्थान्प्रतिपद्यमाना दृश्यन्ते । तद्यथौदनं चोरित्युक्ते चोरपदवाच्यं कल्पयन्ति पन्थानमतरित्युक्तेऽतर इति कल्पयित्वाऽऽहुः । सत्यं दुस्तरत्वादतर

---

१ चोर्—अतर्—पाप्—माल्—वैर्—इत्येतेषां शब्दानां क्रमेण ओदन—मार्ग—सर्प—माल—उदरदेपेष्वर्थेषु द्राविडानामद्यत्वेऽपि प्रयोगो वर्तते ।

शिष्टानवगतं प्रतीयेत यत् प्रमाणेनाविरुद्धं तदवगम्यमानं न न्याय्यं त्यक्तुम्। यत्तु शिष्टाचारः प्रमाणमिति, तत् प्रत्यक्षानवगतेऽर्थे। यत्त्व-भियुक्ताः शास्त्रार्थेषु शिष्टा इति। तत्रोच्यते अभियुक्ततराः पक्षिणां पोषणे बन्धने च म्लेच्छाः।

---

एव पन्था इति। तथा पापशब्दं पकारान्तं सर्पवचनमकारान्तं कल्पयित्वा सत्यं पाप एवासाविति वदन्ति। एवं मालशब्दं स्त्रीवचनं मालेति कल्पयित्वा सत्यमित्याहुः। वैरशब्दं च रेफान्तमुदरवचनं वैरिशब्देन प्रत्याम्नाय वदन्ति। सत्यं सर्वस्य क्षुधितस्याकार्ये प्रवर्तनादुदरं वैरिकार्ये प्रवर्तत इति। तद्यदा द्रविडादिभाषायामीदृशी स्वच्छन्दकल्पना तदा पारसीबर्बरयवनरौमकादिभाषासु किं विकल्प्य किं प्रतिपत्स्यन्त इति न विद्मः।

तस्मान्म्लेच्छप्रसिद्धं यत्पदमार्यैर्विकल्प्यते।
न कश्चित्तत्र विश्वासो युक्तः पदपदार्थयोः॥
निरुक्त्यादिद्वारा यस्त्वर्थः परिगम्यते।
पिकनेमादिशब्दानां स एवार्थो भविष्यति॥ इति प्राप्तम्।
एवं प्राप्ते वदामोऽत्र पक्षे निपुणदृष्टिभिः।
विज्ञायतामविनष्टं यत्तत्तदर्थं भविष्यति॥

देशभाषापभ्रंशपदानि हि विप्लुतिभूयिष्ठानि न शक्यन्ते विवेक्तुम्।

यत्तु वेदतदङ्गेषु पदं दृष्टमविप्लुतम्।
म्लेच्छभाषासु तद्रूपमर्थं कथञ्चन चोदितम्॥
तत्तथैव प्रतीयेत प्रमाणेनाविरोधतः।
पिकनेमादि तद्वच्च निपुणैरवधारितम्॥
चोदितं त्वुपदिष्टं वा प्रयुक्तं वा क्रियागतम्।
म्लेच्छैरवधृतं पश्चादार्यैर्नाधिगतं क्वचित्॥
तादृशं तु प्रतीयेत प्रामाण्येनेति निश्चितम्।
न तद्धर्मप्रमाणेन वेदाङ्गत्वेन विद्यते॥

अपि च—

पदार्थक्रमसंज्ञानापेक्षप्रवर्तनात्।
प्रसिद्धिर्यत्र तत्रस्था वाक्यार्थोऽप्यनुगम्यते॥
विज्ञातिप्रत्ययाद्वाच्यं वा म्लेच्छैर्यच्चावधारितम्।
अनिर्गतागमत्वेन तद्विद्यावेदनोदितम्॥

यत्तु निगमनिरुक्तव्याकरणानामर्थवचेति । तत्रैषामर्थवत्ता भविष्यति, न यत्र म्लेच्छैरप्यवगतः शब्दार्थः । अपि च निगमादिभिरर्थं कल्प्य

---

चोदितं यत्प्रमाणेन येनेनेत्यस्य संगतिः ।
आर्यैः सहाविरुद्धत्वात् तस्य तैरप्यपेक्षणात् ॥

यथैव होमादय पश्वयना वेदे चोदिता सन्तोऽध्वर्य्वादिभि स्वयमज्ञायमानार्थत्वाद्ये नित्य प्राणिवधाभियुक्तास्तेभ्य एवावधार्यं विनियुज्यन्ते । यथा च निषादेष्ट्या कूट दक्षिणेति विहिते य एवैतेन व्यवहरन्ति तेभ्य एवार्थतत्त्व ज्ञात्वा दीयते । तथेह पिकनेमतामरसादिचोदित सद्देशादार्यावर्तनिवासिभ्यश्चाप्रतीयमान म्लेच्छेभ्योऽपि प्रतीयेत लोकावगम्यानित्यशब्दार्थाभ्युपगमाविरोधात् स्वेनैव प्रमाणेन प्रतीयेतेति । यत्तु शास्त्रबलीयस्त्वादेतदग्रहणमिति । तन्न । अविरोधे दुर्बलस्यापि ग्राह्यत्वाद्यद्धात्यन्त प्रमाणाभासमेव मृगतृष्णाज्ञानवद्भवति तत्सर्वदैव परिहर्तव्य, यत्पुनर्बलवद्विरोधापेक्षमप्रमाणमस्ति तद्विरोधाभावात्प्रमाणमेवेत्यवधारणीयम् । न चैवमादि विरुध्यते । विपरीतार्थप्रसिद्ध्यन्तराभावात् । अत एव वैदिकवाक्यार्थस्वविषयप्रयुक्तपदार्थमात्राभियुक्ततरार्थप्रसिद्धिबलीयस्त्वाश्रयणम् ।

प्रसिद्धौ विद्यमानाया तद्बलीयस्त्वमिष्यते ।
असत्या तु बलीयस्त्व वन्ध्यासुतबलोपमम् ॥

अष्टकादिषु ह्यदृष्टार्थेषु समूलत्वेषु स्मर्यमाणेषु गवादिपदस्वरूपतदर्थज्ञानेषु च सत्यमार्याणामाप्ततरत्वाभियुक्ततरत्वे विद्येते । पिकादिषु त्वार्यजनैर्न्यावगतस्वरूपमात्रवाचकत्वेषु वाच्यविशेषज्ञानरहितत्वेनाऽऽर्येषु म्लेच्छोपकारीभूतेषु पश्चदृष्टार्थप्रतिपत्त्यर्थानादिशब्दप्रयोगलब्धसम्बन्धप्रसिद्धिम्लेच्छप्रयोगेभ्योऽर्थनिर्णये सति न किंचिद्विरुद्धमाकाङ्क्षितपदार्थज्ञान च सेत्स्यति । निगमनिरुक्तव्याकरणैरपि न चैषामार्यैर्नामर्थान्तर किंचिदुदाहृत, यत्प्राप्य कृतार्था सन्त इत्येषा प्रसिद्धि परित्यजेय ।

काल्पनिक्या प्रसिद्धेर्या क्लृप्ता सा बलीयसी ।
तस्या सत्य हि नाऽऽत्मानमितरा लब्धुमर्हति ॥
आश्रयाणा च दौर्बल्य धर्मं प्रति निरूपितम् ।
दृष्टार्थव्यवहारेषु कृष्याद्याविव तुल्यताम् ॥
तस्माद्यथैव सेवाद्यौ गृहादिषु च कौशलम् ।
म्लेच्छानामधिक तद्वदभिधेयार्थनिर्णये ॥

शब्दस्वरूप तावत्तेनाभियुक्तत्वाच्चिरात्रिनष्टाविनष्टत्वेन न विविञ्चीरन् । यत्तु कप-

यानेऽव्यवस्थितः शब्दार्थो भवेत् । तत्रानिश्चयः स्यात् । तस्मात् पिक इति कोकिलो ग्राह्यः, नेमोऽर्धं, तामरसं पद्मं, सत इति दारुमयं पात्रं, परिमण्डलं शतच्छिद्रम् ॥ १० ॥

## [६] प्रयोगशास्त्रमितिचेत् ॥ ११ ॥ पू०

इह कल्पसूत्राण्युदाहरणम् । माशकं, हास्तिकं, कौण्डिन्यकमित्येवं-

---

मप्यविनष्ट एव शब्दस्तेषामपि प्रयोगविषयमापन्नस्तस्य चाऽऽर्यदेशाादिवृद्धव्यवहारपरम्परयाऽर्थं जानन्ति तत्किं तेषां निराकर्तुं शक्यते ।

पत्रोर्णवारबाणादि यच्च तद्देशसम्भवम् ।
तैरेवाश्रयितं नाम तत्र को वेदितुं क्षमः ॥

तस्मान्न तेषां व्यवहारप्रसिद्धौ दौर्बल्यम् ।

निरुक्तादेश्च सिद्धेऽर्थे तन्निमित्तादिमात्रके ।
व्यापारो न च पूर्वार्थप्रतिपत्तौ स्वरूपतः ॥

निरुक्ते न तावल्लोकव्यवहारप्रसिद्धान्येव पदानि तद्गतक्रियानिमित्तशब्दप्रयोगभाक्त्वेन निरुच्यन्ते । व्याकरणेनापि प्रसिद्धार्थानामेवाविनष्टस्वरूपान्वाख्यानमात्रं क्रियते तत्र प्रासङ्गिकमेव कियदप्यर्थनिरूपणम् । तानि स्वविषयादन्यत्र दुर्बलानामपि न बाधकानि ।

यस्य चान्विष्यमाणाऽपि प्रसिद्धिर्न भविष्यति ।
तस्य प्रदर्शितद्वारा तत्र कल्प्याऽऽश्रयिष्यते ॥
विक्षिप्ता बहुरूपा च या संदेहप्रदायिनी ।
अनन्योपायतामात्रे क्वचिदेव ग्रहीष्यते ॥
न चार्थप्रत्ययानङ्गनिरुक्ताद्यप्यनर्थकम् ।
षडङ्गवेदविज्ञानपूर्वकर्मक्रियाफलात् ॥

यथा महाभारतनिर्वचनान्वाख्याने द्वैपायनेनोक्तम् ।

महत्त्वाद्भारतत्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥

इत्येव निरुक्तव्याकरणाद्यङ्गानुगृहीतवेदाध्ययनजनितकर्मावबोधपूर्वकानुष्ठानायत्तत्वात् स्वर्गादिसिद्ध्यर्थापूर्वसिद्धेरनुत्पन्नरूपे च ज्ञातेऽपि निरुक्ताद्यवगताद्यर्थपूर्वकनामार्थज्ञान-

---

(१) पत्रोर्णं धौतकौशेयं बहुमूल्यं महाधनमित्यमरः ।
(२) कञ्चुको वारबाणोऽस्त्रीत्यमरः ।

लक्षणकानि किं प्रमाणमप्रमाणं वेति संदिग्धानि । किं प्राप्तम् । प्रयोगस्य शास्त्रं प्रमाणमेवंजातीयकमिति ब्रूयः ।

---

द्वारवाक्यार्थप्रतिपत्तिपूर्वकानुष्ठानादेवादृष्टसिद्धिरिति म्लेच्छप्रसिद्धपिकाद्यर्थग्रहणेऽपि पिकादीनामर्थवत्ता सिद्धेति ॥ १० ॥

( इति पिकनेमाधिकरणम् ॥ ५ ॥ )

---

कल्पसूत्राण्युदाहृत्य संप्रत्येतद्विचार्यते ।
किमेतेषां स्वतन्त्राणां प्रामाण्यं वेदवद्भवेत् ॥
किं वा वेदत्वमेवैषां मन्त्रब्राह्मणवन्मतम् ।
वैदिकार्थप्रबन्धाद्धि नैतेषां स्मृतितुल्यता ॥

आह । के पुनः कल्पाः कानि सूत्राणीति । उच्यते ।

सिद्धरूपः प्रयोगो यैः कर्मणामनुगम्यते ॥
ते कल्पा लक्षणार्थानि सूत्राणीति प्रचक्षते ।
कल्पनाद्धि प्रयोगाणां कल्पोऽनुष्ठानसाधनम् ॥
सूत्रं तु सूचनात्तेषां स्वयं कल्प्यप्रयोगकम् ।
कल्पाः पठितसिद्धा हि प्रयोगाणां प्रतिक्रतु ॥
बौधायनीयवाराहमाशकादिप्रबन्धवत् ।
स्वसंज्ञापरिभाषाभिर्यद्गुत्सर्गापवादनम् ॥
हेतुदृष्टान्तवत्सूत्रं तल्लक्षणव्यापि लक्षणम् ।
आश्वलायनकं सूत्रं बैजवापिकृतं तथा ॥
द्राह्यायणीयलाटीयकात्यायनकृतानि च ।

तत्र सकलप्रत्यक्षवेदप्रतिपाद्यक्रतुप्रयोगोपनिबन्धनादन्तर्हितविप्रकीर्णानुमेयप्रायश्रुतिमूलस्मृतिनिबन्धनेभ्यो महानेव कल्पसूत्राणां विशेषोऽस्तीति न तत्तुल्यन्यायं व्यवस्थाप्य प्रामाण्यानि विज्ञायन्ते । ·

अप्रामाण्यं स्मृतीनां च यदशब्दतयोदितम् ।
पूर्वपक्षे न तद्वक्तुं कल्पसूत्रेषु शक्यते ॥
प्रत्यक्षवेदशब्दत्वात्तदुक्ता नापशब्दता ।
न ह्यत्यन्तानृतं वक्तुं शक्यते पूर्वपक्षिणा ।

स्मृत्यधिकरणे चाप्रमाणत्वं मूलानुपपत्त्या पूर्वपक्षेऽभिधाय सिद्धान्तेऽनुमितश्रुतिमूलत्वेन प्रामाण्यं स्थापितम् । एतानि च न तत्रोदाहृतानि पूर्वपक्षहेत्वसंभवात् । न चैषा-

यथैव कठादिप्रोक्ताः शाखाः काठकादिसमाख्ययाऽभिधीयन्त इत्यकृत्रिमाः स्थापितास्तथैव वेदसमाम्नातमशकादिसमाख्यातमन्यनियताऽपि प्रत्येतव्या । यथा सामसूक्तानामिदमस्याऽऽर्षमिदमस्येति सत्यामपि तन्निमित्तायां समाख्यायां न नित्यत्वप्रतिघातः । एवं प्रख्यातर्षिप्रकल्पसूत्रमन्त्राणामपि । तथा हि—

न तावदृषिः कश्चित्स्मर्यते कल्पसूत्रकृत् ।
कर्तृत्वं यदृषीणां तु तत्सर्वं मन्त्रकृत्समम् ॥

यथा शैशवं भवति शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृदासीदित्यत्र मन्त्रकृच्छब्दः प्रयोक्तरि प्रयुक्त एवं तस्य तस्य कल्पस्य सूत्रस्य वा प्रयोक्तारस्तत्कर्तृत्वेन व्यपदेक्ष्यन्ते । ब्रह्मयज्ञविधाने च 'एवं विद्वान् स्वाध्यायमधीयीत' इत्युक्त्वा तत्प्रपञ्चे 'यदृचोऽधीते यद्यजूंषि यत्सामानि यद्ब्राह्मणानि यदितिहासपुराणानि यत्कल्पान्' इति तज्जप्यमानत्वेन विधानादार्षत्वमेव विज्ञायते । पुरुषकृतानां जपनिमित्तधर्महेतुत्वेन नित्यविधिविषयत्वासंभवात् । अरुणपराशरशाखाब्राह्मणस्य च कल्परूपत्वात्सर्वमाग्निकैश्च स्वशाखाधीतव्यतिरिक्तकल्पसूत्रकारोपन्यस्तपक्षतुल्यत्वाध्यवसानात्कल्पजमन्त्राणां चेतरसमाम्नायाधीतवत्क्रतुविनियोगाश्रयणात् तुल्यत्वम् ।

आर्षेयवचनं नित्यपर्यायत्वेन गम्यते ।
आर्षेयत्वप्रसिद्धिश्च कल्पसूत्रेष्ववस्थिता ॥

लाटद्राह्यायणसूत्रकाराभ्यामपि च दृष्टकल्पप्रामाण्यापेक्षयेदं माशकमपेक्ष्य 'तत्प्रत्यक्षविहितं चाऽऽर्षकल्पेन तत्रानुमानं न विद्यते' इति ब्राह्मणविहितादप्यार्षकल्पविहितगरीयस्त्वमङ्गीकृत्योक्तम् । कात्यायनेन च कृतलक्षणसूत्रप्रणयनप्रक्रमेऽभिहितं यज्ञविषयब्राह्मणगतस्तोमविधिवाक्यशेषे यथा माशकं तत्प्रामाण्यात्करिष्यते न तन्निरपेक्षशुद्धब्राह्मणप्रामाण्यादिति । तथा च प्रायणीयाग्निष्टोमसाम्नि यज्ञायज्ञीयेन सह वैकल्पिकं जराबोधीयमग्निष्टोमसाम कार्यमिति पञ्चविंशब्राह्मणेऽभिहितमपि माशकानुवृत्त्या कात्यायनेनाऽऽर्भवीयगायत्रतृतीयत्वेनजरासादिति लक्षितम् । आर्भवीयगायत्रीगतगायत्रानन्तरसाम्नो हि तेन समिति संज्ञा कृता । तस्माच्च परत्वेन पदैकदेशप्रयोगेण जराबोधीयमुक्तं देशब्देन च ज्योतिष्टोमिकाग्निष्टोमसामसंज्ञाभूतेन यज्ञायज्ञीयमेवाग्निष्टोमसामत्वेन नियतम् । यदि च कल्पाद्ब्राह्मणमतिरिक्तं कात्यायनोऽमंस्यत ततः प्रत्यक्षब्राह्मणदृष्टं विकल्पमेवावक्ष्यत् ।

बहुवेदगतन्यायविवेकज्ञो यदब्रवीत् ।
कात्यायनो न तद्वाच्यमन्याय्यमिति मादृशैः ॥

सत्यवाचामेतानि वचनानि । कथमवगम्यते । वैदिकैरेषां संवादो भवति । य एव हि वेदे ग्रहास्त एवेह, या एव वेदे इष्टकास्ता एवेह। तस्मात्सत्यवाच आचार्याः।

---

आचार्यवचनानां च प्रामाण्यं श्रूयते श्रुतौ ।
अङ्गानां च प्रणेतार आचार्या ऋषयो मताः ॥
यथा च सर्वशाखानां संवादात्तुल्यकल्पता ।
तथैव कल्पसूत्राणामिति प्रामाण्यतुल्यता ॥

यान्यप्यप्रत्ययितपुरुषवचनानि प्रमाणान्तरसंगतार्थानि भवन्ति तान्यपि सत्यत्वेनावधार्यन्ते किमङ्ग पुनः सत्यवाचां वचनानि ।

सत्यवाचां च वाक्यानि वैदिकैः संगतानि च ।
ज्ञातसत्यानि तान्येवं कोऽन्यथा कल्पयिष्यति ॥

अपि च—

वेदादृतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिकाः ।
न तु कल्पैर्विना केचिन्मन्त्रब्राह्मणमात्रकात् ॥

तुल्यं च सांप्रदायिकं स्वाध्यायाध्ययनविधिवचनं प्राग्दर्शितं कल्पग्रहणात् ।

अथ वा संप्रदातॄणामध्येतॄणां च यादृशः ।
मन्त्रब्राह्मणयोर्यत्नः कल्पसूत्रेषु तादृशः ॥
अनुयोगेषु वेदानां घटिकामार्गवृत्तिषु ।
न कल्पसूत्रहीनानां लभ्यते कृत्स्नवेदता ॥
तस्मात्कर्मप्रयोगाणां शास्त्रमेतदतिस्फुटम् ।
वेदो वा वेदतुल्यं वा कल्पसूत्राद्यसंशयम् ॥
एतेन धर्मसूत्राणामङ्गानां चापि वेदता ।
तत्तुल्यताऽपि वा वाच्या सर्वेषां सर्वहेतुभिः ॥
धर्मशास्त्रपदं येषु सर्वकालं प्रयुज्यते ।
प्रयोगशास्त्रता तेषां वेदज्ञः को हरिष्यति ॥
अपि चाङ्गानि वेदाश्च धर्मशास्त्रं च तुल्यवत् ।
विद्यास्थानानि गण्यन्ते सर्वदा वेदवादिभिः ॥

---

१ वेदवीदारविद्यामार्थ तत्तद्वेदमार्गचिह्नलेख्यानि घटिकाया कुम्भाख्याया निक्षिप्य तत्तद्वेद भागपरीक्षाकाले तान्याकृष्य आकृष्टलेख्यचिह्नितं पठन्त्यध्येतारो न युक्त इति घटिकामार्गविनोऽनुयोगाः इति ।

आचार्यवचः प्रमाणमिति च श्रुतिः । प्रत्यक्षतः प्रामाण्यमनवगतमिति यद्युच्येत, प्रमाणान्तरेण वचनेनावगतमिति न दोषः । वेदवाक्यैश्चैषां तुल्य आदरः । तस्मात् प्रमाणम् ॥ ११ ॥

---

किं च—

> कर्मणां ब्राह्मणोक्तानां यथा मन्त्राः प्रकाशकाः ।
> अष्टकापार्वणादीनां दृश्यन्ते ते तथैव हि ॥
> तथाऽवकीर्णियागादि कृच्छ्रचान्द्रायणादि वा ।
> वेदमन्त्रप्रकाश्यं सत्स्वयं कथमवैदिकम् ॥
> सिद्धवह्निशिखत्वादि यच्च मन्त्रैरनूद्यते ।
> चौलोपनयनप्रायं तत्स्यात्कथमवैदिकम् ॥
> एवं च वेदमूलत्वं विशेषामनुमीयते ।
> संभवत्येव वेदत्वे नित्यत्वे चापि तत्समे ॥
> वेदं हि कल्पयित्वेभ्यः पुनस्तस्यापि नित्यता ।
> वक्तव्यैव वरं तेन सा वेदवाक्यधारिता ॥
> सिद्धाना नित्यतैवैका सुबोधा वेदताऽपि वा ।
> असंशयितवेदार्थविषयत्वात्प्रकल्प्यते ॥
> तस्माद्वर्षसहस्रेऽपि यस्य न ज्ञायतेऽवधिः ।
> न तत्कृतकतां लब्ध्वा लभते नित्यमूलताम् ॥
> यान्येव धर्मशास्त्राणां मूलवाक्यानि मन्यसे ।
> तान्येवैतानि पठ्यन्त इत्येतत्कल्पितं वरम् ॥
> मन्वादिभिरवश्यं च स्वग्रन्थप्रतिपादने ।
> तान्युपन्यसनीयानि शिष्याणां वेदवादिनाम् ॥
> तेन तान्येव तैरेभ्यः संप्रत्तानीति गम्यते ।
> के हि तेषूपलब्धेषु गृह्णीयुः प्रतिकञ्चुकान् ॥
> यथा च धर्मशास्त्राणां नाद्यत्वे प्रतिकञ्चुकाः ।
> ग्राह्यास्तथा पुराऽप्यासन्न वेदप्रतिकञ्चुकाः ॥
> संप्रदायविनाशाच्चेद्धीतेस्तदसमर्पणम् ।
> मन्वादिष्वनुमीयेत स्वग्रन्थाकरणं तथा ॥

वेदवाक्यार्थेण येषां खण्डशो नाभिसंमतम् ।
स्वग्रन्थकरणं तेषां वेदस्थाने कथं भवेत् ॥
वेदादेव च विज्ञातो वेदार्थः साधयेत्फलम् ।
नान्यस्मात्पुरुषग्रन्थान्मन्त्राभासात्स्मृतो यथा ॥
कृता मन्वादिभिर्यद्वन्मन्त्रप्रतिकञ्चुकाः ।
न ह्येतेन स्मृतं कर्म सिध्यतीत्यवधारणात् ॥
तथैव तैर्न कर्तव्या ब्राह्मणप्रतिकञ्चुकाः ।
नावेदविहितं कर्म फलतीति हि निश्चितम् ॥
न चाभिभिन्नदेशस्थवेदवाक्यसमुच्चयः ।
कृत इत्यवगन्तव्यमीदृक् ग्रन्थावधारणात् ॥
ईदृगेवं क्रमश्चायं वेदग्रन्थ इतीदृशी ।
युज्यते हि मतिः कर्तुं न मूलान्तरकल्पना ॥
तेन प्रयोगशास्त्रत्वं तद्द्वाऽऽपतितं बलात् ।
धर्मं प्रत्यप्रमाणत्वं यद्वैषां न संमतम् ॥
चोदनालक्षणं धर्मं पूर्वमेवावधारिते ।
अवेदस्य प्रमाणत्वं ब्राह्मणस्यापि नेष्यते ॥
तेनैषां धर्मशास्त्राणां न वा धर्मोपयोगिता ।
वेदता वाऽभ्युपेतव्या गतिर्नास्त्यान्तरालिकी ॥
वदन्ति धर्ममेतानि चोदना गमयन्ति च ।
अशक्यमीदृशं वक्तुं यावदुक्तप्रमाणकैः ॥
उक्तमर्थं परित्यज्य यदनुक्तं प्रतीयते ।
अनुक्तेन च सोऽप्यर्थं इति किं नोपपद्यते ॥
तस्माद्धर्मप्रयोगस्य सक्षादुक्तस्य तत्क्रमम् ।
प्रमाणं धर्मशास्त्रं स्यान्न वेदत्वं तथान्यत (?) ॥
शाक्यादिनिर्मिते धर्मशास्त्राभासे निराकृते ।
धर्मप्रयोगशास्त्रत्वं तस्य वेदमिहोच्यते ॥
येनैवाकृतकत्वं हि वेदस्य प्रतिपाद्यते ।
न्यायेन तेन शाक्यादिग्रन्थस्यापि भविष्यति ॥

## नासन्नियमात् ॥ १२ ॥ सि०

नैतदेवम् । असन्नियमात् । नैतत्सम्यङ्निबन्धनम् । स्वराभावात् ॥ १२ ॥

---

बोधकत्वात्प्रमाणत्वं स्वतस्तस्यापि लभ्यते ।
न च संदिह्यते बुद्धिर्न विपर्यस्यते क्वचित् ॥
अकर्तृकतया नापि कर्तृदोषेण दुष्यति ।
वेदवद्बुद्धवाक्यादिकर्तृस्मरणवर्जनात् ॥
बुद्धवाक्यसमाख्याऽपि प्रवक्तृत्वनिबन्धना ।
तद्दृष्टत्वनिमित्ता वा काठकाङ्गिरसादिवत् ॥
यावद्वेदोदितं किंचिद्वेदप्रामाण्यसिद्धये ।
तत्सर्वं बुद्धवाक्यनामतिदेशेन गम्यते ॥
तेन प्रयोगशास्त्रत्वं यथा वेदस्य संमतम् ।
तथैव बुद्धशास्त्रादेर्वक्तुं मीमांसकोऽर्हति ॥ इति ॥ ११ ॥
एवं प्राप्ते वदामोऽत्र तत्रासन्नियमादिति ।
असन्निबन्धनं ह्येतत्पूर्वोक्तं सर्वमीक्ष्यते ॥
इहैका परमार्थेन बुद्धिरर्थेषु जायते ।
अन्या भ्रान्तिरजाताऽपि त्वन्या जाताऽपि दुष्यति ॥
परेण सह केषांचिद्वा को वाक्यानि जल्पताम् ।
उत्तयः प्रातिभासिन्यो जायन्ते परवाक्यतः ॥
स्वसंवेद्यं च सिद्धान्तमात्मीयमपि जानताम् ।
छायां तथाऽपि रक्षन्तो जल्पन्ति प्रतिशब्दकैः ॥
यथा मीमांसकत्रस्ताः शाक्यवैशेषिकादयः ।
नित्य एवाऽऽगमोऽस्माकमित्याहुः शून्यचेतनम् ॥
प्रद्वेषाद्वेदपूर्वत्वमनिच्छन्त. कथंचन ।
तन्मात्रेऽपि च भूयिष्ठामिच्छन्तः सत्यवादिताम् ॥
भूयसा वेदबाह्यत्वाद्बुद्धादिवचसामपी ।
अहिंसाद्यप्यतत्पूर्वमित्याहुस्तर्कमानिनः ॥
ततश्च पौरुषेयत्वात्प्रामाण्यमनीन्द्रिये ।
प्रागुक्तैर्वेदनित्यत्वव्यायामासैर्विमोह्यते ॥

यादृशतादृशमीमांसकैरप्यतीन्द्रियविषयपुरुषवचनप्रामाण्यनिराकरणादपौरुषेयत्वाध्यवसायनिराकृतकारणदोषाशङ्कनिरपवादप्रामाण्यसिद्धिं प्रतिहन्तुमशक्त्या मन्यमाना निरुत्तरीभूता बालानुकरणवाक्यसदृशैः स्ववाक्यैर्व्यवलिख्यमानहृदया सन्तोऽपि प्रक्षीणकुहेतुवचनजाला कन्यावरणार्थागतमूर्खवरगोत्रप्रश्नोत्तरवत् ।

यदेव भवता गोत्रं तदस्माकमपीतिवत् ।
आहुः स्वागमनित्यत्वं परवाक्यानुकारिणः ॥
अस्मदीयमिदं वाक्यं भवतामिति चोदिताः ।
जल्पन्त्यस्मास्वमेवैतच्छ्रुत्वा मीमांसकैर्हृतम् ॥

त्यक्तलज्जं ब्रुवाणो हि वाचोयुक्तिमनर्थिकाम् ।
कुर्वन् परातिसंधानमश्रान्तः कोऽवसीदति ॥
तत्र शाक्यैः प्रसिद्धाऽपि सर्वक्षणिकवादिता ।
त्यज्यते वेदसिद्धान्ताज्जल्पद्भिर्नित्यमागमम् ॥
धर्मस्तेनोपदिष्टोऽयमनित्यः सर्वसंस्कृतम् ।
क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया ॥
बुद्धिबोध्यं त्रयादन्यत्संस्कृतं क्षणिकं च तत् ।

तथा शब्देऽपि बुद्धेर्नियमान्नाभिव्यक्तिर्द्वेधाऽपि दोषादित्येवमादिभिः सर्वदा पदार्थसम्बन्धानित्यत्वप्रतिपादनात्तद्विपरीतमागमनित्यत्वमभ्युपगम्यमानं लोकोपहासास्पदमात्रमेव भवेत् ।

तथा हि—

यस्तन्तूननुपादाय तुरीमात्रपरिग्रहात् ।
पटं कर्तुं समीहेत स हन्याद् व्योम मुष्टिभिः ॥
यावदागमनित्यत्वं वेदस्यानन्यकल्पिते ।
हेत्वाभासाग्निनिर्दग्धे तस्मिंस्तद्वेदस्य दुष्करम् ॥

व्यवहारनित्यताशब्दश्च क्रियानित्यत्वपर्यायः तदस्य शब्दार्थसम्बन्धानामनित्यत्वं तस्य तदाश्रयव्यवहारनित्यत्वं किमाधारं भविष्यतीत्यतिदुःसंपादम् ।

न च शब्दार्थसम्बन्धपुरुषाणामनित्यताम् ।
नित्यता व्यवहारस्य निराधाराऽवकल्पते ॥
शब्दादिषु विनश्यत्सु व्यवहारः क्व वर्तताम् ।
स्थितैषा धर्मतेत्येतन्न्यायशून्यमतो वचः ॥
एषेत्यपि न निर्देष्टुं शक्यते क्षणिकादिनी ।
किमुत स्थितता साऽऽरेषा त्वस्थिरवादिनाम् ॥

तेनानित्यशब्दवादिनामागमनित्यत्वानुपपत्तेरतीन्द्रियविषयस्य च वाक्यस्य प्रयोगशास्त्रत्वाभावात्तासन्निबन्धनादित्युच्यते ।

असाधुशब्दभूयिष्ठाः शाक्यजैनागमादयः ।
असन्निबन्धनत्वाच्च शास्त्रत्वं न प्रतीयते ॥

मागधदाक्षिणात्यतदपभ्रंशप्रायासाधुशब्दनिबन्धना हि ते । मंम विहि भिक्खवे कम्मवच्च इसी सवे । तथा उक्खित्ते लोडम्मि उवे अत्थि कारणम् । पडणे णत्थि कारणम् । अणुभवे कारणं इमे संकडाधम्मा संभवन्ति सकारणा अकारणा विणस्सन्ति । अणुप्पत्तिकारणमित्येवमादयः ।

ततश्चासत्यशब्देषु कुतस्तेष्वर्थसत्यता ।
दृष्टापभ्रष्टरूपेषु कथं वा स्यादनादिता ॥

वेदेषु हि तावदेव पदवाक्यसंघातात्मकत्वादिहेत्वाभासैः कृतकत्वभ्रान्तिर्भवति ।

या तद्बहिरवस्थानाद्वेदरूपं न दृश्यते ।
ऋक्सामादिस्वरूपे तु दृष्टे भ्रान्तिर्निवर्तते ॥
आदिमात्रमपि श्रुत्वा वेदानां पौरुषेयता ।
न शक्याऽध्यवसातुं हि मनागपि सचेतनैः ॥
दृष्टार्थव्यवहारेषु वाक्यैर्लोकानुसारिभिः ।
पदैश्च तद्विधैरेव नराः काव्यानि कुर्वते ॥
प्रपाठकचतुःषष्टिनियतस्वरकैः पदैः ।
लोकेष्वप्यश्रुतप्रायैर्ऋग्वेदं कः करिष्यति ॥
अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातममित्येतत्तृवचः कथम् ॥
किमालोच्य क्व वा दृष्ट्वा वाक्यमीदृशम् ।
रचयेत्पुरुषो वाक्यं किं चोद्दिश्य प्रयोजनम् ॥
अग्नेः पुरोहितत्वं च क्व दृष्टं येन कीर्त्यते ।
ईळेशब्दप्रयोगश्च क्व दृष्टस्तोत्रगोचरः ॥
देवत्वं चास्य यज्ञस्य विहितं क्वोपलक्षितम् ।
विधिनैव हि देवत्वं प्रतिकर्मावधार्यते ॥
जात्या देवतात्वं हि क्वचिदस्ति व्यवस्थितम् ।

---

१ ममापि भिक्षव धर्मं वर्तत एवाऽऽशरीरपातात् । २ यथा, उत्क्षिप्ते लोष्टे उत्क्षेपेऽस्ति कारणं पतने नास्ति कारणम् । ३ अस्त्युद्भवे कारणमिमे संस्कृता धर्माः संभवन्ति सकारणा अकारणा विनश्यन्ति । उत्पत्तिमनुकारणमपेक्षन्ते ।

होतृत्वमपि यत्तस्य देवताह्वानहेतुकम् ॥
रत्नधायितम व च तत्रैर्ज्ञायते कथम् ।
अविज्ञातगुणाना च कल्पते स्तवन न तु ॥
स्वतन्त्रो वेद एवैतत्केवलो वक्तुमर्हति ।
इषे त्वेत्ययमप्यर्थ पुरुषेणोच्यता कथम् ॥
शाखाच्छेदोपयोगश्च पुंभिरुत्प्रेक्ष्यता कुत ।
एवमूर्जेत्यय मन्त्र केन शाखानुमार्जने ॥
वक्तु शक्यो नियोक्तु वा बुद्धिपूर्वककारिणाम् ।
वायव स्थेत्यय मन्त्रो वत्सापाकरण प्रति ॥
एकशो विनियोक्तव्य इति क कथयिष्यति ।

वायुशब्देन बहुवचनान्तेन मातुर्वियोज्यमान एकैको वत्सोऽभिधीयत इति नैतद्बुद्धिपूर्वकारिणा चिन्तितु शक्यम् ।

सामवेदे यदोग्नाईप्रभृतीना प्रयुज्यते ।
रूप तत्रापि पौंस्नत्व नाभिप्रायोऽस्ति कश्चन ॥

को नाम बुद्धिपूर्वकारी पुरुषोऽर्थाभिधानपराणामृगक्षराणा लोकव्याकरणादिष्वनवगत पूर्वमग्न इत्यस्य पदस्याकारमोकारेण प्लुतेन विकुर्यात् ।

तथा वीतय इत्यस्मिन्नीकारस्यापि विक्रियाम् ।
तशब्दस्य च तोशब्द येशब्दस्यापि रूपताम् ॥
को मूढो बुद्धिपूर्वो वा नियमात्कल्पयिष्यति ।
तेन वेदस्वतन्त्रत्व रूपादेवावगम्यते ॥
किंचिदेव तु तद्वाक्य सदृश लौकिकेन यत् ।
तत्रापि च्छान्दसी मुद्रा दृश्यते सूक्ष्मदर्शिभि ॥

एव च यदाध्येतारोऽध्यापयितार पार्श्वस्था वा वेदपदवाक्यतदर्थरूपाण्यालोचयन्ति तदा स्वसंवेद्यमेवापौरुषेयत्वमध्यवस्यन्ति।

तावता तु बाह्यनास्तिकाणा प्रतीतिभावना नोत्पद्यत इति तत्प्रतिपादनसमर्थेदोत्पादितन्यायोपनिबन्धनान्मीमासकै केवल यश एव पीतम् ।

शाक्यादिग्रन्थेषु पुनर्यदपि किंचित्साधुशब्दाभिप्रायेणाविनष्टबुद्ध्या प्रयुक्त तत्रापि प्रज्ञप्तिविज्ञप्तिपदयनातिष्ठनादिप्रायप्रयोगात्किंचिदेवाविप्लुत लभ्यते ।

किमुत यानि प्रसिद्धापभ्रष्टदेशभाषाभ्योऽप्यपभ्रष्टतराणि भिन्नत्वे इत्येवमादीनि द्वितीयाबहुवचनस्थाने ह्येकारान्तं प्राकृतं पदं दृष्टं न प्रथमाबहुवचने संबोधनेऽपि । संस्कृतशब्दस्थाने च ककारद्वयसंयोगोऽनुस्वारलोपः, ऋवर्णाकारापत्तिमात्रमेव प्राकृतापभ्रंशेषु दृष्टं न ऋकारापत्तिरपि । सोऽयं संस्कृता धर्मा इत्यस्य सर्वकालं स्वयमेव प्रतिपिन्नोऽपि विनाशः कृत इत्यसाधुशब्दनिबन्धनत्वादित्यन्तेन हेतुना वेदत्वाकृतकत्वाख्यान्तरशङ्कानिवृत्तिः । यावांश्चाकृतको विनष्टः शब्दराशिस्तस्य व्याकरणमेवैकमुपलक्षणं तदुपलक्षितरूपाणि च ।

केचिद्यथोपलभ्यन्ते नैवं शाक्यादिभाषिते ।
प्रयोगनियमाभावादतोऽप्यस्य न शास्त्रता ॥

असन्नियमादिति च व्याकरणोक्तनियमाभावादित्यर्थः ।

क्षणिकत्वनिराकृतनित्यसिद्धानित्यत्वात्यन्ताविद्यमानत्व
वाऽसन्नियमादित्युक्तम् ।

असतां वा क्षणभङ्गशून्यवादानात्मकत्वादीनामसद्धेतुभिर्वा प्रतिपादननियमात्तद्वेककर्तृकधर्मवचनानामप्यप्रामाण्यम् ।

कर्तृस्मरणदार्ढ्याच्च नैषामकृतता मता ।
तेनाकृतकगम्येऽर्थे स्वातन्त्र्यान्न प्रमाणता ॥
एवं समस्तवेदाङ्गधर्मशास्त्रेष्वपीष्यताम् ।
कर्तृस्मृतिदृढत्वेन स्यान्न स्वातन्त्र्येण शास्त्रता ॥
अनेन कल्पसूत्राणां प्रत्याख्याता स्वतन्त्रता ।
कर्तृस्मृत्या दृढं ज्ञाता तेषामप्यसता क्रिया ॥
येन न्यायेन वेदानां साधिताऽनादिता पुरा ।
दृढकर्तृस्मृतेस्तस्य कल्पसूत्रेषु बाधनम् ॥

यथैव हि कल्पसूत्रग्रन्थानितराङ्गस्मृतिनिबन्धनानि चाध्येत्रध्यापयितारः स्मरन्ति तथाऽऽश्वलायनबौधायनापस्तम्बकात्यायनप्रभृतीन् ग्रन्थकारत्वेन ।

ततश्च प्रागवस्थायामसतामेव कल्पनात् ।
कुतः प्रयोगशास्त्रत्वं वेदवद्धेतुतैव वा ॥

न चैषां समाख्यामात्रबलादेव कर्तृत्वमुच्यते । येनाऽऽख्या प्रवचनादित्युत्तरमुच्यते पुरुषपरम्परयैव हि स्मृतेषु कर्तृषु समाख्याऽभ्युच्चयहेतुत्वेन ज्ञायते यथा च कठादिचरणैरनादिभिः प्रोच्यमानानामनादिवेदशाखानामनादिसमाख्यासंबन्धो नैवं नित्यावस्थितमा-

## अवाक्यशेषाच्च ॥ १३ ॥

ऋत्विजो वृणीते, वृता यजन्ति, देवयजनमध्यवस्यन्तीति। नात्र विधिर्गम्यते वर्तमानकालप्रत्ययनिर्देशात्। न चात्र वाक्यशेषः स्तावकोऽस्ति।

---

शाकादिगोत्रचरणप्रवचननिमित्तसमाख्योपपत्ति। माशकबौधायनापस्तम्बादिशब्दा ह्यादिमदेकद्रव्योपदेशिन इति न तेभ्य प्रकृतिभूतेभ्योऽनादिग्रन्थविषयसमाख्यान्युत्पादनसमव। अतश्च माशकादिसमाख्याऽप्यविद्यमानग्रन्थनियमनान्वेव प्रवृत्तेत्यपि हेत्वर्थयोजना। वेदरूपनियमाविद्यमानत्वादिति वाऽत्र हेतुव्याख्या। काम तु वेदाङ्गानीत्यनध्यायनियमाभावादिति वा योज्यम्। यत्तु भाष्यकारेण स्वराभावादित्यनियमार्थं व्याख्यान कृतम्।

> तन्मन्त्रेष्वप्यवेदत्व कल्पाधीनेषु साधयेत्।
> तथा गृह्योपदिष्टेषु च्छान्दोग्यब्राह्मणेषु च॥
> ब्राह्मणानि हि यान्यष्टौ सरहस्यान्यधीयते।
> छन्दोगास्तेषु सर्वेषु न कश्चिन्नियतस्वर॥
> तेन तेष्वप्यवेदत्व स्वराभावात्प्रसज्यते।
> तस्मादुक्तस्वसवेदरूपाभावोऽत्रकारणम्॥
> स्वरोऽपि त्वस्ति रूपांशो नत्वसावेव केवल ॥ १२॥

---

> अतश्च वाक्यशेषोऽपि तस्मिन्नेवोपयुज्यते।
> बहवो वाक्यशेषा हि येषा लोकेष्वसमव॥
> अबुद्धिपूर्वतासिद्धिस्तेन वेदस्य तैरपि।

बृहस्पतिर्वै देवानामुद्गायादिन्द्रो वृत्रमहन्प्रजापतिर्वपामात्मन उदखिदत्। गावो वा एतत्सत्रमासत तासा दशसु मास्सु शृङ्गाण्यजायन्तेत्यादय कथमिव बुद्धिपूर्वकारिणाऽर्थवादा प्रणीयेरन्।

> नित्यत्वे सति येषा हि क्लेशेन विधियोजना।
> तान् कृत्वाऽध्यापयन् कर्ता सुसमत्व व्यनेज्ञकैः॥

न च तादृशवाक्यशेषमुद्राऽपि कल्पसूत्रादिग्रन्थेषु काचिदस्ति यद्बलेनाकृतकत्वमेषामवसीयेत।

> विधिशून्यतया चैषा विहिताऽऽख्यातरूपना।
> गम्यते न स्वपूर्वार्थप्रनिपाकनशक्तता॥

वर्तमानापदेशोऽपि त्वर्थवादप्रयोजितः ।
विधित्वं लभतेऽन्यत्र कल्पसूत्रेषु नास्ति सः ॥
पञ्चमेन लकारेण विधिर्यश्छन्दसि स्मृतः ।
मन्त्रब्राह्मणभिन्नत्वात्सोऽप्येतेषु न युज्यते ॥

यद्यपि षडङ्गमेक इत्यनेन कल्पसूत्राणां वेदत्वं भवेत् ।

तथाऽपि तर्कवत्तेषां छन्दस्त्वं नोपपद्यते ।
मन्त्रब्राह्मणयोरेव च्छान्दसा विधयः स्थिताः ॥

यथैव 'विधिर्विधेयस्तर्कश्च वेद'[1] इत्येतस्मिन्दर्शने सति समस्तवैदिकतर्कोपसंहारात्मिका मीमांसाऽपि वेदशब्दवाच्या भवति न त्वमन्त्रब्राह्मणरूपत्वाच्छन्दोनिबन्धनानि कार्याणि लभते तथा कल्पसूत्राण्यपीति विधिपर्यायप्रयोगशास्त्रत्वाभावः ।

इतिहासपुराणाभ्यां सा त्वनैकान्तिकी स्मृता ।
या त्वेषां ब्रह्मयज्ञेऽपि विधानान्नित्यतोदिता ॥
इतिहासपुराणानि कल्पानिति हि सा श्रुतिः ।
तस्मात्कृत्रिमताप्यत्र विद्यास्थाने महीप्यते ॥

वेदार्थोपसंहारस्य कल्पसूत्रानपेक्षैः कर्तुमशक्यत्वादवश्यं च यावद्वेदं यावत्कर्मप्रयोगं च क्रियमाणैरपि विद्यास्थानाशून्यतार्थं कैरपि कल्पसूत्रैर्भवितव्यम् ।

वेदार्थकल्पनात्कल्पो नित्ययैवाऽऽख्ययोच्यते ।
जपे च नित्यकर्तव्ये नित्यमेव विधीयते ॥
कर्माभ्यासाभिसंधानं विध्यर्थश्चात्र गम्यते ।
स चार्थो नित्य एवेति नाऽऽपतेद्ग्रन्थानित्यता ॥
यः पुनर्वेदसंवादः स तत्पूर्वतयेष्यते ।
तदर्थानुगमापेक्षा न स्वतन्त्रप्रमाणता ॥
वेदशब्दाभिधेयत्वं नैषामध्येतृषु स्थितम् ।
षडङ्गमेक इत्येतन्न च सिद्धान्तभाषितम् ॥
संवादत्वानुवादत्वमेकस्यैकान्तनिश्चितम् ।
ऐकान्तिकविधित्वाच्च ब्राह्मणे तन्न युज्यते ॥
कल्पाद्यनुवादत्वमापन्नं परिशेषतः ।
न च शाखान्तरन्यायस्तुल्याध्येतृकत्वावशात् ॥

१ विधि—ब्राह्मणम् । विधेयो—मन्त्रः । तर्को—मीमांसेति दर्शनार्थः

सतन्त्रवार्तिकशाबरभाष्यसमेत—

तस्यादप्रमाणम् । यश्चाऽऽदर उक्तः स नान्तरीयकत्वाद्वेदवाक्यमिश्रसमाम्नानात् । यत्तु श्रुतिरिति नैतत् । अर्थवादत्वात् । कथमर्थवादः । विध्यन्तरं ह्यस्ति, आग्नेयोऽष्टाकपाल इति । अत्राऽऽचार्यो वेदोऽभिमेतः । आचिनोत्यस्य बुद्धिमिति । यद्वाऽऽचार्यवचनं प्रमाणं तदपेक्षम् । कृतरत्तद् । यत् प्रमाणगम्यम् ॥ १३ ॥

'यथोक्त सत्यवाचामेतानि वचनानीति । तत्र'

## सर्वत्र च प्रयोगात्संनिधानशास्त्राच्च ॥ १४ ॥

आचार्यवचनं हि भवति "पूर्वपक्षे सर्वासु तिथिष्वमावास्या" इति ।

सर्वशाखाविधित्वं हि सिद्धमध्येतृभेदतः ।
प्रतिशाखं तु ये कल्पास्तदर्थप्रतिपादकाः ॥
समाना येतृकर्तृत्वात्ते न कदाचिद्विधिक्षमाः ।
विप्रकृष्टाश्च दृश्यन्ते हेतुभिर्ब्राह्मणोत्थितैः ॥
कल्पकारास्ततोऽप्येषां नैव ब्राह्मणतुल्यता ।
अन्यार्थैर्ब्राह्मणैश्चान्यान्ज्ञापयन्त्यर्थनिर्णयान् ॥
तस्मादपि स्वतन्त्रत्वं कल्पानां नोपपद्यते ।
अर्थैकत्वेन केषांचिदक्षराणां च साम्यतः ॥
सादृश्याद्ब्राह्मणभ्रान्तिर्जातैवमपनीयते ।
आचार्यवचसा यच्च प्रमाणत्वं श्रुतौ श्रुतम् ॥
श्रुतिसामान्यमात्रत्वात्तस्याप्यन्यार्थतोदिता ।
व्याचक्षाणस्य वेदार्थान्वेदाश्च वदतः स्वयम् ॥
शिष्यान्प्रत्यासभावात्स्यादाचार्योक्तिप्रमाणता ।

आचार्यशब्दस्यार्थो मन्वादिभिरेव व्याख्यातः ।

उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ इति ।

वेदसंप्रदानकाले च शिष्यास्तद्वचसु कथं नाम श्रद्दधीरन्नित्येवमर्थमाचार्यवचःप्रमाणमित्युक्तं न कल्पसूत्रकारवचनविषयम् ।

न च पुरुषेन सर्व सत्यत्वेनावगम्यते
वागिह श्रूयते यस्मात्प्रायादनृतवादिनी ॥

तथाऽन्यत्राप्युक्तम् । 'तस्माद्द्वय वाचा वदति सत्यं चानृतं च पाप्मना विद्धेति' ॥ १६ ॥

वेदादेवानृतत्वं तु तद्वाचामवगम्यते ।
विसंवादो हि भूयिष्ठमन्यायेन च दृश्यते ॥

संनिहितं च शास्त्रं 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावस्यया यजेत' इति । तेन श्रुतिविरुद्धवचनाश्च सत्यवाचः । तस्मादप्रमाणम् ॥ १४ ॥

[७] अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ १५ ॥ पू०

अनुमानात् स्मृतेराचाराणां च प्रामाण्यमिष्यते । येनैव हेतुना ते प्रमाणं तेनैव व्यवस्थिताः प्रामाण्यमर्हन्ति ।

सर्वत्र च प्रयुक्तत्वादित्यनेन निदर्श्यते ।
संनिधानाच्च शास्त्रस्य विसंवादः स्फुटः स्फुटः ॥

तत्र यद्वृत्तिकारेणोदाहरणं पार्वणस्थालीपाकविषयगृह्यकारवचनश्रवणाद्दर्शपूर्णमासपरकल्पसूत्रकारवचनाध्यारोपेण दत्तं तदत्यन्ताध्यारोपाभिमतामिप्रायप्रयुक्तमित्यनादृतम् । गृह्यकारवचनं ह्येतदस्तहोमे तावद्यासायमाहुतेः प्रातराहुतिर्नात्येति । आप्रातराहुतेः सायमाहुतिरित्यतश्च यथैवैतदग्निहोत्रविषयत्वेन न कल्प्यते तथैवैतदपि आपौर्णमास्या अमावास्या नात्येति । आऽमावास्यायाः पौर्णमासीत्येतदपि दर्शपूर्णमासविषयं न कल्पनीयमिति । तस्मादन्यदुदाहार्यम् ॥ १४ ॥

( इति कल्पसूत्राधिकरणम् ॥ ६ ॥ )

देशधर्मानुदाहृत्य संप्रत्येनाद्विचार्यते ॥
किं व्यवस्थितमूलास्ते किं वेषां सर्वधर्मता ।
विध्यर्थप्रतिषेधार्थाः क्रियावर्जनचिह्निताः ॥
इह सर्व उदाहार्या विचार्याश्च विभागशः ।
प्राच्या यामनुतिष्ठन्ति वर्जयन्ति च साधवः ॥
तेषामेवोपदिष्टास्ते सर्वेषां वेति चिन्त्यते ।
एवं ये दाक्षिणात्यानां प्रतीच्यानां च केचन ॥
उदीच्यानां तथाऽऽचारा विचार्याः सर्व एव ते ।
आद्यं सूत्रद्वयं यावदिदमप्यत्र चिन्त्यताम् ॥
गृह्यगौतमसूत्रादिव्यवस्थासर्वगामिते ॥

पुराणमानवेतिहासव्यतिरिक्तगौतमवसिष्ठशङ्खलिखि... ...ता...

१ यद्वृति—यत्रैकेऽभ्यापयितृवचनं भिन्नप्रमाणं, तदपेक्षं श्रुतिवाक्यं

तस्माद् होलाकाद्यः प्राच्यैरेव कर्तव्याः, आह्नीनैबुकादयो दाक्षिणात्यैरेव, उद्वृषभयज्ञादय उदीच्यैरेव । यथा शिखाकल्पो व्यवतिष्ठते केचित् त्रिशिखाः केचित् पञ्चशिखा इति ॥ १५ ॥

धर्मशास्त्राणां गृह्यग्रन्थानां च प्रातिशाख्यलक्षणवत्प्रतिचरणं पाठव्यवस्थोपलभ्यते । तद्यथा गौतमीयगोभिलीये छन्दोगैरेव च परिगृहीते । वासिष्ठं बह्वृचैरेव शङ्खलिखितोक्तं च वाजसनेयिभिः । आपस्तम्बीयबौधायनीये तैत्तिरीयैरेव प्रतिपन्ने इत्येवं तत्र तत्र गृह्यव्यवस्थाभ्युपगमादि दर्शयित्वा विचारयितव्यम् । किं तानि तेषामेव प्रमाणान्युत सर्वाणि सर्वेषामिति ।

किं तावत्प्रतिपत्तव्य व्यवस्थैवेति पाठत ।
न ह्यन्यत्र स्थिताल्लिङ्गाल्लिङ्ग्यन्यत्रानुमीयते ॥

अनुमीयतेऽनेनेत्यनुमानं लिङ्गमेवोच्यते ।

तच्च व्यवस्थितं दृष्ट्वा लिङ्गी तत्रैव गम्यताम् ।
विधिर्वा प्रतिषेधो वा न हि सोऽन्यत्र लिङ्ग्यते ॥

तत्र ग्रन्थात्मकादाचारात्मकाद्वा लिङ्गाल्लिङ्गिनौ विधिप्रतिषेधावनुमीयमानौ तद्विषयावेवानुमातुं शक्येते नान्यगतौ । कुतः —

अन्यवेदस्थिताद्धूमात्र वेदमान्तरमाग्निमत् ।
प्रमीयते न चादृष्टधूमैरिति हि निश्चितम् ॥
यथोपनयनं येषामाधानं च विधीयते ।
तेषामेवाग्निहोत्रादिविधिरप्यवगम्यते ॥
यथा च जातितद्भेदकुलधर्मा व्यवस्थिताः ।
तथैव देशधर्मादिव्यवस्थाऽपि भविष्यति ॥
यदि स्यात्सर्वगामित्वं विधानप्रतिषेधयोः ।
आचारोऽपि तथैव स्यादव्यवस्थाहेत्वसंभवात् ॥

सर्वविषयशास्त्रप्रणीतो ह्याचारः सर्वदेशगतशाक्यमस्करिपुरुषैरग्निहोत्रवदेवानुष्ठीयेत ।

यस्तु तं विनियोगेन कुरुते तद्व्यवस्थितम् ।
तेन नूनं श्रुतिः काऽपि तेषामेव विधायिका ॥
अन्यथानुपपत्त्या च श्रुतिरत्र प्रणीयते ।
तस्मात्तदनुपपत्त्या च सा तत्रैवावधार्यते ॥

यस्माद्य देशाचारोऽयं वा गृह्यादिग्रन्थोऽन्यथा नोपपद्यते यदि श्रुतिमूलकत्वं नाभ्युपेयतेनयोपपत्त्या मूलकल्पना तस्माद्व्यवस्थितविषयैव साऽभ्यवसातव्या । तथा चोक्तम् । यदि स हेतुरवसिद्धेन निर्देशादिति ।

## अपि वा सर्वधर्मः स्यात् तन्न्यायत्वाद्विधानस्य ॥ १६ ॥ सि०

अपि वेति पक्षव्यावृत्तिः । एवंजातीयकः सर्वधर्मः स्यात् । कुतः । तन्न्यायत्वाद् विधानस्य । विधीयतेऽनेनेति विधानं शब्दः । सोऽनु-

---

यत्प्रकरणं हेतुः शूर्पहोमे विधीयते ।
तन्मात्रगतमेवासौ दृष्टान्तमपि कल्पयेत् ॥
यदप्रकरणं शूर्पं तेन तेनैव हूयते ।
ततश्चातिप्रसङ्गः स्यान्न दर्विपिठरादिषु ॥
एवं व्यवस्थितान् दृष्ट्वा देशाचारान् समंततः ।
तन्मात्रविषया युक्ता तन्मूलश्रुतिकल्पना ॥
अनुमानव्यवस्थानाद्देशादिनियमाद्वतः ।
तत्संयुक्तं प्रमाणं स्याद्यद्वाक्यमनुमीयते ॥ १९ ॥
अपि वा सर्वधर्मः स्यादित्यत्रोत्तरमुच्यते ।
तन्न्यायत्वाद्विधानस्य वाक्यमात्राधिकारिणः ॥

३१ स्मृतीनामाचाराणां चोपलभ्य मूलश्रुतिमनुमिमानानां कारणानुविधायिकार्यन्यायेना-वश्यमुपलभ्यमानकार्यानुरूपकारणानुमानैर्भवितव्यमिति भावनानामविशेषव्यवच्छिन्नयाग-दानहोमोपवासादिधात्वर्थविशेषस्वर्गादिफलकारकेतिकर्तव्यताविषयत्वादनुमातव्याः । एवं वर्णनीयेष्वपि देहेन्द्रियमनोद्वारव्यवहारेषु प्रतिषिध्यक्रियाकारकं नरकादिनिष्टफलप्रति-षेधकशब्दानुमानप्रसङ्गेऽपि भावना च योग्यत्वमात्रविषयत्वान्न दिग्देशादिव्यवच्छिन्नकर्तृवि-शेषाधिकारनियमप्रतिपादिनी । पुनः—

मीयते स्मृत्या । न च तस्याऽऽकृतिवचनता न्याय्या, न च व्यक्तिवचनता । न सर्वेषामनुष्ठातॄणां यदेकं सामान्यं, तस्य वाचकः कश्चिच्छब्दोऽस्ति, योऽनुमीयेत । तस्मात् सर्वधर्मता विधेर्न्याय्या । कुतः । पदार्थाः कर्तव्या इति प्रमाणमस्ति, व्यवस्थायां तु न किंचित् प्रमाणमस्ति ॥ १६ ॥

वैश्यो वैश्यस्तोमेनेत्यादिवद्विशेष्येत न चात्र दृश्यमानाचारेतुल्यवाचि किंचिदेकमनेकं संभावयितुं शक्यम् । कुतः—

सर्वं नामपदं तावद्व्यक्त्याकृतिनिबन्धनम् ।
यद्यदेवानुमीयेत नैकार्थमपि तद्भवेत् ॥

न तावत्प्राच्यत्वदाक्षिणात्यत्वादिजातिः प्रतीच्योदीच्यादिव्यक्तिव्यावृत्ता सर्वप्राच्यादिव्यक्तिष्वनुगता काचिदुपपद्यते । यद्वचनमुपपदं होलाकाद्यधिकारं विशिंष्यात् । यास्तु मनुष्यत्वब्राह्मणत्वादिजातयस्तेऽपि विद्यन्ते ताः सर्वदेशवासिव्यक्तिष्वविशिष्टा इति नाऽऽचारानुरूपविशेषणसमर्थत्वेन ज्ञायन्ते ।

व्यक्तिवाचि तु यन्नाम तदेकत्रैव वर्तते ।
देवदत्तादिवत्तेन न सिध्येत् कर्त्रनेकता ॥

न ह्यनन्तभेदाना प्राच्यादिपुरुषव्यक्तीना व्यस्तसमस्ताना संबन्धानुभवासंभवादेकमभिधानमवक्लृप्यते । एतेन गुणक्रियाजातिविशिष्टपुरुषव्यक्तिवचनत्वं प्रत्युक्तम् । न हि काश्चिदपि गुणक्रियाजातिव्यक्तयः प्रतिदेशव्यवस्थितपुरुषव्यक्त्युपलक्षणयोग्याः संभाव्यन्ते । सर्वत्र तत्रापि व्यावृत्त्यविशेषात् ।

व्यक्त्याकृतिविनिर्मुक्तः पदार्थो न च विद्यते ।
यमाश्रित्य प्रवृत्तं स्यादधिकारिविशेषणम् ॥

एतदेव प्रतिपादयन् भाष्यकार आह । शब्दमात्रपुरःसराधिकारप्रवृत्तविधानविशेषणं येनोपपदेनानुमीयमानेन क्रियते न तस्याऽऽकृतिवचनता न्याय्या न व्यक्तिवचनतेति । न ह्येते होलाकाद्याचाराः काञ्चिदाकृतिमनुविधीयन्ते न व्यक्तिं न हि यावत्सु पुरुषेष्वेतेऽवस्थितास्तावतामेकेनापि व्यपदेशेनोपसंग्रहः संभवति । केषांचित्तस्याऽऽकृतिवचनता न्याय्या न व्यक्तिवचनतेति ग्रन्थस्तेषामभिप्रायः । यथैव 'जातिं तु बादरायणोऽविशेषात्'[1] इति सूत्रकारः स्वर्गकामपदं यौगिकमप्युद्दिश्यमानपुंस्त्वविशेषणासंभवात्फलार्थिमात्रमनुष्यजातिविषयोपपत्तेश्च सामर्थ्याक्षिप्तजातिमात्राधिकारं वक्ष्यति ।

---

१ जै० सू० ६ । १ । ८ ।

तथेहापि फलार्थित्वकर्तृशक्त्यावबोधनात् ।
देशधर्मेषु सर्वेषु नरजातेरधिक्रिया ॥

कश्चित्पुनराख्यातशब्दार्थमुपवर्णयन्निमं ग्रन्थपाठं दूषयित्वाऽपूर्वमेव समर्थयमानः सूत्र-गतयावच्छ्रुतविधानशब्दजनितभ्रान्तिर्विधिभावनयोश्च भेदमपश्यन्नुभयस्वरूपनिरूपणपर्य-नुयोगत्रासान्नावार्थाधिकरणसिद्धान्तं विनाशयन्नेवमाह भाव इति वाऽनाख्येयः स्वधर्मे-णान्यदतः शब्दज्ञानात्कारकत्वादिति ।

तेन यः कश्चिदाख्यातप्रत्ययार्थतत्त्वं जिज्ञासमानः पृच्छति कः पुनरयं भावो भावना इति तं प्रत्यनन्यशब्दाख्येयत्वात् केवलप्रत्ययप्रयोगदर्शनाभावाच्च सर्वधात्वर्थसामान्य-वचनकरोतिपरलिङाद्युच्चारणमात्रेणैवोत्तरं दास्यते कुर्याच्छब्द इत्यर्थः, सर्वेश्चाऽऽख्याय-मानोऽर्थ आकृतिरूपेण वाऽऽख्यायेत व्यक्त्याकृतिगोचरातिक्रान्तिश्च किलाऽऽख्यात-शब्देनोपायरहितत्वादनाख्येयोऽस्यार्थ इति । तदेव किलानेनापि ग्रन्थेनोक्तं भाष्यकारेण । न तस्याऽऽकृतिवचनता न्याय्या न व्यक्तिवचनतेति । विधानशब्दो हि सूत्रे पूर्व-प्रकृतस्तमेव तच्छब्देन निर्दिश्य व्यक्त्याकृतिवचनत्वादपनयति ।

कुर्यादित्युच्यमानो हि करोमीति प्रपद्यते ।
न विधेर्भावना या वा सामान्यन्याचिरूपताम् ॥

तदिदमसंबद्धमेवानुपपत्तिकं च श्रुतिसामान्यमात्रेणान्यार्थमेव सचतुःशृङ्गादिमन्त्रवद्धा-न्यकाराभिप्रेतार्थत्यागेन स्वप्रज्ञाविलसितं प्रकाशयताऽन्यस्मिन्नेवार्थे योजितम् ।

देशाचारसर्वधर्मोपपत्तिविचारणार्थोऽयं ग्रन्थः ॥ यदि पूर्वकृतया व्याख्ययोपपदनिरा-करणविषयत्वेन वर्ण्यते तत एतत्सूत्रव्याख्यानेन संबध्यते यथोक्तन्यायमार्गेण । यदि तु तत्परित्यागेनाऽऽख्यातप्रत्ययार्थाभिमनाख्येयत्वापत्तिमेव व्यक्त्याकृतिरहितार्थत्वेन वर्ण्ये-ततोऽत्यन्तासंबन्धानुपयुज्यमाननिरुपपत्तिकार्थत्वेन हेय एव स्यात् ।

तथा हि—

यस्मादाख्यातशब्दस्य न व्यक्त्याकृतिवाचिता ।
तस्मात्तद्विहितं कर्म सर्वार्थमिति विस्मय. ॥

यदि नाम लिङादिप्रत्ययो भावनाया विधेर्वा व्यक्तिमाकृतिं वा वदेत्ततो होलाका-दयः प्रतिनियतदेशधर्माणो भवेयुर्यतस्तु व्यक्त्याकृतिविनिर्मुक्तोऽव्यपदेश्योऽर्थस्तस्मात्त-द्विहितधात्वर्थविषयः सर्वपुरुषधर्म इत्येवं नीयमानमसंबद्धोदाहरणे ज्येष्ठमेव स्यात् ।

अनाख्येयत्वमुक्त्वा च पर्यायैः स्वविकल्पितैः ।
अन्वाख्यानं कृतं तच्च पूर्वोक्तेन विरुध्यते ॥

अथ यदुक्तं यथा शिखाकल्पो व्यवतिष्ठत इति ॥

दर्शनाद्विनियोगः स्यात् ॥ १७ ॥

गोत्रव्यवस्थया शिखाकल्पव्यवस्थायां दर्शनं स्पष्टम् ॥ १७ ॥

लिङ्गाभावाच्च नित्यस्य ॥ १८ ॥

This Sutra is to be preceded by a few words

इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम्। कानि तानि पदानि। अथ किमर्थं न लिङ्गाद् व्यवस्था। [1]यथा शुक्लो होता इति। [2]नास्ति तन्नि

---

विध्युपदेशकर्तव्यताभावनाशब्दानां ह्यत्यन्ताभूतमेव बहुभाषित्वप्रख्यापनापरपर्यायत्वमध्यारोप्याऽऽचक्षाणेन स्वयमनाख्येयत्वमतीव ख्यापितम्। यद्यपि तावदाख्यातप्रत्यय. कर्तृशक्तितदाधारद्रव्यमात्रं वा वदेत्तथाऽपि ब्राह्मणो यजमान इति वदुपपदाधीनविशेषावस्थानत्वात्तदधीनजात्यादिवृत्तित्वमनुरुध्यमानो न स्वगतव्यक्त्याकृतिवचनत्वविचाराधीनाधिकारित्वनिर्णयः स्यात्किमुत यदा कर्त्रभिधाननिरपेक्षविधिर्भावनादिमात्रवाचित्वमेवावस्थाप्यते। यदि चैतावन्मात्रमेव सर्वधर्मत्वकारणं भवेत्ततो राजसूयाश्वमेधवैश्यस्तोमादीनामप्येवमात्मकाख्यातप्रत्ययविधेयत्वाविशेषात्सर्वधर्मत्वप्रसङ्ग। अथ तेषामनिर्दिश्यार्थप्रत्ययविहितानामपि राजाद्युपपदवशादसर्वधर्मत्वम्। एव तत्राप्यसर्वधर्मत्ववादिना तदेवोपन्यसनीयम्। सर्वधर्मत्ववादिना च निराकर्तव्यम्। तच्चाऽऽचारानुरूपव्यक्त्याकृतिवचनत्वासम्भवात्सामर्थ्यलभ्यमनुष्याकृतिमात्राधिकारप्रतिपत्तेर्वा निराकृतमेव। तद्यथा चोत्तरसूत्राणि लिङ्गाभावाच्च नित्यस्याऽऽख्या हि देशसंयोगादित्येवमादीन्युपपदोपन्यासप्रत्याख्यानार्थानि संगम्यन्ते। तस्मात्सर्वाधिकारन्यायत्वाद्विधानस्य व्यवस्थितदेशाचारगृह्यधर्मसूत्रनिबद्धधर्माणामपि सर्वधर्मत्वम् ॥ १६ ॥

यत्तु जातिकुलगोत्रधर्मवद्व्यवस्थितविध्यनुमानमिति।

तत्रैकशब्दवाच्यानां जात्यादीनां व्यवस्थया।
दर्शनाद्विनियोगः स्यात्पञ्चावत्तादिधर्मवत् ॥

यथैव पञ्चावत्तं तु भृगूणां वसिष्ठशुनकात्रिवध्र्यश्ववाध्र्यश्वसंकृतिराजन्यानां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषामित्यन्वयतो व्यतिरेकतश्चोपलक्षणसमत्वाद्व्यवस्थितविध्यवसानं तथैव प्रतिजातिगोत्रनियतत्रिशिखैकशिखादिकल्पव्यवस्थितविधिविशेषानुमानोपपत्तिरस्तीति दृष्टान्तदार्ष्टान्तिकवैषम्यम् ॥ १७ ॥

व्यक्त्याकृत्याभिधेयेऽर्थे प्रत्याख्याते विशेषणे।
लोहिताक्षादिचिह्नानामधुनाऽन्या निराक्रिया ॥

---

1 जै० सू० १।३।१९।

स्यमेषां लिङ्गं, यद्यथादर्शनमनुवर्तते । येऽपि श्यामा वृहन्तो लोहिताक्षास्तेऽपि न सर्वे आर्द्रानिचुकादीन् कुर्वते । अनेवंलिङ्गा अपिचानुतिष्ठन्ति । तस्मान्न व्यवस्था । शुक्लो होतेति मत्पक्षा श्रुतिः ॥ १८ ॥

जातिव्यक्तिवाच्युपपद्माभावेऽपि कर्तृगतसंस्थानवर्णादिगुणविशेषोपलक्षणेन कृष्णकेशाधानवदधिकारनियमः सेत्स्यतीत्याशङ्क्य निराक्रियते—

लिङ्गाभावाच्च नित्यस्य नास्ति कर्तृविशेषणम् ।
नियतेन हि लिङ्गेन नित्यः कर्तोपलक्ष्यते ॥
यच्चिह्नं दाक्षिणात्यानां लोहिताक्षादि कल्प्यते ।
अन्येषामपि तद्दृष्टं तदनाचरतामपि ॥
दृष्टमाचरणं चैतत्तच्चिह्नरहितेष्वपि ।
तस्माद्व्यवस्थितैश्चिह्नैर्नोधिकारो विशेष्यते ॥

यस्तु लिङ्गविशेषणं नित्यशब्दं मन्यते तस्योपसर्जनीभूतलिङ्गसापेक्षत्वादसमर्थसमासप्रसङ्गः । ननु लिङ्गशब्दस्य नित्यसापेक्षत्वात्स्वार्थासिद्धसंबन्ध्यन्तरत्वेन सामर्थ्यविघाताभावाद्भवितव्यमेवेह समासेन देवदत्तस्य गुरुकुलमिति यथा ।

नैतत्तुल्यमनेनेष्टमपेक्षान्तरसंगतेः ।
नित्यं नापेक्षते लिङ्गं देवदत्तं यथा गुरुः ॥

गुरुशब्दस्य हि शिष्यापेक्ष एवाऽऽत्मलाभ इति देवदत्तशब्दोपात्तशिष्यसंबन्धानतिरेकान्तर्णीतस्वार्थत्वात्राम्यधिकापेक्षाकृतसामर्थ्यप्रतिबन्धप्रसङ्गः ।

इह लिङ्गस्य लिङ्गत्वं गम्यते लिङ्ग्यपेक्षया ।
न च लिङ्ग्यभिधाय्येतन्नित्यस्येति पदं मतम् ॥

यद्यपि चैव गम्यगमकसंबन्धे सति लिङ्गशब्दः प्रवर्तते तथाऽपि गुरुशिष्यपितापुत्रादिसंबन्धवशास्य तदपेक्षप्रवृत्तिनिमित्तसंबन्धिशब्दत्वप्रसिद्धिः ।

लिङ्गी यौगिकशब्दत्वात्सदा लिङ्गमपेक्षते ।
लिङ्गशब्दस्तु धात्वर्थं मुक्त्वा नान्यदपेक्षते ॥

लिङ्ग्यतेऽनेनेति हि क्रियायोगनिमित्तो यद्यपि लिङ्गशब्द इति न संबन्धिशब्दत्वेनोच्यते तथाऽपि तु क्रियागतकारकान्तरापेक्षां न मुञ्चतीति कर्म 'लिङ्गिनो लिङ्गदर्शनम्' इत्यादौ भवेदप्यसामर्थ्यपरिहारः । नित्यत्वं तुलब्धस्वार्थलिङ्गापेक्षितं तद्धर्मतया षष्ठ्योपनीयत इति तत्संबन्धापेक्षायामपरिहार्योऽसामर्थ्यप्रसङ्गः । तस्मान्नित्यस्येति नियतचिह्नोपलक्ष्यकर्तृविशेषणमेवाधिकारविशेषणं वा नियतस्य कर्तुर्नित्यस्याधिकारस्य वा न प्रतिपादकं किंचिच्चिह्नमस्तीति न तदभिप्रायाभ्युपपद्विशेषितव्यवस्थितहोत्रकादिविधानोपपत्तिः ॥ १८ ॥

## आख्या हि देशसंयोगात् ॥ १९ ॥

अथ कस्मान्न समाख्यया नियमः । ये दाक्षिणात्या इति समाख्यातास्त आह्निनेबुकादीन् करिष्यन्ति य उदीच्या इति, समाख्यातास्त उद्वृषभयज्ञादीन्, ये प्राच्या इति ते होलाकादीन् । यथा राजा राजसूयेनेति । नैतदेवम् । देशसंयोगादाख्या भवति । दक्षिणदेशान्निर्गतः प्राक्षु वोदक्षु वाऽवस्थित आह्निनेबुकादीन् करोत्येव । उदीच्याश्च देशान्तर उद्वृषभयज्ञादीन्, प्राच्याश्च होलाकादीन् । अन्यदेशश्च देशान्तरगतो न नियोगतः परपदार्थान् करोति । तस्मान्न व्यवस्था । राजा राजसूयेनेति तु नियता जातिः ॥ १९ ॥

## न स्याद्देशान्तरेष्विति चेत् ॥ २० ॥

इति चेत् पश्यामि यदि देशसंयोगादाख्या भवेद्, देशान्तरस्थस्य

---

इदानीं तु यथाचारमत्यन्तमनुवर्तते ।
तत्प्राच्यादिसमाख्याभ्यमुपन्यस्त विशेषणम् ॥

सर्वे हि देशाचाराः प्राच्यदाक्षिणात्यादिसमाख्यातैः पुरुषैर्नियन्ते समाख्यावर्जितेषु च नोपलभ्यन्ते । तस्मात्समाख्याविशिष्टेति यनुमानात्तत्संयुक्तप्रमाणपक्ष एव ज्यायानिति । तत्र समाधिः ।

आख्या हि देशसंयोगाद्यस्मात्कर्तृषु वर्तते ।
आचाराणामतः प्राप्तो विधिर्देशविशेषणः ॥
देशश्च दिग्विशिष्टः स्याद्विधूप चानवस्थितम् ।
न च तद्देशसम्बद्धनाचारोऽनुवर्तते ॥
निर्गतेष्वपि दृष्टत्वात्तद्गतेष्वप्यदर्शनात् ।

समाख्यायामतो न देशादन्यन्निमित्तमस्ति तद्विशिष्टविधिविहिताश्चाऽऽचारा केवलमेव तद्देशसम्बन्धमनुवर्तेरन् । उभयथाऽपि तु व्यभिचारान्न देशनिमित्तसमाख्याविशिष्टविधानकल्पना युक्ते ॥ १९ ॥

अत्रात्यन्तवैशेषिकत्वात्समाख्यापक्षापयाति प्रत्यवतिष्ठमान आह—'न स्याद्देशान्तरेष्विति चेत्' इति ।

यदि देशनिमित्तत्वात्समाख्या क्षपिता त्वया ।
तत्समाख्यानिमित्तं तु वस्तुमन्या मया पुनः ॥
यदि देशनिमित्ता वै न स्याद्देशान्तरेष्वियम् ।

न भवेत् । भवति च देशान्तरस्थस्य, माथुर इत्यसंबद्धस्यापि मथुरया । तस्मान्न देशसंयोगादाख्या ॥ २० ॥

स्यायोगाख्या हि माथुरवत् ॥ २१ ॥

देशसंयोगनिमित्तायामप्याख्यायां देशान्निर्गतस्य तदाख्या न विरुद्धा । यत एषा योगाख्या योगमात्रापेक्षा, न भूतवर्तमानभविष्यत्संबन्धापेक्षा । यतो दृश्यते मथुरामभिप्रस्थितो माथुर इति, मथुरायां वसन् मथुराया निर्गतश्च । यस्य त्वतोऽन्यतमः संबन्धो नास्ति न स माथुरः । तस्मात् समाख्यया व्यवस्था ॥ २१ ॥

कर्मधर्मो वा प्रवणवत् ॥ २२ ॥

अथ कस्मान्न कर्माङ्गं देशः । यः कृष्णमृत्तिकाभागः स आह्निनिगुकादीनाम् । यथा 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति ॥ २२ ॥

तस्मात्किमपि जात्यादि ध्रुवमस्या निबन्धनम् ॥
अस्तु वा निर्निमित्तैव विशेक्ष्यति तथाऽपि तु ।
लभ्याचारनिमित्तानां किं निमित्तान्तरेण नः ॥

तस्मादनिमित्तया समाख्ययैवाधिकारविशेषसिद्धेर्न व्यभिचारिदेशनिमित्तत्वमस्याः कल्पयितव्यमित्युक्तेऽभिधीयते ॥ २० ॥

संबन्धैर्बहुभिर्देशसमाख्या हि प्रवर्तते ।
निवासभवजातत्वतदागमनहेतुभिः ॥

'सोऽस्य निवासः' तत्र भवस्तत्र जातस्ततः आगत इत्येवमादिनिमित्तपरित्यागेन न कदाचित्प्राच्यादिसमाख्या वर्तते । न चैषा देशसंयोगं व्यभिचरति । न चैनामाचारोऽनुवर्तते तन्निवासिनामपि केषांचिदनाचरणाच्चिरनिर्गतपुत्रपौत्रादीनां च देशान्तरेऽप्याचरणादिति न समाख्यया नियताधिकारसिद्धिः । यत्तु मथुरामभिप्रस्थितो माथुर इति भाष्यकारेणोक्तं 'तैत्तद्गच्छति पथि दूतयोरिति' वा दूतविषयं कल्पयितव्यमप्रत्ययितोक्तत्वाद्वोपेक्षितव्यम् । सर्वस्मिन्नपि प्रस्थिते तद्धितस्मरणाभावात् ॥ २१ ॥

इदानीं कर्तृविशेषणविशिष्टविध्यनुमानात्प्रतिहतः कर्माङ्गभूतप्राग्देशादिविध्यनुमानसंभवं मन्यमान आह—'कर्मधर्मो वा प्रवणवत्' इति ।

प्रागुदक्प्रवणो यद्वत्प्राचीनप्रवणोऽपि वा ।
देशो भवति कर्माङ्गं प्राग्देशादिस्तथा भवेत् ॥ इति ॥ २२ ॥

१ पा० सू० (४—३—८९)। २ पा० सू० (४—३—५३)। ३ पा० सू० (४—३—३५)। ४ पा० सू० (४—३—७४)। ५ पा० सू० ४—३—८५।

तुल्यं तु कर्तृधर्मेण ॥ २३ ॥

यथा कर्तर्यव्यवस्थितं लिङ्गं श्यामादि न पदार्थः संवादमुपैति तद्वद्देशलिङ्गमप्यवस्थितम्। कृष्णमृत्तिकाप्रायेऽप्यन्ये न कुर्वन्ति तथाऽन्यलिङ्गेऽपि कुर्वन्ति। तस्मान्न देशतो व्यवस्था। प्राचीनप्रवणं तु श्रुत्या नियतं वैश्वदेवस्य ॥ २३ ॥

[८] प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २४ ॥पू०

गौर्गावी गोणी गोपोतलिका इत्येवमादयः शब्दा उदाहरणम्[1]। गोशब्दो यथा सास्नादिमति प्रमाणं, किं तथा गाव्यादयोऽप्युत नेति संदेहः। किमनेकः शब्दोऽविच्छिन्नपारम्पर्योऽर्थाभिधायी, इतरेऽपभ्रंशाः,

---

'तुल्य तु कर्तृधर्मेण' तच्चिह्नमनवस्थितम्।
दिक्कृष्णमृत्तिकाप्रायप्रभृतिर्व्यभिचारतः ॥
प्राग्देशो यो हि केषाचित्सोऽन्येषां दक्षिणापथः।
तथोदक्प्रत्यगित्येवं नैकरूप्येण गम्यते ॥
मृत्तिकाद्यपि यच्चिह्नं तत्रान्यत्र च तत्समम्।
होलाकादिविधिस्तस्मात्र तेनापि विशेष्यते ॥
पुरपापेक्षयाऽऽचारस्तस्मिन्नपि न दृश्यते।
अन्यस्मिन्नपि दृष्टश्च तस्माद्देशोऽप्यकारणमिति ॥ २३ ॥
( इति होलाकाधिकरणम् ॥ ७ ॥ )

---

एकस्मात्पदात्प्रयोगनानात्वदर्शनादनेकार्थप्रतिभाने सति विकल्पदोषभयादनेकादृष्टशक्तिकल्पनाप्रसङ्गाच्च गौणमुख्यविभागमाश्रित्य व्यवस्थितशास्त्रप्रयोगबलेनाव्यवस्थिते लौकिकप्रयोगबाधाद् व्यवहारादिशब्दानामर्थनिर्णय प्रतिपादितः। एवं पुनरेकस्मिन् गवाद्यर्थे गोगाव्यादयो बहवः शब्दाः प्रयुज्यन्ते तत्र वृद्धव्यवहारावगतप्रतिशब्दसमवायिवाचकशक्तिभेदोपपत्तेः शास्त्रस्य सर्वशब्दप्रयोगाणां च लौकिकशब्दैरविरोधात्पदपूर्वकत्वाच्च वाक्यात्मकशास्त्रव्यापारसिद्धेर्न पदगतसाध्वसाधुत्वप्रतिपादने व्यापारो भवति, इतरेतराश्रयत्वप्रसङ्गात्। तथा हि—

लोकप्रसिद्धशब्दार्थवशं शास्त्रं प्रवर्तते।
अतो न लौकिकेभ्यस्मात्सा वसाधुत्वनिर्णयः ॥

वाक्यार्थेषु हि श्रुतिस्मृत्याचारविरोधदर्शनाद्बलाबलमानुपूर्व्येणावधृतमिह तु न विपरीतक्रमत्वात्।

1 गौरित्यस्य शब्दस्य गावी, गोणी, गोता, गोपोतलिकेत्येवमादयोऽपभ्रंशा महाभाष्ये पस्पशाह्निके निर्दिष्टाः १—१—१।

यत सर्वेऽनादयः । सर्वे इति ब्रूमः । कुतः । प्रत्ययात् । प्रतीयते हि गाव्यादिभ्यः सास्नादिमानर्थः । तस्मादितो वर्षशतेऽप्यस्यार्थस्य संबन्ध आसीदेव, ततः परेण, ततश्च परतरेणेत्यनादिता । कर्ता चास्य संबन्धस्य नास्तीति व्यवस्थितमेव । तस्मात्सर्वे साधवः सर्वैर्भोपितव्यम् । सर्वे हि साधयन्त्यर्थम् । यथा हस्तः करः पाणिरिति । अर्थाय ह्येत उच्चार्यन्ते नादृष्टाय न ह्येपामुच्चारणे शास्त्रमस्ति । तस्मान्न व्यथाति- प्रेत कश्चिदेक एव साधुरितरेऽसाधव इति ॥ २४ ॥

लोकादेवाधिगन्तव्या शब्दानां साध्वसाधुता ।
वाचकावाचकत्वेन सा च नित्यं व्यवस्थिता ॥
ध्वनिमात्राण्यसाधूनि वर्णा वा केवलात्मनाम् ।
संघातोऽर्थानपेक्षो वा मातृकाद्युपदेशवत् ॥

तेन भेरीशङ्खादिशब्दा मकारककारादयः प्रत्येकं तद्वर्गा वाऽनर्थकत्वादपशब्दा इति लोकव्यवहारादेवार्थं न साधयन्तीत्यसाधवो गम्यन्ते । गाव्यादयः पुनर्गवादिवदेव साधयन्त्यर्थं तेभ्योऽपि वा शीघ्रतरं प्रसिद्धतरत्वादर्थप्रतीतिमुत्पादयन्तीति सत्यप्येक- विषयानेकशब्दत्वे हस्तकरपाण्यादिशब्दवदर्थसाधनत्वात्साधुत्वेनावधार्यन्ते ।

ततश्चावाचकत्वेन यदसाधुत्वमुच्यते ।
तस्य लोकविरुद्धत्वान्न ग्राह्यत्वं प्रतीयते ॥
अदृष्टविषया चेत्स्यादेतेषा साध्वसाधुता ।
वेदवाक्यैरनिर्दिष्टा न साऽस्त्यन्यप्रमाणिका ॥

प्रत्यक्षेण तावदुभयत्राप्यविशेषेण वर्णाः शुद्धाः प्रतीयन्ते । न तद्गते तत्समुदायगते वा साधुत्वासाधुत्वे । न चाऽननुभूतसंबन्धादनुमीयेते । तन्निराकरणाच्च तत्पूर्वकपुरुषवचननिराक्रियाऽपि सिद्धा । वेदवचनं पुनर्वस्तुस्वरूपतद्गतगुणदोषान्वाख्यानपरं विधिप्रतिषेधानपेक्षं नैव किंचित्प्रमाणत्वेन संभवति । साधुत्वासाधुत्वयोरननुष्ठानात्मकत्वाद्विधिप्रतिषेधविषयत्वम् । अभिधाभावनाकरणभूतयोर्विधेयत्वप्रतिषेध्यत्वसंभव इति चेन्न। प्रतिशब्दमनन्तविधिप्रतिषेधवाक्यानुमानकल्पनानुपपत्तेः ।

यो हि प्रतिपदं पाठं साधूनां नाध्यवस्यति ।
विधिवाक्यानि तावन्ति स कथं प्रतिपत्स्यते ॥
अपभ्रंशाश्च शब्देभ्यो भूयस्त्वेन व्यवस्थिताः ।
न कल्लादिवत्तेषा प्रतिषेध्यत्वसंभवः ॥

व्रीह्यादीनि हि कलञ्जादीनि च नियतजातिगुणादिरूपेण परिज्ञायमानपरिमाणत्वा-

१ जै० सू० १-१-५ इत्यत्र ।

तुल्यं तु कर्तृधर्मेण ॥ २३ ॥

यथा कर्तर्यव्यवस्थितं लिङ्गं श्यामादि न पदार्थैः संवादमुपैति तद्व देशलिङ्गमप्यवस्थितम् । कृष्णमृत्तिकाप्रायेऽप्यन्ये न कुर्वन्ति तथाऽन्य लिङ्गेऽपि कुर्वन्ति । तस्मान्न देशतो व्यवस्था । प्राचीनप्रवणं तु श्रुत्या नियतं वैश्वदेवस्य ॥ २३ ॥

[८] प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २४ ॥पू०

गौर्गावी गोणी गोपोतलिका इत्येवमादयः शब्दा उदाहरणम् । गोशब्दो यथा सास्नादिमति प्रमाणं, किं तथा गाव्यादयोऽप्युत नेति संदेहः । किमेकः शब्दोऽविच्छिन्नपारम्पर्योऽर्थाभिधायी, इतरेऽपभ्रंशाः,

'तुल्यं तु कर्तृधर्मेण' तच्चिह्नमनवस्थितम् ।
दिक्कृष्णमृत्तिकाप्रायप्रभृतिव्यभिचारतः ॥
प्राग्देशो यो हि केषांचित्सोऽन्येषां दक्षिणापथः ।
तयोदक्प्रत्यगित्येवं नैकरूप्येण गम्यते ॥
मृत्तिकायापि यच्चिह्नं तत्रान्यत्र च तत्समम् ।
होलाकादिविधिस्तस्मान्न तेनापि विशेष्यते ॥
पुरुषापेक्षयाऽऽचारस्तस्मिन्नपि न दृश्यते ।
अन्यस्मिन्नपि दृष्टश्च तस्माद्देशोऽप्यकारणमिति ॥ २३ ॥
( इति होलाकाधिकरणम् ॥ ७ ॥ )

एकस्मात्पदात्प्रयोगनानात्वदर्शनादनेकार्थप्रतिभाने सति विकल्पदोषभयादनेकादृष्टशक्तिकल्पनाप्रसङ्गाच्च गौणमुख्यविभागमाश्रित्य व्यवस्थितशास्त्रप्रयोगबलेनाव्यवस्थिते लौकिकप्रयोगबाधाद्व्यवहारादिशब्दानामर्थनिर्णयः प्रतिपादितः । एवं पुनरेकस्मिन् गवादावर्थे गोगाव्यादयो बहवः शब्दाः प्रयुज्यन्ते तत्र वृद्धव्यवहारावगतप्रतिशब्दसमवायिवाचकशक्तिभेदोपपत्तेः शास्त्राभ्यस्तवैशब्दप्रयोगाणां च लौकिकशब्दैरविरोधात्पदपूर्वकत्वाच्च वाक्यात्मकशास्त्रव्यापारसिद्धेर्न पदगतसाध्वसाधुत्वप्रतिपादने व्यापारो भवति, इतरेतराश्रयत्वप्रसङ्गात् । तथा हि—

लोकप्रसिद्धशब्दार्थवशं शास्त्रं प्रवर्तते ।
अतो न लौकिकेष्वस्मात्साध्वसाधुत्वनिर्णयः ॥

वाक्यार्थेषु हि श्रुतिस्मृत्याचारविरोधदर्शनाद्बलाबलमानुपूर्व्येणावधृतमिह तु न विपरीतक्रमत्वात् ।

१ गौरित्यस्य शब्दस्य गावी गोणी, गोता, गोपोतलिकेत्येवमादयोऽपभ्रंशा महाभाष्ये पस्पशाह्निके निर्दिष्टाः १—१—१ ।

उत सर्वेऽनादयः । सर्व इति ब्रूमः । कुतः । प्रत्ययात् । प्रतीयते हि गाव्यादिभ्यः सास्नादिमानर्थः । तस्मादितो वर्षशतेऽप्यस्यार्थस्य संबन्ध आसीदेव, ततः परेण, ततश्च परतरेणेत्यनादिता। कर्ता चास्य संबन्धस्य नास्तीति व्यवस्थितमेव । तस्मात्सर्वे साधवः सर्वैर्भावितव्यम् । सर्वे हि साधयन्त्यर्थम् । यथा हस्तः करः पाणिरिति । अर्थाय ह्येत उच्चार्यन्ते नादृष्टाय न ह्येषामुच्चारणे शास्त्रमस्ति । तस्मान्न व्यवतिष्ठेत कश्चिदेक एव साधुरितरेऽसाधव इति ॥ २४ ॥

---

लोकादेवाविगन्तव्या शब्दानां साध्वसाधुता ।
वाचकावाचकत्वेन सा च नित्यं व्यवस्थिता ॥
ध्वनिमात्राण्यसाधूनि वर्णा वा केवलात्मनाम् ।
संघातोऽर्थानपेक्षो वा मातृकाद्युपदेशवत् ॥

तेन भेरीशङ्खादिशब्दा गकारककारादयः प्रत्येकं तद्वर्गो वाऽनर्थकत्वादपशब्दा इति लोकव्यवहारादेवार्थं न साधयन्तीत्यसाधवो गम्यन्ते । गाव्यादयः पुनर्गवादिवदेव साधयन्त्यर्थं तेभ्योऽपि वा शीघ्रतरं प्रसिद्धतरत्वादर्थप्रतीतिमुत्पादयन्तीति सत्यप्येकविषयानेकशब्दत्वे हस्तकरपाण्यादिशब्दवदर्थसाधनत्वात्साधुत्वेनावधार्यन्ते ।

ततश्चावाचकत्वेन यद्यसाधुत्वमुच्यते ।
तस्य लोकविरुद्धत्वान्न ग्राह्यत्वं प्रतीयते ॥
अदृष्टविषया चेत्स्यादेतेषां साध्वसाधुता ।
वेदवाक्यैरनिर्दिष्टा न साऽस्त्यन्यप्रमाणिका ॥

प्रत्यक्षेण तावदुभयत्राप्यविशेषेण वर्णाः शुद्धाः प्रतीयन्ते । न तद्गते तत्समुदायगते वा साधुत्वासाधुत्वे । न चाऽननुभूतसंबन्धादनुमीयेते । तन्निराकरणाच्च तत्पूर्वकपुरुषवचननिराक्रियाऽपि सिद्धा । वेदवचनं पुनर्वस्तुस्वरूपतद्गतगुणदोषान्वाख्यानपरं विधिप्रतिषेधावदेशे नैव किंचित्प्रकाशत्वेन संभवति । साधुत्वासाधुत्वयोरननुष्ठानात्मकत्वाद्विधिप्रतिषेधविषयत्वम् । अभिधानभावनाकरणभूतयोर्विधेयत्वप्रतिषेध्यत्वसंभव इति चेन्न। प्रतिशब्दमनन्तविधिप्रतिषेधवाक्यानुमानकल्पनानुपपत्तेः ।

यो हि प्रतिपदं पाठं साधूनां नाध्यवस्यति ।
विधिवाक्यानि तावन्ति स कथं प्रतिपत्स्यते ॥
अपशब्दाश्च शब्देभ्यो भूयस्त्वेन व्यवस्थिताः ।
न कलञ्जादिवत्तेषां प्रतिषेध्यत्वसंभवः ॥

गौंद्यादीनि हि कलञ्जादीनि च नियतजातिगुणादिरूपेण परिज्ञायमानपरिमाणत्वा-

---

१ जै० सू० १-१-५ इत्यत्र ।

द्विधिप्रतिषेधगोचरीभवन्ति न तु गवादिगाव्यादीनां जातिरूपेण व्यक्तिरूपेण वा विधिप्रतिषेधावुपपद्येते । न तावत्साधुत्वमाधुत्वे जातिगुणाद्यात्मकसामान्यरूपेण सर्वव्यक्त्यनुगते विज्ञायेते यदालम्बनौ द्वावेव विधिप्रतिषेधावनुमीयेयातां साधुभिर्भाषेत नासाधुभिरिति ।

अविभक्ता हि शब्दत्वजातिः शब्दापशब्दयोः ।
न त्ववान्तरसामान्ये केचिद्वर्गद्वयस्थिते ॥

तेन यद्येकैका व्यक्तिर्विधीयेत प्रतिषेध्येत वा ततो यावत्पदं वाक्यान्यनुमिमानस्त्रैलोक्यपूरणादप्यधिकानि स्मृतिमूलभूतानि वेदवाक्यान्यनुमिमीते । न च तावता कोटिशतभागोऽप्याम्नातुं शक्यते । न चानाम्नातस्य स्मृतिमूलत्वम् । नित्यानुमेयश्रुतिमूलप्रतिषेधात् । न च वाचकत्वावाचकत्वनिबन्धनौ विधिप्रतिषेधौ संभवतः । सर्वेषां वाचकत्वात् ।

वाचकैर्भाषितव्यं हि प्राप्तत्वान्न विधीयते ।
अवाचकनिषेधश्च नाप्राप्तेरवकल्पते ॥

न क्षुद्रकं पिबेदग्निं न पिबेदिति च विधिप्रतिषेधौ संभवतः । अवश्यं च व्याकरणस्मृतिमूलभूतसाधुविधिश्रुतिरसाधुप्रतिषेधश्रुतिरुभयं वा संयोगपृथक्त्वात् कल्पनीयम् । त्रिष्वपि च पक्षेषु साध्वनुशासनमात्रमेव सौकर्यादाश्रितम् । यदि ह्यपशब्दप्रतिषेधमूलं व्याकरणं ततस्तेषां बहुत्वादव्यवस्थितरूपत्वाच्च न स्वरूपमवगन्तुं शक्यत इति 'पञ्च पञ्चनखा भक्ष्या' इति स्मृतिन्यायेनानुगतविपरीतभाषणप्रतिषेधोऽर्थापत्तिसिद्धः स्मर्यते । साधुविधिपक्षे तु त एव स्मर्तव्याः । उभयपक्षे तु तदनुगमादेवेतरसिद्धेः प्रतिषेधविषयज्ञानोपपत्तिः । स एष व्याकरणस्य पक्षत्रयेऽप्येकानुगमनिबन्धनत्वात्कथंचित्संक्षेपोऽवकल्पते । ननु प्रतिशब्दं विधिप्रतिषेधावनवच्छिन्नौ । अनन्तत्वात्पाठासंभवादिष्टासंभवदर्शनार्थमेव होलाकाधिकरणेऽभिहितम् । न तस्याऽऽद्यन्तवत्तया व्याख्या न व्यक्तिवचनतेति । तस्मादसंभवन्मूलत्वादपस्मृतिः ।

अथ प्राप्तश्च योऽर्थः स्यान्न स शास्त्रस्य गोचरः ।
सिद्धः शब्दप्रयोगश्च लोकादेवार्थलक्षण ॥

अथार्थलक्षणत्वेऽपि शास्त्रेण धर्मार्थप्रयोगनियमात्प्रयोगादेवातिशास्त्रत्वं स्यादिति । तदनुपपन्नम् । नियमविपर्यासंभवात् ।

यस्य ह्यनियता प्राप्तिस्तच्छास्त्रेण नियम्यते ।
नित्यप्राप्तप्रयोगस्तु न शब्दो नियमास्पदम् ॥

---

१ पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव । शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः । वा० रा० कि० का० सर्ग १७ । श्लो० ३७ ।

यस्याप्यत्यन्तमप्राप्तिस्ततोऽन्यो न नियम्यते।
तव चात्यन्तमप्राप्तिर्गाव्यादेः प्राप्तता मम॥

तेन पक्षत्रयेऽपि नियमानुपपत्तिः। कीदृशश्चात्र नियमः कल्प्येत। किं साधुभिरेव भाषितव्यमुत साधुभिर्भाषितव्यमेवेति।

यदि साधुभिरेवेति नासाधोरप्रसङ्गतः।
नियतं भाषितव्यं चेन्मौने दोषः प्रसज्यते॥

यदि लोकार्थाः साध्वसाधवो विकल्पेन प्राप्नुयुस्ततः साधुनियमावकाशः स्यात्। त्वन्मते तु पुनः—

अत्यन्तावाचकत्वात्तु नैवासाधुः प्रसज्यते।
यन्निवृत्तिफलः साधोर्नियमोऽत्रार्थवान्भवेत्॥

अथ प्रमादाशक्तिकृतप्रसङ्गनिवृत्तिर्नियमं प्रयुञ्जीत। तदसत्।

न हि शास्त्रशतेनापि प्रमादाशक्तिकारितात्।
निवर्त्यन्ते प्रयोक्तारः प्रयोगादिति दृश्यते॥

दृष्टोऽपशब्दानामर्थाभिधाने प्रयोग इति चेत्। उच्यते—

अन्योऽप्यक्षिनिकोचादेः प्रयोगोऽर्थेषु दृश्यते।
तन्निवृत्तिफलः कश्चिन्नियमो न च दृश्यते॥

न ■ नियमाना प्रतिपक्षनिवृत्तिः प्रयोजनम्। परिसंख्याप्रयोजनत्वात्। ■ चायं परिसंख्याविषयो युज्यते। युगपत्प्राप्त्यभावात्।

न वा दृष्टार्थतैवास्य प्रयोगस्योपपद्यते।
न हि दृष्टनिराकाङ्क्षाददृष्टमपि गम्यते॥

न हि तादृशेऽदृष्टकल्पनायामर्थापत्तिः प्रभवति। परार्थत्वाच्च फलश्रुतेरर्थवादत्वम्। न चासति फले शक्यमपूर्वं कल्पयितुम्।

न चेदं नियमापूर्वमाश्रितं क्वेति गम्यते।
शब्दार्थश्रोतृतद्बुद्धिवक्तृच्चारणगोचरे॥

शब्दस्य तावदत्यन्तपरार्थदृष्टार्थत्वान्नापूर्वेण कश्चिदुपकारः। सत्यपि चाभिधानकर्मत्वेनार्थस्य प्राधान्ये दृष्टार्थेषु लोकव्यवहारेषु विनाऽप्यपूर्वेणाङ्गभावादपूर्वोपकारानुपयोगः। श्रोतुः पुनर्नियमविधिसंस्पर्शानन्तर्गतत्वादेवासंस्कार्यत्वम्। बुद्ध्योश्च क्षणिकत्वान्न कालान्तरावस्थाय्यपूर्वाधारत्वोपपत्तिः।

यथा ■ भाषणे सर्वो गुणभूतो विधीयते।
न तस्य नियमापूर्वसंस्कार्यत्वनिरूपणम्॥
न प्रधानपदं चात्र विद्यते स्वर्गकामवत्।

शास्त्रपूर्वप्रयोगेऽभ्युदय इति वार्तिककारेणोक्तम्। भाष्यकार आह–अथ वा पुनरस्तु ज्ञाने धर्म इति। न चैवमानियमेन धर्मत्वावधारणं युक्तम्।

संबद्धयोश्च धर्मत्वं यदैकस्यावधार्यते।
तदेतरस्तदर्थत्वान्न धर्मत्वेन गम्यते॥

तदिह यदि तावज्ज्ञानमेव धर्मत्वेनावधारितं ततो लोकप्रसिद्धस्यैव प्रयोगस्य ज्ञानात्तु निष्पादितत्वेन सत्यामभ्युपकारनिर्वृत्तौ वाजिनादिवत्प्रयोजकत्वाभावः। शास्त्रपूर्वकप्रयोगपक्षे तु ज्ञानस्य तदङ्गत्वेन निराकाङ्क्षभूतत्वात्। असत्यां प्रयोजनान्तराकाङ्क्षायां यद्यपि काचित्फले श्रुतिर्भवेत्साऽपि 'द्रव्यसंस्कारकर्म' इत्यनेन न्यायेनार्थवादतया ज्ञायते। न हि समानाध्वनोः परस्मिन्फलवति ज्ञाते पूर्वस्यापि फलवत्ता ज्ञायत इति वर्णितमेतत्। "योऽश्वमेधेन यजते य उ चैनमेवं वेद" इति। किं च—

आदिमत्त्वाच्च धर्मत्वं नैव ज्ञातप्रयोगयोः।
न हि व्याकरणापेक्षा वर्तते वैदिकी श्रुतिः॥

यत्राम ज्ञानं नित्येन वेदेनैव क्रियते तत्र तत्पूर्वकप्रयोगविधानं फलायोपपद्यते। व्याकरणज्ञानं तु पौरुषेयं ग्रन्थाधीनत्वान्मन्त्रार्थवादगतानित्यसंयोगपरिहारन्यायेनानादिवेदविषयत्वेन नावधार्यते।

न च व्याकरणं नित्यं कथंचिदवगम्यते।
कर्तृस्मृतिग्रादिम्ना हि नित्यपक्षनिराक्रिया॥

अथापि व्यवहारनित्यतान्यायेन पौरुषेयव्याकरणपरम्पराऽनादिः कल्प्येत तथाऽपि उक्तं तु शब्दपूर्वत्वम् इत्यस्य न्यायस्य स्थितत्वात्। अनेकपुरुषकृतमपि तद्व्याकरणं वेदालम्बनत्वं न प्रतिपद्यते।

न च व्याकरणत्वाख्या जातिः काचिद्व्यवस्थिता।
अनित्ये वाक्यसंघाते सा जातिः क्वावतिष्ठताम्॥

अथ 'लक्ष्यलक्षणे व्याकरणम्' इति सत्यपि लक्षणांशाकृत्रिमत्वे लक्ष्यांशेन नित्येन नित्यो विधिरुपपत्स्यत इति। तदनुपपन्नम्। कुतः—

अत्यन्तभिन्नरूपत्वाल्लक्ष्याणां लक्षणादिना।
नैकमालम्बनं किंचिद्विधेरस्तीत्युदाहृतम्॥

ननु वेद एव व्याकरणनित्यत्वं दृश्यते। यथाऽऽह–तस्मादेषा व्याकृता वागुद्यत इति। नैतदस्ति।

१ जै॰ सू॰ (४—३—१)। २ जै॰ सू॰ (१—१—८) ३ म॰ भा॰ पस्पशाह्निके। ४ तै॰ सं॰ (६—४—७)।

चिकित्सा गर्हा वा दृश्यते । न चाऽऽहिताग्निसहस्रेऽप्येकस्त्वदभिमतसाधुशब्दैरेव व्यवहरमाणो दृश्यते ।

कल्पसूत्रस्मृतिग्रन्थमीमांसागृह्यकारिणः ।
शिष्टा दृष्टाः प्रयुञ्जाना अपशब्दाननेकशः ॥

'समानमितरच्छयेनेन' इत्यादितकारान्तप्रथमान्तनपुंसकप्रयोगेषु मशकेन तत्र तत्र प्रयुक्तं, "समानमितरं ज्योतिष्टोमेन" "समानमितरं गवा ऐकाहिकेन" इति सूत्रकारेणाप्यभिहितम् । "अहीनि बर्हिष्यवमानैः सदसि स्तुवीरन्" इति कर्त्रभिप्रायक्रियाफलनिर्देशेऽप्यूत्विक्कर्तृके स्तवने "यजन्ति याजका" इतिवत्परस्मैपदे प्रयोक्तव्ये व्याकरणमनपेक्ष्याऽऽत्मनेपदं प्रयुक्तम् । तथाऽऽश्वलायनेन "प्रत्यासित्वा प्रायश्चित्तं जुहुयुः" इति समासेऽपि ल्यप्न प्रयुक्तः । आज्येनाशिणी आज्य इत्यसमासेऽपि प्रयुक्तः । तथा शिक्षायां नारदेन "प्रत्यूषे ब्रह्म चिन्तयेत्" इति गाव्यादिशब्दतुल्य एव प्रयुक्तः । तथा मनुनाऽपि "ज्ञातारः सन्ति मेत्युक्त्वा" इत्यत्र सन्ति म इत्युक्त्वेति वक्तव्ये व्याकरणमनपेक्ष्यैव संहिता कृता । तथा मीमांसायामपि गव्यस्य च सदादिषु' इति गोर्विकारावयवविषयसाधुप्रयोगयोग्यः शब्दोऽन्यत्रैव गवामयने प्रयुक्तः। तथा 'द्यावोस्तथेति चेत्' इति द्यावापृथिव्योरिति वक्तव्ये लक्षणहीनमेव बहु प्रयुक्तम्। तथा गृह्यकारेण मूर्धन्यभिघ्राणमिति वक्तव्ये मूर्धन्यभिजिघ्राणमित्यविषये जिघ्रादेशः प्रयुक्तः । कात्स्न्र्येऽपि व्याकरणस्य निरुक्ते हीनलक्षणाः प्रयोगा बहवो यद्ब्राह्मणो ब्रवणादिति । संवत्सरं शशयाना इत्येतन्मन्त्रगतमण्डूकविषयब्राह्मणशब्दनिर्वचने क्रियमाणे वचनशीलत्वनिमित्ततां दर्शयता ब्रुवो वचिरिति वच्यादेशमकृत्वैव ब्रवणादिति प्रयुक्तम् ।

अन्तो नास्त्यपशब्दानामितिहासपुराणयोः ।
तयोर्माण्यादिरूपाणां स्मृतिशिक्षादिकारिणाम् ॥

युगपद्भुमाभ्यां दन्ताभ्यां यः प्रहारः ॥ उपाभ्य इति सर्वैः पाल्कार्यराजपुत्रादिभिर्व्याकरणानपेक्षमेव प्रयुक्तम् ।

वेदेष्वपि प्रयोगास्ते भूयांसोऽप्येतृसंमताः ।
सामान्यं छान्दसं वाऽपि येषां नास्त्येव लक्षणम् ॥

न हि ते सुप्तिङुपग्रहादिव्यत्ययेन नापि कतिपयाधिकारदृष्टेन 'बहुलं छन्दसि' इत्यनेन सिध्यन्ति । तद्यथा मध्यं आपस्य तिष्ठति । नीचीनवारं वरुणः कबन्धमिति ।

न ह्यपामित्यस्य नित्यस्त्रीलिङ्गबहुवचनविषयत्वज्ञनान्तप्रातिपदिकपरषष्ठ्याऽन्वाख्याना-द्यापस्येत्येतद्रूपं लक्षणानुगतं दृश्यते । नापि द्वारशब्दस्य स्थाने लाटभाषातोऽन्यत्र बारशब्दः संभवति । तेनानारम्य एवाय विषयव्याप्त्यसंभवात् ।

शब्दानुगमरूपोऽर्थो यत्र व्याकरणं कृतम् ।
येऽपि व्याकरणस्यैव परे पारे प्रतिष्ठिताः ॥
सुतरां तेऽपि गाव्यादितुल्यानेव प्रयुञ्जते ।
सूत्रवार्तिकभाष्येषु दृश्यते चापशब्दनम् ॥
अथारूढा कथं चाइवान्विस्मरेयुः सचेतनाः ।

सूत्रे तावत् 'जनिकर्तुः प्रकृतिः' इत्यत्र हि द्वावपशब्दौ जनिशब्देन हि इक्श्तिपौ धातु-निर्देश इत्यनेन लक्षणेनान्वितो धातुरेव निर्दिश्यते । न च तस्य कर्तुः प्रकृतेरपादानसंज्ञे-ष्यते । जायमानस्य पुनरर्थस्य जनिशब्दो वाचकतया नैव लक्षणेनानुगतः । तेनायं दरिद्र इवादवशब्दो जनिभाववाचित्वात्तदर्थं प्रत्ययसाधुरेव विज्ञायते । तथा । 'तृजकाभ्यां कर्तरि' इति प्रतिषिद्धषष्ठीसमासप्रयोगाद्व्याकरणफलपरित्यागः । एवं तत्प्रयोजक इति प्रतिषिद्ध एव समासः । तथा वार्तिकेऽपि धर्मेर्हलग्रहणस्य जातिवाचकत्वात्सि-द्धमिति । तथा 'आन्यभाव्यं तु कालशब्दव्यवायात्' इति । अत्र क्लेशेन समासं कल्प-यित्वा तत्र समाससंज्ञया गुणवचनसंज्ञाया बाधितायां 'गुणवचनब्राह्मणादिभ्यः' इति लक्षणेनासंस्पृष्ट एव ष्यञ्प्रयुक्तः । भाष्येऽप्यविरविकन्यायेनेति द्वंद्वगर्भे तत्पुरुषे पूर्व-समासपूर्वपदस्याथा सुपः 'सुपो धातुप्रातिपदिकयोः' इति प्रत्यक्षोपदिष्टोऽपि लुङ्न कृतः । तथाऽन्यथा कृत्वा चोदितमन्यथा कृत्वा परिहार इति । 'अन्यथैवं कथम्' इत्य-न्वाख्यातसाधुत्वोऽपि णमुल् न प्रयुक्तः । न चैषा निपातनैः साधुत्वसिद्धिः । कुतः —

येषामनुगमो नास्ति ते सिध्येयुर्निपातनैः ।
अन्यथानुगतानां तु प्रयोगं बाधते स्मृतिः ॥
स्मृत्याचारविरोधे हि स्मृतिरेव बलीयसी ।
प्रत्यक्षप्रतिषेधाच्च जनिकर्त्रादिसाधुता ॥

प्रत्यक्षस्मृतिविरोधे तु लक्षणरहितस्यापि प्रयोगादेव शिष्टाचारभूतादवयवानुगमस्मृति-मनुमाय निपातनात्साधुत्वसिद्धिः । न च लक्षणशब्दानां स्वात्मनि क्रियाविरोधादात्मा-र्थत्वाभावाद्वा लक्षणानुगतिरनादरणीया ।

प्रदेशान्तरसिद्धेन लक्षणेनानुगम्यते ।
देशान्तरस्थितः शब्दो लक्ष्यभूतोऽन्यशब्दवत् ॥

१ पा० सू० (१-४-३०) । २ पा० सू० (२-२-१५) । ३ पा० सू० १-३-५५) । ४ पा० सू० (५-१-१-२४) । ५ पा० सू० (२-४-७१) । ६ पा० सू० (३-४-२७) ।

तथा च 'कुत्वं कस्मान्न भवति वृद्धिः' इति । कोऽयं शब्द इत्यादिषु लक्षणानुगमादरः सर्वत्राऽऽश्रितः । यदि च लक्षणशब्देषु लक्षणं न प्रवर्तेत, ततः सर्वं व्याकरणमपशब्दैरेव निबद्धं स्यात् । अर्थवैशसदर्शनात्तु प्रमाणत्वहानिः । अथोच्येत यज्ञप्रयोगविषय एव साधुभाषणनियमो न सूत्रकारव्याख्यानादिक्रियास्विति । तदसत् । स्वर्गे लोके कामधुगिति फलवत्त्वोपन्यासात् । सारस्वतीविधावाहिताग्निग्रहणार्थवत्त्वात् । इतरथा ह्याहिताग्निरेव यज्ञेष्वधिक्रियत इति तद्वोचरेऽपशब्दप्रयोगे निष्प्रयोजनमेवाऽऽहिताग्निग्रहणं भवेत् । योऽपि च ज्योतिष्टोमप्रकरणे वाजसनेयिनां "तस्माद्ब्राह्मणो न म्लेच्छेत्" इति प्रतिषेधः कर्माङ्गत्वेन ज्ञायते सोऽपि गुरुसंप्रदायक्रमागतमन्त्रप्रयोगविनाशविषय एव म्लेच्छभाषाप्रतिषेधार्थो वेति पूर्ववदेव नेतव्यः । यदपि च 'केषां शब्दानाम्' इति प्रश्नानन्तरं 'लौकिकानां वैदिकानां च' इति विवेककथनं तदपि बहूनां तावत्प्रत्यक्षप्रत्यभिज्ञानाल्लोकवेदयोरभेदे सति स्तोकप्रविभागापेक्षं नैवेदमत्यन्तभेदाश्रयसदृशमभिधीयमानं शोभते न च लौकिकमध्ये गौरश्वः पुरुषो हस्तीत्येवमादयः सर्वे वेदसाधारणा वेदादेव वोद्धृत्य लोकेन प्रयुक्ता उदाहर्तुं न्याय्याः । य एव हि भाषायामित्येव स्मर्यन्ते, न च क्वचिदपि वेदे दृष्टपूर्वा इत्येवं संभावयितुं शक्यन्ते त एवोदाहर्तव्याः । वैदिकोदाहरणेष्वपि च लोकप्रसिद्धा एव शमादय उदाहृताः । न च वाक्योदाहरणेन लौकिकेभ्यो भिद्यन्ते । वाक्यानां व्याकरणेनानन्वाख्यानात् । अतश्छान्दसान्येव कानि चित् "गृभ्णामि" "दस्वायाय" इत्येवमादीन्युदाहर्तुं योग्यानि न "शंनो देवीः" इत्येवमादीनि । छान्दसोदाहरणं च कुतः 'सिद्धे' 'लोकत' इत्यनेन प्रत्यासन्नेनैव व्याहन्येत । यदि च लौकिकानामन्वाख्यानं क्रियेत, ततः सुतरां गाव्यादय एवान्वाख्येयास्तेषां व्यवस्थितं लौकिकत्वं वेदेष्वप्रयोगात् । पुनरध्येतृभिर्वेदादेवोद्धृत्योद्धृत्य प्रयुक्ता इति शक्यं वक्तुम् । तथा च मनुनाऽप्युक्तम् । वेदशब्देभ्य एवाऽऽदौ पृथक् संस्था विनिर्ममे इति । दृश्यन्ते चाद्यत्वेऽपि श्रोत्रिया लौकिकेऽप्यर्थे विवक्षिते तत्त्वार्थसमानार्थान्सकलमन्त्रानप्युदाहरन्तः किमङ्ग पुनः पादान्पदानि वा । न चाऽऽश्रितप्रतिपदपाठानां वैदिकानां लक्षणेन कार्यम् । न चैषां गुरुमुखात्साधीयो लक्षणमस्ति 'दृष्टानुविहितं च्छन्दम' इति स्वयमेव लक्षणस्याऽऽम्नानाधीनत्वेन मन्त्रप्रयोजनत्वमुक्तम् ।

> यथैव लोकसिद्धत्वात्कृष्यादेर्लक्षणं वृथा ।
> तथैव वेदसिद्धानां शब्दानां लक्षणं वृथा ॥
> रक्षाद्यपि यदत्रोक्तमन्वाख्यानप्रयोजनम् ।
> न तदप्यन्यतः सिद्धेरल्पसिद्धेस्ततोऽपि वा ॥

१ म० भा० ( १—१—१ आ० १ ) । २ म० भा० पस्प० । ३ सिद्धे शब्दार्थसंबन्धे, लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेषु इति महावार्तिके ।

शिष्याचार्यसम्बन्धो हि महान्वेदरक्षाहेतुर्व्याकरणानधीनस्यापि वेदक्रमस्याध्ययनेनैव रक्ष्यमाणत्वात्। तद्विनाशेऽपि च विशिष्टतरदोषप्रसङ्गात्। उक्तं च—

निराकाङ्क्षी भवेल्लक्ष्यं येन तन्नाम लक्षणम्।
शताशमात्रसिद्धौ तु तेन मन्दं प्रयोजनम्॥
समाम्नायप्रसिद्धेऽपि सामवेदेऽस्ति लक्षणम्।
तद्युक्तं कृत्स्नसिद्धित्वात्कर्तव्यार्थेन चार्थवत्॥

औच्छिक्ये हि सर्वाणि सामपर्वाणि यथाक्रमं लक्षणेनानुगतानि ततश्च समस्तसामरूपसिद्धेर्निराकाङ्क्षत्वं भवति। ब्राह्मणविधिवशेन च, ऋगन्तरसंचारणायां प्रस्तावादिप्रभागविभागेन लक्षणोपयोगः। पदानुगममात्रनिवृत्तव्यापारेण तु व्याकरणेन विशिष्टपदरचनात्मकवाक्यसंघातरूपाणामसंभवत्कर्तव्यपदवाक्यानां मन्दमिव रक्षितत्वं दृश्यते।

लक्षयेद्य समाम्नायात्पदवाक्यक्रमान् बहून्।
■ लक्षयेत्तरामल्पं प्रकृतिप्रत्ययक्रमम्॥

किं च—

यदि व्याकरणाद्रक्षा मन्त्रैरन्वेदवादिनः।
वैयाकरणगेहेषु छिन्द्युस्ते वेदसंशयान्॥
कक्षावलम्बिनं नित्यं को नाम करकं वहन्।
तमनादृत्य शौचार्थमन्यतः कर्तुमर्हति॥
लोके यस्य यदर्थत्वमाप्ता वा यत्र ये मताः।
तेन तेभ्यश्च तद्वस्तु यथावदवगम्यते॥
आयुर्वेदं चिकित्सासु प्रायेण विनियुज्यते।
व्याधितत्त्वौषधज्ञानं वैद्येभ्यश्चोपलभ्यते॥

न तु वेदाध्यायिना कदाचिदप्यभियुक्ततरसहाध्यायिव्यतिरेकेण वेदवर्णपदवाक्याज्ञानमन्देहविपर्ययप्राप्तौ व्याकरणं वैयाकरणा वोपयुज्यन्ते।

सहाध्यायिभिरेवातो वेदः कार्त्स्न्येन रक्ष्यते।
स्वराक्षरविनष्टोऽपि द्वेषादन्यैर्न मृष्यते॥
तस्मात्प्रीतिरपाध्यायैर्दृष्टि कारणिकाग्निभिः।
न विनाशयितुं वेदो लभ्यते तेन रक्ष्यते॥

तस्माद्वेदरक्षार्थं नावश्यं ज्ञेयं व्याकरणम्।
त्रेते तु सर्वभाषाभिरर्थो व्याकरणादृते।
भिद्यन्ति व्यवहारेण काव्यादिष्वप्यसंशयम्॥

यदि तु संव्यवहारवाक्येष्वनुपयुज्यमानमपि काव्यनाटकलक्षणप्राकृतव्याकरणद्विपदीरासकादिलक्षणन्यायेन संस्कृतकाव्योपयोगार्थं व्याकरणमाश्रीयेत, तथाऽपि काव्यप्रयोगनियमोत्पत्त्यशास्त्रत्वाद्यथेष्टभाषाभिः प्रबन्धकरणसंभवाच्छन्दःसु न व्यवस्था स्यादित्युच्यते ।

काव्यशोभास्वपि त्वेतन्नैवातीवोपयुज्यते ।
वैयाकरणदोषाद्धि कष्टाञ्छब्दान्प्रयुञ्जते ॥
न च लक्षणमस्तीति प्रयोक्तव्यमलौकिकम् ।
लोकसिद्धप्रयोगे तु लक्षणं स्यादनर्थकम् ॥

तेन लोकेऽपि न कदाचिद्व्याकरणेन शब्दरक्षा ।

ऊहार्थमपि शब्दानां न व्याकरणमर्थवत् ।
ऊहस्याप्यन्यतः सिद्धेरूह्यानूह्यविभागवत् ॥

तथा च—

मुख्यदद्यार्थतास्वार्थसमवेतार्थतादिभिः ।
प्रयुक्ताः प्रकृतौ मन्त्रा गताः कार्यातिदेशतः ॥
विकारेऽस्य निषिद्धोहाः कार्यापन्नेषु पञ्चधा ।
अर्थान्तरेऽप्यपूर्वार्थद्वारेणोहं प्रयन्ति नः ॥
एतावत्यन्यतो यस्य विना व्याकरणान्मतिः ।
जायेत स कथं तत्र पदं योग्यं न लप्स्यते ॥
वेद एव हि सर्वेषामादर्शः सर्वदा स्थितः ।
शब्दानां तत उद्धृत्य प्रयोगः संभविष्यति ॥
अथ वा योऽपि गान्यादिर्लोकेनार्थे प्रयुज्यते ।
सोऽप्यर्थद्वारतः प्राप्तप्रयोगः केन वार्यते ॥

देवतापदानि तावत् । 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्' इत्येतेन न्यायेन सर्वाण्येव साध्वसाधुत्वसंमतान्पर्यायान्परित्यज्य विनिगतप्रयोगानुसरणेनैव तद्वाक्यशेषवाक्यान्तराधिगतार्थाभिधानरूपेण प्रयुज्यन्ते तेषु शास्त्रेणैव कर्माभिधानार्थमेव प्रयोगोत्पत्तिशास्त्रत्वम् । यानि तु द्रव्यतद्गुणादिपदानि संनिहितार्थपर्युपस्थापितसमस्तरूपाणि प्रयोगवचनगोचरमागच्छन्ति तेष्वसंनिहितार्थपदानिवृत्तिन्यूनसाकाङ्क्षमन्त्रवाक्यनिराकाङ्क्षीकरणाय स्मृतेऽप्यर्थे प्रयुज्यमानेषु प्रयोगोत्पत्त्यशास्त्रत्वान्न व्यवस्था स्यादित्युच्यते । प्रकृतौ हि मन्त्राणां प्रयोगोत्पत्तिः शास्त्रवती विकृतौ, पुनरर्थवशाद्भवन्ती न व्याकरणानुगतेर्वैवावतिष्ठते । व्याकरणस्याप्यसंभाव्यमानमूलशास्त्रस्य कृतकार्यविधायकेष्वनुपसंख्या-

---

१ (१० ४ २३) ।

नाद्यावापमन्त्रप्रत्याम्स्थानानवस्थितप्रमाणत्वस्य यथारुचिविकल्पितप्रकृतिप्रत्ययपरिमाणादिदोषग्रस्तस्य निश्चितस्मर्यमाणपाणिन्यादिमतमपेक्षस्य नैवानादिपक्षगतशब्दप्रयोगानियमोत्पत्तिशास्त्रत्वमवकल्पते ।

तेनोहे कर्मकर्माङ्गवाक्यार्थज्ञानकौशलैः ।
लोकवेदप्रयोगाच्च सिद्धे व्याकरणेन किम् ॥

अपि च व्याकरणेनोहकरणमशक्यमेवेति मन्वानैर्टीकाकारैरप्युक्तम्—

अङ्गानि ज्ञातिनामान्युपमा चेन्द्रियाणि च ।
एतानि नोहं गच्छन्ति अध्रिगौ विषमं हि तत् ॥
आगमो यस्तु निर्दिष्टः प्रयोजनविवक्षया ।
कर्मणा नोच्यते तत्र किं वेदाध्ययनं फलम् ॥

सर्वस्य हि ह्यनुष्ठातव्यस्याऽऽगमो मूलत्वेनाऽऽख्यायते न प्रयोजनत्वेन ।

अर्थेनैव युक्तं स्यादागमोक्तं प्रयोजनम् ।
तदप्यसदनाम्नानान्निष्कारणतयाऽपि च ॥

निष्कारणषडङ्गवेदाध्ययनोपन्यासेन हि सुतरां व्याकरणस्य निष्प्रयोजनत्वमुक्तम् ।

आगमो वेदवाक्याच्च नान्यः कश्चन विद्यते ।
कथं चाऽऽदिमता सिध्येद्वेदेनानादिना विधिः ॥

तस्मात् 'स्वाध्यायोऽध्येतव्यः' इत्येतत्केवलवेदाध्ययनविधानं शतपथादिषु दृष्टमुपपन्नं च नित्यार्थालम्बनत्वात् । व्याकरणाद्यङ्गाध्ययनविधानं पुनर्न कस्यांचिच्छाखायां श्रूयते । न चाऽऽदिमदर्थविषयं सदनादित्वाधीनं वेदत्वं प्रमाणत्वं वा लभते ।

न च वेदाङ्गभावोऽपि कश्चिद्व्याकरणं प्रति ।
तादर्थ्यावयवाभावाद्बुद्धादिवचनेष्विव ॥
श्रुतिलिङ्गादिभिस्तावत्तादर्थ्यं नास्य गम्यते ।
अकृत्रिमस्य वा कश्चित्कृत्रिमोऽवयवः कथम् ॥

तस्मादवयवविषयमेवैतदेवं वर्णयितव्यम् ।

षडङ्गो वेद इत्युक्तं श्रुतिलिङ्गाद्यपेक्षया ।
तैः षड्भिः प्रविभक्तः सन्स हि कर्मविबोधनः ॥

ननु बाह्याङ्गानपेक्षत्वे वेदस्वरूपात्मगतश्रुत्याद्यपेक्षया विशेषणमनर्थकं प्रसज्यते । तथा हि—

संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत् ।
श्रुत्याद्यव्यभिचारात्तु तैरङ्गैः किं विशेष्यते ॥

१ देश्याः इत्यस्मिन् आरभ्यमिन्मन्दि वर्जितस्मित्रमन्त्रोऽर्धमुच्चरन्स्येनाभिगुरिमुच्यते।

उच्यते—

[1] यस्तानि प्रविभक्तानि हेतुरूपफलैः पृथक्।
ज्ञात्वाऽधीते स एवास्य विधेरर्थं करोति नः॥
अधिगन्तव्य इत्येतदध्येय इति चोच्यते।
तेन श्रुत्यादिमान्वेदो वेदितव्यो विधेरतः॥
ध्यायतेरेव वा रूपं ध्येय इत्येतदाश्रितम्।
श्रुत्याद्यर्पितसर्वार्थः स ध्यातव्यः सदा द्विजैः॥

ततश्च मीमांसाद्वारा वेदार्थानुचिन्तनविधिरेवायमिति ज्ञायते न व्याकरणाध्ययनविधिः।

वेदे व्याकरणादीनि सन्त्येवाभ्यन्तराणि नः।
भवेद्वा तदभिप्राया षडङ्गाध्ययनस्मृतिः॥

"तद्घ्नो दर्शितवम्" इत्येवमादीनि हि वैदिकार्थवादान्तर्गतान्येव हि निरुक्तव्याकरणादीनि तैः सह विषयको वेदोऽध्येतव्य इति स्मृत्यर्थो भवेत्।

प्रातिशाख्यानि वा यानि स्वाध्यायवदधीयते।
गृह्यमाणतदर्थत्वादङ्गत्वं तेषु वा स्थितम्॥

यानि हि वेदव्यापारपराण्येव तेषु लिङ्गेन शक्यमङ्गत्वमध्यवसातुम्। ननु कतिपयस्वल्पवेदवाक्योदाहरणच्छद्ममात्रेषु। पाणिनिप्रभृतिप्रणीतेषु प्रातिशाख्यानीव प्रयोगशास्त्राणीति चेत्। न। तेषां पदस्वरूपेष्वेव व्यापारात्। पाणिनीयादिषु हि वेदस्वरूपवर्जितानि पदान्येव संस्कृत्य संस्कृत्योत्सृज्यन्ते। प्रातिशाख्यैः पुनर्वेदसंहिताध्ययनानुगतस्वरसंधिप्रयतिविवृतिएवाङ्गरागाद्यनुसरणाद्वेदाङ्गत्वमाविष्कृतम्।

पूर्वोक्तेनानुसंधानमागमस्य च नास्ति ते।
आगमोऽध्ययनप्रायः प्राक्च शब्दानुशासनम्॥

ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयं इति विहिते ज्ञाने धर्मः शास्त्रपूर्वप्रयोगेऽभ्युदय इति च व्याहताभिधानम्। यदपि च शब्दापशब्दज्ञानलाघवं प्रयोजनत्वेनोपदिष्टं तन्निराकृतप्रयोजनान्तरस्य लाघवमात्रमेवावशिष्यत इति सत्यमेवोक्तम्।

यदि वा गौरवमेव लघुत्वमुपवर्ण्यते।
विपर्ययापदेशेन शूरे कातरशब्दवत्॥

लोकप्रसिद्धानामेव शब्दानामत्यन्तविषमधातुगणोणादिसूत्रादिभिरलौकिकसंज्ञापरिभाषानिबद्धप्रक्रियैरनवस्थितस्थापनाक्षेपसिद्धान्तविचारैः क्लेशेनान्तं गत्वा यथावस्थिता-

1 म भा पस्पशाह्निके।

नुवादमात्रमेव क्रियते, तत्रापि चोदाहरणव्यतिरिक्तेषु कस्यचिदेव लक्षणयोजनसामर्थ्यं दृश्यते। तेनात्यन्तगुरुः सन्नयमुपायस्तुत्यर्थमेव लघुरित्युपचरितः। यदपि केनचिदुक्तम्—

तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते॥ इति।

तद्रूपरसगन्धस्पर्शेष्वपि वक्तव्यमासीत्।

को हि प्रत्यक्षगम्येऽर्थे शास्त्रात्तत्त्वावधारणम्।
शास्त्रलोकस्वभावज्ञ ईदृशं वक्तुमर्हति॥

अत एव श्लोकस्योत्तरार्धं वक्तव्यम्।

तत्त्वावबोधः शब्दानां नास्ति श्रोत्रेन्द्रियादृते॥ इति।

न ह्यत्र कश्चिद्विप्रतिपद्यते बधिरेष्वेवमदृष्टत्वात्।

असन्देहश्च वेदार्थे यदप्युक्तं प्रयोजनम्।
तदप्यसत्यतो नास्मात्पदवाक्यार्थनिर्णयौ॥

यतः पदार्थसन्देहास्तावद्बहवो वृद्धव्यवहारादेव निवर्तन्ते। शेषाश्च निगमनिरुक्तकल्पसूत्रतर्काभियुक्तेभ्यः मन्त्रसामर्थ्यप्रतिपादनपरत्वात्। व्याकरणेन पुनरतन्त्रीकृत्यार्थं पदस्वरूपमात्रेऽन्वाख्यायमाने दूरादपेतमेवार्थज्ञानम्। तथा हि—

धातुस्थे कल्पिते नास्ति क्रियायोगोऽनुगम्यते।
न चाभिधानवेलायां तत्प्रतीतिर्मनागपि॥

'गमेर्डोः'[1] इत्येतदनुपश्यनुसारी हि गन्तृमात्रमेव गोशब्दवाच्यमध्यवस्येत्। जातिशब्दश्चायं वृद्धव्यवहारेऽभ्यस्तो यत्र प्रसिद्धस्ततोऽन्यस्यातत्त्व। तथा च—

कुशलोदारशब्दादेर्यावत्यनुगमस्थितः।
न तावत्येव शब्दार्थप्रसिद्धिर्व्यवतिष्ठते॥
अश्वकर्णाश्वकर्णादौ समासानुगमे सति।
अपेतावयवार्थोऽर्थो दृश्यते वृत्तशब्दवत्॥
एवं राजन्यशब्दादेरपत्यवाचनादरः।
स्यात्क्रियाविरहितोऽपि स्थितो लोकप्रसिद्धितः॥
तथा वेदविरुद्धेऽर्थे दृष्टं शब्दानुशासनम्।
तत्तथा यदि गृह्येत वेदाङ्गत्वं विरुध्यते॥

'कलेर्ढक्'[2] 'वामदेवाड्ड्यड्ड्यौ'[3] इति कलिवामदेवदृष्टसामाभिधानप्रतिपत्तिर्व्याकरणस्य

१ उणादिसू० २१७। २ पा सू (४-२-८) ३ पा सू (४-२-९)

भवति। वेदे तु "ततो वसु वार्य समभवत् तस्माद्वामदेव्यम्" "यदकालयत्त-त्कालेयस्य कालेयत्वम्" इत्याद्यर्थव्युत्पत्तिदर्शनं व्याकरणानुसारिणीं प्रतिपत्तिं बाधते। तथा कल्पसूत्रकारैः कृष्णदशं वासः कृष्णवलक्षे अजिने इत्येवमादिषु कृष्णदशादिविवरणाश्रवणाद्व्याकरणशतेनाप्यनवगता अर्था वेदार्थवित्परम्परामात्रा वेद-वाक्यपौर्वापर्यावगतशूर्पादिशब्दार्थाश्च व्याख्यायन्ते। यथा चैवमादिषु व्याकरणान-पेक्षाणामेव नि संशयार्थप्रतिपत्तिस्तथा स्थूलपृषत्यादिशब्दार्थेष्वपि व्याख्यातृपरम्परैव निर्णयक्षमेति न व्याकरणमपेक्षितव्यम्। किं च—

वाक्यार्थेषु च संदेहा जायन्ते ये सहस्रशः।
नैषां व्याकरणात्कश्चित्पूर्वपक्षोऽपि गम्यते॥

यदि वेदार्थसंदेहप्रयोजनं व्याकरणं भवेत्तत विमर्शवादा भवन्ना कश्चिदर्थं प्रतिपादयन्त्यथ विधिशेषभूता। तथा विमृग्वरोपनमौदुम्बरत्वस्य फलमुत प्रशंसार्थ-मुपात्तमिति। तथा हेतुविधिहेत्वर्थवादमन्त्रप्रयोगदृष्टादृष्टार्थत्वादिषु ग्रहैकत्वविवक्षादिषु च संदेहानपनयेत्। अथैवमादिषु मीमांसासिद्धत्वाद्व्याकरणेऽनुपन्यासस्ततः कल्पसूत्र-कारवचनसिद्धकतिपयस्थूलपृषत्याद्यर्थनिर्णयप्रयोजनतया सुतरां नाऽऽश्रयणीया। अपि च—

लक्षणोक्तेऽपि संदेहे व्याख्यानादेव निर्णयः।
वेदशब्देष्वपि व्याख्या नैव दूरैर्निवार्यते॥

'व्याख्यानतो विशेषप्रतिपत्तिः' इत्यनयैव परिभाषया न हि संदेहाद-लक्षणमितिवन्न हि संदेहादवेद इत्यपि शक्यं वक्तुम्।

न चागृहीतशब्दार्थैः कैश्चिद्व्याकरणाश्रयात्।
व्याख्यातुं शक्यते वेदो यतः व्यासेन निश्चयः॥
यथैवावस्थितो वेदस्तथा व्याख्याऽपि सर्वदा।
अतः स्थूलपृषत्यादिव्याख्या व्याकरणादृते॥
न च लोके प्रयुक्तानां पदानां दृश्यते स्वरः।
व्यवहाराद्बहिर्भूतात्स्वराज्ज्ञातोऽर्थनिश्चयः॥

वृद्धव्यवहाराधीनं शब्दार्थावधारणं तत्र च समासान्तोदात्तत्वपूर्वपदप्रकृतिस्वरत्वा[1]दिप्रयोगविभागाभावान्न तत्कृताऽर्थविशेषव्यवस्था।

यत्र त्वस्ति स्वरज्ञानं वेदवाक्येष्वविश्रुतम्।
तत्र नैव पदार्थानामवधारणसंभवः॥

1 म० मा० (प्रत्याहाराह्निके लण्सूत्र)

तत्रापि निर्णयो यः स्यादर्थप्रकरणादिभिः ।
तत्र तैरेव सिद्धत्वान्न स्वरस्याभिधा गता ॥
तेनादृष्टार्थ एवायं स्वरपाठोऽवगम्यते ।
सर्वदा ब्रह्मयज्ञाङ्गद्रव्ययज्ञजपेषु च ॥

व्याकरणानुगमोऽपि चास्य यदि नाम कथंचित्तदुपयोगार्थ एव भवेन्न तु लौकिकप्रयोगार्थः । अत्यन्ताप्रयुक्तत्वात् ।

न च व्याकरणोक्तेन स्वरेणार्थस्य निर्णयः ।
शब्दानुशासनं ह्येतद्दृष्टं नार्थानुशासनम् ॥

तस्मादसंदेहार्थमपि नाध्येयं व्याकरणम् । न ह्येतदर्थनिश्चयाङ्गभूतस्वरविशेषप्रयोगोपदेशिशास्त्रम् । यान्यपि च 'इमानि भूयः शब्दानुशासनस्य प्रयोजनानि' इत्येवमुपन्यस्तानि तेषामपि कानिचित्प्रयोजनत्वयोग्यान्येव न भवन्ति, कानिचित्प्रयोजनाभासानि, कानिचिदप्रमाणकानि । अपि च—

अर्थवत्त्वं न चेज्ज्ञातं मुख्यं यस्य प्रयोजनम् ।
तस्यानुषङ्गिकेष्वाशा कुशकाशावलम्बिनी ॥

तत्र यस्तावत्तेऽसुरा इत्याद्यसुरपुराकल्पार्थवादप्रक्रमेऽपशब्दप्रतिषेधः प्रयोजनत्वेनोपन्यस्तः स यथावस्थितस्तथोक्तः प्राक् । दुष्टः शब्द इत्यत्रापि बहुजनप्रसिद्धशिक्षाकारपठितमन्त्रपदोद्धारेण शब्दपदं प्रक्षिपता स्वपक्षानुरागो दर्शितः । दुष्टमन्त्रप्रयोगे त्विष्यत एव यजमानस्य प्रत्यवायः । 'यद्धोता जहाति वाग्घि तद्यजमानं जहाति' इत्येवमादिभिः सर्वर्त्विक्प्रयोज्यमन्त्रविनाशेषु यजमानगामिदोषदर्शनात् । तथा च 'इन्द्रशत्रुर्वर्धस्व' इति मन्त्रप्रयोगविनाशदोष एवोदाहृतः । यत्तु निरुक्ते 'यदधीतमविज्ञातं निगदेनैव शब्द्यते' इत्युक्तं, तदस्माभिः प्रथमसूत्र एवार्थशब्दं व्याचक्षाणैः स्नानस्मृत्यतिक्रमकारणत्वेनोपवर्णितम् । 'अनतिक्रामन्तो वेदमर्थवन्तः सन्तमनर्थकमवकल्पयेम, दृष्टो हि तस्यार्थः कर्मावबोधनम्' इति । ततश्चाव्याख्यातेन वेदेनार्थप्रकाशनाकरणात् 'न तज्ज्वलति कर्हिचित्' इति । सत्यमेवैतत् । न तु व्याकरणस्य तत्रोपयोगः । कर्मप्रयोगोत्पत्तिप्रत्ययशास्त्रत्वात् । शब्दशास्त्रमेतदिति चेत्तेष्वप्यपूर्वोक्तेन निर्मूलत्वेन न व्यवस्था स्यात् तस्मात्कल्पसूत्रनिरुक्तमीमांसानामेवाधीतमन्त्रब्राह्मणार्थविज्ञानोपयोगित्वादेतत्प्रयोजनमुक्तं, न तु व्याकरणस्य । यत्तु महद्देव इत्ये

१ अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचिदिति शेषः ।

२ यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः । म भा ।

तदपि मन्त्रब्राह्मणशब्दस्य सम्यक्प्रयोगप्रयोजनमेव विज्ञायते । यथासमाम्नातादन्यथाकरणाच्च "दुष्यति चापशब्दैः" इति । स्वाध्यायाध्ययनाध्यापनयजनयाजनगतवेदशब्दविनाशेऽपि 'यदक्तो यद्य आर्तिमियात्' इति । एतद्वचनादवगतदोषानुवादोऽपीत्यवगम्यते । वाग्योगविदिति च बहुलोकव्यवहारदर्शनाद्विदितपदपदार्थसंबन्धः पुमान्, ब्राह्मणवाक्येषु चोद्दिश्यमानोपादीयमानगुणप्रधानादिनिरूपणावधृतवचनव्यक्तिविशेषो मन्त्रेषु चावगतचोदिताचोदितस्वार्थपरार्थप्रकाशनार्हत्वानर्हत्वविद्देव च वाग्योगविदित्युच्यते न वैयाकरणः । वैयाकरणस्यैवंविधप्रयोगोत्पत्त्यशास्त्रत्वात् । यदप्यविद्वांस इति[1], प्रत्यभिवादे नामान्त्यस्वरप्लुतानभिज्ञनिन्दावचनं, तत्प्लुतस्य त्रिमात्रस्य लोकप्रसिद्धत्वात्मन्वाद्युपदिष्टनामान्त्यप्रयोगसिद्धौ लब्धायां तत्प्रयोगोत्पत्त्यशास्त्रत्वम् । न च तावता मन्वादिभिरनेन चोदाहृतेन श्लोकेन प्रकृतिप्रत्ययादिविभागद्वारेण शब्दापशब्दविवेकज्ञानं तदुपयोगो वाऽऽश्रीयते । यच्च 'प्रयाजाः सविभक्तिकाः कर्तव्याः' इति तद्याज्ञिकोपदेशसिद्धत्वाद् ब्राह्मणे च पञ्चहविभक्तयः "अग्निर्वृत्राणि जङ्घनत्" "अग्निं वो वृत्रहन्तमम्" 'अग्निनाऽग्निः समिध्यते' इत्येवमादिविभक्ताविभक्तिप्रयोगदर्शनादन्तरेणापि व्याकरणं वैभक्तिकमात्रालोचनेनापि वा सविभक्तिकप्रयाजप्रयोगसिद्धेरशास्त्रं व्याकरणम् । "यो वा इमां पदशः स्वरशो वाचं विदधाति स आर्त्विजीनो भवति" इति सम्यग्वेदाध्याय्येवमभिधीयते । तथा "चत्वारि वाक्परिमिता पदानि" इति यानि तावदोंकारमहाव्याहृत्यादिचतुष्टयत्राहुल्यप्रयोजनानुसरणेन नैरुक्तरूप्यक्षरवर्णसाम्यान्निर्णयादितिवत्प्रपञ्चितानि, न तत्र व्याकरणस्य कश्चिदधिकारः । यत्तु नामाख्यातोपसर्गनिपातचतुष्टयानुगतं वैयाकरणमतमाश्रितं तदपि चतुष्टयस्य लोकसिद्धत्वादेव नातीव व्याकरणापेक्षम् । एतद्विषयत्वे च वर्ण्यमाने "तुरीयं वाचो मनुष्या वदन्ति" इत्यसंबद्धमेव स्यात् ।, चतुर्णामपि पदजातानां मनुष्यैरुच्यमानत्वात् । तस्मादयमस्य मन्त्रस्यार्थः पौर्वापर्यसंगतो वर्ण्यते । "चत्वारि वाक्परिमिता पदानि" इति यैर्वाक्पद्यते गम्यते तानि चत्वारि प्रत्यक्षानुमानोपमानार्थापत्त्याख्यानि प्रमाणान्यभिधीयन्ते । तत्र यानि प्रतीकविधिप्राकृतवैकृतवाक्यसारूप्यदृष्टानुपपद्यमानादिप्रमनैरनुमानोपमानार्थापत्त्याख्यैर्निर्मितैर्गम्यन्ते, तानि तत्सिद्धत्वादेव नेङ्गयन्ति नोच्चारयन्ति । यत्तु मागस्तैरशानयः प्रतिपादयितुं तं तुरीयं प्रत्यक्षमधिगम्यमध्येनारो मनुष्या वदन्ति समामनन्तीत्यर्थः । षट्प्रमाणीमध्याच्च प्रमाणद्वयं वाक्पदत्वादपोकृतम् । अभावन्तावदभावविषयत्वादेव वाक्पदं न भवति । आगमस्य पुनर्योगात्मकत्वात्पद्यमानतयाश्रितस्य पदत्वाश्रयणमनुप-

[1] अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः । कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् । इति महाभाष्ये व्याकरणस्य लौसाम्यपरिहारप्रयोजनकथनार्थमुपन्यस्तः श्लोकः । २ अ० ई० (२-२-२१) ।

पक्षम् । प्रत्यक्षपक्षनिक्षिप्तत्वात्पृथक्त्वेनानिर्देशः । चत्वारि शृङ्गेत्यस्य तु विषुवति होतृराज्ये प्रयुक्तस्य योऽर्थः स मन्त्राधिकरणे व्याख्यातः । न चात्र काचिद्व्याकरणापेक्षा । यत्तु चत्वारि पदजातानि शृङ्गाणीत्येवमादिसंख्यासामान्यमात्रेण कर्मविनियोगानपेक्षमर्थान्तरं वर्ण्यते, तद्व्याकरणकृतवाक्कौशलमात्रम् । तादृशं च वैशेषिकादिष्वपि तदभियुक्तैः शक्यं योजयितुमित्यनादरणीयम् । "उतत्वः पश्यन्" इत्यपि लोकनिरुक्तकल्पसूत्रमीमांसाश्रयोत्पन्नपदार्थवाक्यार्थज्ञानप्रशंसार्थ एव मन्त्रो विज्ञायमानो न व्याकरणमाद्रियते । एवं "सक्तुमिव तितउना" इत्येषोऽप्यविप्लुतस्वाध्यायाध्ययननिर्मलत्वेदाक्षरार्थज्ञानप्रशंसार्थः पूर्ववदेव वर्णनीयः । "आहिताग्निरपशब्दं प्रयुज्य" इति, व्याख्यातमेवैतत् । यदपि नामकरणे, घोषवदाद्यन्तरन्तस्थं द्विचतुरादिवर्णकृदन्तपरिग्रहतद्धितवर्जनवचनं, तत्कृत्तद्धितसंज्ञयोर्व्याकरणेऽपि पूर्वप्रसिद्धयोरेवोपादानाद्वर्णपरिमाणस्य च प्रत्यक्षपूर्वकस्मृत्यधीनत्वाद् घोषवत्त्वादीनां च शिक्षाप्रातिशाख्येष्वनुक्रमणात्सर्वैश्च श्रोत्रियैरक्लेशेन नामकरणान्न व्याकरणं नाम प्रयोगोत्पत्तिशास्त्रत्वेनापेक्षणीयम् । "सुदेवोअसि वरुण" इत्यत्र यद्यपि तावत्सप्त विभक्तय एव सप्त सिन्धव इति व्याख्यायन्ते तथाऽपि तासां विभक्तिसंज्ञामात्रं व्याकरणेन क्रियते प्रसिद्धमेव वा गृह्यते । यानि तु प्रयोगरूपाणि तानि लोके वेदे च विभागशः प्रत्यक्षाण्येवेति न व्याकरणापेक्षयैवमभिधीयन्ते । यदा पुनः सप्त सिन्धवो नद्य एव यज्ञार्त्विग्यजमानप्रशंसापक्षे वा सप्त होत्रागता वाचः सप्त सामस्वरगतास्तद्व्यक्तिगता वा परिगृह्यन्ते, तदैतिहासिकयाज्ञिकगोचरापन्नत्वादविषय एव व्याकरणस्य ।

संस्कृतानां च शब्दानां साधुत्वे परिकल्पिते ।
वक्तव्यः कस्य संस्कारः कथं वा क्रियते पुनः ॥

व्याकरणेन शब्देषु संस्क्रियमाणेषु न ज्ञायते किं वस्तु संस्क्रियते को वा संस्कारः उत्पत्तिप्राप्तिविकाराप्पूर्वसाधनसामर्थ्याधानानां क्रियत इति ।

न तावदग्नि शब्दत्ववर्णत्वव्यक्तिसंक्रिया ।
सर्वत्रातिप्रसङ्गेन न व्यवस्था हि सिध्यति ॥
शब्दत्वे संस्कृते स्याद्धि ध्वनीनामपि साधुता ।
वर्णत्वेऽप्येवं वर्णानां गाव्यादीनां च तुल्यता ॥

एतेन वर्णव्यक्तिसंस्कारः प्रत्युक्तः ।

---

१ ऋ० सं० ( ३ । ८ । १० ) । २ ऋ० सं० ( ८ । २ २३ ) । ३ ऋ० सं० ( ८ । ७ । २२ ) । ४ म० भा० पस्पशाह्निके । ५ अहृद त्रिपुरुषानूकमनरिप्रतिष्ठितं तद्धि प्रतिष्ठितमं भवति इति शेषः म० भा० पस्प० । ६ ऋ० सं० ( ६ । ५ । ७ ) ।

गवादिषु गकारादिर्यः सकृत्संस्कृतः क्वचित्।
गाव्यादिषु स एवेति साधुरेव प्रसज्यते॥
एवं प्रत्येकसंस्कारे न कस्यचिदसाधुता।
समुदायस्तु नैवास्ति तेषामयुगपच्छ्रुतेः॥

येषां तावद्वर्णव्यक्तयः प्रध्वंसिन्य एव तेषां विनष्टानुत्पन्नानां संस्कारायोग्यत्वमेव।

वर्तमानाऽपि संस्कारक्षणं नैवावतिष्ठते।
तावदेव विनश्यत्येषा यावत्संस्कर्तुमिष्यते॥
न च तां संस्कृतां भूयः कश्चन द्रक्ष्यति क्वचित्।
सक्तूनामिव संस्कारो होमेनैष प्रसज्यते॥

यथैव होमसंस्कृतानां भस्मसाद्भावात्सक्तूनां पुनर्दर्शनविनियोगासंभवाद्द्वितीयाप्रतिपादितसंस्कार्यत्वपरिग्रहे सक्तवो होमस्तद्भावनाविधिरिति सर्वेषामनर्थकत्वं प्रसज्यत इति संस्कारानाश्रयणं, तथैव क्षणिकशब्दव्यक्तिसंस्कारपक्षे सर्वानर्थकत्वप्रसङ्गः। ततश्च योऽव्ययमनियमोऽभिहितो यथैवं नित्यः शब्दोऽपि कार्य उभयथाऽपि लक्षणं प्रवर्त्यमिति स एवमेव न्यायनिरूपणभयमात्राविष्करणार्थः शिष्यव्यामोहनार्थो वेति न युक्तः परिग्रहीतुम्।

अदूरविप्रकृष्टे च वस्तुन्यनियमो भवेत्।
शीतोष्णानियमं ब्रूयात्को नु वह्नेः सचेतनः॥
उत्पादश्चैव संस्कारः कार्यपक्षे भवेदयम्।
ततश्च सुतरां प्राप्ता प्रयोगोत्पत्त्यशास्त्रता॥

व्याकरणप्रक्रियानुगृहीतेन वैयाकरणेनोत्पाद्यमानेषु साधुशब्देषु नित्यवेदमूलत्ववेदाङ्गत्वनिराकरणं स्वयमेवाऽऽपादितम्।

अथ व्याकरणोत्पत्तैः शब्दैर्वेदोऽपि निर्मितः।
ततो व्याकरणस्यैव वेदस्याप्यप्रमाणता॥
शब्दश्चोत्पाद्यमानत्वे क्षणान्न स्यात्क्षणान्तरे।
तादृशस्य च संस्कारो न शक्यो नोपयुज्यते॥
तस्मादनियमं मुक्त्वा नित्यः संक्रियते यदि।
विक्रियाख्योऽपि संस्कारस्ततो नैवास्य संभवेत्॥
विना व्याकरणाद्यश्चैः सिद्धा श्रोत्रसमाश्रया।
अदृष्टार्थस्तु संस्कारो विध्यभावान्न गम्यते॥

दृष्टार्थेषु च शब्देषु नादृष्टेन प्रयोजनम् ।
न हीष्टं भोजनार्थानां व्रीहीणां प्रोक्षणात्फलम् ॥
कर्मप्रकरणाम्नाता न च व्याकरणक्रिया ।
येनापूर्वप्रयुक्तानां शब्दानां संस्कृतिर्भवेत् ॥
हन्त्यादिविधिवच्चापि सम्भवी व्याक्रियाविधिः ।
पौरुषेयं कथं वस्तु विदध्याच्छाश्वतो विधिः ॥
तेनानारभ्यवादेऽपि विधिर्नैवास्ति तादृशः ।
अनारभ्य विधित्वे च न कर्मार्थत्वसम्भवः ॥
ऐकान्तिकं हि सत्कार्थं यत्नतो स्यात्स्रुवादिवत् ।
तद्द्वारेण क्रतुप्राप्तिर्न लोके व्यभिचारिणः ॥
लोकवेदगतत्वाच्च शब्दानां व्यभिचारिता ।
अतो न व्याक्रिया गच्छेत्तदुपस्थापितं क्रतुम् ॥
आकाशेऽवस्थितः शब्दः संस्कर्तुं शक्यते कथम् ।
नित्यत्वान्मूर्त्यभावाच्च व्योमाश्रितविभुत्ववत् ॥
वर्णसंस्कारमात्रं च यदि व्याकरणाद्भवेत् ।
प्रत्याहारेण तत्सिद्धेर्नोच्चारेण प्रयोजनम् ॥
समुदायस्त्ववस्तुत्वान्नैव संस्कारमर्हति ।
प्रत्येकं च भवेद्दृष्टिधर्मप्रतीपकम् ।
न च स्थूलस्यारम्भो वर्णैः शब्दस्य कस्यचित् ।
येन तत्संस्कृतिः सिध्येत्स हि पूर्वं निराकृतः ॥
स्फोटगोशब्दतावत्त्वप्रभृतौ पक्षकल्पना ।
गकारादिपदव्याख्याद्वारेणैव निराकृता ॥
सर्ववर्णसमूहोऽपि न संस्कार्यः कथञ्चन ।
न तस्यार्थप्रयुक्तत्वमस्ति ह्यनभिधानतः ॥
अथ निमित्ततो वर्णाः संस्क्रियन्ते पदे पदे ।
संख्यामात्रस्य साधुत्वं तच्च स्यादितरेष्वपि ॥
संस्क्रियेतानुपूर्वी चेच्छब्दधर्मो न सेष्यते ।
ग्रहणोच्चारणस्थत्वाद्वाय्वादिषु च सम्भवात् ॥
ग्रहणोच्चारणे एव संस्कार्ये यदि मन्यसे ।
कर्मेण कर्ममात्रस्य तदुपरिष्टान्निषेत्स्यते ॥

वक्ष्यति हि—

कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यादिति[1] ।

नाम्नादिशोधसंस्कारो न च व्याकरणाद्भवेत् ।
वेदोपदिष्टसंस्कारसंस्कार्यत्वावधारणात् ॥
मनो वा पुरुषो वाऽथ संस्कारास्पदमिष्यते ।
शब्दानुशासनं शास्त्रमिति व्यर्थं तदा भवेत् ॥
शिष्यानुशासनत्वं हि शास्त्राणामुपपद्यते ।
शब्दस्यानुशास्यत्वाद्व्यर्थं तदनुशासनम् ॥
स्फोटशब्दे च संस्कारः सुतरां नोपपद्यते ।
असन्तौ तत्र हि स्यातां प्रकृतिप्रत्ययावपि ॥
वाक्यस्फोटश्च यैरिष्टः सर्वावयववर्जितः ।
नामाख्यातादि[2] संस्कार्यं तेषां शशविषाणवत् ॥
अपोद्धारेण संस्कारो यद्यत्राभ्युपगम्यते ।
शृङ्गं शशादपोद्धृत्य किं न संस्क्रियते मनाक् ॥
अन्यावयवसारूप्यादपोद्धारो यदीष्यते ।
खरशृङ्गेण सारूप्याच्छशशृङ्गस्य किं न सः ॥
गवयादिषु नाङ्गानां सादृश्यं यच्च दर्शितम् ।
सत्यावयवसामान्यात्तदिहापीष्यते तथा ॥
वाक्याधिकरणे चैतद्विस्तरेण निराकृतम् ।
तेनापोद्धारसंस्कारकल्पनाऽपि न युज्यते ॥
अन्वाचक्षीत शास्त्रं चेच्छब्दानसदपोद्धृतान् ।
एतेनैवाप्रमाणत्वमस्य माहेन्द्रजालवत् ॥
अशिष्यत्वाद्वाक्यस्यैवं तावत्पदं प्रति ।
वाक्यानुशासनं नैव कृतं व्याकरणेन च ॥
अर्थेन च प्रयुक्तानां शब्दानां संस्क्रियोदिता ।
वाक्यमेवंविधं नेष्टं न पदान्यर्थवर्जनात् ॥
ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले ।
देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ॥

इति बहुप्रपञ्चमुक्त्वा केवलस्य चाप्रयोगादर्थप्रयुक्तत्वं निराकृत्य वाक्यान्वाख्याना-र्थमेव व्याकरणमपि व्याख्यानं युक्तमासीत्तदनाश्रयणात्तु सूत्रवार्तिकभाष्यकारवदेव

१ मी० सू० ( ३-१-१० ) । २ आदिशब्देन निपातोपसर्गयोः परिग्रहः ।

पूर्वापरविरुद्धमभिदधानैष्टीकाकारैरपि सुतरां व्याकरणस्याप्रत्ययितपुरुषप्रणीतत्वं दर्शितम् ।

अतो विगानभूयिष्ठाद्विरुद्धान्मूलवर्जितात् ।
निष्फलाच्च व्यवस्थानं शब्दानां नानुशासनात् ॥

ततश्च—

स्वाध्यायाध्ययनं मुक्त्वा तत्प्रयोगश्च कर्मसु ।
शेषशब्दप्रयोगेषु न यत्नस्योपयुज्यते ॥

तेन सर्वैर्भाषितव्यं सर्वे साधव इति । अत्रानुमानप्रयोगाः —

गावीगोण्यादयः शब्दाः सर्वे गोत्वस्य वाचकाः ।
वृद्धैस्तत्र प्रयुक्तत्वाद्गौरुलेत्येवमादिवत् ॥
एवं साधुत्वमेतेषां सर्वेषामर्थसाधनात् ।
श्रोत्रत्वान्नापशब्दत्वं पूर्वदृष्टान्तदर्शनात् ॥
अनादित्वं च सर्वेषामवध्यनवधारणात् ।
वक्तुर्वक्तुः पुरो वृत्तेः शक्यं वक्तुं गवादिवत् ॥
साधुभिर्भाषमाणानां नादृष्टफलसंभवः ।
दृष्टार्थत्वाद्यथा धूमादग्निं देशेऽवगच्छताम् ॥
अशास्त्रविहितत्वाच्च वृद्धशब्दाभिधानवत् ।
शास्त्रं नापेक्षरूपत्वात्प्राकृतं याक्रियादिवत् ॥
वेदमूलतयाऽप्यस्य प्रमाणत्वं न कल्पते ।
अवेदविषयार्थत्वान्नाटकादिनिबन्धवत् ॥
शास्त्राङ्गमपि नैवैतत्तादर्थ्यात्स्यादिवत् ।
अतादर्थ्यं विनाऽप्यस्माद्वेदेनार्थावबोधनात् ॥
न च शब्दप्रयोगाङ्गं सिद्धे तस्मिन्प्रवर्तनात् ।
यदीदृशमनङ्गं तद्दृष्टं नेत्रानुमानवत् ॥

यथा हि चक्षुरादिग्रहणानपेक्षरूपादिविज्ञानसिद्धौ तज्जनितार्थापत्तिप्रभवं चक्षुराद्यनुमानमुपजातमपि न पूर्वज्ञानस्याङ्गमेवं लोकेन सिद्धशब्दप्रयोगोत्तरकालप्रणीततया व्याकरणमप्यनङ्गम् ।

तस्मात्पर्यायशब्दं वा व्याख्यानं तमब्रुवन् ।
आचारेण प्रयोज्यं तन्न शास्त्रार्थनिवारितम् ॥ २४ ॥

**शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ २५ ॥ सि०**

महता प्रयत्नेन शब्दमुच्चरन्ति—वायुर्नाभेरुत्थितः, उरसि विस्तीर्णः, कण्ठे विवर्तितः, मूर्धानमाहत्य परावृत्तः, वक्त्रे विचरन् विविधान् शब्दानभिव्यनक्ति ।

---

एवं प्राप्तेऽभिधीयते—

अनैकान्तिकता तावदर्थापत्तेरिहोच्यते ।
अन्यथाऽप्युपपन्नत्वात्प्रयोगार्थावबोधयोः ॥
वाचकत्वादृते यस्तु न कथंचित्प्रयुज्यते ।
प्रयोगप्रत्ययायत्ता तत्र वाचकता ध्रुवम् ॥
संशयप्रतिबद्धे च पूर्वपक्षार्थनिर्णये ।
इष्टार्थनिश्चयः शक्यः सुखं सिद्धान्तहेतुना ।

दृढविपर्ययज्ञानानन्तरं सहसैव च सम्यग्ज्ञानोत्पादप्रतिभाराहित्यैकदेशावतारणार्थं संशयोत्थापनामात्रमेव तावदुक्तम् । अथ वा—

संसिद्धव्यवहारत्वादनादित्वं यदाश्रितम् ।
अपराधप्रसङ्गेन तत्रैषा संशयक्रिया ॥

यदि ह्येकान्तेन यादृशः परमुखाच्छब्दः श्रूयते तादृगेव सर्वेण सर्वदोच्चार्येत ततो वृद्धव्यवहारपरम्परायां सत्यां गवादिभिरिव न गाव्यादिभिः कश्चिदपि कालः शून्य आसीदित्यध्यवसायादनादित्वमङ्गीक्रियेत । अपराधजस्य शब्दस्य संभवात्तु तदाशङ्कायां सत्यां नैकान्ततः सर्वेषामनादित्वम् । प्रयत्ननिष्पत्तेरिति पूर्वोक्तन्यायावधारितप्रयत्नाभिव्यक्तिरेव हेतुत्वेनोपदिश्यते । अपर आह । अप्रयत्ननिष्पत्तेरपराधस्य भागितेति । यो ह्यप्रयत्नेन शब्दमभिव्यनक्ति तस्य परम्परागतशब्दोच्चारणमात्रात्सर्वे समानविधाना भवेयुः । यदा त्वप्रयत्ननिष्पत्तिरपि शब्दे संभाव्यते तदा तत्रापराधनरूपान्तरापत्तिप्रसङ्गान्न नियोगतः सर्वशब्दानां समानविधानत्वम् । अथ वा शब्दविषयस्य प्रयत्नस्यैव या निष्पत्तिस्तस्यामपराधः सुनिपुणानामप्यविकलकरणानां दृश्यते किमुतानिपुणविगुणकरणानाम्—

यस्य प्रयत्ननिष्पत्तावपराधः कृतास्पदः ।
शब्दे स तदभिव्यक्त्यै प्रसभस्येव वार्यते ॥
ततश्चानपराधेन व्यज्यमानेषु साधुता ।
सापराधेष्वसाधुत्वं व्यवस्थैवं च तत्कृता ॥

In this (long drawn out prose) there is every possibility of the utterer making slips

तत्रापराध्यतामुच्चारयिता । यथा शुष्के पतिष्यामीति कर्दमे पतति, सकृदुपस्प्रक्ष्यामीति द्विरुपस्पृशति । ततोऽपराधादसत्या गाव्यादयो

The utterance & use of corrupt words may have originated from such

लोकेऽपि च—

अविनष्टे विनष्टे च दृश्येते साध्वसाधुते ।
तथा सति च तद्द्वारा सिद्धिः शब्दापशब्दयोः ॥
यद्वा सत्यत्वमेवेदं साधुत्वमभिधीयते ।
असत्यत्वमसाधुत्वं धर्माधर्मोपयोगवत् ॥
धर्माधर्मव्यवस्था हि सत्यानृतनिबन्धना ।
विहितप्रतिषिद्धत्वात्तयोश्चेष्टा सशास्त्रता ॥
अर्थसत्यं यथा वाच्यं शब्दसत्यं तथैव हि ।
शब्दानृतं च हातव्यमर्थानृतवदेव न ॥
एवं सति व्यवस्थाने भक्ष्याभक्ष्यविभागवत् ।
प्रयोगोत्पत्त्यशास्त्रत्वादिति हेतोरसिद्धता ॥

अथ वा यदुक्तम् ।

साधोर्नित्यप्रसक्तत्वात्साधोरप्रसङ्गतः ।
न धर्मनियमोऽस्तीति तत्रेदमभिधीयते ॥
अपराधस्य भागित्वादुभयं सावकाशकम् ।
साधोरनियता प्राप्तिरसाधोश्च प्रयोज्यता ॥

यदि हि साधुः प्रयुज्यमानो न कश्चित्कदाचिदपि विनश्येत्ततस्तस्य नित्यप्राप्तत्वा न्निवर्त्यापशब्दाप्राप्तेश्च नियमशास्त्रमनर्थकं भवेत् । यदा त्वपराधभागित्वे सति द्वयोर प्यनियता प्राप्तिस्तदा साधुनियमकारिणः शास्त्रस्य न विषयत्वाघात । एक एवात्र शब्दः पुरुषाशक्तिप्रमादकारणादिभेदात्ता ता वर्णव्यूनातिरेकस्वरव्यत्यावस्थामनुपत स्तेन तेनापभ्रंशरूपेण गृह्यमाणस्तमेवार्थं प्रतिपादयतीति न पर्यायकल्पनया वाचकशब्दा न्तरवैफल्यसिद्धिः । किं च ।

देवदत्तादिनामानि नित्यसिद्धानि यानि च ।
बालैस्तत्तद्विरूपेण नाद्यन्ते तैश्च सहाय ॥

तत्तादिशब्दानपि हि बालप्रयुक्तानत्युक्तानि किशोरमुग्धप्रयुक्ताद्वा देवदत्ताद्यर्थप्रत्यय मुपलभमानः कथमिव प्रयोगप्रत्ययदर्शनाभ्यामेव वाचकत्वमध्यवस्येत् ।

अपभ्रंशाश्च ये केचिद्रूढा गाव्यादयो जने ।
तेऽपि गव्यादिरूपेण नादयन्ते व्यभिचारिताः ॥

भवेयुने नियोगतोऽविच्छिन्नपारम्पर्या एवेति ॥ २५ ॥

अन्यायश्चानेकशब्दत्वम् ॥ २६ ॥

न चैष न्यायो यत्सदृशाः शब्दा एकमर्थमभिनिविशमानाः सर्वेऽविच्छिन्नपारम्पर्या एवेति । प्रत्ययमात्रदर्शनादभ्युपगम्यते, सादृश्यात्साधुशब्देऽप्यवगते प्रत्ययोऽविकल्प्यते । तस्मादमीषामेकोऽनादिरन्येऽ-

---

कतिपुचिदेव गाव्यादिषु चिरापभ्रष्टत्वाद्दृढयाशङ्कया साधुत्वभ्रान्तिर्भवेत् । ये तु संप्रत्येव अहप्रायज्ञानकरणैरभिनवगाव्यादिरूपेण विनाश्यशब्दाः प्रयुज्यमानाः प्रकृत्यनुसरणद्वारेण वाऽर्थं प्रत्याययन्त उपलभ्यन्ते तेष्वपि प्रयोगप्रत्ययदर्शनमस्तीत्यनैकान्तिकता ।

ततश्च त्वत्प्रयुक्तोऽयं हेतुरप्यपराधभाक् ।
अनैकान्तिकतादोषान्न हासौ साधनक्षमः ॥
अन्ययोच्चार्यमाणश्च शब्दोऽपभ्रश्यते यथा ।
तथा हेतुरनैकान्ताद्धेत्वाभासत्वमृच्छति ॥
तस्माद्दृष्टप्रयोगेऽपि पुनरस्ति विचारणा ।
वाचकोऽयं न वेत्येवं सति वाऽन्येन निर्णयः ॥ २९ ॥

संशयापादनात्परपक्षे जितेऽपि स्वपक्षसिद्धिर्दुर्लभैवेत्येवमर्थमुत्तरसूत्रम्——अन्यायश्चानेकशब्दत्वमिति । कथं पुनरिदमन्याय्यम् । तदुच्यते—

वाच्यवाचकसामर्थ्यनियमो योऽभिनागतः ।
संबन्धस्तदनेकत्वे स्वरूपात्सोऽपि हीयते ॥

एकात्मकयोरेव हि वाच्यवाचकयोरन्योन्याक्षेपात्परस्परानियमः संभवत्यन्यतरस्यापि त्वनेकत्वे सति व्यभिचारान्नियमहानिः । किं च—

सामर्थ्यं सर्वभावानामर्थापत्त्याऽवगम्यते ।
एकसामर्थ्यसिद्धेऽर्थे नानेकं तत्र लभ्यते ॥

अत्यन्तादृष्टा हि वाच्यप्रत्ययान्यथानुपपत्तिमात्रप्रमाणिका वाचकशक्तिरेकत्रैव कल्पिता तदनुसार्थापभ्रंशेष्वपि नेष्टानुगम्यते को नाम तन्निरपेक्षवाचकशक्त्यन्तरकल्पनां लभेत ।

नाम च व्यवहारार्थमर्थस्याभ्युपगम्यते ।
तेनैकेनैव सिद्धेऽर्थे द्वितीयादि च निष्फलम् ॥

किं च—

विकल्पस्याष्टदोषत्वं पुरस्तादेव वर्णितम् ।
स चेहानेकशब्दत्वे निश्चयेन प्रसज्यते ॥

पभ्रंशाः। हस्तः करः पाणिरित्येवमादिषु त्वभियुक्तोपदेशादनादिरमी षामर्थेन सम्बन्ध इति ॥ २६ ॥

**तत्र तत्त्वमभियोगविशेषात्स्यात् ॥ २७ ॥**

(as to which word is correct & which incorrect)

कथं पुनस्तत्र तत्त्वं शक्यं विज्ञातुम्। शक्यमित्याह। अर्थिनो

---

नामान्तरे श्रुते चार्थस्तद्विशेषोऽन्यः प्रतीयते।
संज्ञा चोत्पत्तिसंयोगादित्यनेतद्धविष्यते ॥
या तु हस्तः करः पाणिरित्यत्रानेकशब्दता।
अनन्यगतिकत्वेन सा दृढस्मरणेन च ॥
एकशब्दानुसारेण यावदस्ति गतिः क्वचित्।
स्मर्यमाणानुमानाभ्यां तावत्सैवानुगम्यते ॥
तस्मात्स्वरूपसम्बन्धशब्दार्थत्वानिरूपणे।
एवैकनियमादेव गतिः स्यान्नान्यगोचरा ॥

यथा च प्रकृतिसारूप्यद्वारेणापभ्रंशाः प्राकृतीमेव शक्तिमाविर्भावयन्तोऽर्थप्रतिपत्तावुपयोगं गच्छन्ति तथा तदशक्तिश्चानुरूपत्वादित्यत्र वर्णयिष्यते।

तेनानेकप्रयोगेऽपि कश्चिदेवार्थसंगतः।
तद्रूपस्थापनेनान्ये बोधकास्तच्छक्तिजाः ॥ २६ ॥

तुल्यप्रयोगप्रतिपत्तीनामन्यतरावधारणमशक्यमिति वदत आह—तत्र तत्त्वमभियोगविशेषात्स्यादिति। कः पुनरभियोगः को वा तद्विशेषः कथं वा तेन वाचकत्वनिरूपणमिति। तदुच्यते—

लक्षणश्रवणाभ्यासादभियोगः प्रवर्तते।
तेन लक्ष्यान्तरज्ञानं तद्विशेषोऽभिधीयते ॥

प्रतिपदपाठो ह्यानन्त्यादत्यन्ताशक्यस्तदभावे च लक्षणानुसरणमेवैकमशेषपदलक्षणनिरूपणक्षमत्वेनावधार्यते।

तस्मान्न लोकवेदाभ्यां कश्चिद्व्याकरणादृते।
वाचकाननपभ्रष्टान्यथावज्ज्ञातुमर्हति ॥
तत्सामर्थ्यापरिज्ञाने पारिशेष्यानिरूपणात्।
अर्थापत्त्याऽपशब्दानां निश्चयो नोपपद्यते ॥
लक्षणानुगमाद्यास्तु बहिरेव प्रयुञ्जते।
नियतप्रतिपन्नत्वात्तेष्वर्थापत्तिसंभवः ॥

---

१ जै० सू० (१–२–८)। २ जै० सू० (१–३–८)।

ह्यभियुक्ता भवन्ति । दृश्यते चाभियुक्तानां गुणयतामविस्मरणमुपपन्नम् ।
प्रत्यक्षं चैतद् गुण्यमानं न भ्रश्यत इति । तस्माद् यमभियुक्ता उपदि-
शन्त्येष एव साधुरिति, साधुरित्यवगन्तव्यः ॥ २७ ॥

---

तेनोभयज्ञानस्यापि व्याकरणमेवोपाय इति तद्गताभियोगविशेषाश्रयणम् । यत्तु प्रयो-
गोत्पत्तिशास्त्रत्वादिति लक्षणे तन्मूलासंभवादितरेतराश्रयत्वमुक्तं तल्लोकव्यवहारप्रसिद्ध-
प्रतिपादकत्वमात्रेणानिर्णीतपारमार्थिकवाचकत्वैरपि व्याकरणावयवभूतैः पदैः केषांचित्सा-
धुत्वमन्वाख्याय पुनस्तैरप्यन्वाख्यापकशब्दसाधुत्वनिर्णयात्परिहरिष्यते ।

यदि वाचकतैवाऽऽद्यो न स्याद्व्याकरणादृते ।
न विज्ञायेत वा तत्र भवेदन्योन्यसंश्रयम् ॥
निर्ज्ञाते वाचकत्वेऽपि तदपभ्रंशसंकरात् ।
विवेकप्रतिपत्त्यर्थमिष्टा च व्याक्रिया स्मृतिः ॥

तेन संकीर्णासंकीर्णवाचकज्ञानोपायत्वाल्लोकव्याकरणयोर्भिन्नविषयत्वेनापुनरुक्तता । वेदे
साधुशब्दमात्रदर्शनादनर्थकं व्याकरणमिति चेत् । न । अकृत्स्नविषयत्वात् ।

केचिद्व्यवस्थिता एव साधवो लोकवेदयोः ।
सर्वशाखागतान्विद्यात्को वा साधारणानपि ॥

यथैव लौकिकप्रतिपदपाठस्याशक्यत्वमेवं वेदेऽपि सर्वशाखागतान्सकृदपि श्रोतुम-
शक्तिः किमुताध्येतुम् ।

प्रकृतिप्रत्ययानन्त्याद्यावन्तः पदराशयः ।
लक्षणेनानुगम्यन्ते कस्तानध्येतुमर्हति ॥

एतेन पुरुषार्थक्रत्वर्थादृष्टसाधुशब्दप्रयोगज्ञानसाध्यसाधनभावविधिवाक्यगतपदव्या-
क्रिया तस्याश्च पूर्वप्रसिद्धतन्मूलत्वकल्पनागतेतरेतराश्रयत्वप्रसङ्गः प्रत्युक्तः । यदि ह्येका-
न्तेन "तस्मान्न ब्राह्मणेन म्लेच्छितवै" "एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः शास्त्रा-
न्वितः स्वर्गे लोके कामधुग्भवति" "तस्मादेषा व्याकृता वागुद्यते" इति चैवमादिक्रतु-
पुरुषगतनियमविधिदर्शनोत्तरकालमेव व्याकरणेन प्रवर्तितव्यमिति पौर्वापर्यव्यवस्था स्यात्
तत एवं पर्यनुयोगः प्रसज्येतापि व्याकृतत्वाश्रयो वेदविधिर्वेदविध्याश्रयं च व्याकरणं
कथमवकल्पिष्यत इति । यदा तु किंचिद्ग्रन्थोपनिबद्धप्रकृतिप्रत्ययादिविभागद्वारप्रक्रिया-
त्मकव्याकरणस्मृतिवर्जितकालाभावादन्वाख्यानान्वाख्येयान्वाख्यातविधिप्रयोगानन्वाख्या-
तप्रतिषेधवर्जनपरम्पराप्यनवगम्यमानवेदविधिमूलत्वादनादित्वे सति सर्वथा वेदवेदिगार्ह-
पत्यीयाध्वर्युगोदोहनादिस्वरूपतत्कार्यतत्साधनविधीनामिव सर्वत्राऽनवगतपूर्वापरविभागसंब-

न्येऽत्यन्तादृष्टार्थत्वमेव केवलं शास्त्रप्रत्ययाधीनं, तदा सर्वशब्दव्याख्येयमाणविद्यमान शब्दनियमविधेनं किंचिदनुपपन्नम् । यत्तु वाचकत्वावाचकत्वव्यतिरिक्तसाध्वसाधुता-भावाद्वाचकावाचकत्वयोश्च लौकिकप्रयोगप्रतिपत्तितद्विपर्ययमात्रशरणत्वाद्गा-गाव्यादिशब्दा-नामवाचकत्वप्रतिज्ञाने लोकविरोधात् मेयोदिशब्दमात्रानुवाक्स्वरपाठप्रसिद्धन्यूनातिरिक्तविपर्यस्तवर्णपदव्यतिरिक्तप्रसिद्धमध्ये कश्चिदपशब्दो नामास्तीति । तत्राभिधीयते—

समुग्धवाचके लोके लक्षणाद्वाचकः स्फुटः ।
गम्यते स्मरणं चोक्तमाचाराद्बलवत्तरम् ॥

लोकव्याकरणाभ्यां हि मिश्राभ्यामविप्लुतवाचकसिद्धिरिति तावदेव लोकव्यवहारा-द्वाचकत्वज्ञानं जायते यावद्व्याकरणानुगतत्वं नाभ्युपगम्यते ।

यदा तु तयोर्मार्गभेदेन प्रतिपत्तिस्तदा 'तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्' इत्युपन्यस्य 'शास्त्रस्था वा तन्निमित्तत्वात्' इत्यनेनैवोत्तरेण व्याकरणाख्यशास्त्रगत-प्रतिपत्तिबलीयस्त्वं तदभियुक्तपुरुषबलीयस्त्वं वा पूर्वमेव स्थापितम् ।

तर्केणावाचकत्वं च वदद्भिर्नेन बाध्यते ।
स्मर्यमाणविरोधस्तु ब्राह्मणाब्राह्मणादिवत् ॥

यथैव तुल्यशरीरपाण्याद्याकारेष्वपि सर्वर्णलोकदृष्टिग्राह्येषु ब्राह्मणादिषु मातापितृ-सम्बन्धस्मरणादेव वर्णविवेकावधारणं भवति तथा साधुशब्दावधारणमपीति लोकविरोधाभावः ।

यथा च तुल्यपाण्यादिरूपत्वाद्वर्णसंकरम् ।
वदतः स्मृतिबाधः स्यात्तथा वाचकसंकरम् ॥
आदितश्च स्मृतेः सिद्धः प्रत्यक्षेणापि गम्यते ।
साध्वसाधुविभागोऽयं कुशलैर्वर्णभेदवत् ॥

[1] यो नाम स्मृतिप्रतिपादितोऽर्थः कर्मफलसम्बन्धवदनियतकालत्वान्न ज्ञायते कदा भवि-ष्यतीति सोऽत्यन्तं प्रत्यक्षाद्यविषयत्वात्केवलशब्दमूलत्वेन स्थाप्यते । यस्य त्वादौ स्मरणजनितविवेके कृते तदनन्तरमेव प्रत्यक्षमपि विचाराभ्यासजनितसंस्कारस्य रागा-भ्यासजनितषड्जादिविभागविषयमिव साध्वसाधुशब्दरूपगोचरमुपजायते ।

तस्मै तर्केण यो नाम साधयेच्छब्दसंकरम् ।
तस्य प्रत्यक्षबाधोऽपि वर्णसंकरबाधवत् ॥

तेनापशब्दगतवाचकत्वाभावानभ्येव समस्तप्रमाणविरोधः शक्यो वक्तुं न स्मर्यमाण-शब्दसाधुत्वपक्षस्येति निरवद्यता । तेनादृष्टार्थप्रत्यायननियमप्रतिषेधद्वारं धर्माधर्मसाध-

1 जै० सू० (१—३—४)

नत्वकृतमपि साध्वसाधुत्वज्ञानमुपपत्स्यते । यस्त्वाह साधुत्वं नेन्द्रियग्राह्यमित्यादिश्लोकम् । त प्रत्येव वक्तव्यम् ।

साधुत्वमिन्द्रियग्राह्यं लिङ्गमस्य च विद्यते ।
शास्त्रस्य विषयोऽप्येष प्रयोगोऽप्यस्त्यसङ्करः ॥ इति ।

प्रत्यनिरन्तराभ्यस्तादिदोषवर्जितनियतह्रस्वादिकालाभिव्यङ्ग्यथथावलक्षितक्रमग्राह्य वर्णानां स्मर्यमाणाविनष्टवाचकरूपविपरीधोत्रज्ञानेनोदात्तादिवदिन्द्रियग्राह्यत्वम् । तदुत्तरकालप्रवृत्तव्यवहारगतार्थप्रतिपत्तिसहितलक्षणगतप्रकृतिप्रत्ययलोपागमविकारादेशादिलिङ्गमप्यव्यभिचारि विद्यते । शास्त्रस्य च द्विविधस्यापि श्रुतिस्मृतिरूपस्य स्वर्गलोकयज्ञोपकारसिद्धिसाधनभावप्रतिपादनार्थस्यार्थानर्थकार्यस्वरूपज्ञानार्थस्य चायमेवंविध एवान्योऽपि विषयः । अविनष्टैः शब्दैर्भाषमाणस्य स्वर्गयज्ञोपकारौ भवतः । याज्ञे च कर्मण्यपशब्दैर्भाषमाणस्यानृतमिव वदतः प्रतिषिद्धाचरणनिमित्तक्रतुवैगुण्यप्रसङ्गः । यथोक्तं "वाग्योगविद्दुष्यति चापशब्दैः" इति । एतौ द्वावप्यर्थौ न शास्त्रादृतेऽन्येन प्रतिपादयितुं शक्येते इत्यतीव शास्त्रविषयः । द्वाभ्यामेव च विधिप्रतिषेधाभ्यामविनष्टैः शब्दैः स्वर्गयज्ञोपकारकामो भाषेत न विनष्टैरिति न प्रतिशब्दापशब्दमनन्तविधिप्रतिषेधकल्पनप्रसङ्गः । न च विधिप्रतिषेधविषयेणैव शास्त्रेण भवितव्यं प्रमेयस्वरूपज्ञापनार्थेनेत्येतदीश्वराज्ञासिद्धम् । न हि 'अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा' इत्यादि, 'चतुश्चत्वारिंशदाश्वीनानि सरस्वत्या विनशनात्प्लक्षप्रस्रवणे' इत्येवमादिवाक्यरोपाणां च शास्त्रगतानामर्थतत्त्वप्रतिपादनपरत्वं न लभ्यते । नापि तत्प्रतिपादने शास्त्रशब्दवाच्यत्वाभावः । अथापि विधिप्रतिषेधात्मकेनैव शास्त्रेण भवितव्यमिति काचित्परिभाषा तथाऽप्येवंविधा साधुशब्दा प्रत्येतव्या इतीदृशो विधिः सम्भवत्येव । यो वा वक्यान्तरावगतादृष्टफलार्थी यथाविनष्टैः शब्दैर्भाषितुमिच्छेत् स चैतानेवंरूपानेतत्क्रमग्राह्य वर्णानुपाददीत नाधिकान्न न्यूनांश्चेति यावद्रूपं विधिप्रतिषेधौ शक्यौ दर्शयितुमिति शास्त्रविषयत्वसिद्धिः । किं सन्निवृद्धबालप्रयुक्तेषु स्ततसादिशब्देषु भयाऽपि च सर्वे शब्दानां विनष्टाविनष्टरूपैरवश्यं भवितव्यमिति शक्यं विज्ञातुम् । एवं व्याकरणानुगतवैदिकशब्दाविनाशसादृश्यादपि तद्विपर्ययानिरूपणाविनष्टत्वोपमानं दर्शयितव्यम् । तथा लौकिकार्थप्रत्ययोत्पादितप्राचकत्वार्थापत्तिलभ्यमन्तावदेव साधुत्वनिश्चयः । तेन सम्भवत्प्रमादालस्यकरणवैगुण्यनिमित्तापभ्रष्टरूपवर्जितकेवलसाध्वन्वाख्यानस्यान्यथानुपपद्यमानत्वादपरयाऽप्यर्थापत्त्या सिद्धमेव साधुत्वज्ञानम् ।

अपभ्रंशेषु साधुत्वं तुल्यार्थत्वाद्यदुच्यते ।
लक्षणाभावमार्गेण तस्याभावोऽपि निश्चितः ॥ इति ॥

षण्णामपि प्रमाणानां साध्वसाधुत्वनिर्णये ।
व्यापारोऽस्तीति को जल्पेत्साधुत्वं निष्प्रमाणकम् ॥
यद्यप्यनभियुक्तानां प्रयोगोऽस्ति ससङ्करः ।
अभियुक्ता विवेक्ष्यन्ते तथाऽपि ब्राह्मणादिवत् ॥
यथा च पद्मरागादीन्काचस्फटिकमिश्रितान् ।
परीक्षका विजानन्ति साधुत्वमपरे तथा ॥
यथा रत्नपरीक्षाया साध्वसाधुत्वलक्षणम् ।
तथा व्याकरणात्सिद्धं साधुशब्दनिरूपणम् ॥

पौरुषेयव्याकरणागमपरम्परायामपि च तदनुगतसाधुत्वानन्तरदर्शनात्पूर्वदृष्टविवेक्तृत्वमात्रपरत्वाद्वा नान्धपरम्परावचनन्यायप्रसङ्गः । यावानिह दृष्टार्थांशः स वैदिकविधिप्रतिषेधद्वयादेवोपपन्नः । तत्सिद्ध्यर्थाविनष्टशब्दरूपाज्ञाने वेदशिष्टप्रयोगप्रवादिव्याकरणान्वाख्यानपारम्पर्येण सद्यःफलत्वात्सुलभमिति न पुरुषकृतत्वनिमित्तदोषप्रसङ्गः । यत्तु दृष्टार्थत्वात्स्वसामर्थ्यप्राप्तत्वादेव 'अप्राप्ते शास्त्रमर्थवत्' इति वाचकभाषणविधानमनुपपन्नमिति तत्राधिकरणेनैवोत्तरं दास्यते 'नियमार्था वा श्रुतिरुच्यते' इति । यत्त्ववाचकत्वेनापशब्दानामप्रसङ्गाद्व्यावर्त्याभावे नियमानुपपत्तिरिति । तत्रोच्यते—

नियमः परिसंख्या वा न व्यावर्त्याद्विनेष्यते ।
नित्यनामात्रकारी तु नियमः किं न लभ्यते ॥

सति भाषितव्ये कदाचिदविनष्टेन भाषेत कदाचित्प्रमादाशक्तिभ्यामपभ्रंशेनाप्यभिनिकोचनादिना वा शब्दरहितेनैव प्रत्याययेत् ।

अतः श्रेयोऽर्थिनोऽवश्यं साधुभाषा नियम्यते ।
नियोगेन हि तां कुर्वन्नपूर्वं साधयिष्यति ॥

यद्यपि च नियमेऽन्यनिवृत्तिरवश्यं कल्पनीया तथाऽपि साधुशब्दस्मृतिव्यवहितानां कालेऽरूढरूपभ्रान्तिवाचकत्वगृहीतानां चापशब्दानां सम्भवति प्रयोगप्रसङ्गे साधुनियमेन व्यावृत्तिः ।

अथ वा नैवापशब्दानामपृथक्त्वे केचिदेतन्नियमविषयानेकद्रव्यगुणादिवदभिधायां प्राप्नुवन्ति ये साधुनियमेन व्यावर्त्येरन् । किं तु ।

---

१ जै० सू० (६-२-४) । २ जै० सू० (४-२-९) । ३ विप्रकर्षाभिधायिकालशब्दोपात्तानामपशब्दानां, स्वपदपरामृष्टो याऽस्मर्यमाणावधिर्दीर्घकालप्रयोगो यथा छशब्दोऽस्मल्लेच्छभाषणविलक्षणसाधुशब्दसादृश्यमकाऽयं तदुभयासङ्कारणजन्यया भ्रान्त्याऽऽधुनिकैर्वाचकत्वेन गृहीतानामित्यर्थः

साधूनेव प्रयुञ्जाना नाशयेयुरयत्नतः ।
मा विनीनशदित्येवं नियमस्तान्नियच्छति ॥

तद्यथा । 'यो विदग्धः स नैर्ऋतः' इत्येवमादिदोषानिन्दापूर्वकम् 'अविदहता श्रपयितव्यः' इति नियम्यते । तथा 'दुष्टः शब्दः स्वरतो वर्णतो वा' इत्यादिना निन्दितत्वात्, 'तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः' इति प्रमादादिनिमित्तविनाशेन शब्दकार्यार्थसाधनादपेतोऽयं म्लेच्छः, 'म्लेच्छ अव्यक्तायां वाचि' इति स्मरणात्स न प्रयोक्तव्य इति प्रतिषेधः । 'तस्मादेषा व्याकृता वागुद्यते' इति च विधिरविनष्टप्रयोगनियमार्थः ।

ननु चाशक्तिजा दोषाः प्रमादजनिताश्च ये ।
परिहर्तुमशक्यत्वान्निषेधस्याप्यगोचरः ॥

उच्यते—

प्रमादमेव मा कार्षीः सामर्थ्याय यतस्व च ।
एवमर्थो निषेधोऽयं नाऽऽक्रियेतान्यथा ह्यमी ॥
अन्ये सुखसुखाकृष्टा न क्लेशेन विवक्षवः ।
शक्ताश्चैवाप्रमत्ताश्च वदेयुरनिवारिताः ॥
अशक्तैर्नोदिताश्चान्ये दाक्षिण्याद्यनुवर्तनात् ।
जानन्तोऽपि प्रयुञ्जीरन् यदि शास्त्रं न वारयेत् ॥
अन्येऽपि प्राकृतालापैरशक्तैर्व्यवहर्तृभिः ।
सह व्यवहरन्तस्तानुपेत्यापि प्रयुञ्जते ॥
तत्कथं नाम यत्किंचित्स्यादपभ्रंशकारणम् ।
दूरात्परिहरेयुस्तानिति यत्नो नियम्यते ॥

यत्तु दृष्टार्थत्वापादननिराकरणदक्षत्वाददृष्टार्थप्रयोगोत्पत्त्यशक्यत्वमिति । तत्रोच्यते—

दृष्टे सत्यपि यत्नेन नियमाददृष्टमिष्यते ।
क्रत्वर्थं पुरुषार्थं च तत्संयोगपृथक्त्वतः ॥

'एकस्य तूभयत्वे संयोगपृथक्त्वं' तथेह प्रकरणानारभ्यवादाभ्यामवगतं, तत्र—

क्रत्वर्थादौ प्रयोगार्थार्थवादः फलश्रुतिः ।
पुरुषार्थे तु निर्देशात्फलमोक्षप्रदर्शनात् ॥

क्रत्वर्थं ह्यनिर्दिष्टफलत्वात्सर्वत्र दृष्टोपकारसंबद्धमिति नियमापूर्वमात्मसात्कुर्वत्पुरुषार्थां फलश्रुतिमर्थवादीकरोति । पुरुषार्थस्य नियमस्य स्वर्गफलत्वान्नियमयोगत्वाद-धर्मप्रतिपत्तेर्धारधंसोऽप्यशक्तिनिरोधादिभ्यो वा पुनरसिद्धत्वादनारादुक्तिनियमापूर्वेणी-

१ श० ब्रा० ( ३-२ ) । २ जै० सू० ( ४-३-२ ) । ३ जै० सू० ( ४-३-५ ) ।

वनसामर्थ्यं नास्तीत्यवश्यमर्थवादोपात्तमेव, स्वर्गलोके कामधुगाचैव फलत्वेनाऽऽश्रयणीयम्। यत्तु न ज्ञायते केदं नियमापूर्वमाश्रितमिति, तत्राभिधीयते—

क्रत्वर्थं तावदङ्गेषु तदर्थेष्वेव संश्रितम्।
अनङ्गत्वाभिधानार्थं न्यात्क्रत्वर्थं नराश्रितम्॥

'प्रकरणविशेषाद्वा तद्युक्तस्य तत्संस्कारो द्रव्यवत्'[1] इति हि ज्योतिष्टोमप्रकरणगत-ब्राह्मणशब्दलक्षिततत्पूर्वसाधनयजमानसंस्कारत्वात्साधुभाषणनियमापूर्वस्य। 'यजमानास्तु तत्प्रधानत्वात्कर्मवत्'[2] इत्यनेन न्यायेन फलप्रतिग्रहणयोग्यत्वाधानार्थं तदाश्रितमेव विज्ञायते। पुरुषार्थवाक्येऽपि सम्यग्ज्ञातसुप्रयुक्तत्वाभिधानात्प्रयोक्तृपर्युपस्थापनात्क्रिया-फलयोश्च तद्गामित्वात्प्रधानयागापूर्ववदेव ज्ञातृप्रयोक्त्राश्रितं निष्पद्यते।

तृतीयोक्तिक्रियागम्यगुणभावेऽपि वक्तरि।
संस्कार्यत्वात्प्रधानत्वं स्यात्प्रयाजाज्यशेषवत्॥

यथैव 'प्रयाजशेषेण हवींष्यभिघारयति' इति सत्यपि शेषस्य तृतीयानिर्देशे कार्योपयोगित्वात्संस्कार्यत्वावधारणमेवं ब्राह्मणस्यापीत्यदोषः।

यदि वा ब्राह्मणेनेति तृतीया यागकारिणि।
कामधुक्छब्दयोगाच बहिः प्राधान्यकल्पना॥
नैव म्लेच्छनकारित्वात्तृतीयेयं प्रतीयते।
कुर्वता यागमित्येवं ब्राह्मणेनेति योज्यते॥
यागे यो गुणभावश्च संस्कारे सा प्रधानता।
न ह्यारादुपकारित्वं संयुक्तस्योपयोगिता॥

तच्चोपयोगित्वं प्रकरणतृतीयाविभक्तिश्रवणाभ्यामवगतं शेषस्वीकरणसमर्थं भवति। बाह्यपुरुषार्थत्वेऽपि कामधुक्छब्दस्य पुरुषोपभोग्यकाम्यमानार्थसाधनवचनत्वात्पुरुषप्राधान्यप्रतिपत्तिः। यद्यपि च साधुशब्दोच्चारणमुच्चारयित्रर्थं क्रत्वर्थं च न भवति तथाऽपि तद्गतनियमप्रतिषेधयोरेव क्रत्वर्थपुरुषार्थत्वे भविष्यतः। न हि यदर्थे कर्मणि यौ नियमप्रतिषेधौ तावेव केवलौ तदर्थौ भवत.। तथा हि—

स्वचुपयमासमक्षादिपुरुषार्थमपि श्रितः।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात्॥
क्रत्वर्थात्त्वादिराश्रेष्टा वीर्यसिद्धिर्विधानतः।
भोजनाच्चाप्यतिथ्यर्थादपूर्वं दातृसंश्रितम्॥

अनश्च परार्थोच्चारणाश्रितावपि नियमप्रतिषेधौ स्वप्रयोजनाकाङ्क्षावेलायां संनिहितपुरुषप्रधानौ विज्ञायेते।

---

1 जै० सू० (३-४-९)। 2 जै० सू० (३-८-२)।

अतश्च वेदमूलत्वे सत्येवं प्रतिपादिते ।
प्रयोगोत्पत्त्यशास्त्रत्वं यदुक्तं तदसत्कृतम् ॥
यच्चास्य कृत्रिमत्वेन स्वतः शास्त्रत्वबाधनम् ।
तत्प्रसिद्धिविरुद्धं स्यादन्द्रशशिवाक्यवत् ॥

शास्त्रशब्दो यदि तावद्रूढस्ततश्चतुर्दशसु तावद्विद्यास्थानेषु शास्त्रस्थानामेव प्रसिद्धेस्तदन्तर्गतत्वाच्च व्याकरणस्य शास्त्रत्वनिराकरणानुपपत्तिः । अथापि शिष्यतेऽनेनेति शास्त्रत्वमन्वर्थमिष्यते तथाऽपि व्याकरणेन साधुशब्दाः शिष्यन्ते तदनुगमोपाया वा प्रकृतिप्रत्ययादयस्तद्यमियुक्तशिष्यजनो वेति सर्वथा शास्त्रशब्दप्रवृत्तिरविहता ।

प्रसिद्धमपि शास्त्रत्वं यस्तु तर्केण वारयेत् ।
वेदस्यापि स नित्यत्वाद्व्योमवद्वारयिष्यति ॥

यथैव हि व्याकरणादीनां कृत्रिमकाव्योपनिबन्धसाधर्म्याच्छास्त्रत्वं प्रतिषेद्धुमध्यवसीयते, तथाऽऽकाशादिकाब्यात्मना परमाणुदृष्टान्तबलेन नित्यत्वाद्वेदस्याशास्त्रत्वमप्ययत्नेनैव क्रियेत । यो हि नागरिकमापाभिज्ञतया ग्रामणीर्मातापितरावपि रुक्षवचनैरभिद्रवीत स केनान्येन वार्येत ।

परत्राविनयं कुर्वन्पितृभ्यां वार्यते सुतः ।
तयोरेवाविनीतस्य को भवेद्विनिवारकः ॥
तथा बहिरसंबद्धं वदन्वेदेन वार्यते ।
साङ्गेन तं पुनर्निघ्नन्केनान्येन निवार्यते ॥
क्रुद्धो यो नाम यं हन्ति स तस्याङ्गानि कृन्तति ।
कृत्ताङ्गस्य ततस्तस्य विनाशः क्रियता भवेत् ॥
तेन मयी'द्विपन्पूर्वं वेदाङ्गान्येव लुम्पति ।
ततस्तेनैव मार्गेण मूलान्यन्यस्य कृन्तति ॥
श्रुतिस्मृतिप्रमाणत्वे हेतुपूर्वं निरूपिते ।
अङ्गानामप्रमाणत्वमशास्त्रत्वं च को वदेत् ॥

यत्त्वितरस्मृतीनां प्रायेण सारूप्याद्व्याकरणस्य तद्विलक्षणस्यातन्मध्यपातित्वमसंभाव्यमिति । तत्रोच्यते । सर्वधर्मसूत्राणां वर्णाश्रमधर्मोपदेशित्वाद्धर्माणां चैकरूपप्रायत्वात्परस्परसंवादित्वं युक्तं, व्याकरणस्य त्वन्य एव साधुशब्दतत्त्वनिर्णयरूपो विषयस्तस्यास्य व्याकरणान्तरेणैव संगतिः स्यान्न धर्मसूत्रैः । स्मृतित्वं त्वङ्गानां धर्मसूत्राणां चाविशिष्टम् ।

१ रुक्षवचनमिति—निष्ठुरवचनमित्यर्थः ।

अथापि स्मृतिशब्देन नाङ्गानामभिधेयता ।
तथाऽप्येषां न शास्त्रत्वप्रमाणत्वनिराक्रिया ॥
पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ॥

इति हि तुल्यवत्प्रामाण्यस्मरणम्—

अपि वा कर्तृसामान्याद्युक्तो न्यायश्च यः स्मृतेः ।
प्रमाणत्वे समानोऽसौ वेदाङ्गेष्वपि गम्यते ॥
प्रमाणवत्त्वमूलत्वं पूर्वं चैषां प्रदर्शितम् ।
दृष्टादृष्टफलत्वेन तस्मान्नास्त्यप्रमाणता ॥
एकस्य च यदा युक्त्या समूलत्वं निरूपितम् ।
पौरुषेयान्तरग्रन्थमूलताऽपि तदेष्यते ॥
असंभावितमूलं हि पौरुषेयं यदुच्यते ।
मूले तस्याप्रतिष्ठत्वं रूपे जात्यन्धवाक्यवत् ॥

इह तु समूलत्वादेकान्तेनैव प्रामाण्यसिद्धिः । यत्तु सूत्रवार्तिकभाष्यकाराणामन्योन्यविगीतवचनत्वादप्रमाणत्वमिति । तत्राभिधीयते—

स्मृतीनामप्रमाणत्वे विगानं नैव कारणम् ।
श्रुतीनामपि भूयिष्ठं विगीतत्वं हि दृश्यते ॥
विगीतवाक्यमूलानां यदि स्यादविगीतता ।
तासां ततोऽप्रमाणत्वं भवेन्मूलविपर्ययात् ॥

मूलानुरूप्येण हि स्मृतीनां प्रमाणत्वं तदविगानेन —

परस्परविगीतत्वमतस्तासां न दूषणम् ।
विगानाद्धि विकल्पः स्यान्नैव त्वप्यप्रमाणता ॥
धर्मासनतादौ च विगानं नैव विद्यते ।
अन्वाख्यानविगानं तु कथमेतेन दुष्यति ॥

पुनरुक्तत्वादिना हि यत्सूत्रव्याख्यानं तस्य च पुनः समाधानम् ।

तस्यार्थान्तरमूलत्वान्न किंचिदपि दुष्यति ।
ये चापीहोपमस्यन्ते ते च स्मृत्यन्तराश्रिते ॥
न चाविक्षेपसंस्थानान्न्यूनस्यास्त्यप्रमाणता ॥

तद्यथा । धनसनेयिदाश्वाथामावर्यत्र चरकशाखासु च बहिष्येतावता नात्र विषयमप्रमाणीकुर्वन्ति । तस्मादयमपि न दोषः । यस्तु सूत्रकारस्य प्रयोजनानभिधानोपालम्भः ।

१ जै० (सू० १-३-१)

स श्रुतिस्मृतिसिद्धत्वान्नोपालम्भमलमर्हति ।
अन्यान्ते च स्वसंवेद्यं सुज्ञानं तत्प्रयोजनम् ॥

सत्यवचनं च सर्वश्रुतिस्मृतिषु स्वर्गसाधनत्वेन यागसाधनत्वेन च नियतम् । सत्यं च द्विविधं शब्दसत्यमर्थसत्यं च । तत्र यथैव यथावस्थिताविप्लुतार्थवचनं श्रेयःसाधनमेवं यथावस्थितशब्दसत्यवचनमपि, यथा चार्थसत्यविपर्ययः प्रत्यवायायैवं विनियोगकालप्रयुक्तशब्दानृतवचनमपि । शब्दसाधुत्वज्ञानं च व्याकरणाभियोगविशेषादित्युक्तम् ।

तस्माद्विज्ञायमानत्वान्नोक्तं मूलकृता स्वयम् ।
शास्त्रेण सर्वशब्दानामन्वाख्यानप्रयोजनम् ॥

न च व्याकरणप्रयोजनाभिप्रायं प्रति केचिद्विवदन्ते । स एव त्वभिप्रायः किं न्याय्यो नेत्यर्थान्तरमेतत् ।

धर्माय नियमं चाऽऽह वाक्यकारः प्रयोजनम् ।
वेदमूलस्तु तत्रैक एको व्याकरणाश्रयः ॥

नियमद्वयप्रयुक्तं व्याकरणम् । साधुशब्दज्ञानात्तत्पूर्वप्रयोगाद्वा स्वर्गयज्ञोपकारसिद्धिरित्येतत्तावद्वेदमूलमनन्यप्रमाणकत्वात् । अतश्चायं तावद्वेदाख्येन शास्त्रेण धर्मनियमः ।

तथा व्याकरणाख्येन साधुरूपं नियम्यते ।
अविशेषेण सिद्धिः स्याद्विना व्याकरणस्मृतेः ॥

तेन वेदावगतसम्यग्ज्ञातसाधुशब्दप्रयोगात्मकधर्माङ्गत्वेन व्याकरणप्रक्रियेतिकर्तव्यतया नित्यवाचकशब्दरूपज्ञाननियमः क्रियते । यत्र कात्यायनेन ज्ञाने धर्म इति चेत्तथाऽधर्म इति तन्त्रेण प्रसङ्गेन चाऽपशब्दज्ञानादधर्मत्वापत्तिदोषमभिधाय शास्त्रपूर्वप्रयोगेऽभ्युदय इति निःश्रेयससिद्ध्युपायेऽवधारिते यत्पुनः परावृत्य भाष्यकारेणोक्तम्, [2]'अथ वा पुनरस्तु ज्ञाने धर्म इत्यभ्युपेत्यवादमात्रं तत्पूर्वोक्तदोषपरिहारसामर्थ्यप्रदर्शनार्थं कृत्वाचिन्तान्यायेनोक्तम् । परमार्थतस्त्वन्यानर्थक्यप्रसङ्गाविज्ञातपारार्थ्योपादितार्थवादत्वात्फलश्रुतिर्न फलप्रतिपत्तिक्षमा विज्ञायते । यथा [4]'योऽश्वमेधेन यजते य उ चैनमेवं वेद' इति ज्ञानमात्रादेव ब्रह्महत्यातरणं यदि सिध्येत्को जातुचिद्बहुद्रव्यव्ययायाससाध्यमश्वमेधं कुर्यात् । तद्विधानं चानर्थकमेव स्यात् । एवं शब्दज्ञानाच्चेद्धर्मः सिध्येत्को नामानेकतात्वादिव्यापारायासखेदमनुभवेत् । तस्मात्क्रतुवदेव ज्ञान-

१ लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः । २ म० भा० पस्पशाह्निके । ३ शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन । ४ म० भा० पस्प० ।

पूर्वप्रयोगस्यैव फलकारणे कार्यवदुपचारात्तण्डुले दर्ववर्षणवज्ज्ञाने धर्मवचनमापादिताधर्मप रिहाराभिधानशक्तिमात्रप्रदर्शनार्थमेवोपन्यस्तं न फलवत्त्वप्रतिपादनाय । 'द्रव्यसंस्कारं कर्मसु परार्थत्वात्' इत्यनेन न्यायेन ज्ञानस्य पुरुषशब्दसंस्कारत्वेन निराकाङ्क्षस्य फलसबन्धासभवात् ।

सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ।
पराङ्ग चाऽऽत्मविज्ञानादन्यत्रेत्यवधारणात् ॥

आत्मज्ञानं हि सयोगपृथक्त्वात्क्रत्वर्थपुरुषार्थत्वेन ज्ञायते तेन विना परलोकफलेषु कर्मसु प्रवृत्तिनिवृत्त्यसंभवात् । तथा 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' तथा 'मन्तव्यो बोद्धव्यः' 'तथाऽऽत्मानमुपासीत' इति कामधादलोकवादवचनविशेषैर्जिज्ञासामननसहितात्मज्ञानकेवलावबोधपर्यन्तस्पष्टात्मतत्त्वज्ञानविधानापेक्षितवाक्यान्तरोपात्ताद्विविधाभ्युदयानि श्रेयसरूपफलसबन्ध '॥ सर्वांश्च लोकानाप्नोति सर्वांश्च कामानाप्नोति तरति शोकमात्मवित्तथा स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सपन्नो महीयते' इत्यादिना योगजन्याणिमाद्यष्टगुणैश्वर्यफलानि वर्णितानि । तथा '॥ खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसपद्यते न स पुनरावर्तते' इत्यपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्थाफलवचनम् । अप्रकरणगतत्वेनानैकान्तिकक्रतुसबन्धासबन्धाच्च नाञ्जनलादिरसुववाक्यादिफलश्रुतिवदर्थवादत्वम् ।

न च ज्ञानविधानेन कर्मसबन्धवारणम् ।

प्रत्याश्रमवर्णनियतानि नित्यनैमित्तिककर्माण्यपि पूर्वकृतदुरितक्षयार्थमकरणनिमित्तानागतप्रत्यवायपरिहारार्थं च कर्तव्यानि । न च तेषां भिन्नप्रयोजनत्वाद्भिन्नमार्गत्वाच्च बाधविकल्पपरस्पराङ्गाङ्गिभावाः संभवन्ति । शब्दज्ञानस्य त्वेकान्तेन प्रयोगाङ्गत्वात्पूर्वतरभावित्वाच्च न पृथक् फलसबन्धसंभव इति ज्ञानपूर्वप्रयोगफलवत्त्वमेव निश्चीयते । यस्यादिमद्व्याकरणज्ञानतःपूर्वकप्रयोगफलसबन्धोऽनादिविधिमूलो नावकल्पत इति । तत्र यूपादिकरणवद्व्याकरणपरम्परानादित्वादनुपालम्भ । 'तस्मादेषा व्याकृता' इति च व्याकरणव्यवहारनित्यत्वमुक्तम् ।

न चैषा संप्रदायेन व्याकृतेत्यभिधीयते ।
तत्र ह्युच्यत इत्येव व्याकृतेति तु निष्फलम् ॥

१ देवो वर्षति तण्डुलान् इत्यत्र यथा तण्डुलशब्दो वृष्ट्युपचर्यते इति दृष्टान्तार्थः । २ जै० सू० (४-३-१) ।

तदशक्तिश्चानुरूपत्वात् ॥ २८ ॥

अथ यदुक्तम्—अर्थोऽवगम्यते गाव्यादिभ्यः, अत एषामप्यनादिरर्थेन संबन्ध इति। तदशक्तिरेषां गम्यते। गोशब्दमुच्चारयितुकामेन केनचिदशक्त्या गावीत्युच्चारितम्। अपरेण ज्ञातं सास्नादिमानस्य विवक्षितस्तदर्थं गौरित्युच्चारयितुकामो गावीत्युच्चारयति। ततः शिक्षित्वाऽपरेऽपि सास्नादिमति विवक्षिते गावीत्युच्चारयन्ति। तेन गाव्यादिभ्यः सास्नादिमानवगम्यते। अनुरूपो हि गाव्यादिर्गोशब्दस्य ॥२८॥

एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ॥ २९ ॥

अत एव हि विभक्तिव्यत्ययेऽपि प्रत्ययो भवति। अस्मकेरागच्छामीत्यस्मकशब्दैकदेश उपलभ्ये, अश्मकेभ्य इत्येव शब्दः स्मर्यते। ततोऽश्मकेभ्य इत्येषोऽर्थ उपलभ्यत इति। एवं गाव्यादिदर्शनाद्गोशब्दस्मरणं ततः सास्नादिमानवगम्यते ॥ २९ ॥

[ ९ ] प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ ३० ॥ पू०

अथ गौरित्येवमादयः शब्दाः किमाकृतेः प्रमाणमुत व्यक्तेरिति संदेहः। उच्यते। इदं तावत् परीक्ष्यताम्। किं य एव लौकिकाः शब्दास्त एव वैदिका उतान्य इति। यदा त एव, तदाऽपि किं त।

---

यद्यपि च मनुना पङ्क्तिपावनमध्ये वेदाङ्गवेत्त्रुपलम्योक्तम्। 'यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्' इति तेनापि पूर्वपक्षादुक्ताधीतवेदत्वयज्ञमीमांसनव्यतिरिक्तविषयेण सताऽवश्यमेतदेव व्याकरणज्ञानमाश्रयितव्यमिति तन्नित्यत्वसिद्धिः ॥ २७॥२८॥२९॥

( इति व्याकरणाधिकरणम् ॥ ८ ॥ )

---

इह नामाख्यातोपसर्गनिपातानां मध्यान्नामानि परिगृह्यन्ते, तेषामपि जातिगुणक्रियाद्रव्ययदृच्छासर्वनामशब्दानां मध्याज्जातिशब्दा आश्रियन्ते। तेषामप्येकं गोशब्दमुदाहृत्य विचार्यते किं पुनरयमाकृतेर्वाचकोऽथ व्यक्तेरिति, ततः।

( लोकवेदयोः शब्दार्थानामनन्यत्वनिरूपणम्। )

एतत्सान्यासिकं कृत्वा वक्ष्यमाणं तु सांप्रतम्।

---

१ यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्। तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ।

२ अत्रत्यवार्तिककारैः 'तदशक्तिश्चानुरूपत्वात्' इति सूत्रं प्रसङ्गात्पूर्वमेव 'अन्यायश्चानेकशब्दत्वम्' इति सूत्रव्याख्यानान्ते यथा 'प्रकृतिं सारूप्यद्वारेणापभ्रंशा' इत्यादिग्रन्थेन व्याख्यातत्वात्र व्याख्यातम्। एवं 'एकदेशत्वाच्च विभक्तिव्यत्यये स्यात्' इति सूत्रं च भाष्यकारैः सुस्पष्टं व्याख्याततयाऽद्रपेक्षितमिति वेदितव्यम्।

एवैषामर्था ये लोके, उतान्य इति संशयः । तत्रान्ये लौकिकाः शब्दा अन्ये वैदिका अन्ये चैषामर्था इति ब्रूमः । कुतः । व्यपदेशभेदाद् रूपभेदाच्च ।

---

उपायफलसिद्ध्यर्थमिदं तावद्विचार्यते ॥

किं य एव लौकिकाः शब्दास्त एव वैदिकास्त एव चैषामर्था उतान्य इति । आह—

किं लोकवेदशब्दानामेकत्वप्रतिपादने ।

प्रयोजनं यत पूर्वं तावत्तत्प्रतिपाद्यते ॥

उच्यते—

फलमस्य विचारस्य वैदिकेषु भविष्यति ।

लोके न निर्णयोपायस्तेनैकत्वाय यत्यते ॥

यदि शब्दार्थानामनन्यत्वं लोकवेदयोर्भवेत्तत एतस्या व्यक्त्याकृत्यभिधानचिन्ताया वृद्धव्यवहारस्यानेकप्रयोगानुसरणद्वारेणाभिधेयानभिधेयत्वनिर्णयः शक्यते कर्तुम् ।

प्रयोजनं तु लोकस्य न किंचिदपि सिध्यति ।

आकृतिव्यक्तिवाच्यत्वपरमार्थनिरूपणात् ॥

सम्मूर्छितानेकार्थसंनिधाने हि शब्दः प्रयुक्तः कियत्यप्यर्थजाते प्रत्ययं करोति तेन चाविविक्ताभिधेयगम्यमानांशेनापि समस्तधर्मोपेतेन कार्यसिद्धौ क्रियमाणायां प्रयुक्तः ।

यद्युच्यमानया कार्यं यदि वा जातिगम्यया ।

समस्तं क्रियते व्यक्त्या को विवेकधियो गुणः ॥

यद्युच्येतेहापि भेदवत्सामान्यविशेषलक्षणबाधसिद्धिरेव प्रयोजनमिति । तदुच्यते—

सर्वं हि दधिदानादि लोके कर्मार्थलक्षणम् ।

तद्वशान्नियमाणे तु न चिन्त्ये श्रुतिलक्षणे ॥

तेन लोके विचारोऽयं जायते निष्प्रयोजनः ।

स्यात्प्रयोजनवान्वेदे ज्ञानोपायस्तु दुर्लभः ॥

तेन शब्दार्थभिन्नत्वे व्यक्त्याकृतिविचारणा ।

व्यक्त्याकृत्यभिधेयत्वे न कश्चिच्च प्रयोजनम् ॥

अभेदे सति लोकस्थैः कृतः शब्दार्थनिर्णयः ।

तस्मिन्ननुपयुक्तोऽपि फलं वेदेषु दास्यति ॥

तेन लौकिकवैदिकशब्दार्थैकत्वे सत्याकृत्यधिकरणमुपपत्तिमत्त्वात्प्रयोजनवत्त्वाच्चाऽऽरम्भणीयम् । भेदपक्षे त्वनारम्भणीयमित्यभ्युपेत्य भेदपक्षस्तावत्प्रतिपाद्यते । नियतानियतत्व-

---

१ तै० ब्रा० ( ३- -६ ) । २ आ० श्रौ० ( ११-७—६ ) । ३ जै० सू० ( ११-१-४ ) ।

इमे लौकिका इमे वैदिका इति व्यपदेशभेदः । 'अग्निर्वृत्राणि जङ्घनत्' इत्यन्यदिदं रूपं लौकिकादग्निशब्दात् । शब्दान्यत्वाच्च न त एवार्थाः । अपि च समामनन्ति, 'उत्ताना वै देवगवा वहन्ति ' इति । ये देवानां गावस्त उत्ताना वहन्तीरयुक्ते गम्यत एव य उत्ताना वहन्ति ते गोशब्देनोच्यन्त इति । तस्मादन्यो वैदिकगोशब्दस्यार्थः । तथा देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम् इति, हिरण्यपर्णो वै देव वनस्पतिर्वेदे । एतद्वै दैव्यं मधु यद्घृतम् । इति वेदे घृते मधुशब्दः । तस्मादमीषामन्येऽर्था इति प्राप्ते ब्रूमः । य एव लौकिकाः शब्दास्त एव वैदिकास्त एवैषामर्था इति । कुतः । प्रयोगचोदनाभावात् । एवं प्रयोगचोदना संभवति यदि त एव शब्दास्त एवार्था, इतरथा शब्दान्यत्वेऽर्थो न प्रतीयेत । तस्मादेकशब्दत्वमिति । उच्यते । प्रयोजनमिदम् । हेतुर्व्यपदिश्यतामिति । ततो हेतुरुच्यते । अविभागादिति । न तेषामेषां च विभागमुपलभामहे । अत एवैकशब्दत्वं, तांश्च तांश्चार्थानवगच्छामः ।

रच्छान्दसप्रकृतिप्रत्ययलोपागमवर्णविकारसदसद्भावकृतरूपभेदाद्ध्यायानध्यायोपनीतानुपनीतत्रैवर्णिकचातुर्वर्ण्यप्रयोज्याप्रयोज्यत्वगुरुशुश्रूषाराधितगुरुसंप्रदाययदृच्छाप्रयुक्तवाक्यतदर्थान्यत्ववद्यदि पदपदार्थान्यत्वं लोकवेदयोस्ततो लौकिकानामेव व्यवहारोपनिपातादर्थवत्ता, वेदे त्वानर्थक्यान्न चोदनालक्षणो धर्म. । स्वरेण रूपभेदं मन्यते ।

अध्यायानध्यायतया वृत्रहननाद्यर्थयोगेन चाविदग्धवालयवदुत्तानवहनवाक्यमङ्गः । सर्वेषा ■ वैदिकानामन्यत्वाच्च ततोऽपि पौर्वापर्येणार्थावगतिः । ब्राह्मत्वादिधर्मभेदनियतानियतपदवाक्यरचनाद्वारा व्यपदेशरूपभेदाभ्या सर्वशब्दानामर्थाना लौकिकाना वैदिकाना च भेद इति प्राप्तेऽभिधीयते—

प्रयोगचोदनाभावादेकत्वं तेषु गम्यते ।
तस्मात्सिद्धिः फलत्वाचेदविभागाद्भविष्यति ॥

भेदे सत्यपूर्वोक्तसर्ववैदिकपदानामनवगतसंबन्धत्वेनार्थशून्यत्वात्क्रियाकारकसंसर्गात्मकप्रयोगचोदनानामभाव एव स्यात् ।

एकत्वे सति सद्भावादिति वा हेतुवर्जना ।
अर्थैकत्वं प्रधानत्वाद्रूपस्वभेदोऽथ वोच्यते ॥

शब्दार्थैकत्वमिति वक्तव्येऽर्थैकत्ववचनं फलादेव शब्दैकत्वोक्तिसिद्धिं मत्वैवमुक्तम् । अथ वा वस्तुमात्रपर्यायत्वादुभयसाधारण्याभिप्रायेणैवार्थस्योक्तिः । प्रयोगचोदनाभावप्रसङ्गः परपक्षे स्वपक्षे वा तत्सिद्धिर्वेदवादिनैव सह विवादेऽभ्युपगते नान्ये-

2 what you are pointing out as the useful purpose served by the two being the same; please point out some reason for regarding them as the

अतो नान्यत्वं च वदामः। यच्चोक्तं य उत्ताना वहन्ति ते देवगवाः, यद् घृतं तन्मधु, यो हिरण्यपर्णः स वनस्पतिरिति। नास्ति वचनं यदुत्तानाना वहता गोत्वं ब्रूयात्। ये गावस्त उत्ताना वहन्तीत्येवं तत्। यदि चानेन वचनेन गोत्व विधीयते, उत्ताना वहन्तीत्यनुवादः स्यात्। न चोत्ताना वहन्तः प्रसिद्धाः केचित्। ते नियोगतो विधातव्याः। तेषु विधीयमानेषु न शक्यं गोत्वं विधातुम्। भिद्यते हि तथा वाक्यम्। यदि चान्ये वैदिकास्तत उत्तानादीनामर्थो न गम्येत, तत्र नतरा शक्येताविज्ञातलक्षणं गोत्वं विज्ञातुम्। न चोत्तानवहनवचनमप्यनर्थकं, स्तुत्यर्थेनार्थवद्भविष्यतीति। एव घृतस्य मधुत्वं, हिरण्यपर्णता च वनस्पतेः। तस्मात्त एव शब्दा अर्थाश्च।

---

नेत्यत आह—प्रयोजनमिदं तत्प्रमाणमभिधीयतामिति। तदुच्यते। प्रत्यभिज्ञारूपप्रत्ययविभागाज्ज्ञायमानोभयप्रमेयरूपाविभागाद्वा वाक्यतत्समूहमात्रनिबन्धनापन्नपदवर्णविषयत्वव्यपदेशाविभागाद्वा तयोच्चारयितॄणां स्थानकरणप्रयत्नाविभागाद्वा लक्षणविदा वा बहुतरानुगमनाविभागादिति हेत्वर्थविकल्पा।

प्रत्यक्षप्रत्यभिज्ञानाच्छब्दैकत्व प्रतिष्ठितम्।
एकशब्दोत्थितज्ञानग्राह्यत्वाच्चैकवाक्यता॥
यथाश्रुतगवादीनां याऽपि वाच्यान्तरे श्रुति।
अर्थैकत्वाविरोधेन गुणमात्रान्यता परा॥
यथा हि वामना गावो नराश्चिपिटनासिका।
वर्णप्रावरणाश्चान्ये नरार्थत्वाच्च न च्युता॥
एव सत्येव गोत्वादौ धर्मो यदि विलक्षण।
नैतावताऽर्थभेदोऽस्ति विशेषानभिधानत॥

न च या एव देवाना गावस्ता एवावश्य सर्वत्र वैदिकस्य गोशब्दस्य वाच्या भवन्ति। मनुष्यगवीषु दक्षिणादिसाधनेषु सुतरा प्रयुज्यमानत्वात्।

एव हिरण्यपर्णत्व मेरौ यदि वनस्पते।
देवलोके तत्र शब्द किमर्थान्तरवाच्ययम्॥
यच्चैतद्घृतमस्माक देवाना माक्षिक यदि।
रसवीर्यादिभिस्तत्र न शब्दार्थोऽन्यथा भवेत्॥
न च सर्वाप्रसिद्धत्वे गम्यैतेनैकोऽपि कश्चन।

अतोऽवश्यमेतेषामेव गवादीनां देवसंबद्धानामुत्तानवहनप्रतिपादनमिति वैकल्यम्। अथ वा भूमिष्ठानामेव सतां केनापि गुणवादेन पृथिवीगोलकस्यैलोक्यधर्मणादिना वा पुराणोक्तेन हविवशाधैव वयमुपरि देवान्पश्याम एवमधो भुपरिवर्तनादयमपि लोको देवैरुपरि दृश्यत इति उत्तानवहनदृष्टिः। तस्माल्लोकवेदयोरभिन्नाः शब्दार्था इति सिद्धे।

विचार्यते किमाकृतिः शब्दार्थोऽथ व्यक्तिरिति ।

द्वौ च पक्षावुपन्यस्तौ भाष्यकारेण यद्यपि ।
व्याख्यातारस्तथाऽप्यत्र कुर्युः पक्षान्तराण्यपि ॥
नियोगेन विकल्पेन द्वे वा सह समुचिते ।
संबन्धः समुदायो वा विशिष्टा वैकयेतरा ॥
एते पक्षाः पुनर्योज्या व्यतिकीर्णाः परस्परम् ।
लिङ्गकारकसंख्याभिः संहतासंहतात्मभिः ॥
पुनर्जात्यादिपक्षाणां तादृश्येवात्र योजना ।

प्रथमं तावदृष्टपक्ष्यैवं दर्शयितव्या। गोशब्दस्यार्थः किमाकृतिरेव, व्यक्तिरेव, उताऽऽकृतिर्वा व्यक्तिर्वा, अथाऽऽकृतिश्च व्यक्तिश्च, किमुभयोः संबन्ध उत समुदायः, किमाकृतिविशिष्टा व्यक्तिरुत व्यक्तिविशिष्टाऽऽकृतिरिति । तथा किमाकृत्यैव विशिष्टः संबन्धः किं व्यक्त्यैव आकृत्या वा व्यक्त्या वा, अथ समुदायेनाप्याकृतिविशिष्टया व्यक्त्या, अथ व्यक्तिविशिष्टयाऽऽकृत्या, अथ परस्परविशिष्टाभ्यां द्वाभ्यामिति । तथा किमाकृत्यैव विशिष्टः समुदाय इत्याद्यपि पूर्ववदेव संबन्धविशिष्टसमुदायपक्षमात्रातिरिक्तं योजनीयम्। एवं किमाकृत्यैव विशिष्टः संबन्ध एव, उत व्यक्त्यैव, अथवाऽऽकृत्या वा व्यक्त्या वा, अथ समुदायेन किमन्यतरविशिष्टयाऽन्यतरया, अथोभाभ्यामित्येवं समुदायविशेषणत्वपक्षाः पूर्ववदेव योज्याः ।

एवं किं संबन्धेनैव विशिष्टाऽऽकृतिरथ समुदायेनैवाथ विकल्प्यमानाभ्यामुत समुचिताभ्याम्। तथैतद्विशिष्टा किमाकृतिरेवाथ व्यक्तिरेव, अथ विकल्पिते किं समुचिते किमिति। तथा किमाकृतिविशिष्टसंबन्धविशिष्टा व्यक्तिरेवाथ व्यक्तिविशिष्टसंबन्धविशिष्टाऽऽकृतिरेवाथ विकल्प उत समुच्चयः। एवं समुदायेनापि योज्यम्। तथा संबन्धविशिष्टव्यक्तिविशिष्टाकृतिरेवाथ संबन्धविशिष्टाकृतिविशिष्टा व्यक्तिरेवाथ विकल्पोऽथ समुच्चयः। एवं समुदायविशिष्टपक्षाः कल्पयितव्याः । तथा किं जात्यैव विशिष्टेन संबन्धेन विशिष्टा व्यक्तिः, अथ व्यक्त्यैव विशिष्टेन संबन्धेन विशिष्टा जातिरथ विकल्पोऽथ समुच्चयः। एवं समुदायेनापि विशिष्टता योज्या। तथा किं संबन्धेनैव विशिष्टया जात्यैव विशिष्टा व्यक्तिरुतैवंविधया व्यक्त्यैव विशिष्टा जातिरथ विकल्पोऽथ समुच्चयः ।

यदि लौकिकास्त एवार्थास्तत्र संदेहः किमाकृतिः शब्दार्थोऽथ व्यक्तिरिति। का पुनराकृतिः का व्यक्तिरिति। द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिः।

---

एवं समुदायेनैव विशिष्टयेत्यपि योजयितव्यम्। एवं जातिलिङ्गयोर्जातिकारकयोर्जातिसंख्ययोश्च प्रत्येकं जातिव्यक्तिपक्षविकल्पितसमुच्चितपक्षोत्थानं दर्शयित्वा व्यक्तेर्लिङ्गादीनां च दर्शयितव्यम्। तथा लिङ्गसंख्या लिङ्गकारकसंख्या कारकयुगलान्यपि विकल्प्य प्रत्येकद्वित्रिलिङ्गादिसहितैर्जातिव्यक्तिविकल्पास्त्रियोगपक्षयोगाश्रया दर्शयितव्याः।

एवं शब्दस्वरूपस्य पुनर्जात्यादिभिः सह।
एकद्वित्रिचतुष्पञ्चषड्भिः सह विकल्पना॥
एते चात्यन्तनिष्कृष्टाः पक्षा यद्यपि न स्थिताः।
बुद्ध्या तथाऽपि भिद्यन्ते जातिद्रव्यगुणादिवत्॥
सर्वैरिन्द्रियलिङ्गाभ्यां भेदः स्तोकोऽवगम्यते।
शब्देन तु सुसूक्ष्मोऽपि वस्तुभागो विभज्यते॥
पदात्प्रभृति चैव या प्रज्ञा ज्ञातुर्विजृम्भते।
पुष्पिता सा पदार्थेषु वाक्यार्थेषु फलिष्यति॥
अत्र चाऽऽकृतिरेवेति दृढः पक्षोऽयमेकतः।
इतरे त्वन्यतः सर्वे व्यक्तिपक्षानुपातिनः॥
व्यक्तौ निराकृतायां च समस्तानां निराक्रिया।
सुलभेति न सर्वेऽमी भाष्यकारेण दर्शिताः॥
न चैतस्मान्न सन्त्येव न चैते निष्प्रयोजनाः।
विकल्पिता हि जिज्ञासोः प्रज्ञाविकसनक्षमाः॥
दर्शितेष्वपि सर्वेषु विचारः क्रियते द्वयोः।
का शब्देनाऽऽकृतिर्यच्चोच्यते काऽनुगम्यते॥

..था—

विचारमूलसिद्ध्यर्थं स्वरूपं तावदेतयोः।
प्रश्नपूर्वमुपन्यस्य याथात्म्येन निरूप्यते॥

ननु प्रथमपाद एवाऽऽकृतेर्निरूपणादिदानीं प्रश्नोत्तरे मन्दप्रयोजने।

उच्यते—

सत्यमेवाऽऽकृतिः पूर्वं प्रत्यक्षेण निरूपिता।
सम्भ्रान्ताशङ्कया त्वत्र सामान्यात्मा निरूप्यते॥

द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिरिति ।

द्रव्यादीनां च सामान्यं परापरविभागवत् ।
वस्तुत्वं प्रथमं तत्र द्रव्यत्वाद्यपरं तथा ॥
पुनर्वायुत्वतेजस्त्वजलत्वात्मत्वभिन्नता ।
पृथिवीत्वाद्घटत्वं च तद्व्यक्तिषु समाप्यते ॥
वृक्षत्वात्परतश्चेदं शिंशपात्वादि केवलम् ।
शरीरत्वाच्च गोवाजिहस्तिपुंस्त्वादि गम्यते ॥
वाह्निकत्वादि चाश्वत्वात्कर्कादिस्तु गुणो मतः ।
हस्तित्वाद्भद्रमन्द्रादिदिङ्नागकुलजातयः ॥
पुंस्त्वाद्ब्राह्मणकौण्डिन्यकठत्वादि समाप्यते ।
तथा गुणत्वकर्मस्वरूपता जन्मतादि यत् ॥
ततः शुक्लादि तद्व्यक्तिगुणेषु प्रतितिष्ठति ।
कर्मणामपि यागत्वहोमत्वादिविभागतः ॥
अपर्यायस्मृतेरुक्तं धातुभिः प्रविभज्यते ।
पुनर्विधानसंख्याख्या गुणप्रकरणान्तरैः ॥
अन्ये तु भेदमाचार्याः कर्मणामेव मन्वते ।
अपि वाऽव्यतिरेकात्स्याद्देशादेरेकरूपता ॥
रूपशब्दाविभागाच्च वक्ष्यत्येतद्धि जैमिनिः[1] ।
एवं प्रसाधितं सर्वमर्थसामान्यमाकृतिः ॥
न संस्थानं कुतो ह्येतदात्मादिगुणकर्मसु ।

सर्वेषु हि पार्थिवेषु गवादिघटादिषु संस्थानं भवेत् । अग्नितोयवाय्वाकाशादीनां तु पार्थिवद्रव्यपरिग्रहवशादाकारानुवृत्तिः कल्प्येत न स्वातन्त्र्येण, दिक्कालात्ममनसां तु गुणकर्मणां च न कथंचिदपि संस्थानं संभवति । सामान्यमात्रं तु सर्वस्वविशेषानुवृत्तिरूपं संभाव्यते । तस्मादेतदेवाभिधेयाकृतिलक्षणं नावयवरचनासंस्थानाकृतित्वमवकल्पते ।

संस्थानस्य च नाशित्वात्प्रतिव्यक्ति च भेदतः ।
सामान्यव्यवहारित्वं नाऽऽकृतित्वेऽवकल्पते ॥
अथ संस्थानसामान्यमाकृतित्वेन गृह्यते ।
अश्वादिष्वपि तुल्यत्वाद्भवेदाकृतिसंकरः ॥
न चापान्तरसंस्थानं सर्वगोपिण्डवृत्ति यत् ।
अश्वादिभ्यो निवृत्तं च गोशब्दालम्बनं भवेत् ॥

१ जै. सू. ( ६-२-४ ) इत्येतदिति शेषः ।

**असाधारणविशेषा व्यक्तिः। कुतः संशयः। गौरित्युक्ते सामान्यप्रत्ययात्, व्यक्तौ च क्रियासंबन्धात्। तदुच्यते। व्यक्तिः शब्दार्थ इति।**

---

तस्य ह्युपलक्षणमालोच्यमानं न जातेरन्यल्लभ्यते ततश्च जातिरेव सामान्यमिति न्यायेनाऽऽपद्यते। तेन प्रथमपादे रुचकस्वस्तिकवर्धमानकोदाहरणात्संस्थानाकृत्यभिधानाशङ्कास्पदर्शनवदासीदित्येताभ्यां प्रश्नोत्तराभ्यां व्यावर्त्यते। अतश्च द्रव्यगुणकर्मणां यावत्किंचित्प्राग्व्यक्तिभ्यः सामान्यं तत्सर्वमाकृतिरेवेत्यभिप्रेत्य मात्रशब्दः प्रयुक्तः। **असाधारणविशेषा व्यक्तिरिति।** के चिदाहुः। असाधारणा विशेषा एव व्यक्तिः। विशेषव्यतिरिक्तव्यक्त्यभावादिति।

तत्तु नैव विशेषेभ्यो व्यक्तिरन्यैव हीष्यते।
खण्डमुण्डादयः सर्वे विशेषत्वेन संमताः॥
ते चान्यत्रापि दृश्यन्ते तथा जात्यन्तरेष्वपि।
शाबलेयादिभेदोऽस्ति तदपत्यान्तरेष्वपि॥

खण्डमुण्डादयस्तावदन्या अपि व्यक्तयो भवन्त्येव गवयमहिषादिव्यक्तयश्च। शाबलेयोऽपि यथैकस्तथाऽन्योऽपि य शबलापत्यत्वेन गम्यते ■ सर्वः शाबलेयः। एतच्चोभयवर्णनिमित्तं वा यादृच्छिकं वा सामान्यत्रापि विनियोगवशाद्वर्तत एव। तदपत्ये च शाबलेय इत्यसाधारणव्यपदेशानुपपत्तिः। विशेषव्यक्तिशब्दयोर्बहुवचनैकवचनाभ्यां सामानाधिकरण्यप्रयोगवचनभेददोषः। तस्मादसाधारणा विशेषा यस्या सा व्यक्तिरित्येव व्याख्येयम्। ननु पूर्वोक्तेन न्यायेन खण्डादीनामपि बहुव्यक्तिसाधारण्याद्व्यक्तिव्यतिरिक्तानां चान्येषां केवलैकैकव्यक्तिगतानां विशेषाणामसंभवाद्बहुव्रीहिरप्यनुपपन्नः। उच्यते। नैव विशेषाणां प्रत्येकमसाधारणत्वमाश्रित्य व्यक्तिविशेषणत्वेनोपादानम्। कथं तर्हि साधारणरूपाणामप्येकद्वित्र्यादिभेदेन क्वचिदुपलब्धानां यदेकत्र पिण्डीकृतानां ग्रहणं तदपेक्षमसाधारणविशेषत्वाभिधानम्।

प्रविभक्ता हि ये दृष्टा दृश्यन्ते सहिताः पुनः।
पिण्डासाधारणत्वेन तैर्व्यक्तिरुपलक्ष्यते॥

न ह्येकस्यां व्यक्तौ ये समुदिता दृष्टास्त एव व्यक्त्यन्तरेऽप्यन्यूनानतिरिक्ता दृश्यन्ते। य एवादृष्टपूर्वस्तस्मिन्समुदाये संप्रति दृश्यते स एवासाधारणतामापादयति। अनन्तभेदास्वपि व्यक्तिषु नात्यन्तापूर्वविशेषणोपलक्षणोपादानं किंचिदुत्कर्षापकर्षमात्रेण ■ सर्वत्रासाधारणोपलक्षणलाभात्परसामान्यापेक्षया च सर्वाण्येवावान्तरसामान्यानि विशेषव्यपदेशं प्राप्नुवन्ति। यथातावस्थाया च व्यक्तिविशेषणत्वात्तेषु विशेषशब्दः। एतच्च व्यक्तेर्विशेषाणामन्यत्वमपरिहार्यात्प्रकारोऽपि वदत्येव, योऽर्थः सामान्यस्य

विशेषाणां चाऽऽश्रयः सा व्यक्तिरिति । तत्र केचिद्गोत्वादिषु विशेषत्वमङ्गीकृत्य सामान्यवाचिना शब्देनानभिधेयत्वाद्यदेव महासामान्यं सत्तावस्तुमात्रशब्दाभिधेयं तदेव शब्दस्वरूपव्यवच्छिन्नं गोत्वादिविशेषव्यवच्छिन्नं वा गोसत्ताख्यमाकृत्यभिधानपक्षे वाच्यमिति मन्यन्ते । यथाऽऽहुः—

अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम् ।
अपूर्वदेवतास्वर्गैः सममाहुर्गवादिषु ॥ इति ।
तत्तु कक्ष्याविभागेन सामान्यानां निरूपणात् ।
अयुक्तं न गवादीनां तत्र वाचकशक्तता ॥

प्रतिनियतार्थविषया हि शब्दानां वाचकशक्तिरर्थापत्त्या गम्यते । तत्रावान्तरावान्तरसामान्यवचनानां द्रव्यगुणकर्मशब्दानामेव तावदसंकीर्णार्थत्वात्सत्तार्थत्वमनुपपन्नं किमुत दूरान्तरितार्थगवादिशब्दानाम् ।

सत्तामेते वदन्तश्च न शुद्धां सविशेषणाम् ।
वदन्तीत्यभिधातुं हि शक्यं द्वेधाऽप्यसंभवात् ॥

शुद्धवचनत्वे तावत्सर्वेषामेकार्थप्रत्यायनात्पर्यायत्वप्रसङ्गः । पुनरुक्तत्वाच्चास्तिशब्दप्रयोगानुपपत्तिः ।

गौर्नास्तीति प्रयोगश्च विरोधान्नावकल्पते ।
न हि सत्तैव नास्तीति कथंचित्संप्रतीयते ॥

देशकालाद्यपेक्षायामपि नैव सत्ताया नास्तित्वमभिधातुं युक्तम् । विभुत्वनित्यत्वाभ्यां सर्वदेशकालव्यापित्वात् ।

रूढिशब्दश्च नैवायं लोकदृष्ट्या प्रतीयते ।
तेन द्रव्यादिसामान्यं सत्तेत्येतन्न युज्यते ॥

य एव ह्यस्तिशब्देन द्वितीयो भावविकार उच्यते । जायमानविपरिणाममाद्यवस्थस्य सर्ववस्तुषु विनश्यत्तापर्यन्तेषु वस्त्वाकृतिप्रतिपत्तिर्दृश्यते । तेन यदि नाम महासामान्यमभिधेयं प्रतिज्ञायेत ततो वस्त्वर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणमिति कामं वक्तव्यं नास्त्यर्थ इति । न चावयवार्थपरित्यागेन सच्छब्दसत्ताशब्दौ वर्तेते इति सच्छब्दवदेवा-

---

१ कक्ष्याशब्दः कोटिवाची, द्रव्यत्वगुणत्वकर्मत्वान्येकस्यां सत्तावान्तरसामान्यकक्ष्यायां, पृथिवीत्वादीनि द्रव्यत्वावान्तरसामान्यकक्ष्यायां, रूपत्वादीनि गुणत्वावान्तरसामान्यकक्ष्यायां च वर्तन्त इति कक्ष्याविभागो ज्ञेयः ।

२ जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यति इति निरुक्तोक्ताः षड्भावविकारा ज्ञेयाः । अत्र च योऽस्तिशब्देन द्वितीयो भावविकार उच्यते स एव सत्तेत्युक्तं भवतीत्यर्थः ।

स्तीति सद्भाव सत्तेति न तु वैशेषिकपरिभाषया यतो द्रव्यगुणकर्मसु सदिति प्रतीति सा सत्तेति । एवंलक्षणा जातिः प्रतिपत्तव्या ।

सेयमस्त्ययशब्देन वस्तुपर्यायवाचिना ।
भवत्साधारणार्थेन प्रसिद्धिरुपपादिता ॥
अस्तित्वमस्तितेत्येव दृश्येते प्रत्ययौ यत ।
स वस्तुवचन शब्द आख्यातप्रतिरूपक ॥
अप्रातिपदिकत्वाद्धि नाऽऽख्यातात्त्वतलौ स्मृतौ ।
अस्तिक्षीरा समासश्च तेन सद्वाचिनेष्यते ॥

अस्तिक्षीरा गौरिति तिङन्तसमासत्वेनानुपसङ्ख्यानादवश्यभाविप्रत्ययलक्षणद्वारसुबन्तत्वयोरन्यतरपदेन सह क्षीराशब्दस्यान्यपदार्थे बहुव्रीहिरभ्युपगन्तव्य । तत्र चाय सदर्थवचन सक्षीरा गौरिति प्रत्ययोत्पादात् । ततश्च वस्तुनि सति च प्रयुज्यमानमस्तिशब्दमुपलभ्य तदर्थानुसरणप्रत्यासन्न सच्छब्द च देवाचालिति च स्वार्थिक देवतेतिवत्तलमित्याप्यस्तिधातुवाच्यार्थविशिष्टकर्तृप्रतीतिमनङ्गीकृत्य शुद्धधात्वर्थमात्रवचनावेव सच्छब्दसत्ताशब्दौ गृहीत्वैव तार्किकै कल्पित सच्छब्दवाच्या सत्ता महासामान्यमिति । तदुक्तान्तगमनेऽनादराच्च पदवाक्यविद्भिरप्युपेक्षित प्रसिद्धमिवेमामवस्था प्राप्त गवादिशब्दवाच्यत्वेनापि समाप्यते ।

न त्वर्थाद्गम्यमानस्य वस्तुत्वस्यापि वाच्यता ।
धर्मान्तरवृत्तेस्तु सत्ताया कुत एव सा ॥
वस्तुशब्दो हि रूढित्वाद्व्यक्तिजात्यन्तराश्रितम् ।
सामान्य यद्ब्रवीत्येतद्गम्यतेऽर्थैर्गवादिभि ॥
शुद्धाभिधानपक्षस्य दुष्टत्वात्तद्विशेषितम् ।
महासामान्यमिष्ट चेद्वाच्य तदपि दुर्लभम् ॥

यदेवाऽऽकृतिविशिष्टव्यक्त्यभिधानपक्षे व्यक्तिविशिष्टाकृतिपक्षे वा निराकरणकारण तदत्रापि सुलभम् । विशेषणस्य पूर्वतराभिधानप्रसङ्गात् ।

गोसत्ता चापि गोशब्दो यदि नाम ब्रवीत्ययम् ।
गोजात्या वा विशिष्टा ता वदेद्व्यक्तिभिरेव वा ॥

१ तदुक्तान्ति—यावद्यावद्विवादाय सुचक दीयते मन । अनवस्थादिदापण तावत्तावद्विहन्यते । इत्यनेन न्यायेन चिरनिखाननप्रागादिगतशैथिल्यवच्छुष्कतकस्याप्रतिष्ठितत्वेन निराकृतस्यापि पुनः पुनरुत्थानं समापयितुमशक्यत्वात्तार्किकाचस्यान्त गमने—समापने, अनादरादभियुक्तैरुपेक्षितत्वादप्रसिद्धसदिमां—युक्तायुक्तविचारावस्था प्राप्तमित्यर्थ ।

२ धर्मान्तरति—जात्याश्रयाद्धर्माद्धर्मान्तरत्वेन–द्वितीयभावविकारत्वेन वर्तमानत्वादित्यर्थ ।

तत्र—

गोत्वजातिविशिष्टा चेत्सत्ताऽनेनाभिधीयते ।
उक्ताद्विशेषणादेव तत्सिद्धेः सा किमुच्यते ॥

विशेषणमनभिधाय तद्विशिष्टविशेष्याभिधानासम्भवाद्विशेषणस्य च विशेष्येणात्यन्तसंबन्धात्पूर्वतराभिहितविशेषणभूतगोत्वसंबन्धादेव सत्तावगमसिद्धेर्न तत्राभिधानशक्तिकल्पनायामर्थापत्तिरन्यथाऽप्युपपद्यमानफलत्वप्रतिहता सती न प्रवर्तते । तथा व्यक्तिविशिष्टसत्ताभिधानेऽप्येष एव निराकरणहेतुः । अनित्यसंबन्धज्ञानानन्तशब्दशक्तिपक्षस्याभिधानपूर्वकैकसत्ताभिधानकल्पनायाश्च वैकल्प्यकत्वाभिधानपक्षवदनुपपत्तिः । यत्तु अपूर्वदेवतास्वर्गं सममाहुरिति ।

तत्राभिधीयते—

नैवापूर्वादिशब्दानां सत्ता वाच्येत्यवस्थितम् ।
विशेषात्रेव तेऽप्याहुरर्थापत्त्यादिकल्पितान् ॥

केचिच्छ्रुतार्थापत्त्या केचिद्वाक्यशेषवाक्यान्तरपर्युपस्थापितार्थविशेषवचना एव सन्तोऽत्यन्ताव्यभिचारिस्वार्थद्वारेण सत्तां गमयन्तोऽनभिधायकत्वेनावधार्यन्ते न सत्तापदार्थो व्यभिचरतीति लक्षणयैव तेभ्यः सत्ताप्रतीतिः ।

कार्यसामर्थ्यमिन्द्रादीनां मिश्रसुखसंगतिः ।
सामान्येनाप्यपूर्वादि सत्तातोऽन्यत्तु लभ्यते ॥

सर्वपदार्थानामिव कार्यार्थापत्तिगम्यानि सामर्थ्यानि सन्ति यागादिजनितं च पुंसः फलप्राप्तिसामर्थ्यमपूर्वशब्दवाच्यं यागानुष्ठानात्पूर्वमभूतमनुष्ठानोत्तरकालं चापूर्वं जायत इति यौगिकत्वादेवापूर्वशब्दाभिधानं सर्वत्र लभ्यते । तथा दीव्यन्ति द्योतन्ते वा चन्द्रादित्याग्निग्रहनक्षत्रतारकादिरूपेण वायवश्च सततगत्या स्तूयन्ते सर्वैर्मन्त्रैरिति देवाः सुप्तानशब्दसंबन्धाः विशेषरूपैरेवेति न सत्तागोचरस्य प्रतिपद्यन्ते । तथा स्वर्गशब्देनापि नक्षत्रदेशो वा वैदिकप्रवादपौराणिकव्याख्यानदर्शनेनोच्यते यथा हि वेदे 'ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषामेतानि ज्योतींषि नक्षत्राणि तथा नैव ज्योतिष्मन्तः पुण्यलोकं जयति' इति । यदि चेतिहासपुराणोपपन्नं मेरुपृष्ठम् । अथ वाऽन्यपत्यतिरेकाभ्यां विभक्तं केवलमेव सुखं यत्संवत्सरादिष्वनुभूयमानं दुःखसाधनशीतोष्णक्षुत्पिपासादिसमस्तद्वन्द्वरहितार्थापत्तिसिद्धदेशान्तरानुभवनीयं, तच्च यद्यपि तादृशमदृष्टपूर्वं तथाऽपि मिश्रानुभवादेव विवेकेनोद्धृत्य स्वर्गशब्दार्थत्वेन ज्ञायमानं सत्तां गमयतीति न तदभिधानमपेक्ष्यते ।

कुतः। प्रयोगचोदनाभावात्। आलम्भनप्रोक्षणविशसनादीनां प्रयोगचोदना आकृत्यर्थे न संभवेयुः। यत्रोच्चारणानर्थक्यं,

तेनापूर्वादिशब्दार्थाः समाः सत्यं गवादिभिः।
स्वशब्दाभिहिताः सन्तः सत्तां लक्षयितुं क्षमाः॥
अतश्च नैव गोशब्दो गोसत्तामभिधास्यति।
गोत्वाख्याकृतिवाच्यत्वसंदेहात्तु विचार्यते॥
कुतः संशय इत्येतत्कार्ययोग्यार्थनिर्णयात्।
व्यक्तिमात्रपदार्थत्वं मन्यमानेन चोद्यते॥
उच्यते कार्ययोगित्वाद्गम्यते व्यक्तिवाच्यता।
शब्दशक्त्यनुरोधात्तु नाऽऽकृतेर्व्यक्तिरिष्यते॥
शक्तिकार्यविसंवादादेव शब्दार्थगोचरात्।
किं समञ्जसमित्येवं नाविचार्यावधार्यते॥

किं तावत्प्राप्तम्—

प्रयोगचोदनाभावाद्वाच्यैकत्वं न तूभयम्।
अर्थैकत्वं यतो युक्तमविभागाद् द्वयोर्गतिः॥
नित्यं यथैव शब्दानामाम्नातानां प्रयोजने।
अर्थप्रत्यायनार्थत्वाद्यद्दृष्टेनावधारणा॥
एवं सर्वपदार्थानां वाक्यार्थप्रत्ययाङ्गता।
यथा सिध्येत्तथा कार्यं तेषां रूपनिरूपणात्॥
आकृतिर्यदि शब्दार्थः कस्य स्युः प्रोक्षणादयः।
केन चेज्येत न ह्यत्र आकृतेरुपपद्यते॥
अमूर्ता ह्याकृतिर्नित्या नावघातादिभाजनी।
तद्विधिः प्रतिषेधो वा तेनास्या नावकल्पते॥

'व्रीहीनवहन्ति' 'पशुं संज्ञपयति' 'सोममभिषुणोति' 'पावयति' सोमेन पशुना व्रीहिभिश्च यजेत इति यावन्त एवमादयो विनाशिमूर्तिमद्विषयाः संस्काराः प्रयोजनासिद्धयर्था वा तेषां प्रयोगचोदनाया आकृतावसंभवाद्व्यक्तौ तु भावात्कार्यप्रधानत्वाच्च पदार्थप्रतीतेर्विध्यधीनत्वाच्च सर्वपुरुषचेष्टानामवश्यं विधिविषयत्वयोग्यवाक्यार्थपूरणसमर्थपदार्थकल्पनमङ्गीकर्तव्यम्। तथा यदपि 'ब्राह्मणो न हन्तव्यः' 'न कलञ्जं भक्षयितव्यम्' इत्यादिप्रतिषेधविधानं तदपि प्राप्तिपूर्वकत्वेन सापेक्षत्वाद्व्यक्तौ च प्राप्तिसंभवादाकृतेश्चानधिकारादसत्या प्राप्त्यानर्थकमेव स्यात्। तस्माद्येन

तत्र व्यक्त्यर्थः । अतोऽन्यत्राऽऽकृतिवचन इति चेत् । उक्तम्, 'अन्याय्यश्चानेकार्थत्वम्' इति । कथं सामान्यावगतिरिति चेत् । व्यक्तिपदार्थकस्याऽऽकृतिश्चिह्नभूता भविष्यति य एवमाकृतिकः स गौरिति । यथा यस्य दण्डोऽस्ति स दण्डीति न च दण्डवचनो दण्डिशब्दः । एवमिहापि ॥ ३० ॥

## अद्रव्यशब्दत्वात् ॥ ३१ ॥

द्रव्याश्रयस्य शब्दो द्रव्यशब्दः, न तत्र द्रव्याश्रयवचनः शब्दो भवेत् यद्याकृतिः शब्दार्थो भवेत् । षड् देया द्वादश देयाश्चतुर्विंशतिर्देया इति।

शब्दार्थेन प्रयोगचोदनानां भावो भवति स एवाभ्युपगन्तु न्याय्यो न तत्त्वज्ञानमात्रदृष्टसिद्ध्यर्थपदार्थकल्पना युक्तेति । स्यादेतत्, व्यक्तिसम्बन्धप्रयोगचोदनासु व्यक्त्यर्थस्ततोऽन्यत्राऽऽकृत्यर्थ एव भविष्यतीति । तदसत् । न्यायेन हि स्थितमेकस्य शब्दस्यार्थे क्वचिदनवस्थितसंबन्धानेकादृष्टवाचकशक्तिकल्पनविकल्पदोषप्रसङ्गात् । सम्बद्धानां चार्थानामन्यतराभिधानेनैवेतरत्र प्रतिपत्तिसिद्धेः । कथं तर्ह्याकृतिप्रत्यय इति चेदत आह— अविभागात् इति । यतस्तु नित्यमेव व्यक्त्याकृत्योरविभागस्तस्माद्व्यक्तिरभिहिता सती शक्नोत्येवाऽऽकृतिं गमयितुम् । तदुक्तं तद्भूताधिकरणे । यस्य [illegible] पदस्य योऽर्थोऽभिधेयत्वेनाऽऽश्रितस्तस्य तत्परिहारासम्भवादवश्यं तैत्रस्यस्यैवार्थान्तरं लाक्षणिकत्वेनाभ्युपगन्तव्यमिति । अपि चाऽऽकृतिपदार्थकस्य व्यक्तिषु साधारणानैकान्तिकत्वान्निर्णयो न स्याद्व्यक्तिपदार्थकस्य पुनरत्यन्तान्तर्भूताकृतिनिश्चयसिद्धेर्न शब्दव्यापारकल्पनोपपत्तिः । तस्माद्व्यक्तिरेव शब्दार्थो नाऽऽकृतिः । न च विकल्पसमुच्चयसम्बन्धसमुदायान्यतरविशिष्टान्यतराभिधानपक्षाः सम्भवन्त्यविभागादेव सर्वेषामपि ज्ञानसिद्धेः ॥ ३० ॥

अपि चाद्रव्यशब्दत्वाद्व्यक्तेरेवाभिधेयता ।  
सामानाधिकरण्यं हि नाऽऽकृत्यर्थगुणार्थयोः ॥

गोशब्दादीनामाकृतिवचनत्वे गौः शुक्लः, 'अरुणया पिङ्गाक्ष्यैकहायन्या गवा क्रीणाति' इति 'षड्भागा देयाः' 'एका गा दक्षिणा दद्यात्' इत्येवमादिषु प्रयोगेषु सर्वेषां जातिगुणमात्रवचनत्वात्सामानाधिकरण्यं न प्राप्नोति ।

गोत्वस्य न हि सम्बन्धः शुक्लत्वारुणिमादिभिः ।  
येन षष्ठ्यपि तावत्स्यात्तुतस्त्वेनार्थवृत्तिता ॥  
न हि गोत्वाकृतिः शक्या नारुणा नापि षड्गुणा ।

---

१ जै० ( १-१-७ ) । २ तत्रस्थस्येति तत्सम्भवेनार्थे वर्तमानस्य शब्दस्येत्यर्थः ।

न ह्याकृतिः पद्मादिभिः संख्याभियुज्यते। तस्माद्व्यक्तिवचनः॥३१॥

अन्यदर्शनाच्च ॥ ३२ ॥

यदि पशुरपाकृतः पलायेत अन्यं तद्वर्णं तद्वयसमालभेत इति। यद्याकृतिवचनः शब्दो भवेदन्यस्याऽऽलम्भो नोपपद्येत। अन्यस्यापि पशुद्रव्यस्य सैवाऽऽकृतिः। तस्माद्व्यक्तिवचन इति ॥ ३२ ॥

आकृतिस्तु क्रियार्थत्वात् ॥ ३३ ॥ सि०

तुशब्दः पक्षं व्यावर्तयति। आकृतिः शब्दार्थः। कुतः। क्रियार्थत्वात्। श्येनचितं चिन्वीत इति वचनमाकृतौ संभवति यद्याकृत्यर्थः श्येनशब्दः। व्यक्तिवचने तु न चयनेन श्येनव्यक्तिरुत्पादयितुं शक्यत इत्यशक्यार्थवचनादनर्थकः। तस्मादाकृतिवचनः।

---

व्यक्तिस्त्वेवगुणा तस्माद्व्यक्तेरेवाभिधेयता ॥
मम हि व्यक्तिशब्दत्वात्सिध्यत्येकार्थवृत्तिता।
तव त्वद्रव्यशब्दत्वाद्भवेद्भेदो गवाश्ववत् ॥

जातिगुणविशिष्टव्यक्तिवचनत्वेन शुद्धव्यक्तिवचनत्वेन वा प्रत्यक्षे भवति सामानाधिकरण्यं, तच्च तत्र द्रव्यम्। एवंविधमपि समानद्रव्यशब्दत्वं त्वत्पक्षे न स्यादिति नञा तदभावप्रसङ्गं दर्शयति। यत्तु भाष्यकारो विपरीतार्थेन द्रव्यशब्देनैव तदाश्रयगुणलक्षणया नञश्चासमर्थसमासमङ्गीकृत्य न द्रव्याश्रयवचनः शब्दो भवेत्। आकृतिवादिन इत्याह। तदतिक्लिष्टं व्यधिकरणनिर्दिष्टगुणप्रयोगार्हं चेत्युपेक्षितव्यम्। तथापि चैवमक्षरार्थमात्रसमन्वययोजना। द्रव्याश्रयस्य गुणस्य न शब्दोऽद्रव्यशब्दः स आकृतेर्निर्गुणत्वादेकवाक्यसंबन्धं गोत्वं शुक्लमित्यादिवन्न प्रतिपद्यते। सामानाधिकरण्यबोधं तु स्वपक्षेऽप्यविशेषात्तदानीमप्यनुपपन्नमेवेति पूर्ववद्व्याख्या कर्तव्या॥३१॥३२॥

किं चैवं नैवेष्टकाभिराकृतिसंपादनमभ्युपगतं यतः स्वभावात्साध्यत्वाधारत्वाद्द्रव्यमभवा स्थितेनोपालम्भः स्यात्पिष्टपिण्डसिंहवत्सादृश्यमवाप्ते पक्षद्वयेऽपि चोदनार्थे। सा त्वाकृत्यन्तरविलक्षणश्येनाकृत्या स्यान्न तु व्यक्त्यन्तरविलक्षणश्येनविशेषेणासाधारणेन वा। निर्विकल्पत्वात्सामान्यविशेषानपेक्षं व्यक्तिमात्रसादृश्यमविधेयं, सर्वद्रव्येषु तुल्यत्वात्। एकव्यक्तिपरिग्रहाच्च व्यक्त्यन्तरेण सादृश्यं न कार्यं स्यात्। तस्माच्छ्येनचितिस्त्वा

---

१ तै० सं० (५-४-११)। २ 'अन्यदर्शनाच्च' इति पूर्वपक्षसूत्रपरतं भाष्यं स्पष्टत्वादुपेक्ष्य, 'आकृतिस्तु क्रियार्थत्वात्' इति सिद्धान्तसूत्रगतं 'श्येनचितं चिन्वीत' इति वचनमाकृतौ संभवतीति भाष्यं यथाश्रुतार्थमसङ्गतमिव मन्वानो दुष्टत्वेन बुद्धिस्थं रूपयितुमुपक्रमते—किंचेत्यादिना।

ननु श्येनव्यक्तिभिश्चयनमनुष्ठास्यते । न साधकतमः श्येनशब्दार्थः, ईप्सिततमो ह्यसौ श्येनशब्देन निर्दिश्यते । अतश्चयनेन श्येनो निर्वर्तयितव्यः । स आकृतिवचनत्वेऽवकल्पते । ननूभयथा क्रियाया असंभव एव व्यपदिश्यते । नाऽऽकृतिः शब्दार्थः । कुतः । क्रिया न संभवेदाकृतौ शब्दार्थे, व्रीहीन् प्रोक्षति इति । तथा न व्यक्तिः शब्दार्थः, क्रियैव न संभवेद् व्यक्तेः शब्दार्थत्वे, श्येनचितं चिन्वीत इति । यद्युच्येत व्रीहीन् प्रोक्षति इति व्यक्तिलक्षणार्थाऽऽकृतिरिति, शक्यमन्यत्रापि श्येनचितं चिन्वीत इति वदितुमाकृतिलक्षणार्था व्यक्तिरिति । किं पुनरत्र ज्यायः । आकृतिः शब्दार्थ इति । यदि व्यक्तिः शब्दार्थो भवेद्, व्यक्त्यन्तरे न प्रयुज्येत । अथ व्यक्त्यन्तरे प्रयुज्यते, न तर्हि व्यक्तिः शब्दार्थः सर्वसामान्यविशेषविनिर्मुक्ता हि व्यक्तिरित्युच्यते । नैष दोषः । व्यक्त्यन्तरे सर्वसामान्यविशेषविनिर्मुक्त एव प्रवर्तिष्यते । यदि व्यक्त्यन्तरे सर्वसामान्यविशेषविमुक्ते प्रवर्तिष्यते, सामान्यमेव तर्हि तत् । नेत्युच्यते । यो ह्यर्थः सामान्यस्य विशेषाणां चाऽऽश्रयः, सा व्यक्तिः । व्यक्तिवचनश्च शब्दो न सामान्ये, न विशेषे वर्तते, तेषां त्वाश्रयमेवाभिदधाति । तेन व्यक्त्यन्तरे वृत्तिरदोषः । न हि तत्सामान्यम् । यदि व्यक्त्यन्तरेऽपि भवति, सर्वसामान्यविशेषविमुक्तायामश्वव्यक्तौ गोशब्दः किमिति न वर्तते । आह—येष्वेव प्रयोगो दृष्टस्तेषु वर्तिष्यते न सर्वत्र । न चाश्वव्यक्तौ गोशब्दस्य प्रयोगो दृष्टः । तस्मात्तत्र न वर्तिष्यते । यदि यत्र प्रयोगो दृष्टस्तत्र वृत्तिः, अथ जातायां गवि प्रथमप्रयोगो न प्राप्नोति, तत्राऽदृष्टत्वात् । सामान्यप्रत्ययश्च न प्राप्नोति, इयमपि गौरिति, इयमपि गौरिति, इयं सा गौरिति, इयं वा गौरिति स्यात् । भवति तु सामान्यप्रत्ययोऽदृष्टपूर्वायामपि गोव्यक्तौ ।

---

व्यक्तौ शब्दार्थे न संभवति । न साधकतम इति । न ह्येवं स्मृतिः श्येनैश्चीयत इ[ति]
श्येनचित्, 'कर्मण्यग्न्याख्यायाम्' इति हि सा । श्येनं चयनेन साधयेदितीप्सिततमत्व[म्]

तत्रापि मुख्यासंभवात्सादृश्यपरिग्रहः असाधारणे शब्दप्रवृत्त्यसंभवात्[3] अव्यपदेश्यत[्]

1 अत्र च, इष्टकाभिश्चीयमानं श्येनसदृशं चयनेन संपादयेदित्येवं विध्यर्थो भाष्यकाराभिप्रेतः । न तु यथाश्रुतं श्येनाकृतिव्यक्त्योश्चयनेनोत्पादयितुमशक्यत्वादिति ।

2 पा० सू० (३।२।९२)। 3 असाधारणे पारम्पर्येतरश्चाऽऽकृतिरित्यन्तो वार्तिककार[illegible] यथा व्याहरन् शब्दार्थं [illegible] विस्तरः ।

तस्मान्न प्रयोगापेक्षो गोशब्दो व्यक्तिवचन इति शक्यत आश्रयितुम्। एवं तर्हि शक्तेः स्वभाव एषः, यत् कस्यांचित् व्यक्तौ वर्तते, कस्यांचिन्न यथा अग्निरुष्णः, उदकं शीतम्, एवमेतद् भविष्यतीति। नैवं सिध्यति। न ह्येतद् गम्यते कस्यांचिद् व्यक्तौ वर्तते, कस्यांचिन्नेति।

सत्यमेतत्। गोत्वं लक्षणं भविष्यतीति। यत्र गोत्वं तस्यां व्यक्ताविति। एवं तर्हि विशिष्टा व्यक्तिः प्रतीयेत। यदि च विशिष्टा, पूर्वतरं विशेषणमवगम्येत। न ह्यप्रतीते विशेषणे विशिष्टं केचन प्रत्येतुमर्हन्तीति। अस्तु विशेषणत्वेनाऽऽकृतिं वक्ष्यति विशेष्यत्वेन व्यक्तिम्। न ह्याकृतिपदार्थकस्य व्यक्तिर्न पदार्थो, व्यक्तिपदार्थकस्य वा नाऽऽकृतिः। उभयमुभयस्य पदार्थः। कस्यचित् किंचित् प्राधान्येन विवक्षितं भवति, तेनात्राऽऽकृतिर्गुणभावेन, व्यक्तिः प्रधानभावेन विवक्ष्यत इति। नैतदेवम्। उभयोरुच्यमानयोर्गुणप्रधानभावः स्यात्। यदि चात्राऽऽकृतिः प्रतीयते शब्देन, तदा व्यक्तिरपि पदार्थ इति न शक्यते वदितुम्। कुतः। आकृतिर्हि व्यक्त्या नित्यसंबद्धा, संबन्धिन्यां च तस्यामवगतायां संबन्ध्यन्तरमवगम्यते। तदेतदात्मप्रत्यक्षं, यच्छब्द उच्चरिते

---

च, सर्वत्राविशेषात्, सामान्याकारेण च निरूपणे विकल्पात्, व्यापकापेक्षया, व्याप्यसामान्यस्य नैव विशेषव्याप्यापेक्षयेतरत्राऽऽकृतिः। तत्र विशेषपक्षे संबन्धानन्वाख्यानव्यभिचारसामान्यबुद्ध्यभावप्रत्यर्थशक्तिकल्पनादयो दोषाः। न च यत्र संशयस्तत्प्रत्याय्यं भवतीति निर्विषयता शब्दस्य। एतेन स्वतन्त्रोभयाभिधानमार्गः प्रत्युक्तः। व्यक्तिविशिष्टाकृतिमार्गोऽपि 'नागृहीतविशेषणा' इति न्यायाद्व्यक्तेः प्रथमग्रहणप्रसङ्गात् संबन्धसमुदाययोरपि स्वरूपप्रत्ययाभावात्सर्वत्र चाविशेषादवश्यं संबन्धिसमुदायिविशेषणताऽभ्युपगन्तव्या भवति। तत्रापि शक्तित्रयकल्पना। व्यक्त्यंशे चोक्तदोषप्रसङ्गः। न च व्यक्त्याकृत्योर्भिन्नकार्ययोर्गुणप्रधाननानावस्थयोः समुदायोपगमनं युक्तम्। अनत्यन्तभेदाच्च भिन्नधर्मौ संबन्धसमुदायौ न युक्तौ। आकृतिविशिष्टेऽपि व्यक्तिविशेषो नैव प्रतीयते। व्यक्तिविशेषबुद्ध्यभावाद् व्यक्तिमात्रमिति चेन्न। तदानीं तस्याऽऽकृतितोऽन्यत्वेनानिरूपणात्। मात्रशब्दो हि सामान्यवाचीत्याकृतिरेवोच्यते। नानाकारेषु च वस्तुषु तद्भेदानुसारित्वाच्छक्तीनामन्वयव्यतिरेकाभ्यां गोत्वाकारनिबन्धनैव गोशब्दवाच्यत्वशक्तिर्गम्यते तदेकाधारसामान्यान्तरावगतिर्विशेषाकाङ्क्षा वेत्यर्थव्याप्त्यव्याप्तिभ्याम्। अनत्यन्तव्यतिरेकाच्चाऽऽकृतेरमूर्तत्वाद्याश्रयदोषाप्रसङ्गः। सा हि प्रतीयते निष्कृष्टरूपा, क्रियायोगिनी तु व्यक्त्युपेता भवत्येवेति प्रोक्षणावेक्षणादि तु न कथंचिन्न संभवति। विशा-

व्यक्तिः प्रतीयत इति । किं शब्दादुताऽऽकृतेरिति विभागो न प्रत्यक्षः सोऽन्वयव्यतिरेकाभ्यामवगम्यते । अन्तरेणापि शब्दं य आकृतिमवबुध्येत, अवबुध्येतैवासौ व्यक्तिम् । यस्तूच्चरितेऽपि शब्दे मानसादपचारात् कदाचिदाकृतिं नोपलभेत न जातुचिदसाविमां व्यक्तिमवगच्छेत ।

सर्वाद्यपि तु व्यवस्थाव्यतिरेकापेक्षया संभवत्येव । तथा हि—पश्वादिष्वपनीतांशेषु विशेषबुद्ध्यपायात्सामान्यरूपेण विशसनादिविशिष्टा बुद्धिर्दृष्टा । नन्वेवमनित्याऽऽकृतिः स्यात् । तेनादोषेणैव । आश्रयान्तराविनाशात्तु सर्वस्याविनाशोऽवश्यमेवेष्टव्यः । तेन यत्तावन्मात्रमेव तस्य विनाशोऽनेकदेशस्य तु न कथंचिद्विनाशः स्यादित्युभयथा व्यवहारः । अत्यन्तव्यतिरेके तु नैष धर्मविधिविषयो व्यवतिष्ठेत । न च पशुत्वममूर्तत्वात् । तदुपलक्षितं तु यद्द्रव्यं तद्द्रव्यत्वादृते न ताद्रूप्येण गम्यत इत्येकार्थसमवायाव्यापकत्वाच्च द्रव्यं गमयितव्यं, तत्राप्यमूर्तत्वे दोषः । आश्रयोपलक्षणाच्च द्रव्यमात्रप्रसङ्गः । विशेषस्तु पशुत्वस्य वा द्रव्यत्वस्य वाऽव्यापकत्वादगम्यः । न वाऽप्रतीतं विधिना संबध्यते । न च यत्र संशयस्तत्प्रतीतम् । न चान्यत्रोक्तो धर्मस्तत्रासंभवादन्यत्र कार्यः । तस्मान्न सामान्यकृतो विशेषेषु युक्तः, विशेषा अपि व्यपदेशात्सामान्यमेवेत्यमूर्तता । असाधारणेन तु नैव व्यवहारस्तस्मादनिरूप्यो धर्मविधिविषयः । सामानाधिकरण्यादि च प्रसिद्धिविपरीतं लक्षणया कल्प्यम् । माप्यंकारेण तु व्यतिरेकाभ्युपगमेनाऽऽश्रयमात्रगतिरुक्ता, विशेषरूपा न कदाचिद् व्यक्तिः प्रतीयते । योऽप्याश्रयाश्रयिभावः सोऽप्यौपचारिकः । सामान्याच्च विशेषलक्षणं तत्र नाऽऽश्रयितव्यम् । आक्षेपमात्रभावादपवैतद्विषय एवायं प्रपञ्चः । किं शब्देनाऽऽकृत्या वेति । अन्वयव्यतिरेकाभ्यां चाऽऽकृत्येति निर्णयः । यो हि धूमादग्निमत्त्वं प्रतिपद्यते तस्य तैक्ष्ण्येऽप्याकाङ्क्षा सिद्धा । मानसादपचारादिति । यो हि जाड्यात्सामान्यवाचितां हित्वा कंचिदेव विशेषं यत्र संबन्धानुभवस्तं वाच्यं मन्यते तस्य सामान्याप्रतीतेर्न विशेषान्तरापेक्षा भवति । अथ वा यथा शब्दात्स्वतन्त्रामाकृतिं बुध्यते नैवं कदाचिदाकृतिमबुद्ध्वा व्यक्तिमिति । केन तर्हि गोत्वगोशब्दयोर्विशेषः । व्यतिरेकांशस्यैकत्र विवक्षा । गोत्ववानिति तु स्फुटं प्रत्ययेन जातिमदभिधानं विभागोपपत्तेः । सामान्यस्य चोपलक्षणत्वान्न भेदपक्षदोषः । भेदानामेव चायं प्रत्येकं सर्वेषां वाचकः । यस्तूपादीयमानत्वे संशयः स संख्याधारविषयः । उद्दिश्यमानेषु निर्णय एव । गवादिशब्दग्रहणं सर्वनामाख्यातशब्दानामन्तर्भावार्थम् । प्रयोजनं सामान्यविशेषशब्दयोरेकविषयत्वात्सामान्यशिष्टस्य विशेषशिष्टेनाबाधः पूर्वपक्षे । एवं वा—

गौरित्येवंविधाः शब्दाः भावत्वेन निरूपिताः ।
तेषामेवाभिधेयेऽर्थे व्यापारः क्वेति चिन्त्यते ॥
चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः ।
क्रियते मद्रायोरपत्तेर्नोपसर्गनिपातयोः ॥
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते ।
यदर्थद्योतकौ तौ तु वाचकः स विचार्यते ॥
वाचकत्वेऽपि पाश्चात्यमनुयात्येवमादिषु ।
प्रतीयते विशेषो यः सद्रायेन स नाऽऽप्यते ॥
यदि ह्यर्थद्वये बुद्धिर्निपातोच्चारणाद्भवेत् ।
ततो विचारो जायेत न सामान्यक्रिया विना ॥
आख्यातस्यापि नन्वत्र न युक्तार्थविचारणा ।
द्वितीयादाविव यस्माद्विस्तरेण करिष्यते ॥
कः पुनर्भाव इत्यादौ विवेकेनार्थनिर्णयः ।
आख्यातस्य कृतस्तेन तच्चिन्ता नोपपद्यते ॥
प्रत्ययार्थस्य भावस्य वाच्यता प्रतिपादिता ।
प्रकृत्यर्थविवेकार्थं विचारः क्रियतेऽधुना ॥
प्रत्ययस्यापि वा तत्र भावार्थत्वे निरूपिते ।
सामान्यं वा विशेषो वा किं वाच्यमिति चिन्त्यते ॥
या चोक्ता भाष्यकारेण यागादेरभिधेयता ।
सिद्धा सेह विवेकार्थं तत्र भावस्य भाविता ॥
यद्वाद्यर्थेऽपि वा वाच्ये किं सामान्यविशेषयोः ।
अभिधेयमिति प्राप्ता चिन्ता कर्तुं क्रियापदे ॥
अपूर्वं भावशब्देभ्यो द्रव्यादिभ्यः किमिष्यते ।
एषा तत्र च चिन्तोक्ता शेषा प्रासङ्गिकी कथा ॥
सामान्यानपरे तेन कस्यार्थस्याभिधायके ।
किमाहृतेरुत व्यक्तेरिति चिन्ता प्रवर्तते ॥
प्रयोगस्य प्रतीतेश्च तुल्यत्वाच्चैकलक्षणे ।
व्यक्तिरक्षाभिधानाच्च संशयः प्रतिभाति नः ॥

---

१ [illegible] । २ ई० सू० -१-१ इत्यत्र भाष्यकारेण ।

कथं लक्षणसम्बन्धश्चिन्तायां प्रकृतेन वा ।
स्मृतिमूलविचारेण वक्तव्यश्चेत्क्रमादिति ॥
इयं प्रासङ्गिकी चिन्ता साधुशब्दे निरूपिते ।
उदाहृतस्य तस्यैव क्रियतेऽर्थविनिश्चयः ॥
वक्तव्यं पूर्वमर्थश्चेच्छब्दरूपनिरूपणात् ।
न हि वाच्यमविज्ञाय साधुत्वमवधार्यते ॥
अनिश्चितेऽपि वाच्यत्वे व्यक्त्याकृत्योर्विवेकतः ।
साधुत्वं शक्यते ज्ञातुं तेन वाच्यमिहोच्यते ॥
वाच्यमात्रे हि साधुत्वमविज्ञाते न लभ्यते ।
न चाऽऽकृत्या न च व्यक्त्या विना तत्रोपपद्यते ॥
अथ प्रोक्तेन मार्गेण सर्वा व्याकरणस्मृतिः ।
प्रमाणमिति सिद्धस्य किंचिदत्र विचार्यते ॥
व्यक्तिर्वाच्येति विज्ञानं न सन्मूलमसम्भवात् ।
तेन व्याकरणेऽप्येतन्न प्रमाणं स्मृतिर्मता ॥
स्मृतेस्तेनापवादोऽस्य प्रामाण्यस्य क्वचित्कृतः ।
युक्तो लक्षणपाठाभ्यां पूर्वया चापि चिन्तया ॥
ननु चाऽऽकृतिपक्षेऽपि व्यक्तावेव क्रियाक्रिये ।
शब्दार्थे समवाप्तेन निरर्थैषा विचारणा ॥
यद्यप्येवं न भेदोऽस्ति वेदार्थकरणे नृणाम् ।
दधि विप्रेभ्य इत्यादौ फलं लोके भविष्यति ॥
व्यक्तिपक्षे विकल्पः स्यात्कौण्डिन्ये दधितक्रयोः ।
सामान्यवाक्यदौर्बल्यात्तक्रमेवेतरत्र तु ॥
वेदेऽपि च विशेषोऽस्ति व्रीहिप्रोक्षणचोदके ।
दध्नेत्यादिषु भेदश्च जायते होमचोदके ॥
प्रोक्षणं पूर्वपक्षेऽपि कर्तव्यं लौकिकेष्वपि ।
व्रीहिषु श्रुतिसामर्थ्याद्बाधित्वा संनिधेः क्रमम् ॥
प्रकृतेष्वेव सिद्धान्ते श्रुतिसांनिध्यनुग्रहात् ।
तत्रापि कृत्स्नमस्त्येव व्रीहित्वं हि श्रुतीरितम् ॥
एवं होमेऽपि दध्यादौ प्रकृतेऽप्रकृतेऽथ वा ।
प्रकृते श्रुतिवाच्यस्य होमत्वस्यापि संभवात् ॥

सोपपत्तिकमन्यच्च वक्तव्यमनया दिशा ।
कर्तव्या तेन यत्नेन चिन्तेयं सप्रयोजना ॥
ननु गौरितिशब्दाद्यं सर्वमेतद्विचारितम् ।
तेन तेन गतार्थत्वात्पुनश्चिन्ता न युज्यते ॥
आकृतेरभिधेयत्वप्रतिज्ञा केवला कृता ।
तस्येदानीं सहेतुत्वं तस्या एवाभिधीयते ॥
यथा चाऽऽकृतिरित्यादौ भाष्यकारेण चोदितम् ।
पुनरस्या प्रतिज्ञाया हेतुरप्यभिधास्यते ॥
यद्वोक्तस्तत्र सद्भाव शब्दार्थत्वमिहोच्यते ।
या तु शब्दार्थता प्रोक्ता सेह सिद्धा न चिन्तिता ॥
उक्ते चाऽऽभिधेयत्वे जाते सद्भावसिद्धये ।
व्यक्तिर्वाच्या न वेत्येतदगतार्थं विचार्यते ॥
एतच्चिन्ताप्रसिद्ध्यर्थमिदं तावद्विचार्यते ।
शब्दार्थौ लौकिकौ वेदे किमन्याविति संशयं ॥
एकत्वे सति कर्तव्यो विचार शब्दवाच्ययोः ।
भेदे तु संशयाभावान्न चिन्तावसरो यत ॥
शब्दार्थेन न कार्यं हि व्यवहारेऽर्थलक्षणे ।
लौकिकव्यवहारार्थं तेनेह न विचार्यते ॥
वेदे तु प्रत्यभिज्ञाने शब्दार्थविषये सति ।
विवेक शक्यते ज्ञातु प्रतीतेर्वाच्यगम्ययो ॥
अलौकिके च शब्दार्थे वाच्यवाचकरूपयो ।
अज्ञातयोर्न जायेत संदेहो वाच्यवस्तुनि ॥
तेन प्रतीतशब्दार्थे निर्णयार्थमिद पुरा ।
एकत्व विद्यते नेति चिन्त्य शब्दाभिधेययो ॥
सत्याभावादिति ह्येतस्तु स्पष्ट निरूपितम् ।
शब्दस्य प्रत्यभिज्ञानात्सान्यनोच्चारणान्तरे ॥
अभेदकारण चात्र प्रत्यभिज्ञानमेव ते ।
अन्यत्तूपचयत्वेन नेन चिन्ता न युज्यते ॥

१ जै० सू० ( १-१-५ ) इत्यत्र वृत्तिकारमतानुसारे शब्दार्थसबन्धाक्षेपपरिहारग्रन्थे भाष्यकारेणेति शेष । २ जै० सू० ( १-१-६ ) ।

लौकिकेष्वेव शब्देषु तथाभेदः प्रसाधितः ।
वैदिकानामभेदार्थं चिन्तनीयमिदं पुनः ॥
व्यपदेशादिभेदाच्च कथं भेदो न जायते ।
तत्रानुक्तमिदं वक्तुं विचारोऽयं प्रवर्तितः ॥
एकत्वेऽपि च शब्दस्य सिद्धे तत्रेह चिन्त्यते ।
किमर्थो भिद्यते नेति तेनाप्यपुनरुक्तता ॥
अर्थाभेदे च चिन्तेयं शब्दाभेदे तु सत्यपि ।
घटते कस्य वाच्यत्वं व्यक्त्याकृत्योर्द्वयोरपि ॥
व्यपदेशादिभेदेन शब्दे च प्रत्यभिज्ञया ।
भेदाभेदनिमित्ताभ्यां क्रियते संशयोद्भवः ।
किं प्राप्तमुच्यते भिन्नौ शब्दार्थौ लोकवेदयोः ॥
व्यपदेशस्य भिन्नत्वादाख्याया लक्षणस्य च ।
स्वरोच्चारणभेदाच्च लोपव्यत्ययदर्शनात् ॥
स्वरुयूपादिशब्दैश्च स्पष्टभेदैः सह श्रुतेः ।
अनध्यायादिभेदाच्च शूद्रोच्चारणवर्जनात् ॥
अश्ववालादिशब्दानां स्पष्टार्थान्तरदर्शनात् ।
अग्न्यादीनां च भिन्नत्वं भाष्ये यदभिधीयते ॥
तदयुक्तं क्रियाभेदे कर्तृभेदो हि नेष्यते ।
हन्ति कर्तृत्वमग्नेश्च पदार्थेभ्यः प्रतीयते ॥
अत्रावदं वहनिशब्दस्य तद्वाच्यं कथमुच्यते ।
हननं किं कृतं नेति प्रमाणं चात्र नास्ति नः ॥
असता कथमन्यत्वं कर्मणाऽतः प्रतीयते ।
अपूर्वे वृत्रशब्दार्थे क्रियाशब्देऽप्यलौकिके ॥
हन्तिकर्तरि वहनित्वं कथमभ्यवसीयते ।
स्तुतिमात्रपरत्वाच्च न वहनित्वं विधीयते ॥
अक्रियत्वाच्च मन्त्रोक्तैर्वाक्यैरित्यभिधास्यते ।
तेनोक्तस्यैव शब्दस्य त्रिवृदादेर्नवादिषु ॥
वृत्तिरर्थेष्वपूर्वेषु वक्तव्या भेदसिद्धये ।
यत्त्वन्यदिति मित्याह रूपभेदं क्रियाश्रुतेः ॥
तदसत्यं न शब्दस्य भेदोऽर्थगुणकारितः ।

, लोकवेदयोः शब्दार्थानामनन्यत्वनिरूपणपरत्वं भाष्यकार इति शेषः ।

तेन स्वरादिभेदेन वक्तव्या भिन्नरूपता ॥
पूर्वोक्तेनैव मार्गेण नार्थभेदनिबन्धना ।
तस्माच्छब्दार्थयोर्भेदः स्पष्ट इत्यवधारिते ॥
तावेव वेदे शब्दार्थौ लोके याविति भाष्यते ।
वेदस्यैव प्रसज्येत सर्वस्याप्रमाणता ॥
अविज्ञातार्थसंयोगाल्लिथतप्रामाण्यबाधया ।
प्रयोगस्याग्निहोत्रादेश्चोदनायाश्च जायते ॥
अभाव प्रत्ययार्थस्य विधेरप्रतिपादनात् ।
अर्थान्तरे च शब्दस्य न प्रयोगो विधीयते ॥
वेदेनाशास्त्रहेतुत्वात्सबन्धस्येति हि स्थितम् ।
किं चाविभक्तरूपत्वं प्रत्यभिज्ञायते स्फुटम् ॥
वैदिकेष्वपि शब्देषु प्रत्यक्षेण पुनः पुनः ।
यद्वा विभागशब्देन शब्दस्योच्चारणे सति ॥
गोत्वबुद्धेः समानत्वान्न भेद इति कीर्त्यते ।
लक्षणस्याविभक्तत्वं शब्दानां वेदमुच्यते ॥
सर्वथा शक्यते भेदो न वक्तुं शब्दवाच्ययोः ।
एकत्वे याज्ञिकानां च प्रसिद्धिरनुगृह्यते ॥
मीमांसा चापि वेदार्थतत्त्वनिर्णयकारणम् ।
व्यपदेशादिभेदैश्च न भेदोऽत्रानुमीयते ॥
प्रत्यक्षप्रत्यभिज्ञाते वेदशब्देऽन्यरूपता ।
व्यपदेशादिभेदश्च स्वरभेदादिकारितः ॥
स्वरादयश्च भिद्यन्ते वेदत्वान्नियमेनोच्यते ।
स्वरयूपादिशब्दानामन्यत्वेनेतरत्र च ॥
नान्यत्वं युज्यते बाधात्प्रत्यक्षप्रत्यभिज्ञया ।
वचनाद्धर्मभेदस्तु शूद्रवर्जितताऽपि वा ॥
धर्मार्थुच्चारणस्यैतौ न शब्दस्य स्वरश्च य ।
अश्ववालादिशब्दार्थभेदे वचनकारिते ॥
न च भिन्नत्वमन्येषु प्रज्ञातार्थेषु युज्यते ।
उत्तानानां च केषांचिद्गहता न विधीयते ॥

---

१ जै० सू० ( ३-२-२ ) इत्यत्र ।

गोत्वं तेषामसिद्धत्वात्पदार्थाग्रहणादपि ।
विधेरन्यस्य शेषत्वात्स्तुतिरेषाऽवगम्यते ॥
उत्तानेत्यादिका तेन नातो भेदः प्रतीयते ।
तस्मात्तावेव शब्दार्थौ लोके पूर्वं निरूपितौ ॥
वेदे तावेव विज्ञेयाविति सिद्धं प्रमाणवत् ।
यदा चैवं तदा युक्ता चिन्तेयं क्रियतेऽधुना ॥
किमाकृतेः पदार्थत्वं किं व्यक्तेः किं द्वयोरिति ।
बहवः प्रतिमान्त्यत्र पक्षाः प्रतिपदं च ये ॥
ते च सर्वेऽभिधीयन्ते व्यामोहविनिवृत्तये ।
गौरित्युच्चरिते सप्त वस्तूनि प्रतिभान्ति नः ॥
जातिर्व्यक्तिश्च संबन्धः समूहो लिङ्गकारके ।
संख्या च सप्तमी तेषामष्टपक्षी द्वयोर्द्वयोः ॥
किं जातिरेव शब्दार्थो व्यक्तिरेवाथ चोभयम् ।
किं विकल्पोऽथ संबन्धः समुदायो निरूप्यताम् ।
जातिर्व्यक्तिविशिष्टा वा व्यक्तिर्जातिविशेषिता ।
जातिसंबन्धयोरेवं सामान्यसमुदाययोः ॥
जातिकारकयोश्चैवं संख्यासामान्ययोरपि ।
लिङ्गसामान्ययोरेवमेकैकस्येतरैः सह ॥
अष्टौ पक्षा नियोक्तव्याः षड्भिः प्रत्येकमुक्तवत् ।
एवमानन्त्यमेतेषां पक्षाणामिह गम्यते ॥
पूर्वपक्षेऽपि चत्वारो भाष्ये चैते प्रदर्शिताः ।
व्यक्तेरेवाभिधेयत्वं द्वयोर्वा स्वप्रधानयोः ॥
व्यक्तेर्जातिविशिष्टाया विपरीतमथापि वा ।
उपन्यासेन चैतेषां ज्ञेयाः सर्वे प्रपञ्चिताः ॥
निराकरणयुक्त्या च निषिद्धा इति नोदिताः ।

तेनाऽऽद्यौ द्वावेव पक्षौ विचार्येते किमाकृतिः शब्दार्थो व्यक्तिरिति। भाष्यकारेण च संशयकारणमुक्तं सामान्यप्रत्ययाद्व्यक्तौ च क्रियासंभवादिति । एतदयुक्तं, व्यक्तेरपि प्रतीयमानत्वात्कथं जातेरेव प्रतीतिरुच्यते । यदि च व्यक्तिर्न संप्रतीयेत ततः संशय एव न स्यात्किमभिधीयतेऽनेनेति । न च क्रियासंभवोऽभिधेयत्वे कारणं

व्यक्त्यन्तराणामपि प्रसङ्गात् । तेन पूर्वोक्तमेव सशयकारण मन्तव्यम् । प्रयोगप्रतीत्यो साधारणत्वाच्छास्त्रान्तरे व्यक्तिपक्षाभ्युपगमात्संशय । यद्वा शब्द उच्चारिते सामान्यप्रत्ययाद् व्यक्त्याकृत्यो सामान्यात्तुल्यात्प्रत्ययाद् व्यक्तौ च शब्दादाकृतावालम्भनस्पर्शनश्येनसहशचयनादिक्रियासमवात्सामान्ये व्यक्तौ च प्रत्ययात्क्रियासमवादिति चोक्तम् । का पुनराकृतिः का व्यक्तिरिति । कथ पुनरय प्रश्नो यदा गौरित्येतस्य शब्दस्यार्थे कोऽर्थ इत्यत्र जातिर्निरूपिता । नैष दोष । येनैतन्न ज्ञातमसौ पृच्छति का पुनराकृति का व्यक्तिरिति । सदेहाद्वाऽत्र पुनरुभयस्मि प्रतीयमाने का व्यक्ति कियती वा जातिरिति । वैपरीत्येन वा कश्चित्पृच्छति यदा शाबलेयादिपिण्डाच्च किंचिद् व्यक्त वस्त्वन्तर भिन्नमुपलभ्यते तदा कुतोऽयं विवेको व्यक्तिरिय जातिरियमिति । अथ वा व्यवहारार्थं सर्वैव चिन्ता क्रियते जातेश्च पदार्थत्वेऽपि व्यक्तौ क्रियासमवान्निष्प्रयोजना चिन्ता यतस्त्वसौ प्रयत्नेनैतद्विचारयति । तेन नून काऽप्यस्य पिण्डादत्यन्तभिन्नव्यवहारयोग्या जातिरभिप्रेतेत्यभिप्राय । तत्राऽऽह । द्रव्यगुणकर्मणा सामान्यमात्रमाकृतिरिति । यौ तावज्ज्ञानसशयवादिनौ तयो स्वरूपकथनमात्रेणैव निराकरण वक्तव्यम् । यस्तु विपरीतवादी तस्यैव निराकरणमभिधीयते । यद्यपि जातिर्व्यक्तेरत्यन्त भिन्ना नोपलभ्यते तथाऽपि शबलाकारे तस्मिन्नुपलभ्यमाने सामान्यबुद्धेरालम्बन प्रथमपादोक्तेन न्यायेनाऽऽकृतिरितरा व्यक्ति । न चानेन ग्रन्थेन जाते सद्भाव प्रमाण वा प्रतिपाद्यते व्यक्तेर्विवेक केवल कथ्यते । तेनैवाभिप्रायेण मात्रशब्दप्रयोगोऽन्यथा तस्य गतार्थतैव भवेत् । यदप्युक्त नून काऽप्यत्यन्तभिन्ना जातिरभिप्रेतेति । तस्या प्युत्तर द्रव्यगुणकर्मणा सामान्यमात्रमाकृतिरभिप्रेता नात्य तद्व्यतिरिक्तेति । द्रव्यादीना च सर्वेषा यत्सामान्य सत्तारूप तदनेन निर्दिश्यते, तन्निर्देशेनावान्तरसामान्यानामपि निर्देशसिद्धि । यद्वा सामान्यशब्दस्य प्रत्येक सबन्धाद्द्रव्यत्वादीनि त्रीणि सामान्यानि निर्दिश्यन्ते सत्तया व्यवहाराभावात् । अथ वा मात्रशब्दप्रयोगाद्द्रव्यादिषु यावन्त्यवान्तरसामान्यानि महासामान्य च तत्सर्वमभिधीयते । असाधारणविशेषा व्यक्तिरिति बहुव्रीहि । असाधारणा विशेषा यस्या व्यक्तौ सेयम साधारणविशेषा, न त्वसाधारणाश्च ते विशेषाश्चेति सामानाधिकरण्य सभवति । उपरिष्टाद्विशेषाधारस्य व्यक्तित्वाभिधानात् । स्मृतेश्च[1] । तेन सम्यगभिहित किमाकृतिर्वा व्यक्तिरिति । किं प्राप्तम् । आलम्भनप्रोक्षणविशसनादिप्रयोगचोदनाया व्यक्ति पक्षे भावान्नाकृतिपक्षे चाभावात् ' ब्राह्मणो न ह तव्य ' ' सुरा न पातव्या ' इत्यादि प्रतिषेधचोदनायाश्च व्यक्तिपक्ष एव सभवाद्देवदत्त गामभ्याजेत्येवमादिलौकिकव्यवहारचोदनायाश्चोपपत्तेर्व्यक्ति शब्दार्थ इति निश्चीयते । मनुष्याकारकोपपत्तेश्च । यदि हि व्यक्ति

---

१ निखद्रव्यवृत्तया विशेषा इति स्मृति ।

शब्दार्थो भवति ततो वृक्षौ वृक्षाश्चामीति प्रातिपदिकाभिहितासु व्यक्तिषु प्रत्ययाभिहितद्वि-
त्वादिसङ्ख्यान्वयादिकारकयोगसमुपपद्यते, इतरत्र तु जातेरसङ्ख्येयत्वादकारकत्वाच्चोभयम-
प्यनुपपन्नम् । लाक्षणिकव्यक्त्याश्रयेण चाऽऽपद्येताम् । तथा च सर्ववैदिकवाक्यार्थाना
लाक्षणिकत्वं स्यात् । व्यक्तिपक्षे च पुरुषो देवदत्त इति मुख्यशब्दसामानाधिकरण्यो-
पपत्ति । जातिपक्षे लाक्षणिकद्वारं सामानाधिकरण्यं कल्पयितव्यं प्रवेशेनापि व्यक्ते पदार्थ-
त्वमवसीयते । 'पशुमालभेत' इति च श्रुतेर्हृदयजिह्वादिविभागैकत्वावयवैरुपदिष्टाद् व्यवहारो
दृश्यते, न जात्या कर्मभिश्च द्रव्यस्यापेक्षितत्वाद् । व्यक्तिपक्षेऽपेक्षिताभिधानं नेतरत्र, सिद्ध
स्वरूपायाश्च व्यक्तेरभिधेयत्वं युक्तं नाप्रसिद्धाया जातेरतो व्यक्ति शब्दार्थ । किमित्युभय
वाच्य नाऽऽश्रीयते प्रयोगप्रतीतिनियोपपत्तेरिति चेत् । न । अनेकशक्तिकल्पनाप्रसङ्गा-
देकाभिधानेनैव सम्बन्धादितरत्र प्रतीतिरुपपन्नत्वाद् व्यक्तेरेवाभिधेयत्वम् । सामान्यप्रत्यय-
कथमिति चेद् व्यक्तिसम्बन्धादुपपत्स्यते । यत्रैव क्रियानुष्ठानं तत्रैवार्थापत्त्या व्यक्ति-
वचनत्वं युक्तम्, अन्यत्र तु पूर्वप्रतीतेर्जातिवचनत्वमेव न्याय्यमिति चेत् । न । उक्तमा-
र्गेणानेकशक्तिकल्पनादिदोषप्रसङ्गात् । अनवस्थितशब्दार्थसम्बन्धापत्ते संशयापत्तेश्च ।
व्यक्तिवादिनः कथं निर्निमित्तता व्यक्त्यन्तरे शब्दस्य प्रवृत्तिरिति चेदाकृतिचिह्ननिमि-
त्तत्वाद् व्यक्त्यन्तरे प्रयोगस्याविरोध । भाष्यकारस्तु कथं सामान्यावगतिरित्युपन्य-
स्याऽऽकृतिश्चिह्नभूता भविष्यतीत्युत्तरं ददाति, तदसम्बद्धम् । कथं सामान्यप्रत्यय
,कारणे पृष्टे व्यक्त्यन्तरप्रयोगनिमित्तं कथ्यते । तेनाध्याहारेणैतद् व्याख्येयम् । कथं
सामान्यावगतिरिति चेत् । व्यक्तिसम्बन्धात् । कथं व्यक्त्यन्तरे प्रयोग, चिह्नत्वादाकृ
तेरित्येवम् । यद्वा कथं सामान्यावगतिरिति चेदित्युपन्यस्ते पूर्वपक्षवादी सामान्यावग-
तिमपह्नोतुमशक्नुवन्नाकृतिविशिष्टव्यक्त्यभिधानपक्षं परिगृह्णात्याकृतिश्चिह्नभूता विशेषण-
भूताऽभिधेया भविष्यति । अतश्च तत्प्रतीतिरचोद्या । तेन केवला विशिष्टा वा व्यक्ति
शब्दार्थ । तथा च 'षड् देया' इत्येवमादिषु षडादिना सङ्ख्योपपत्स्यते । अन्य
तद्वर्णमिति च व्यक्त्यन्तरेऽन्यशब्दोपपत्तिस्तद्धर्मता च भविष्यति । अन्यथा व्यक्त्यन्त
रानयनेऽपि जातेरनन्यत्वादगुणत्वाच्चोभयमनुपपन्नं, तस्माद् व्यक्ति शब्दार्थ इति प्राप्तेऽ-
भिधीयते । नैतद् व्यक्ति शब्दवाच्येति किं त्वाकृति पदार्थ इति विज्ञायते । 'श्येन-
चितं चिन्वीत' इति श्रवणात् । अत्र हि श्येनव्यक्तिं चयनेन कुर्यादाकृतिं वेति वा-
क्यार्थौ स्याताम् । यावच्छ्येनामपि श्येनव्यक्ते कर्तुमशक्यत्वात् श्यास्यादिभिस्त्वनिर्वृ-
त्तेरिष्टकासाधारण्येन यद्वे प्रयोजनकल्पनाविनोतेरमुख्यार्थत्वात् 'कर्मण्यग्न्याख्यायाम्'
इति स्मृतिपरित्यागप्रसङ्गाच्च चयनेन श्येनाकृतिं कुर्यादित्येव तावन्नोपपद्यते । तथाऽऽ-

क्तेरपीष्टका अभिक्तुंमशक्यत्वाद्देवनिर्मितत्वात्प्रयोजनकल्पनाच्चिनोतेरयथार्थत्वप्रसङ्गात्स्मृतिबाधाच्चाऽऽकृतिं कुर्यादित्यपि नोपपद्यते। परिशेषाच्छयेनमिव चितमग्निस्थल चयनेन निर्वर्तयेदिति वाक्यार्थः, तत्र यथा यथा चिच्छयेनव्यक्त्या सदृशस्तत्रैश्चेतुमशक्यत्वात्सर्वव्यक्तिसादृश्यासमवात्तीतानागतव्यक्तिसादृश्यानुपपत्तेश्च श्येनाकृतिसादृश्यसंपत्तिसंभवाच्चाऽऽकृतिः शब्दार्थ इति निश्चीयते।

अथ कस्माच्छ्येनव्यक्तिविषयनचोदनेय नाऽऽश्रीयते 'श्येनचितं चिन्वीत' इति। तत्र भाष्यकारेणोत्तरं दत्तम्। ईप्सिततमो ह्यसौ श्येनशब्देन निर्दिश्यत इति। तदयुक्तम्। न ह्यत्र श्येनशब्दः स्वार्थो, न च सकलश्येनचिच्छब्दोत्तरकालं श्रुतत्वाद् द्वितीयायास्तदन्तो, येनेप्सिततमार्थप्रतिपादकः स्यात्। तेन कर्मण्यग्न्याख्यायामिति स्मृतेः श्येनशब्दार्थस्य करणत्वं निषेद्धव्यम्। कर्मणि हि कारके चिनोतेः क्विप्प्रत्ययः स्मर्यते यदि चिनोतिरग्न्याख्या भवति। न च चिनोतेः केवलस्याग्निवचनत्वं संभवति। तेन क्विबन्तचिनोतिश्रुतेः श्येनचिच्छब्दस्य सकलस्याग्निवचनत्वं निश्चीयते न श्येनशब्दस्य पृथगर्थता। तेन न श्येनशब्दार्थः करणतया विज्ञायते। यदि वाऽसौ करणं स्यात्ततो लक्षणाभावात्तृतीयासमासवचनानुपपत्तिर्भवेत्। तृतीया चाश्रुता कल्पनीया। श्रुतकरणत्वे इष्टकापरित्यागश्च स्यात्। सत्या च गतौ प्रतिषिद्धानेकश्येनव्यक्तिहिंसा जायते तेन करणत्वानुपपत्तेः श्येनमिव चितमग्निं चिन्वीतेति वाक्यार्थोऽतश्चोक्तेन न्यायेनास्य वाक्यस्याऽऽकृतिपक्षे संभवादाकृतिः पदार्थ इति। नैतदेवम्। न हि चयनक्रियासंभवमात्रेणाऽऽकृतेरभिधेयत्वं लभ्यते। व्यक्तिपक्षेऽप्युपलम्भनादिक्रियासंभवात्। बहुत्वाद्यालम्भनादिवाक्यानां तदन्यथानुपपत्त्या व्यक्तेरेव पदार्थत्वमवसीयते। अथाऽऽकृतिपक्षेऽपि व्यक्तिलक्षणया तान्युपपत्स्यन्त इत्युच्यते तदेतदपि शक्यमेव वक्तुं श्येनवाक्ये व्यक्तिराकृतिलक्षणार्थेति। युक्ता चैकत्र लक्षणा नेतरेषु बहुषु। अगत्या वा तृतीयासमासाश्रयणं श्येनवाक्ये करिष्यते। संख्याकारकाद्युपपत्तिश्च व्यक्तिपक्षे तेन व्यक्तिः शब्दार्थ इति स्थितेऽभिधीयते जातिरभिधेयेति। कुतः—

> पूर्वं सामान्यविज्ञानाच्चित्रबुद्धेरनुद्भवात्।
> गामानयेतिवाक्याच्च यथारविपर्ययात्॥

गोशब्दोच्चारणे हि पूर्वमेवागृहीतासु व्यक्तिषु सामान्यं प्रतीयते तदाकारज्ञानोत्पत्तेः पश्चाद्व्यक्तयः प्रतीयन्तेऽतश्चाऽऽकृतिप्रत्ययस्य निमित्तान्तराभावाद्व्यक्तिप्रत्यये च पूर्वप्रतीतसामान्यनिमित्तत्वादाकृतिः शब्दार्थ इति विज्ञायते। यदि च व्यक्तयोऽभिधेया भवेयुस्ततस्तासां चित्रखण्डमुण्डादिविशेषस्वरूपग्रहणाच्चित्रा शब्दोच्चारणे बुद्धिः स्यात्। एकाकारा तूत्पद्यते। तेनाप्याकृतिः शब्दार्थ इति निश्चीयते। गामानयेति चोदितेऽर्थ-

१ न च श्येनशब्दो द्वितीयान्त इत्यर्थः।

प्रकरणाभावे यां कां चित्सामान्ययुक्तां व्यक्तिमानयति न सर्वां न विशिष्टाम् । यदि च व्यक्तेरभिधेयत्वं ततः सर्वासां युगपदभिहितत्वादशेषानयनं स्यात् । या वाऽभिधेया सैवैकाऽऽनीयेत यतस्त्वविशेषेण जातिमात्रयुक्ताऽऽनीयते तेनापि सामान्यस्य पदार्थत्वं विज्ञायते । व्यक्तिपक्षे च सर्वा वा स्वतन्त्रा व्यक्तयोऽभिधीयेरन् व्यक्तिविशिष्टो वा समुदायः का चिद्वैका व्यक्तिरिति । तत्र सर्वव्यक्त्यभिधानं तावदयुक्तम् । अनेकवाचकशक्तिकल्पनाप्रसङ्गादनित्यशब्दार्थसंबन्धापत्तेरशेषव्यक्तिग्रहणाशक्तेश्च संबन्धाग्रहणे सति व्यवहारानुपपत्तेः । नित्यवद् गोशब्दस्याष्टशब्दवद्बहुविषयत्वादेकवचनद्विवचनयोरसंभवाद्गोशब्दाभिहितासु च सर्वव्यक्तिषु शुक्लगुणाभावे गोः शुक्ल इति सामानाधिकरण्यासंभवात् । 'पशुना यजेत' इति च पशुशब्दोपात्ताभिः सर्वव्यक्तिभिर्यागस्य कर्तुमशक्यत्वात्ततश्च वेदाप्रामाण्यप्रसक्तिः । एवं समुदायपक्षोऽपि न संभवति । तत्रापि हि विशेषणत्वेन व्यक्तयोऽभिधातव्यास्ततश्चोक्तदोषप्रसङ्गः । व्यक्तिव्यतिरिक्तसमुदायकल्पना, तेन च व्यवहाराभावादभिधानानर्थक्यं समुदायिविनाशे च तस्याप्यनित्यत्वादनित्यशब्दार्थसंबन्धप्रसङ्गः । समुदायस्य चैकत्वाद्द्विवचनबहुवचनानुपपत्तिः सामानाधिकरण्यासंभवश्च । तेन चामूर्तेन यागाद्यसंभवाद्वेदस्याप्रामाण्यम् । अथैका व्यक्तिरभिधीयत इत्युच्यते तत्रापि संबन्धानित्यत्वं, काऽसावभिधीयत इत्यज्ञानाद्व्यवहाराणामसंभवः सामान्यप्रत्ययानुपपत्तिर्द्विवचनबहुवचनाभावप्रसङ्गः । प्राक् चाभिधेयव्यक्त्युत्पत्तेरुत्तरकालं च प्रयोगासंभवः । समाने च गोत्वे प्रतीतौ चेयमभिधीयते नेयमिति विशेषकारणं नास्ति । अतः परं भाष्यार्थः । यदि चैका व्यक्तिरभिधेया भवेद्व्यक्त्यन्तरे प्रयोगो न स्यादभिधेयव्यक्तेस्तत्राभावादत्यन्तविलक्षणत्वाच्च, सामान्यविशेषविनिर्मुक्ता हि व्यक्तिरित्युच्यते । न च सामान्यविशेषौ मुक्त्वा व्यक्त्यन्तरेऽन्यदस्ति येन शब्दप्रयोगः स्यात् । ननु च यथैवैका सामान्यविशेषविनिर्मुक्ता तथा द्वितीया यतश्च यथैवैकस्यां सामान्यविशेषविनिर्मुक्तायां शब्दस्य प्रवृत्तिरेवमविशेषादितरत्रापि भविष्यति । यदि सामान्यरूपं विशेषरूपं वा व्यक्त्यन्तरं स्यात्ततो विलक्षणत्वाच्छब्दो न प्रवर्तेत, यदा तु तदप्युभयविनिर्मुक्तं रूपं तदा तुल्यरूपत्वाद्युक्ता शब्दस्य प्रवृत्तिरिति । यद्येवं सामान्यविशेषविनिर्मुक्तत्वादेकत्रेतरत्र च शब्दो वर्तते हन्त तर्हि सामान्यविशेषविनिर्मुक्तत्वमेव सामान्यं शब्दस्याभिधेयं स्यादिति सिद्धो नः पक्षः । तस्याऽऽकृतिशब्दवाच्यत्वे केवलं भवतः प्रद्वेष इति । पूर्वपक्षवाद्याह नैवं मयोच्यते सामान्यविशेषविनिर्मुक्तत्वाद्व्यक्तौ शब्दो वर्तते व्यक्त्यन्तरे चेति, किं तु सामान्यविशेषव्यतिरेकेणान्यापोहवद्व्यक्तिः कथ्यते । तत्र कथं सामान्यमेव तर्हि वाच्यमित्युच्यते यो ह्यर्थः सामान्यस्य विशेषाणां चाऽऽश्रयः । व्यक्तिर्न सामान्यविशेषौ । ततश्च यथैवैकस्यां सामान्यविशेषव्यतिरिक्तायां व्यक्तौ

शब्दस्य वृत्तिस्तथाऽन्यस्यामपि भविष्यति। सिद्धान्तवाद्याह—यदि तावत्सामान्यविशेषविनिर्मुक्तत्वाच्छब्दो वर्तेत तत सामान्यमेव वाच्यम्। अथ समानं निमित्तं नास्ति तदा व्यक्त्यन्तरे वृत्तिर्न प्राप्नोति। तदभावेऽपि चेद्वर्तेत ततोऽश्वव्यक्तावपि वृत्तिप्रसक्तेरतिप्रसङ्गः स्यादिति। नैवम्। सामान्यनिरपेक्षायामेव शब्दप्रवृत्तौ प्रयोगकृतव्यवस्थाश्रयणान्नातिप्रसङ्गो भविष्यति,। यथैव प्रयोगवशेन शब्दो वर्तेत ततोऽद्य जातायां गवि न दृष्ट इति शब्दो न प्रवर्तेत तेन प्रयोगकृता चेव्द्यवस्था क्व चिदप्रसङ्गो न चेदतिप्रसङ्ग इति। यत्तु भिन्नासु व्यक्तिषु सामान्यप्रत्ययो न प्राप्नोत्ययमपि गौरयमपीति तदिहातिप्रसङ्गापादनेन न सबध्यत इति व्यक्त्यन्तरे प्रयोगो न प्राप्नोतीत्यस्मिन्नवसरे वक्तव्यम्। शक्त्या तर्हि व्यवस्था भविष्यति, यत्र शक्तः शब्दस्तत्र वर्तिष्यते प्रयोक्ष्यते च यत्र तु शक्तिर्नास्ति तत्र प्रयोगप्रवृत्ती न भविष्यतस्ततश्च गोव्यक्तिष्वेव शक्ते प्रयोगव्यवस्था भविष्यति। नैवमपि व्यवस्था लभ्यते। प्राक् प्रयोगाच्छब्दशक्तेरविज्ञानात्प्रयोगप्रतीत्यधीनं हि शब्दशक्तिज्ञानं तत्कथमिवानुत्पन्नं प्रयोगकाले व्यवस्थाकारणत्वेनाऽऽश्रयितुं युक्तम्। यद्यपि श्रोता प्रयोगाच्छक्तिं जानाति तथाऽपि प्रयोक्त्रा कथं ज्ञातं गोव्यक्तावेव शक्तः शब्दो नाश्वव्यक्ताविति, तेनाश्वव्यक्तावपि प्रयोगं प्राप्नोति। जात्या किमिति व्यवस्था नाऽऽश्रीयते यत्र गोत्वमुपलक्षणं तत्र शब्दो वर्तिष्यते यत्र तन्नास्ति तत्राश्वव्यक्त्यादौ वृत्तिर्न भविष्यति ततश्च व्यवस्था सिद्धिरिति। सत्यमेव सिध्यति, किं त्वापन्नो भवानस्मत्पक्षमाकृतिर्वाच्येति। न ह्यनभिधाय गोत्वमुपलक्षणं गोव्यक्तावेव प्रयोगव्यवस्था लभ्यते तच्चेदभिहितं सिद्धमाकृतिशब्दार्थत्वमिति। पूर्वपक्षवादी तु द्वितीयं पूर्वपक्षमुपन्यस्यति सत्यमाकृतिरभिधीयते किं तु गुणत्वेन स्थिता व्यक्तिः प्राधान्येन शब्दार्थः। न चाऽऽकारमयं नाभिधीयत इति प्रतिज्ञा। कस्य चित्प्राधान्येन किं चिदभिधेयतया विवक्षितं किं चिद्गुणत्वेन, तदुक्तं व्यक्तिः प्राधान्येनाभिधेयेति। एवं सति प्रयोगव्यवस्थोभयप्रतीतिश्च तथाऽऽलम्भनादिनियोगोपपत्तिश्च भविष्यति। इतरस्त्वाह—नैवं लभ्यते। जातिश्चेत्पूर्वमभिधेयत्वेनाभ्युपगताऽत्रैव शब्दस्योपक्षीणशक्तित्वान्न व्यक्तिवचनता लभ्यते। न चाऽऽकृतिमवेदने नापि व्यक्तिप्रतीतेरन्यथाऽप्युपपन्नत्वात्सत्या भवत्यनेकार्थता युक्तेऽभ्युपगन्तुम्। अर्थापत्त्या च शब्दस्य वाचकशक्तिः कल्प्यते। सा च यदा व्यक्तिप्रतीतेरन्यथाऽप्युपपन्नत्वात् क्षीणा तदा वाचकशक्तिकल्पनायां प्रमाणं नास्ति। न च सामान्यविशेषवचनत्वं शब्दस्य दृष्टमश्वादिशब्दानामनेकसामान्यवचनत्वात्। अन्वयव्यतिरेकाभ्यां च व्यक्तेरशब्दार्थत्वं निश्चीयते। अनुच्चारितेऽपि शब्दे प्रतीतसामान्यस्य व्यक्तिप्रतीतेश्श्रुतिशब्दस्यापि चागृहीतसामान्यस्य व्यक्तिप्रत्ययाभावात्तेनाऽऽकृतिरेव शब्दार्थ इति।

ननु व्यक्तिविशिष्टायामाकृतौ वर्तते । व्यक्तिविशिष्टायांचेद् वर्तेत व्यक्त्यन्तरविशिष्टा न प्रतीयेत । तस्माच्छब्द आकृतिप्रत्ययस्य निमित्तम् । आकृतिप्रत्ययो व्यक्तिप्रत्ययस्येति ।

ननु गुणभूता प्रतीयत इत्युक्तम् । न गुणभावोऽस्मत्पक्षस्य बाधकः । स्वार्थं सर्वथा तावत् प्रतीयते । अर्थाद् गुणभावः प्रधानभावो वा । स्वार्थं चेदुच्चार्यते, प्रधानभूता । अथ न स्वार्थं, परार्थमेव, ततो गुणभूता । न तत्र शब्दव्यापारोऽस्ति । ननु च दण्डीति, न तावद् दण्डिशब्देन दण्डोऽभिधीयते, अथ च दण्डविशिष्टोऽवगम्यते । एवमिहापि न ताव-

---

सांप्रतं पक्षान्तरमुपन्यस्यति । अथ व्यक्तिविशिष्टायामाकृतौ किमिति न वर्तते । तदे- तत्प्रयोगप्रतीतिक्रियासंभवत्वेन वा पक्षान्तरमुपन्यस्तम् । यद्वा व्यक्तेरेव शब्दार्थत्वं साधयितुमिदमुच्यते । अनेनाभिप्रायेण यदा चिंसिद्धान्तवाद्याकृतेः शब्दार्थत्वमनेना- भ्युपगतमेवाऽऽलम्भनादिक्रियासंभवश्च भविष्यतीत्यनेनाभिप्रायेण व्यक्तेरपि गुणत्वेनाभि- धानमिच्छति ततोऽहं पूर्वं तावद्विशेषणे वर्तितुमर्हतीति व्यक्तिवचनत्वमेव साधयिष्या- मीति । इतरस्तु तदभिप्रायं ज्ञात्वोत्तरं वदति व्यक्त्यन्तरविशिष्टायां प्रयोगो न प्राप्नो- तीति । यदि हि व्यक्तिविशिष्टा जातिरभिधीयते ततो व्यक्त्यभिधानपक्षोक्तदोषप्रसङ्गः, अनेकशक्तिकल्पनादिरूपो व्यक्त्यन्तरे प्रयोगश्च न प्राप्नोति विशेषणस्यान्यत्वादिति । तेन जातिरेव शब्दार्थः । ननु गुणभूता प्रतीयतेऽतश्चान्येन प्रधानेनाभिधेयेन भवितव्यमिति । नैवं शब्देन तावत्सैवाभिधीयते । यदि विवक्षावशेनार्थाद्गुणत्वं प्राधान्यं वा भवति भवतु नाम न तावता शब्दाभिधेयत्वं व्याहन्यते । यदा चासौ शब्देनाभिधीयते तदा गुणत्वं नैव प्रतीयते तेनार्थाद्गुणत्वप्रतीतिरदोषः । ननु पूर्वपक्षोक्तैः कारणैर्व्यक्तेरेव शब्दार्थत्वं युक्तं व्यक्त्यन्तरे प्रयोगो न प्राप्नोतीति चेत् । आकृतिश्चिह्नभूता भविष्यति । यथाऽनभिधीयमानमपि काकनिलयनं देवदत्तगृहशब्दस्य स्वार्थमिदंवताश्चिह्नभूततां प्रति- पद्यते तद्वदाकृतिश्चिह्नं व्यक्त्यभिधाने भविष्यति । भाष्यकारेण तु दण्डिशब्दो दृष्टान्त- त्वेनोपात्तो यथा तेन न नाम किल दण्डोऽभिधीयते । अथ च दण्डविशिष्टः पुरुषः प्रत्याय्यते तद्वदाकृतावपीति । ननु दण्डिशब्दे प्रकृत्या दण्डोऽभिधीयत एव कथमुच्यते न च तावद्दण्डोऽभिधीयत इति । कथं चोपलक्षणत्वेनाऽऽकृतावुपन्यस्तायां विशिष्टः

दाकृतिरभिधीयते, अथ चाऽऽकृतिविशिष्टा व्यक्तिर्गम्येतेति। नैतत्साधु। उच्यते। सत्यं दण्डिशब्देन दण्डो नाभिधीयते, न त्वप्रतीते दण्डे दण्डिप्रत्ययोऽस्ति। अस्ति तु दण्डिशब्दैकदेशभूतो दण्डशब्दो, येन दण्डः प्रत्यायितः। तस्मात् साध्वेतद्यत् प्रतीते विशेषणे विशिष्टः प्रतीयत इति। न तु गोशब्दावयवः कश्चिदाकृतेः प्रत्यायकः, अन्यो व्यक्तेः। यत उच्येत तत आकृतिवचनता, न गोशब्द आकृतिवचन इति। न च यथा दण्डिशब्दो न दण्डे प्रयुक्त एवं गोशब्दो नाऽऽकृतौ। तदर्थमेव निदर्शितं केवलाकृत्यभिधानः श्येनशब्द इति। तदेवमन्वयव्यतिरेकाभ्यामसति श्येनव्यक्तिसंबन्धे श्येनशब्दोच्चारणादाकृतिवचन इति गम्यते। न तु व्रीह्याकृतिसंबन्धमन्तरेण व्रीहिव्यक्तौ शब्दस्य प्रयोगो दृष्टः। तस्मादाकृतिवचनः शब्द इत्येतज्ज्यायः॥ ३३॥

---

प्रत्याय्यत इति विशेषणं दृष्टान्ततयोपन्यस्तमिति। नायं दोषः। विशेष्याभिधायकप्रत्ययाभिप्रायत्वाद्दण्डानभिधानस्य यथा प्रत्ययेन, न च तावद्दण्डोऽभिधीयते। अथ च तद्विशिष्टः पुरुषः प्रत्याय्यते तथेहापि भविष्यतीत्यभिप्रायः। यत्तूपलक्षणोपन्यासे विशेषणस्य दृष्टान्तता न युक्तेति। तदुपलक्षणस्यापि विशेषकत्वान्न चोद्यम्। यद्वा केनचित्सामान्येन दृष्टान्तता भविष्यत्यनभिधेयत्वेन विशेषकत्वेन चेत्यदुष्टं, ततश्च सम्यगभिहितं यथा दण्डिशब्दे तद्वदत्रापि भविष्यतीति। एवं चाप्रसङ्गातिप्रसङ्गौ न भविष्यत इति। तदेतन्न युज्यते। युक्तं देवदत्तगृहस्य पुरुषस्य च केवलस्याभिधानं विशिष्टप्रतीतावपि काकनिलयनदण्डयोः प्रत्यक्षान्यशब्दावगतयोर्विशेषणत्वोपपत्तेः। न तु गोत्वस्यानभिहितस्येहोपलक्षणत्वं युज्यते। अप्रतीतविशेषणे विशेष्याप्रतीतेर्न च दण्डिशब्दवत्तदवयवेन गोत्वाभिधानं प्रतीमो येन द्वितीयावयवेन व्यक्तेरेवाभिधानं स्यात्। अतश्च यदि तावद्गोत्वमभिधीयते ततस्तदेवोक्तेन न्यायेन वाच्यं भवेत्। अप्रतीतस्य विशेषणत्वासंभवात्। उक्तवदतिप्रसङ्गः शब्दप्रयोगस्य प्राप्नोति। न च यथा दण्डिशब्दः केवले दण्डे न प्रयुज्यत इति विशिष्टवचनोऽवधार्यते तद्वदाकृतौ प्रयोगाभावाद्विशिष्टवचनोऽवधारयितुं शक्यते। श्येनचित्यादावाकृतौ प्रयोगदर्शनादन्वयव्यतिरेकाभ्यां च जातिरेव वाच्येत्यवधार्यते श्येनचिद्वाक्ये केवलायामाकृतौ प्रयुक्तत्वात्। क्वचिदपि चाऽऽकृत्या विना व्यक्तिमात्रे प्रयोगादर्शनादेव यद्यपि मत्वर्थमभ्युपगम्य पूर्वपक्षस्तेऽप्युक्तेन न्यायेन निराकृतास्तेनाऽऽकृतिरेव शब्दार्थ इति॥ ३३॥

न क्रिया स्यादिति चेदर्थान्तरे विधानं
न द्रव्यमिति चेत् ॥ ३४ ॥

अथ यदुक्तं न क्रिया संभवेद् व्रीहीन् प्रोक्षति इति । न द्रव्यशब्दः स्यात्, षड् देया इति । अन्यदर्शनवचनं च न स्यात्, अन्यं तद्रूपमिति । तत् परिहर्तव्यम् ॥ ३४ ॥

तदर्थत्वात् प्रयोगस्याविभागः ॥ ३५ ॥

आकृत्यर्थत्वाच्छब्दस्य यस्या व्यक्तेराकृत्या संबन्धस्तत्र प्रयोगः । प्रोक्षणं हि द्रव्यस्य कर्तव्यतया श्रूयते । कतमस्य । यद् यजतिसाधनम् । अपूर्वप्रयुक्तत्वात्तस्य, नाऽऽकृतेः । अशक्यत्वात् । तत्र व्रीहिशब्द आकृतिवचनः प्रयुज्यते प्रोक्षणाश्रयविशेषणाय । स ह्याकृतिं प्रत्याययिष्यति, आकृतिः प्रतीता सती प्रोक्षणाश्रयं विशेष्यतीति । तेनाऽऽकृतिवचनं न विरुध्यत इति । एवं षड्देया गावो दक्षिणा इति दक्षिणाद्रव्ये संख्यायाः प्रयोक्तव्ये गाव इत्याकृतिवचनो विशेषकः । तथा, अन्यमिति विनष्टस्य प्रतिनिधेरन्यत्वसंबन्धः । तत्र पशुशब्द आकृतिवचन आकृत्या विशेष्यतीति । तस्माद् गौरश्व इत्येवमादयः शब्दा आकृ-

---

ये त्वाऽऽलम्भनादिचोदनाभावादयो ‘न क्रिया स्यात्’ इत्येतत्सूत्रानुभाषिताः पूर्वपक्षोक्ता हेतवस्तेषां सर्वेषामनेन सूत्रेण परिहारोऽभिधीयते—‘तदर्थत्वात्प्रयोगस्याविभागः’ इति । तदर्थत्वात्—अपूर्वार्थत्वादालम्भनप्रोक्षणाद्यङ्गानामपूर्वसाधने प्रयोगेण भवितव्यं द्रव्यं चापूर्वसाधनं यागेन व्यक्तिद्वारपूर्वमाक्षिप्यते नाऽऽकृतिरसमर्थत्वात्तद्विधानं तु द्रव्यनियमार्थं प्रतिपत्तव्यं न स्वार्थं जातेरनपेक्षितत्वाददृष्टार्थत्वप्रसङ्गात्साधनत्वाप्रतीतेश्च । यदपि जातेः प्रातिपदिकाभिहितायाः करणत्वं प्रतीयते तदपि द्रव्यनियामकत्वेनैव न साक्षादयोग्यत्वात् । तेनाऽऽकृत्यभिधानस्य द्रव्यनियमार्थत्वाद्द्रव्ये चाऽऽलम्भनप्रोक्षणसंख्याकारकसामानाधिकरण्यादिकमुपपद्यते । तदाह—प्रयोगस्याविभाग इत्याकृतिपक्षेऽप्यालम्भनादिप्रयोगस्य द्रव्यादविभक्ततैवेति । अथवाऽऽकृत्यभिधानस्य द्रव्यनियमार्थत्वादुक्तवत्प्रयोगस्याविभाग इति । यद्वा । आकृतिव्यक्त्योरत्यन्तभेदाभावात्कदा चिद्व्यक्तिरूपेण द्रव्यमभिधीयते कदा चित्सामान्यरूपेण यथा विवक्षितं तथा शब्दप्रयोगस्य स्वार्थत्वाद्व्यक्त्यभिधानेऽपि न प्रयोगस्य विभागो नानात्वमनेनेति । जातेर्वा व्यक्तितोऽत्यन्तभेदाभावाद् व्यक्तौ कृता धर्मा जातौ कृता एव भवन्तीति न प्रयोगस्य विभागेन प्रयोजनमिति । यद्वा । आकृतिव्यक्त्योरुभयोर्यागार्थत्वाद्द्वयोर्वा

तेरभिधायका इति सिद्धम् ॥ ३५ ॥

इति श्रीशबरस्वामिकृते मीमांसाभाष्ये प्रथमस्याध्यायस्य
तृतीयः पादः ॥

अथ प्रथमाध्याये चतुर्थः पादः ।

**[१]उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात् ॥ १ ॥ पू०**

उद्भिदा यजेत, बलभिदा यजेत, अभिजिता यजेत, विश्वजिता यजेत इति समामनन्ति । तत्र संदेहः । किमुद्भिदादयो गुणविधय आहो स्वित्कर्मनामधेयानीति । कुतः संशयः । उभयथाऽपि प्रतिभातो वाक्यात् । उद्भिदेत्येष शब्दो यजेतेत्यनेन संबध्यते । स किं वैयधिकरण्येन संबन्धमुपैति, उद्भिदा द्रव्येण यागमभिनिर्वर्तयेदिति, उत सामानाधिकरण्येन उद्भिदा यागेन यजेतेति । द्वेधाऽप्येतस्मिन् प्रतिभाति वाक्ये, संभवति संशयः—

किं तावत् प्राप्तम् । उक्तमस्माभिः समाम्नायस्यैदमर्थ्यम् । कश्चि-

---

यत्र क चन यागसाधने कृताना प्रयोजनवत्त्वाद्द्रव्यादाविभक्ततेति ।

तस्मादाकृतिपक्षेऽप्यालम्भनादिसमवादाकृतिरेव शब्दार्थ इति सिद्धम् ॥ ३९ ॥

( इति आकृत्यधिकरणम् ॥ ९ ) ।

इति श्रीमद्भट्टकुमारिलस्वामिकृतौ मीमांसावार्तिके प्रथम
स्याध्यायस्य तृतीयः पादः ।

एवं स्मृतिसहितस्य वेदस्य प्रामाण्ये सिद्धेऽधुना वाक्यार्थं व्याख्यानावसरे सत्य- परिसमाप्त्यैव प्रमाणलक्षणं येन सम्बन्धेन नामधेयचिन्ताया प्रस्ताव क्रियते । के चित्तावदाहुः । किमुद्भिदादयो गुणस्य प्रमाणमुत क्रियाणामेव नामधेयत्वेनेति । तदयुक्तम् । एवं सति हि समस्तमेव शास्त्रं प्रमाणलक्षणादभिन्नं स्यात् । सर्वत्र ह्येतद्विचार्यते, किमिदं वाक्यमस्यार्थस्य प्रमाणमुतान्यस्येति । केऽपि चैते द्वे अपि सूत्रे पूर्वोत्तरपक्षौ परिकल्प्यैकाधिकरणत्वेन व्याचक्षते तैरप्युक्तं समाम्नायैदमर्थ्यमित्यनेन सूत्रेण क सिद्धान्तानभिप्रेतः पूर्वपक्षानुगुणोऽर्थो विधीयत इति वक्तव्यम् । न ह्युक्तेदमर्थ्यान्तर्भाव वचनमुद्भिदादीनामनिष्टम् । तस्माद्द्वयोरप्यधिकरणयोरनुमितपूर्वपक्षयोरुत्तरपक्षसूत्रद्वय- मेतदिति व्याख्येयम् । तत्र प्रथमं तावदुद्भिदादीनुदाहृत्य संदेहः क्रियते, किमेते क चिद्धर्मं प्रत्युपयोगं गच्छन्त्युत नेति । किं तावत्प्राप्तम् । 'आम्नायस्य क्रियार्थत्वात्' इत्यानर्थक्यम् । आह च ।

---

१ ता० ब्रा० ( १९–७–२ ) । २ ता० ब्रा० ( १९—७—१ ) । ३ जै० सू० ( १-२-१ ) ।

दस्य भागो विधिर्योऽविदितमर्थं वेदयति यथा सोमेन यजेत इति। कश्चिदर्थवादो यः प्ररोचयन् विधिं स्तौति यथा वायुर्वै क्षेपिष्ठा देवता इति। कश्चिन्मन्त्रो यो विदितमर्थं प्रयोगकाले प्रकाशयति यथा, बर्हिर्देवसदनं दामि इत्येवमादिः। तस्मादुद्भिदादयोऽप्येषां प्रयोजनानामन्यतमाय प्रयोजनाय भवेयुः। तत्र तावन्नार्थवादः। वाक्यशेषो हि स भवति विधातव्यस्य। न च मन्त्रः। एवंजातीयकस्य प्रकाशयितव्यस्याभावात्। पारिशेष्याद् गुणविधिः। उद्भिद्गुणता यागस्य विधीयते।

---

धर्मायानुपयुक्तं सदानर्थक्यं प्रपद्यते ॥

नह्येते विध्यादिष्वन्तर्भवन्ति। साध्यसाधनेतिकर्तव्यानभिधायित्वात्तावच्चोदनावाह्यत्वं, स्तुतिबुद्ध्यजननादर्थवादव्यतिरेकः, कर्माङ्गभूतवस्तुप्रकाशयितव्यार्थाभावान्मन्त्रकार्यनिवृत्तिः। न चान्यद्दृष्टप्रयोजनमस्तीत्यप्रमाणमेवंजातीयका इति। अत्राभिधीयते—

सर्वस्य त्रिविभागत्वाद्बुद्धस्योक्तेन हेतुना।
उद्भिदाद्यप्रमाणत्वमतिरेकान्न सिध्यति ॥

यत्तु तदर्थत्रयान्यतमार्थमिति स्थितं तत्र विचारः किमर्थमिति। न तावदर्थवादत्वं वाक्यशेषत्वाभावात्। कथं पुनरयं न वाक्यशेषो यावता 'वायुर्वै क्षेपिष्ठा' इत्यादिवदेकवाक्यताऽवगम्यते। नैतदस्ति। विधातव्यस्य हि यः शेषः सोऽर्थवादः। अयं तु विध्युद्देशादेव नातिरिच्यत इत्यवाक्यशेषः। तदसंभविनश्च स्तुत्युपयोगित्वं न युज्यत इत्युक्तमौदुम्बराधिकरणे। न चैकपदेन स्तुतिर्दृष्टा। न चेह तां प्रतिपद्यामहे। यदप्युद्भिदं पशूनामनेन क्रियत इत्येवं प्राशस्त्यं कल्प्येत तदपि तृतीयान्तमुद्भिदाख्यपदमवगतकरणत्वप्रसिद्ध्या बाध्यते। अन्यथा हि प्रातिपदिकमात्राद्वा 'वायुर्वै क्षेपिष्ठा' इतिवत्प्रथमैव प्रायोक्ष्यत। न चास्य मन्त्रत्वं, तद्रूप्येणाप्रतीतेः। अचेतनस्मरणाभावाच्च। न चैकपदत्वात्साकाङ्क्षत्वं करणप्रतीत्या वा स्मारकत्वम्। न चैतदभिधेयः कश्चित्प्रयोगसमवाय्यर्थो दृश्यते। न चासत्यपेक्षप्रकाशने कर्माङ्गत्वम्। मान्त्रवर्णिकद्रव्यदेवताभावेऽपि गौरवम्। न चास्य मुख्यवाक्यवद्विनियोजिका श्रुतिरस्ति येन मान्त्रवर्णिकद्रव्यकल्पना स्यात्। न चास्य रूपं प्रयोगार्हम्। अनध्यायविनियुक्तत्वात् 'इषे त्वा' इत्यपि नाध्याहारेण नियताकाङ्क्षितस्य प्रयोगः। श्रुतं च प्रागेवैकवाक्यत्वमित्यमन्त्रत्वम्। तस्माद्विध्युद्देशान्तर्गतस्यैवोत्तराधिकरणेन विचार्यमाणे गुणविधिर्नामधेयमिति। तत्र तावत्—

अप्रसिद्धेर्वैयर्थ्येन प्रयोजनवत्त्वेन च।

स्याच । न चैषां यागार्थता लोकेऽवगम्यते । न च वेदेन परिभाष्यते । अतो गुणाविधयः । यदि गुणविधिर्न तर्हि कर्म विधीयते । अविहिते च कर्मणि तत्र गुणविधानमनर्थकम् । नेति ब्रूमः । प्रकृतौ ज्योतिष्टोमे गुणविधानमर्थवद्भविष्यति । यदि नामधेयं स्याद्, यावदेव यजेतेति तावदेव उद्भिदा यजेतेति न प्रवृत्तौ कश्चिद्गुणविशेषः स्यात् । गुण विधौ च गुणसंयोगादभ्यधिकमर्थं विदधत उद्भिदादयः शब्दा अर्थ-

---

अविकत्वात्प्रवृत्तेश्च गुणरूपं विधीयते ॥

जातिपदिके तावदुद्भेदनसमर्थे द्रव्ये खनित्रादावनयवप्रसिद्ध्या प्रवर्तते । न च समुदायोन्तरवाची लोके प्रसिद्धः । न च लोकादनवगतोऽर्थो वेदादवगम्यते सबन्धस्य शास्त्राहेतुत्वात् । तृतीयाऽपि च करणवाचिनी, क्रियायाश्च शक्तिमद् द्रव्यं तदाधारा वा शक्तिः करणं, तेनोद्भित्साधनको यागोऽवगम्यते । न च यागस्योद्भित्त्वं करणत्वं वा कचित्प्रसिद्धम् । अर्थवत्त्वात्प्रवृत्तिविशेषकरत्वम् । विधायकोद्भित्पदपुरुषाणां प्रवृत्तौ विशेषः । अन्यथा ह्यनुच्चारितसमैव प्रवृत्तिरेषा स्यात् । अथ वा प्रसिद्धत्वाद्गुणविधिरर्थवत्त्वमभिधेयवत्त्वं नामधेयत्वे त्वर्थो न विज्ञायत इति योज्यते । अथ वा भेदेनार्थवत्त्व हेतुः, उद्भित्पदस्य यजितः फलान्तरत्वात् । तत्श्च विधिपुरुषयोः प्रवृत्तिविशेष इति वाच्यम् । ननु नामधेयमपि क्रतु विशिंषदर्थवत्प्रवृत्तिविशेषकरं च स्यात् । नैतदस्ति । कुतः —

आकृतेरविधेयत्वाद्धातुना व्यक्तिराश्रिता ।

सा च नाम्नाऽभिधीयेत जातिश्चैवं न नामतः ॥

यदा तावद्धातुनैव लक्षणया विधिविषयत्वयोग्यत्व यागविशेषः प्रतिपाद्यते तदा किंपरं तत्र नाम करिष्यति । अथ सामान्यमात्रमभिधीयते ततस्तस्याविष्टमेवैतन्नामेत्ययं यद्ध सिद्धत्वादेव च विशेषस्य न नामधेयं विधायिष्यत इति वक्ष्यति । यदा च केनापि प्रकारेणोद्भिदादीनां विशेषवचनत्वं तदा तदत्यन्ताविनाभूतसामान्यवचनत्वेन यजेरनर्थकत्वम् । लाघवं च विधेर्गुणविधौ भविष्यति । यागानुवादात् । यद्येव गुणाक्षिप्तत्वा द्विधिशक्तेर्न तर्हि कर्म विधीयते, तथा चाविहिते कर्मणि कस्य गुणो विधीयत इत्यानर्थक्यमत आह—प्रकृतौ ज्योतिष्टोम इति । ननु गुणविधिपक्षे ज्योतिष्टोमेनेत्यस्यापि तत्परत्वादविहितमेव कर्म । तत्प्रभावादिदमेव कर्मविधानं भविष्यति । तदुत्पावृत्ते च विधायके च गुणस्य विधातुमशक्यत्वात् ज्योतिष्टोमपदमेवैकं नामधेयम् । अथ वा सर्वेषं गुणविशिष्टकर्मविधानामितराणि कर्मानुवादेन गुणविधानानि । नन्वेवं सति सर्वा एकाहाहीनसत्रचोदना ज्योतिष्टोमस्यैव गुणविधिद्वारेण प्रकरणादनतिरिक्ता इति कर्मान्तराभावात् ज्योतिष्टोमे कस्यचित्प्रकृतिरिति तच्छब्देन नामधात्त्व । सिद्धान्ताभिप्रायेणाऽऽहेति केचित् । अथ वा प्रक्रियत इति प्रकृतिः, प्रकृतज्योतिष्टोम इत्यर्थः ।

वन्तो भविष्यन्ति। तस्माद् गुणविधय इत्येवं प्राप्तम् ॥ १ ॥

एवं प्राप्ते ब्रूमः—

**अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥ सि० ॥**

अपि वेति पक्षो विपरिवर्तते। नामधेयं स्यादिति प्रतिजानीमहे। एनमविहितमर्थं विधास्यति ज्योतिष्टोमाद् यागान्तरम्। श्रुतिश्चैवं यागमभिधास्यति। इतरथा श्रुतिरुद्भिदादीन्वक्ष्यन्ती, उद्भिदादिमतो लक्षयेत्। उद्भिदता यागेन कुर्यादिति। यागेन कुर्यादिति यजेतेत्य-

---

अथ वा 'अथैष ज्योतिः' इत्येवमादीनां कारणविभक्त्याख्यातसंस्पर्शाभावाद्गुणविधित्वानुपपत्तेरेकान्तेन भेदकतया कर्मनामत्वं तदपेक्षया च ज्योतिष्टोमः प्रकृतिः। ननूत्पत्तिवाक्यशिष्टेन सोमेन ज्योतिष्टोमेन बाऽवरोधाज्ज्योतिष्टोमे गुणान्तरविधानमयुक्तम्। काम्यत्वादुद्भिदादयो बाधका भविष्यन्ति। नित्ये प्रयोगे च पूर्वगुणस्यार्थवत्ता। अथ वा विशिष्टविहितमपि कर्म स्वरूपमात्रं निष्कृष्य गुणान्तरे विहितं नौत्पत्तिकाद्विशिष्यते। अन्यथा गत्यसंभवाद्विकल्प इति मन्यते ॥ १ ॥

यदुत्पत्तौ प्रथमज्ञानेऽर्थान्तरपूर्वकत्वेनैकान्ततो न प्रसिद्धमुद्भिदादि तद्वैदिकव्यवहारे प्रथमोपनिपातात्सामानाधिकरण्येन नामधेयं स्यात्। अथ नैवमपूर्वं कर्म विदधदर्थवद्भविष्यति। अथ वा कस्य नामधेयमिति संदेहेऽभिधीयते। यस्योत्पत्तावपूर्वं निष्पद्यते यागस्येत्यर्थः। किं कारणम्—

गुणो विधीयमानो हि फले कर्मणि वा भवेत्।
विशिष्टविधिबुद्ध्या वा सर्वथा च न युज्यते ॥

फलं प्रति तावद्विधीयमाने परपदसंबन्धविधानं व्यवहितकल्पना धातोः पारार्थ्यमौत्पत्तिकसोमबाधोऽनदनीयेन च खनित्रादिनाऽत्यन्ताप्रसिद्धेन याग इति दोषास्तथा यागं प्रति गुणविधौ फलपदानर्थक्यम्। सार्थकाम्यप्राप्तज्योतिष्टोमविशेषणत्वे वाक्यभेदः। प्रत्ययव्यापारविप्रकृष्टता धातुपारार्थ्यानदनीययागसोमबाधविकल्पाश्चात्यन्तायुक्ताः। तथा विशिष्टविधौ सर्वपारार्थ्यमनेकविधिशक्तिकल्पना मत्वर्थलक्षणा, गम्यमानसामानाधिकरण्यत्यागोऽनदनीययागश्चेति दोषाः। तस्मान्न गुणविधिः। तद्दर्शयति—इतरथा श्रुतिरुद्भिदादीन् वक्ष्यति तद्वतो लक्षयेत्। वक्ष्यन्ती लक्षयेत् इति वा ग्रन्थः। प्रातिपदिकसामर्थ्यमुक्त्वा विभक्तिसंबन्धादप्येतदेवावगम्यत इति दर्शयति—यागेन कुर्यादित्यादिना। किं च—

---

१ सर्वपारार्थ्यमिति—विशिष्टविधानेऽपि विशिष्टस्यापदार्थत्वेन सर्वेषां नामधात्वाख्यातानां विशिष्टसमर्पणपरपारार्थ्यमित्यर्थः।

स्यार्थः। करणं हि यागः, उद्भिदाऽपि तृतीयानिर्देशात् करणं तत्रो-द्भिदा यागेनेति कर्मनामधेयत्वेन सामानाधिकरण्यसामञ्जस्यम्। द्रव्यवचनत्वे मत्वर्थलक्षणया सामानाधिकरण्यं स्यात्। श्रुतिलक्षणाविशये च श्रुतिर्ज्यायसी। तस्मात् कर्मनामधेयम्। ननु प्रसिद्धं द्रव्यवचनत्वमपह्नूयेत, अप्रसिद्धं कर्मवचनत्वं प्रतिज्ञायेत। उच्यते। तृतीयानिर्देशात्कर्मवचनता। कुतः। करणवाचिनो हि प्रातिपदिकात् तृतीया भवति करणं च यागः। तेन यागवचनमिममनुमास्यामहे।

नैतदुक्तम्। यदि तृतीयानिर्देशे सत्युद्भिदादिभ्यः शब्देभ्यो यागे बुद्धिरुत्पद्येत स्यादेतदेवम्। न हि नो बुद्धिरुत्पद्यते तस्मादयुक्तम्। तृतीयावचनमन्यथा नोपपद्यत इति चेत् कामं मोपपादि। न जातुचिदनवगम्यमानेऽपि यागवचनो भविष्यति। तस्माद् गुणविधयः। लक्षणेति चेत्। वरं लक्षणा कल्पिता न यागाभिधानम्। लौकिकी हि लक्षणा दृष्टोऽप्रसिद्धकल्पनेति। अपि च यदि नामधेयं विधीयते न

---

विधाने चानुवादे च यागः करणमिष्यते।

तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चति॥

यत्करणाभिधायिन्या तृतीयया इत्येवमादिषु कारकाणां विभक्त्यर्थत्वाभ्युपगमात्कथं करणवाचिनो हि प्रातिपदिकादित्युच्यते। नैष दोषः। करणाश्रयवाचिनो हीत्यभिप्रायः। अथ वा करणशब्दो यादृशमर्थं ब्रवीति तादृशस्य प्रातिपदिकं वाचकमेव। कृदन्तेन हि कारकविशिष्टं द्रव्यमेवोच्यते न विभक्तिवन्निष्कृष्टा शक्तिः। तथा च करणं करणेन करणायेति च कारकान्तरयोगो दृश्यते। अन्यथा हि विभक्त्यभिहितेनैवैतेन कारकेण वशीकृतात्मा द्रव्यं कारकान्तरयोगं प्रतिपद्येत। शक्तेस्तु शक्त्यन्तरं नास्त्येव। तस्माच्छक्त्युपसर्जनद्रव्यवचनत्वात्कृदन्तानामुपपन्नं करणशब्दार्थवाचित्वं प्रातिपदिकस्य। तेनैतदुक्तं भवति। यदस्मिन् वाक्ये करणं तद्वाचिनः प्रातिपदिकात्तृतीययोत्पत्तव्यं यागश्चात्र फलभावनायाः करणं न द्रव्यमिति वक्ष्यति। ततश्च यदुद्भित्पदं यागवचनमेव तृतीयान्तं सदेकवाक्यतां वाक्यस्यार्थान्तरवचनत्वे त्वसम्बद्धं स्यात्। ननु च—

प्रत्यक्षं द्रव्यवाचित्वमुपन्यस्तं कथं पुनः।

करणस्यानुमानेन बाध्यते व्रीहिसोमवत्॥

यथैव 'व्रीहिभिर्यजेत' 'सोमेन यजेत' इत्यादीनां करणभूतयागैकवाक्यत्वे सति तृतीयान्तस्य वैयधिकरण्येऽप्यविरुद्धमेवमिहापीति। दृष्ट इति—चिरंतनतडागोदका

---

१ अभ्युपगमादिति— इह हि गुणप्रकरणिमानमभूर्त सन्त क्रियाया कल्पनि[illegible] शब्द उपदिशति यत्करणाभिधायिन्या तृतीयाविभक्त्या प्रयुज्य निर्दिशति—अद्यमयेति, १ इत्यादद्माधिकरणस्य-भाष्यविरुद्धमिदं भाष्यमित्याशय। २ जै सू (२-१-१) मान्त्रार्थाधिकरणे इति शव।

यागः । अथ यागो न नामधेयम् । उभयविधाने वाक्यभेद इति । उच्यते । न नामधेयं विधायिष्यते । अनुवादा उद्भिदादयः । कुतः प्राप्तिरिति चेत् । ततोऽभिधीयत उच्छब्दसामर्थ्याद् भिच्छब्दसामर्थ्याच्चोद्भिच्छब्दः क्रियावचनः । उद्भेदनं प्रकाशनं पशूनामनेन क्रियत इत्युद्भिद् यागः । एवमाभिमुख्येन जयादभिजित्, विश्वजयाद् विश्व-

---

च्छादिनहरितद्रव्यमुच्यते । यथा तदुत्सार्यमाणमपि स्वच्छन्दतः पुनःपुनरुदकं छादयत्येवं योऽन्योऽपि स्वच्छन्दव्यवहारः स हठ इति प्रसिद्धः । तदुच्यते--

पदमज्ञातसंदिग्धं प्रसिद्धेरपृथक्[1]श्रुति ।
निर्णीयते निरूढं तु न स्वार्थादपनीयते ॥

बीजादयो ह्यत्यन्तरूढाः स्वार्थमपरित्यजन्तः सामानाधिकरण्यमप्रतिपद्यमाना गत्यन्तराभावाद्गुणविधयो विज्ञायन्ते । ये पुनरुद्भिदादयो यौगिकास्तेषां येनैव प्रकारेण यस्तेन द्रव्यवचनत्वं तेनैव कर्मवचनत्वमप्युपपद्यत इति प्रत्यक्षप्रसिद्धावनुदासीनायामनुमानेनाप्यज्ञानसंशयव्युदासकरणं न दुष्यति । सर्वशब्दार्थावधारणे ह्ययमभ्युपायो, यत्प्रसिद्धसामानाधिकरण्यं नाम । प्रधानं च करणत्वं यागे लब्धात्मकं शक्नोति प्रातिपदिकमात्मविषयमापादयितुम् । किं च—

विभक्त्यर्थानुवादाच्च विधेः स्यान्नास्ति लाघवम् ।
गुणपक्षे विधेयत्वं संख्याकारकयोरपि ॥

त्वत्पक्षे ह्यवश्यं कश्चिद्विभक्त्यर्थेऽपि प्रत्ययस्य विधिशक्तिः कल्प्या स्यात् । तस्माद्व्यवहारेणास्ति कर्मण्यपि प्रसिद्धिः । ज्योतिष्टोमादेरपि स्वफलोद्भेदनकारित्वादेतन्नामप्रसङ्ग इति चेत् । न । सामानाधिकरण्यावधारितविषयविशेषस्यावयवशक्त्यालाभात् । न चास्य ज्योतिष्टोमादिभिः समभिव्याहारोऽस्ति । अथवाऽर्थापत्तिवशेनैतद्विशेषविषयमेवोद्भेदनं निमित्तं, न चान्यत्र तदस्तीति व्यवस्था । यथा सास्नादिमत्कृतगमनविशेषनिमित्तत्वं गोशब्दस्य । अविधायकत्वादित्यस्य व्याख्या न नामधेयं विधायिष्यत इति । संज्ञासंज्ञिसंबन्धरूपेण 'वृद्धिरादैच्'[2] इत्यादिवद्विधानं सामानाधिकरण्यावयवप्रसिद्धिभ्यां तत्सिद्धेः । न तु नामधेयार्थो न निर्धार्यते तदधीनवाच्ययागविशेषसिद्धेः । इह हि यद्यपि संज्ञासंज्ञिसामानाधिकरण्यं नास्ति तथाऽप्यात्मरूपव्यवच्छिन्नमेवार्थं संज्ञा गमयतीति

---

१ अपृथक्श्रुतीति—सामानाधिकरण्यानिर्दिष्टं यदित्यर्थः ।
२ पा० सू० ( १ । १ । १ ।

जित् । एवं सर्वत्र । अतः कर्मनामधेयम् । यत्त्वप्रवृत्तिविशेषकरा अनर्थक इति नामधेयमपि गुणफलोपबन्धेनार्थवत् । तस्मात् कर्मनामधेयान्येवंजातीयकानीति सिद्धम् ॥ २ ॥

---

विशेषणविशेष्यभावान्न भिद्यते । नन्वेवं शब्दस्वरूपाभिधानं प्रसज्येत । प्रत्यक्षावगतस्वरूपविशिष्टार्थाभिधानादप्रसङ्गः । सर्वत्र ह्यगृहीतविशेषणा विशिष्टबुद्धिर्न दृष्टा, न त्वनभिहितविशेषणा । न चैतावता शब्दस्वरूपारोपप्रसङ्गः । तदनुरोधेन विद्यमानार्थांशविशेषोद्धरणादित्युक्तं प्राक् । नाम्नैव चैवमादीनां प्रकृतितो भेदोऽन्यथा हि तदनवच्छिन्नो यजिर्गुणफलाद्यर्थं पुनः श्रुतिः प्रकृतिगामित्वान्नैव कर्म भिन्द्यात् । अथ वा सर्वनामधेयेषु किंचिदर्थगतमपि विशेषणमस्तीत्यरुणैकहायन्यादिवदेव विशेषणविशेष्यता । न च यज्युच्चारणमन्तरेणास्य यागविशेषनामत्वमिति न सामान्यस्यानर्थकत्वम् । परस्परसंनिधानेन हि नामापि यागविषयं यागोऽप्येतदवच्छिन्नो न सामान्यमात्रं प्रकृतो वेति लभ्यते । तस्मादुभयोरर्थवत्त्वा विशिष्टभावनाविधानाच्चोभयोरपि विधानमिति नानुवादत्वम् । एवं च सति न नामत्वं विधित्वमात्रप्रतियोगीति, ये पूर्वपक्षे विध्यन्तर्भावं सिद्धान्ते तु विध्यर्थवादमन्त्रातिरेकं नाम्नां वर्णयन्ति तेषामयुक्तमेव । अशेषव्यवहाराद्यभावाच्च नाप्रवृत्तिविशेषकरता । नह्युत्क्षिप्तकरणादिष्वनेनाहं यक्ष्य इति लघुराख्यानोपायः स्यात् । दर्शपूर्णमासावारप्स्यमानः 'समे दर्शपूर्णमासाभ्याम्' इति गुणोपबन्धो दर्शपूर्णमासाभ्यां स्वर्गकाम इति च फलोपबन्धोऽन्यथा न स्यात् । तस्मान्नामधेयान्येवंजातीयकानीति सिद्धम् ॥ २ ॥

( इत्युद्भिदधिकरणम् ॥ १ ॥ )

---

१ नामधेयस्य भाष्यकारोक्तं गुणफलोपबन्धेनार्थवत्त्वं प्रयोजनान्तरोपलक्षणार्थमित्याह—अत्रोपेति । कानि प्रयोजनान्तराणीति चेत् ।

संज्ञाया कर्मभेदकृत्त्वं द्वितीये वक्ष्यिष्यते । यवेष्टौ यागपदकस्य फलत्वं वक्ष्यिष्यते । सोमयागस्य च ज्योतिष्टोमेऽध्याये चतुर्थके । यथाग्निहोत्रधर्माणां प्रवेशः कौण्डपायिने ॥ सप्तमे वक्ष्यते सर्वं तन्नाम्ना फलमिष्यते । वाक्यान्तरोत्पादिते च कर्मण्यपूर्वं विधीयते ॥ फलं वा यत्र तन्नास्माभर्तें कर्म विशेषधीः । द्रव्यदेवतशून्याया यागोत्पत्तौ च नामतः ॥ विना निर्धारणामात्राद्विशेषस्याविधेयता । धर्मप्रमोपयोगित्वमप्यस्येत्थं च सिध्यति ॥ यागेनानेन यक्ष्येऽहं तेन याजय मामिति । नाम्ना विनैवमादिश्च व्यवहारो न सिध्यति ॥ मीमांसाविधिवाक्यार्थज्ञानानुष्ठानलक्षणे । त्रिविधे व्यवहारेऽस्मिन् सर्वस्मिन्नाम कारणम् । इत्येवं प्रदर्शितान्यनुसंधेयानि ।

[ २ ] यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्धः ॥ २ ॥ सि०

चित्रया यजेत पशुकामः, त्रिवृद्बहिष्पवमानम् । पञ्चदशान्याज्यानि, सप्तदशानि पृष्ठानीत्युदाहरणम् । किं चित्राशब्दः पवमानशब्द आज्यशब्दः पृष्ठशब्दश्च गुणविधय उत कर्मनामधेयानीति संशयः । प्रसिद्धेः, अर्थवत्त्वात्, न चैते कर्मणि प्रसिद्धाः । न चा· इति

इदानीमयौगिकेषु व्रीह्यादिवल्लोकरूढेषु जातिगुणशब्देषु चिन्ता । न ह्यानुमानिककरणत्वानुरोधेन प्रत्यक्षप्रसिद्ध्यभावः संभवतीति पूर्वाधिकरणेनासिद्धिः । ननु 'आज्यैः स्तुवते'[1] 'पृष्ठैः स्तुवते'[2] 'बहिष्पवमानेन स्तुवते'[3] इत्युत्पत्तिवाक्यस्थान्येतान्युदाहर्तव्यानि । तथा हि—

> उत्पत्तौ नामधेयं वा गुणो वाऽव्यवधारितः ।
> व्यवहाराङ्कता याति सैवोदाहरणक्षमा ॥

सा तु नोदाहृता सूत्रकारेण 'यस्मिन् गुणोपदेश' इति गुणवाक्यस्याऽऽश्रितत्वात् । अथ किमर्थं तेनैव तदाश्रितम् । यत्र क्वचन प्रतिपादिते फलाविशेषात् । पूर्वपक्षनिराकरणहेतुर्वा वाक्यभेदस्तत्र संभवतीत्युदाहृतम् । अथ वोत्पत्तिवाक्यस्थस्याऽऽज्यादिपदस्य पक्षद्वयेऽपि साकाङ्क्षत्वादेकस्यापि निश्चयहेतुर्नास्तीत्यन्यतः सिद्ध्यपेक्षणादनुदाहरणत्वम् । घृतवाचित्वात्तावन्न स्तोत्रनामत्वं विज्ञायते । यान्याज्यानि तैः स्तुवत इति न श्रूयते तत्र कान्येव नामानि कथं वा तेनाभिधीयन्त इति सहाऽप्युत्पत्तिवाक्येनान्यतः सिद्धिरवश्या । उत्पत्तिवाक्यस्थितमेव चाऽऽज्यादिपदं यथा रूढिं परित्यज्य स्तुतिनामतां प्रतिपद्यते तथा हेतुर्वाच्य इत्यपेक्षा । गुणविधित्वेऽपि घृतस्य स्तुतावकरणत्वात्संबन्धमन्यलक्षणयाऽवश्यं संबन्धवद्वाक्यमपेक्षणीयम् । इह विधाने मत्वर्थलक्षणाप्रसङ्गात् । अनुवादत्वे तु नायं दोषो भवति । तेन स्तोत्राणामप्याज्यवत्ताऽन्यत एव लभ्यत इति तद्गुणपक्षेऽपि सापेक्षता । ततश्च स्तुवत इत्येतावन्मात्रमत्र विवक्षितमित्याज्यादिशब्दोऽन्यतो निर्णीयते । पवमानशब्दस्तु यौगिकत्वात्पूर्वाधिकरणसिद्धेरनुदाहरणमिति केचित् । अपरे तु मन्यन्ते । सोऽभिदादिवत्पवनक्रियां प्रति कर्तृत्वं स्तोत्रस्योपपद्यते, सोमो हि तत्र पवते[4] । ततश्च न कर्मण्यवयवप्रसिद्धिरस्तीति पवमानार्थमन्त्रकत्वाल्लक्षितलक्षणा मत्वर्थलक्षणातो दुर्बलतरेति वाक्यभेदेनैव सिद्धेरुदाहरणम् । तत्र प्रसिद्ध्यादपः

१ सं० सं० (७-४-६)। २ ता० ब्रा० (२०-१-२)। ३ ता० ब्रा० (१९-११-२)। ४ ता० ब्रा० (१३-१०-२)।

च गुणशब्दः। चित्रया यजेतेति च यागानुवादः। विज्ञातत्वान्न यागविधिः। गुणे फलकल्पनाया यजतेर्न विवक्षा। तथाऽऽज्यानि भवन्ति पृष्ठानि भवन्तीति च। गुणविधिकल्पनायामपि न लक्षणा। तस्माद् गुणविधय इत्येवं प्राप्तम्।

---

पूर्वपक्षे पूर्ववदेव व्याख्येया। चित्रेत्युत्तरपक्षे चोतनादग्नीषोमीये गुणविधिरिष्ट। अत्र कारणमुच्यते—

चित्रत्वस्त्रीत्वयोगो हि प्राणिजातौ स्वभावत।
तेनैते प्राणियागाङ्ग प्रकृतिं वैक्षमाश्रिते॥

स्त्रीत्वादिविभागो हि प्राणिव्यतिरिक्तेऽर्थे शब्दानुकरणमात्रेण विज्ञायते पश्वादिषु त्वर्थरूपेण। प्रकृते च दध्यादिद्रव्यात्मकत्वाभीतयोग्य कर्मेत्युत्कृष्यमाणे वाक्याद्यागमात्रसम्बन्धिनी प्रसक्ते सामर्थ्यात् प्राणियागमाकाङ्क्षन्ती 'प्रकृतौ वा द्विरुक्तत्वात्' इत्यनेन न्यायेन सर्वप्राणियागपरमप्रकृतिमग्नीषोमीयं गच्छत। तत्र यद्यप्युत्पत्तिवाक्यशिष्ट कृष्णसारङ्गलोहितसारङ्गादिगुणान्तर पुंस्त्व च बाधक समाप्यते, तथाऽपि पूर्ववदेव बाधविकल्पौ वक्तव्यौ। साधदश्यपूर्वपक्षन्यायश्चात्र द्रष्टव्य। एकपदोपात्तानेकार्थविधानाचैकस्यारक निबन्धनत्वादवाक्यभेदाभिप्राय। पशुकामशब्दोऽपि च स्वर्गकामाधिकरणपूर्वपक्षन्याये नार्जनाङ्गत्वादनुवादोऽभिमतो न यागफलम्। न हि पशुयाग पशुमन्त्रामयमानेनानुष्ठातुं शक्यते। यागानुवादो विज्ञातत्वादिति।

सर्वत्राऽऽख्यातसम्बद्धे श्रूयमाणे पदान्तरे।
विधिशक्त्युपसङ्क्रान्ते स्याद्धातोरनुवादता॥

यावद्यावद्विधेयान्तरमुपादीयते तावत्तावत्पूर्वत्रा नेकशक्तिकल्पनाभयादनुवादत्वाकाङ्क्षा भवति। अगत्या तु तत्रापि विध्यङ्गीकरणम्। अस्ति चात्र स्त्रीत्वचित्रत्वभागग्नीषोमीययाग इत्यनूद्यते। गुणे फलकल्पनाया यजतेरविवक्षेति। किमर्थं गुणविधित्वपक्ष एव सन्निरास्यते। सिद्धान्तग्रन्थोऽयं प्रमादाल्लिखित इति केचित्। अपरे त्वाहु। फलसम्बन्धे किल प्रधानत्वाद्गुणोक्तिविघात स्यादिति। तन्युक्तम्। सर्वथा नामधेयप्रतिपक्षो गुणविधि स च फलसम्बन्धेऽप्यनपगत। तथा चैव वक्ष्यति स्थित एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति विचार इति। फलसम्बन्धे ह्येकान्तेन यागसामानाधिकरण्याभावाद्गुणविधिरेव स्यादिति। तेनैव वाच्यम्। इह तु त्रय पक्षा प्रतिभान्ति। गुणविधि फले, यागे वा नामधेयं वेति। एकैकस्य च द्वय द्वय निरास्तं

---

१ चित्रो गुणो विधीयमान इत्यादि सिद्धान्तभाष्येणाग्नीषोमीय गुणविध्यभिप्रायस्य प्रकटीकरणादित्यर्थ। २ जै० सू० (३-६-१)। ३ जै० सू० (२ १-१) इत्यत्र भाष्यकार इति शेष।

एवं प्राप्ते ब्रूमः । यस्मिन् गुणविधिर्नामधेयमिति संदिग्धे गुणोऽपर उपदिश्यते प्रधानेन कर्मणा तस्य संबन्धः । कर्मनामधेयमित्यर्थः । गुणविधौ हि सति वाक्यं भिद्येत । पुंपशौ प्राप्ते स्त्रीपशुः । पशवः फलं,

---

न्यम् । तत्र पूर्वपक्षस्य एव दुर्बलतरत्वात्तृतीयं पक्षं निराकरोति । धातुपारार्थ्यप्रसङ्गादिति । अतश्च 'व्रीहिभिर्यजेत' इतिवद्यागे गुणविधानम् । करणभूतस्यापि च यागस्योत्पत्तिवाक्यावगतकरणत्वार्थाक्षिप्तसाध्यांशानुवादेन गुणे विधीयमाने न मत्वर्थलक्षणा । गुणगत्यैव वाऽनभिभवसमर्थे यागे गुणविधानमाश्रयति । फले गुणविधिकल्पनायां पूर्वाधिकरणोक्तदोषप्रसङ्गादिति । तथा 'पञ्चदशान्याज्यानि' इत्यत्र 'अस्तिर्भवन्तिपरः'[1] इति सतोपजल्पनं प्रयोगवचनाच्च विधिः । ननु च पञ्चदशानि सप्तदशानीति चैवंरूपः शब्दो न संख्यामात्रवाची 'स्तोमे डविधिः पञ्चदशाद्यर्थः'[2] इति स्मरणात् । न हि स्तोम इति स्तोत्रीयसंख्यातोऽन्या विधीयते । नैष दोषः । स्तोत्रसाधनमात्रपरिच्छेदेन स्तुतिमात्रात्मकस्तोमसिद्धेः सहस्रामृतपरिच्छेदे घृतपरिच्छेदे च स्तुतिमानमिति तत्स्तोमवाचित्वम् । न चात्र मत्वर्थलक्षणा । कुतः—

श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने ।
लक्षणावाक्यभेदादिदोषो नानुमिते ह्यसौ ॥

इह तावदाज्यादीनां श्रुतवाक्यसंयोगाभावादवश्यं प्रकरणाम्नानानुमितवाक्यसंबन्धपूर्वकः प्रयोगवचनविधिराश्रयितव्यः । तेन मत्वर्थ एव प्रतिपाद्यत इति न लक्षणा । तत्रेतरस्यात् । द्रव्यत्वादाज्यादीनां कर्तव्यताविशेषात्मकेतिकर्तव्यतार्थिना प्रकरणेन न ग्रहणमिति । सत्यैवात्र क्रियेत्यनुपालम्भः । प्रधानदेशत्वाच्चाङ्गानामाज्यादिभिरवश्यं स्तोत्रसमीपे भवितव्यम् । अतश्च यथैव 'अग्निमुपनिधाय स्तुवते' इत्यत्राग्निः सत्तामात्रेणोपकरोत्येवमिहापीति निर्दोषं, तस्माद्गुणविधानमिति । अत्राभिधीयते । 'प्रधानतोऽभिसंबन्ध' इति । अनेकार्थविधानं हि प्रधानकर्मविधाने सत्युपपद्यते । अत्र पुनः कर्मानुवादेन गुणो विधीयते । न च गुणानां परस्परं संबन्धो विद्यते । तत्रैकगुणविधाने गुणान्तराणामाक्षेपाद्व्यापाराभावे श्रौतानेकार्थविव्यापारकल्पनायां पुनः पुनरुच्चारणं प्रत्ययस्य कर्तव्यमिति वाक्यभेदः स्यात् । आह च—

अर्थाद्ध्यनेकसामर्थ्यं विधापयति भावना ।
विशेषणविधिस्त्वन्यन्न गृह्णाति विशेषणम् ॥

एकपदोपात्तेऽपि चानेकविधिशक्तिकल्पनागौरवमस्त्येव । उत्पत्तिवाक्यविशिष्टे गुणान्तराविरोधाच्चाशक्तिः । तथा हि—

---

१ अप्रयुज्यमानोऽप्यस्ति इति शेषपूरणमिति पा० सू० (२-३-१) भवतीं कात्यायनस्मरणम् । २ पा० सू० (५-१-५८) अन्तर्यं वार्तिकम् ।

चित्रो गुण इति न शक्यमनेन वाक्येन विधातुम्। चित्रो गुणो विधीयमानः स्त्रिया विधीयेत। नासावग्नीषोमीये, पशुकामे च विधीयेत। सोऽपि नाग्नीषोमीये। तथा पञ्चदशान्याज्यानि भवन्तीत्याज्येषु पञ्चदशता। न चाविहितानि स्तोत्रेष्वाज्यानि भवन्ति, न चान्यद्विधा

---

उत्पत्तिवाक्यविज्ञातं कर्म सर्वं ह्यनूद्यते।
न चाऽऽश्रितगुणे शक्यं तद्विरोधि गुणान्तरम्॥

यत्रानूद्यमान एवावश्यं गुणोऽप्यनुवदितव्यस्तत्र नैरपेक्ष्यदर्शनादाकाङ्क्षाधीनसंबन्धगुणान्तरविधानानुपपत्तिः। न च निष्कृष्य क्रियामात्रं गुणविधिः शक्यः कर्तुम्। कुतः—

प्रथमं हि स्ववाक्यस्थैर्गुणैः संबध्यते क्रिया।
वाक्यान्तरगतैः पश्चान्न शुद्धा सा ह्यवाप्यते॥

यानि परस्परनिरपेक्षाणि व्रीहियवादिवाक्यवत्प्रवर्तन्ते तेषां तुल्यबलत्वाद्भवति विकल्पः। इह चोत्पत्तिवाक्यमन्यनिरपेक्षं विद्ध्यान्नोत्पन्नवाक्यम्, अनुत्पन्नेऽनुवादानुपपत्तेः। पशुकामसंबन्धाच्च पदान्तरगतार्थग्रहणनिमित्तोऽपि वाक्यभेदो भिद्यते। यद्यपि च फलं ■ विधीयते तथाऽपि तत्र कर्मविधानात्कर्मणि च गुणविधेरस्त्येव गौरवम्। अपि च कर्मणः फलगुणौ प्रति युगपद्विध्यनुवाददोषोऽपरः स्यात्। न च पशुकामपदमर्जनाङ्गत्वात्प्राप्तमनूद्यते। कथम्—

पुरुषार्थो हि सर्वेण स्वरसादेव काम्यते।
तत्साधनतदङ्गेषु प्रवृत्तिः प्रार्थनाद्विने॥

न हि साधनभूतं पशुं कश्चित्कामयते विनैव तु कामेन प्रार्थितान्यथानुपपत्त्या तमुपादत्ते। गौणी वा तस्य काम्यता भवेत्। अतः स्वातन्त्र्येण यन्मुख्यया वृत्त्या काम्यते तदेव कामशब्दोपबन्धात्फलं प्रतीमः। विस्तरेण चैतद् 'असाधकं तु तादर्थ्यात्' इत्यत्र वक्ष्यामः। फलं चाग्नीषोमीयस्य क्रत्वङ्गत्वान्नैतदन्यद्वाऽस्तीत्यनुवादासंभवः। प्रकरणं च बाध्येत प्राजापत्यस्य यागस्य। नामधेयत्वे तु कर्मफलसंबन्धमात्रकरणान्न कश्चिद्दोषः। 'पञ्चदशान्याज्यानि' इति द्रव्यसंख्ययोरुभयोः स्तोत्रेष्वप्राप्तत्वान्नान्यतरानुवादे नेतरविधानसंभवः। कर्मान्तरं च न प्रतीयते। तदनुवादेन च विधावकर्माङ्गत्वप्रसङ्गः प्रकरणबाधश्च। न च विधि इह यविधिरुपपद्यत इति वक्ष्यते 'तन्नैकत्वमयज्ञाङ्गभूतम्' इति। ■ चाक्रियाविशेषणं विधीयते, विधेयकस्य नामपदे साक्षादसंबन्धात्। न चेह क्रियोपाधिः, या विधीयमानाऽर्थान्तरमपि गुणमाक्षिपेत्। न चैषा स्तुतिप्रयोगवचनेन ग्रहणम्, अक्रियात्मकत्वात्। आह च।

यद्वा वाक्यं, वचैतदाज्यानि विदध्याद् विहितेषु च पञ्चदशताम् । गम्यते च पञ्चदशताया आज्यानां च संबन्धः । स्तोत्रसंबन्धश्चाऽऽज्यानामविज्ञातः पञ्चदशतासंबन्धश्च । द्वावेतावर्थावेकवाक्यस्याशक्यौ विधातुम् । अथ तु कर्मनामधेयं, नैष विरोधो भवति । केवलं संख्यासंबन्धस्तदानीं विधीयते । अपि चाऽऽज्यानि स्तोत्राणीत्यनेन शब्देन लक्षणयैव गुणो विधीयेत । अतः कर्मणां नामधेयानि वाक्यान्तरैः, आज्यैः स्तुवते, पृष्ठैः स्तुवते इत्येवमादिभिर्विहितानाम् । यस्त्वप्रसिद्धं कर्मणां नामधेयमिति । अत्र यत्प्रसिद्ध्या, आजिगमनादाज्यानि । कथमाजिगमनमिति । अर्थवादवचनात् । यदाजिमीयुस्तदाज्यानामाज्यत्वम्, इति । स्पर्शनवचनात् पृष्ठानि । पवमानार्थमन्त्रकत्वाद् यहिःसंबन्धाच

गात्रान्तराक्रियायोगाद्दते वाक्योपकल्पितात् ।
गुणद्रव्ये कर्मभावैर्गृह्णन्ति प्रकृताः क्रियाः ॥

न च भवतिक्रियां प्रत्यङ्गत्वमुपपद्यते । सर्वोऽपि हि लब्धात्मकोऽन्यत्र व्याप्रियते । सत्तायास्तु वस्त्वात्मलाभमात्रापवर्गाच्च साध्यत्वम् । तद्व्यतिरिक्तसाध्यान्तरानपेक्षणाच्चोपकारासंबन्धान्नेतिकर्तव्यतात्वम् । यत्तु रथंतरं भवतीत्येवंचोदितानामपि प्रकरणेन ग्रहणं तदतिदेशप्राप्तावान्तरक्रियासंबन्धविज्ञानात् । न चाऽऽज्यादीनां लोके सत्ता न सिद्धा येनेदानीं भाव्येत स्तुतिप्रयोगसंनिधिस्थापनभावना करिष्यत इति चेत् । न । अचोदितत्वात् । 'अग्निमुपनिधाय' इति तु स्पष्टं विधानम् । आत्मलाभव्यतिरिक्ता चेयं क्रिया शक्यते कर्मभावेन ग्रहीतुं सिद्धान्ते । न च वाक्यस्यार्थवत्त्वान्नान्यथानुपपत्त्या विनियोजकवाक्यकल्पना । यदि तु 'आज्यैः स्तुवते' इत्यनेन विहितानां पञ्चदशत्वविधिरुच्येत ततः पूर्वाधिकरणन्यायेन सैव मत्वर्थलक्षणेति मत्वा वदति । अपि चाऽऽज्यानि स्तोत्राणीत्यादिसंसर्गिद्रव्यत्वाच्चाऽऽज्यानां साक्षात्पञ्चदशत्वयोगाभावादश्रुतपक्षादिपरिमाणकल्पनाऽवश्याश्रयितव्या भवेत् । तेनैवं ज्ञायते यद्यप्युत्पत्तौ नामत्वं न ज्ञातं गुणवाक्ये च तस्यानधिकारः । तथाऽप्येतद्गुणविधानमेवं सिध्यति । यद्युत्पत्त्यावाज्यशब्दो नामधेयं नान्यथेति ।

गुणवाक्योपपत्त्यर्थं समभिव्याहृतेन च ।
अन्वाख्यानार्थवादाच्च नामधेयत्वमाश्रितम् ॥

यदाजिमीयुस्तदाज्यानामाज्यत्वमिति । यस्माद्देवाः प्रजापतिवचनादेतेषु स्तोत्रेष्वाजिमधावन् । ततस्तदर्हत्वादेतान्याज्यानीति । तथा 'तासां वायुः पृष्ठे व्यवर्तत' इति यस्मादपां वायुना पृष्ठे स्पृष्टे रथंतरादीनि जातानि तस्मात्तानि पृष्ठानीत्यर्थवादाद्विज्ञा-

वाद्दिश्यत्वमानम् । इति मधु पयो घृतं धानास्तण्डुला उदकं तत्संसृष्टं प्राजापत्यम्, इति नानाविधद्रव्यत्वाच्चित्रा । तस्मादेवंजातीयकानि कर्मनामधेयानीति । अथ कस्मान्न पञ्चदशसंख्याविशिष्टान्याज्यानि स्तोत्रकर्मसु विधीयन्ते । विशिष्टानां वाचकस्य शब्दस्याभावात् ।

ननु पदद्वयमिदं वाचकं भविष्यति, पञ्चदशान्याज्यानीति विशिष्टानां, तदेतेषु स्तोत्रेषु विधास्यति । नैतत्पदद्वयमपि विधायकम् । एकमत्र विधायकमेकमुद्देशकम् । उभयस्मिन् विधायके परस्परेण संबन्धो न स्यात् । अविधायके स्तोत्रसंबन्धो न विधीयते । न चात्रैकं पदं विशेषणं मन्यूद्देशकं,स्तोत्रं प्रति विधायकं भवितुमर्हति । वचनव्यक्तिभेदादतोऽयमसमाधिः ॥ ३ ॥

## [ ३ ] तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥ सि०

अग्निहोत्रं जुहोति स्वर्गकाम इति, 'आघारमाघारयति' इति च समामनन्ति । तत्र संशयः, किमग्निहोत्रशब्द आघारशब्दश्च गुणविधी,

तम् । तत्प्रकृतित्वाच्च वामदेव्यादिषु पृष्ठशब्दप्रसिद्धिः । द्वावेतावर्थावेकस्य वाक्यस्यासम्भवादित्यस्यानन्तरमथ कस्मान्न पञ्चदशसंख्याविशिष्टानीत्येवमादि द्रष्टव्यम् । विशिष्टानां वाचकस्याभावादिति–प्रधानाख्यातानुच्चारणाभिप्रायम् । ननु पदद्वयमिति–सत्तिक्रियासंबन्धाभिप्रायम् । नैतत्पदद्वयमपि विधायकमिति । प्रधानक्रिया हि विशेषणानि पिण्डीकरोति सत्तायास्तु प्रत्येकवर्तित्वान्न समुदाये वाक्यपरिसमाप्तिः । अतश्च परस्परसंबन्धाभावः । पञ्चदशानि यानि कानिचिद्भवन्ति, आज्यान्यपि यावन्ति तावन्ति भवन्तीति कल्पना तस्मान्नोभयं विधायकम् । न चानुवादकं, स्तोत्रेषु तादृशस्याभावादनर्थकत्वप्रसङ्गाच्च । तस्मादेकानुवादेनेतरविधिर्नामधेयत्वेऽवकल्पते । विधायकमिति चात्र विधेयार्थोपनयनव्यापारात्पुनः पुनरभिहितं न तु नामपदस्य विधिशक्तिरस्ति । पञ्चदशानीति च स्तुतिसाधकतमस्तोत्रीयरूपपरिच्छेदान्मुख्यं स्तुतिमानानिमित्तं स्तोमत्वमिति शब्दसामञ्जस्यं भविष्यति ॥ ३ ॥

( इति चित्राद्यधिकरणम् ॥ २ ॥ )

ननु सर्वत्र द्विप्रकारमेव नामपदं साविज्ञायिकं यौगिकं च । उभयमपि चाधिकरणद्वयेन प्रतिपादितं, किमिदानीमवशिष्यते येन पुनर्विचार्यते । उच्यते । यौगिकानामेव मत्वर्थलक्षणापरिहारेणात्र चिन्ता, उत्तराधिकरणे तु साविज्ञायिकानां वाक्यभेदासंभ-

१ तै० सं० ( १।५।९ ) २ तै० ब्रा० ( २।२।७ )

उत कर्मनामधेये इति । गुणविधी इति ब्रूमः । कुतः ।

गम्यते हि, अग्नये होत्रमस्मिन्निति । तथा क्षरणसमर्थं द्रव्यं घृतादि,
आघारमाघारयति इति । प्रसिद्धिरेवमनुगृह्यते । गुणविधिश्च
दर्विहोमे, आघारश्चोपांशुयाजे । तत्रैतयोरर्थवत्ता मन्त्रविशेषकरत्वं च ।
न च गुणविधिपक्षे लक्षणा भवति यथा उद्भिदा यजेत इति । अग्निहोत्रे
समासेनावगतं गुणविधानम् । आघारेऽपि, आघारं निर्वर्तयतीति
श्रुत्यैव गुणो विधीयते । तस्माद् गुणविधी इत्येवं प्राप्ते ब्रूमः । तत्प्र-
ख्यं चान्यशास्त्रम् । यौ गुणावेताभ्यां विधीयेते इत्याशङ्क्यते ताव-
न्यत एवावगतौ । यदग्नये च प्रजापतये च सायं जुहोति इति, देव-
ताविधानं, चतुर्गृहीतं वा एतदभूत्तस्याऽऽघारमाघार्य इत्याघारे च
द्रव्यविधिः । अविदितवेदनं च विधिरित्युच्यते । विदितं चात्रान्यतो
गुणविधानम् । तस्मान्न गुणविधी, कर्मनामधेये तु संभवतः । यस्मि-

न्नात् । तत्राग्नये होत्रमस्मिन्निति सिद्धान्तेऽप्यभ्युपगमादन्यसमासार्थानुपलब्धेर्भ्रान्तर्णी-
तमत्वर्थो बहुव्रीहिरभेदेन गुणं विधत्ते । त एव च प्रसिद्ध्यादयो हेतवः सत्यामपि च सायं
होमेऽग्निप्राप्तौ तद्वर्जे प्रातर्होमे होममात्रानुवादाद्वा सर्वदर्विहोमेष्वविहितदेवताकेषु विधा-
स्यति वाक्यसामर्थ्यात् । तथाऽऽघारयेत इत्याघार इति क्षारणसमर्थं द्रव्यमाज्यपयःप्रभृ-
त्यभिधीयते । तच्च द्वितीयानिर्देशात् क्षारणक्रियासंस्कार्यत्वेनाध्यवसीयमानमनुपयु-
ज्यमानसंस्कारानुपपत्तेः प्रयोजनमपेक्षते । धर्ममात्रं चास्य क्षारणं शब्दार्थमात्रापवर्गित्वा-
द्वाशेपक्षारणं करोति । तत्क्षारितैकदेशेन किं कर्तव्यमित्यस्त्यपेक्षा । लोकेऽपि च द्रव-
द्रव्याणां कश्चित्पानाद्यनुपयोक्ष्यमाणानामपि तत्क्षारणसंस्कारं कुर्वन्ति । तेनाभिप्रयुक्त-
पूतीकत्वक्क्षणयुक्तफलचमसवच्च संस्कार्यं द्रव्यं कर्ममात्राभिलाषि । प्रकरणवशेन दर्श-
पूर्णमासप्रधानान्युपसर्पति । तत्रापि चाऽऽग्नेयादीनां विहितद्रव्यकत्वादुपांशुयाजः केवलः
साकाङ्क्ष इति तादर्थ्यं प्रतिपद्यते । आह च—

श्रुतसंस्कारसंबन्धं मुख्यैर्नैघाप्यसंगतम् ।
अन्यथा तद्योग्यत्वात्प्रकृतेर्याति संगतिम् ॥

अथ वा यत्करोतीति प्रत्ययार्थमात्रं साकाङ्क्षत्वादेवोपांशुयाजभावनामनूद्याऽऽघार-
द्रव्ये वाक्येन विधीयमाने तत्साध्यत्वादेव धात्वर्थः प्राप्तोऽनूद्यते । ध्रौवप्राप्त्यैव वा तस्य
क्षरणात्मकत्वे विज्ञाते क्षरणसमर्थमाज्यपयःप्रभृतिविधिं मन्यते । न च धात्वर्थादेव सिद्धे-
र्नाम्ना प्रयोजनम् । न च संस्कारकर्माणि कानिचिन्नामवन्ति दृश्यन्ते । श्रुत्यैवं
विधीयत इति । द्वितीयाश्रुत्यैव संस्कार्यत्वादवश्यं कश्चिदस्य

अग्नये होत्रं होमो भवति तदग्निहोत्रम् । दीर्घधारा क्षरणक्रिया प्रसिद्ध एवाऽऽघारः । तस्मात्कर्मनामधेये । प्रसिद्धत्वादयथोक्तोत्तरः । प्रजापतिनिवृत्त्यर्थमग्निविधानं भविष्यतीति चेन्नैतदेवम् । अग्निं ह्येष विधातुं शक्नोति न प्रजापतिं प्रतिषेद्धुं प्रतिषिध्यमानस्य च प्रजापतेर्विधानमनर्थकं स्यात् । प्रजापतिर्देवतेति गम्यते । प्रकल्प्यमानं च न शक्यं मिथ्येति कल्पयितुम् । अतोऽयमसमाधिः । उच्यते । आघारमाघारयतीति इति द्रव्यपरा चोदना । येन तु द्रव्यं चिकीर्ष्येत इति । द्रव्यं ह्यनया क्रियया क्षार्यते । क्षारितं च यागं साधयति । तत्कस्य प्रधानस्य कर्मणो नामधेयमिति[1] । उच्यते । एतदेवाऽऽघारणं प्रधानकर्म ।

---

यम् । अत्रोच्यते—

लिङ्गितत्वगुणप्राप्ति शास्त्रमन्यद्यतस्त्विह ।
तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यते ॥

अत्र वदामः—

सायं होमे यदि ब्रूयादाघारे च परो विधिम् ।
ततः शास्त्रान्तरप्राप्तेर्विधि स्यान्निष्प्रयोजनः ॥
यदा त्वन्देवते होमे देवताविधिरुच्यते ।
द्रव्यं चोपांशुयाजस्य तदा तत्प्रख्यता कथम् ॥

उच्यते—

विधिश्चेदग्निहोत्रं स्यात्ततोऽस्य विपर्ययेषिणः ।
निवेशः प्रकृते वा स्याद्युक्तेरप्रकृतेऽपि वा ॥
अग्नेर्होत्रेण संबन्धे कृतेऽन्येन प्रवर्तनात् ।
अग्निहोत्रपदे स्पष्टमनुवादत्वलक्षणम् ॥
अनूद्य चापि धात्वर्थं गुण सर्वो विधीयते ।
न चानुवादः प्रकृतात्कर्मणोऽन्यत्र लभ्यते ॥
प्रकृत चेदनूद्यायं गुणो होमे विधीयते ।
तत्र तत्प्रख्यताऽन्यत्र न विवक्षापरिग्रहात् ॥
न च धात्वनुवादोऽत्र कथं चिदुपपद्यते ।
प्रकृताप्रकृताभावात्तस्मात्कर्म विधीयते ॥
सायमूर्ध्वादिसंयुक्तैर्गुणो वाक्यैर्विधीयते ।
शुद्धं न श्रूयते कर्म प्रकृत नास्ति तेन तत् ॥

१ जै० सू० (२–१–१)।

नन्वस्य द्रव्यदेवतं नास्ति । अस्तीति ब्रूमः । तस्याऽऽघारमाघार्य, इत्याज्यं द्रव्यं, मान्त्रवर्णिकी देवता । "इन्द्र ऊर्ध्वोऽध्वर इत्याघार माघारयति" इति मन्त्रो ह्यभिदधत्कर्म तत्साधनं वा कर्मणि समवैति । एष च मन्त्र इन्द्रमभिधातुं शक्नोति । स यदीन्द्रस्तत्साधनं भवेदेवमनेन मन्त्रेणाऽऽघारः शक्यते कर्तुम् । तस्मादिन्द्रो देवता । द्रव्यदेवतासंयुक्तमाघारणम् । तस्मात्तज्जातिः, तस्य यजतेर्नामधेयमिति ॥ ४ ॥

[४] तद्व्यपदेशं च ॥ ५ ॥ सि०

अथैष श्येनेनाभिचरन् यजेत, अथैष संदंशेनाभिचरन् यजेत, अथैष गवाऽभिचरन् यजेत इति समाम्नायन्ते । तत्र गुणविधिः, कर्मनामधेयमिति संदेहः । प्रसिद्ध्यादिभिः पूर्वपक्ष उद्भिदादीनामिव । ते

---

दूरस्थस्यानुवादश्च व्यवधानान्न युज्यते ।
तस्य बुद्धावनारोहात्कौण्डपायिनहोमवत् ॥
विधीयता विशिष्टं चेत्कर्मैत्येव विकल्प्यते ।
न चेदन्येन शिष्टाः स्युस्तत्प्रख्यं चेति चोत्तरम् ॥
न चतुर्थीसमासस्य लक्षणं चात्र विद्यते ।
न च तेन विना शक्या देवताविधिकल्पना ॥
यः कश्चिदेव संबन्धः षष्ठीतत्पुरुषाद्भवेत् ।
अनुवादेऽन्यतः सिद्धे कथ्येताप्यथवाऽऽसवत् ॥
विधाने त्वथ संबन्धो भवेत्परपदार्थयोः ।
प्रातर्होमेऽपि तेनैष वह्निनैव विधीयते ॥
एकदेशेऽपि च ज्ञानात्तानुवादोऽपगच्छति ।
आघारस्यापि संबन्धः कृदेशेनोपपद्यते कर्मणा ॥
सामानाधिकरण्यं च सान्याशेनेह कर्मण ।
विस्पष्टं द्रव्यनामत्वं न चाऽऽघारस्य गम्यते ॥ ४ ॥

( इति तत्प्रख्याधिकरणम् ) ॥ ३ ॥

---

'अथैष ज्योति'[1] इत्यादिवदमुदाहरणम् । तेषां तृतीयानिर्देशाभावाद्गुणविधित्वानुपपत्तेः । तेऽपि[2] वाक्यान्तरेषु यदा तृतीयानिर्देशं प्रतिपद्यन्ते तदा विचार्यन्ते । अथवा प्रथमानिर्देशेन इदमपि प्रत्युक्त्य पश्चात्तस्मात्येऽत्यास समवतीत्येतेऽप्युदाहरणमेव । तत्र तेरेव प्रसिद्ध्यादिभिर्गुणविधिः । न चात्र कर्मणि प्रवृत्तिनिमित्तं किं

---

१ तै० सं० (१-१-१३)। २ प्रथमाकर्मैयथ । ३ अथवादानुसारेण गवाऽभिचरन्नित्यत्र श्याऽभिचरन्नाम इमे यागो युक्त ।

तूद्भिदादयः क्रियानिमित्ताः शक्नुवन्ति यागं वदितुम् । इमे पुनर्जातिनिमित्ता न शक्नुवन्ति । तेन गुणविधय इत्येवं प्राप्तम् । एवं प्राप्ते ब्रूमः । तद्व्यपदेशं च । तेन श्येनादिना प्रसिद्धेन यस्य व्यपदेशः, तत्र कर्मनामधेयम् । श्रुतिर्हि नामधेयत्वे, लक्षणा गुणविधौ । यत्तु जातिशब्दा इमे न यागमभिवदन्तीति । सादृश्यव्यपदेशादभिवदिष्यन्ति । एवं हि व्यपदेशो भवति । यथा वै श्येनो निपत्याऽऽदत्त, एवमयं द्विषन्तं भ्रातृव्यं निपत्याऽऽदत्ते यमभिचरन्ति श्येनेन इति । निपत्याऽऽदत्त इत्यनेन सादृश्येन श्येनशब्दो यागे यथा सिंहो देवदत्त इति । तस्मात् कर्मनामधेयम् । संदंशे, संदंशेन यथा दुरादानमादत्त इति, गत्रि,

---

चिदस्ति । मत्वर्थोपादानेन कर्मणि प्रवृत्तौ चात्यन्तविप्रकृष्टा गौणता स्यात् । तत्र वरं मत्वर्थलक्षणा । साधनं हि प्रतीतमत्यन्ताविनाभावात्स्वसाध्यां क्रियामक्लेशेन प्रतिपादयति विनैव मतुब्लोपेन । किं च—

मत्वर्थो वाक्यवेलायामेकवाक्यवशाद्भवेत् ।
इवार्थः पदवेलाया गृह्यमाणोऽतिदुर्बलः ॥

गुणविधिपक्षे हि स्वार्थापरित्यागेनैव श्येनपदं तद्वन्तमुत्तरकालं लक्षयति । आत्मोच्चारणकाले तु स्वार्थमेव विनियुङ्क्ते । भवतस्तु श्येनार्थानुपयोगादादित एव सादृश्यविवक्षया पदं प्रवृत्तमित्युपगमाच्छ्रुतिबाधप्रसङ्गः । तदुच्यते—

विधेयं स्तूयते वस्तु भिन्नयोपमया सदा ।
न हि तेनैव तस्यैव स्तुतिस्तद्वदितीष्यते ॥

श्येनादिवाक्येषु हि 'यथा वै श्येनो निपत्याऽऽदत्त एवमयमपी'त्युपगमान्न स्तुतिर्दृश्यते । तया च विधीयमानस्य भवितव्यम् । गुणविधाने च श्येनद्रव्यं विधीयत इति तदेव स्तोतव्यम् । न च तस्याऽऽत्मनैवोपमानं युक्तम् । अथोच्येतानन्यत्वेन सुतरां स्तुतिर्भवति, अनन्यसंभविधारितत्वात् । यथा—

"रामरावणयोर्युद्धं रामरावणयोरिव" । इति ।

भवति हि लोके काल्पनिकमवस्थादिगतभेदमाश्रित्यैवमपि स्तुतिः संभवति भेदे न युक्ता । नामधेयत्वे तु यागश्येनस्य द्रव्यश्येनोपमोपपत्तेराञ्जस्यम् । इतरथा हि द्वौ मत्वर्थमत्वर्थौ लक्षयितव्यौ । काल्पनिकश्च भेद इति गौरवम् । न च यागस्तुत्या तदाश्रितद्रव्यस्तवनमवकल्पते, यागविधेरनिराकृतत्वात् । अविधेयगता हि

---

१ श्रुतिर्हि नामधेयत्वे, लक्षणा गुणविधौ इति भाष्यं यथाश्रुतार्थमनुपपन्नमिति मत्वाऽन्यथा व्याचष्टे नामधेयत्वे इत्यादिना—गौरवमित्यन्तेन ।

यथा गावो गोपायन्ति इति । तस्मात् संदंशशब्दोऽपि कर्मनामधेयं गोशब्दोऽपि ॥ ५ ॥

[ ५ ] नामधेये गुणश्रुतेः स्याद्विधानमिति चेत् ॥ ६ ॥ पू०

वाजपेयेन स्वाराज्यकामो यजेत इति श्रूयते । तत्र किं गुणविधिः कर्मनामधेयमिति संदेहः । एवं चेत् संदेहो, दृश्यते गुणविधिः । न संदेहः, श्रूयते हि गुणः । सोऽवगम्यमानो न शक्यो नास्तीति वदितुम् । तस्माद् गुणविधिः ॥ ६ ॥

तुल्यत्वात् क्रिययोर्न ॥ ७ ॥ सि०

नैतदेवं, तुल्ये हीमे क्रिये स्याताम् । या च वाजपेयक्रिया या च दर्शपूर्णमासक्रिया, उभयत्र दार्शपौर्णमासिका विध्यन्तः स्यात् । तथा च दीक्षाणामुपसदां च दर्शनं नावकल्प्येत सप्तदशदीक्षो वाजपेय इति, सप्तदशोपसत्को वाजपेय इति ।

स्तुतिरन्यत्र संचार्येत यागस्तु स्वयमेव विधिभाक्त्वेति न द्रव्यं स्तूयते विधीयते वा पुनरपि च यागेन द्रव्यलक्षणाद्विप्रकृष्टता । समभिव्याहाराच्च द्रव्यवदेव यागवचनं मुख्यम् । विधौ च तत्र लक्षणा समानुवादे । गुणवचनेभ्यश्च मतुब्लोपः स्मर्यते द्रव्यवचनेभ्यः । इवार्थस्तु परशब्दस्य परत्र प्रयोगात्स्वयमेवोपजायते । मत्वर्थलक्षणं च स्वयं कल्पनीया, क्लृप्तस्तु वत्यर्थः । ' यथा वै श्येन ' इत्यादिना । पूर्वोक्ताश्च धा[तु]पारार्थ्यप्रत्ययविप्रकर्षादयो दोषा वक्तव्याः ॥ ५ ॥

( इति तद्व्यपदेशाधिकरणम् ॥ ४ ॥ )

---

तन्त्रसंबन्धेनाऽऽख्यातपदस्य धात्वर्थः फलं प्रति करणं गुणं च प्रति साध्यो भवन् विरोत्स्यते । तेनोद्भिदा यागं यागेन च पशून् भावयेदिति युगपद्विधिव्यापाराद्भिन्ने मत्वर्थलक्षणया संबन्धसिद्धिः । तथाऽऽज्यादिपदस्य तन्त्रेण स्तोत्रसंबन्धाद्वियोगः तस्मात्सर्वत्र स्वपरिकल्पिते नामधेये गुणश्रुतेः प्रसिध्यादिभिर्गुणप्रत्ययानपगमात्तद्विधानमेव भवत्वलं नामधेयत्वेनेति यथासंभवं सर्वाधिकरणाक्षेपेणेदमारभ्यते । तत्रेदानीं वाक्यं शुद्धं भविष्यतीति वाजपेयोपन्यासः । सर्वाण्येव त्विहोदाहर्तव्यानि । आह च—

करणेषूपदिष्टेषु याऽर्थात्साध्यत्वकल्पना ।
तस्यां गुणविधानेन नास्ति मत्वर्थलक्षणा ॥ ६ ॥

वाजपेये तावदयं विशेषोऽभिधीयते—

---

१ ' गुणवचनेभ्यो मतुपो लुगिष्टः ' इति पा. सू. (५-२-९४) भाष्यं ।

अथ वा तुल्यत्वात् क्रिययोरिति। यदि न गुणविधिस्ततस्तुल्यैषा वाजपेयक्रिया ज्योतिष्टोमक्रियया। तत्र दीक्षाणामुपसदां च दर्शनमुपपन्नम्। तस्मात्कर्मनामधेयमिति। लिङ्गं स्वेतरमाहिः पुनरुत्तरसूत्रेण॥७॥

## ऐकशब्द्ये परार्थवत् ॥ ८ ॥

यदि गुणविधिः स्यात्, स्वार्थवत् परार्थस्याभिधानं विप्रतिपिध्यते यजेतेत्यस्य शब्दस्य। यदि स्वाराज्यकामो यजेतेति स्वाराज्यकामस्य यागं विधातुं स्वार्थमुच्यते, न तर्हि वाजपेयेन गुणेन संबन्धुं परार्थमनूद्येत यागेन वाजपेयगुणकेनेति। भिद्येत हि तथा वाक्यम्। ननु द्वे एवैते वाक्ये प्रत्यक्षमुपलभामहे स्वाराज्यकामो यजेतेत्येतदेकं प्रत्यक्षं पदद्वयम्। यजेत वाजपेयेनेत्येतदपि प्रत्यक्षमेव। नैतदेवम्। एवं सति चत्वारि पदान्युपलभेमहि त्रीणि चैतान्युपलभ्यन्ते। उच्यते। यजेतेत्येतदुभाभ्यां संभन्त्स्यते। कथं सकृदुच्चारितं संबन्धमुभाभ्यामेष्यतीति। रूपाभेदात्। ईदृशमेवास्य रूपं स्वाराज्यकामेन संबध्यमानस्येदृशमेव वाजपेयेन।

---

वाजपेय यथायु स्यादीप्सद्द्रव्यता तत ।
द्रव्यसारूप्यसामान्यादैष्टिकत्व प्रसज्यते ॥ ७ ॥
तन्त्रत्वमेकरूप्येण भवेत्तुल्योपकारतः ।
उपकारान्यथात्वे तु भवत्यावृत्तिलक्षणम् ॥

द्विधा हि तन्त्रं भवति प्रत्येकं वा समुदाये वा वाक्यपरिसमाप्त्याख्यातगुणत्वप्राधान्यापेक्षया। तदिह द्रव्यं यागे विधीयेत न फलमफलत्वप्रसङ्गात्। उद्दिश्यमानं हि सर्वत्र फलं भवति, तत्रेतिक्रिया प्रत्युपादीयेताङ्गमेव स्यात्। यागोऽपि फलं प्रत्युपादातुं शक्यते न द्रव्यं प्रति, तत्सम्प्रदानत्वप्रसङ्गात्तृतीयानिर्देशनाशाच्च। न च यागसंस्कृतस्य द्रव्यस्यान्यत्रोपयोगो विद्यते येनैवमाश्रीयेत। एतेन यागफलयोर्द्रव्यं प्रत्युपादानं प्रत्युक्तम्। न च फले यागद्रव्ययोरुपादानम्। एकेन निराकाङ्क्षे फलेऽन्यस्याविधानात्। यथा वक्ष्यति "यदेकस्मादपूर्वं तदेतरत्तदर्थम्" इति। न च द्रव्योपसर्जनो यागः फले विधीयते, मत्वर्थलक्षणादिप्रसङ्गात्। नन्वेतदेवाऽऽपतति यागेन फलं यागं च द्रव्येणेति। ततश्च फलेनोपादेयविधेयगुणभूतयागग्रहणादुणेन चोद्देश्यानूद्यप्रधानभूतापेक्षणात् तत्संस्कारभाव। एकमार्गाश्रयणेऽन्यतरस्यासंबन्धात्। तत्र युगपदाश्रयणे वाक्यभेदात्। अवश्यं हि यत्रोद्दिश्यमानादिरूपं यत्र चोपादीयमानात्मकता तत्र यागस्यैते द्वे वाक्ये कल्पनीये। ननु द्वे एवैते इति तन्त्रपदमभितो दर्शयन् ब्रवीति—चत्वारि पदान्युपलभेमहीति। अनुन्यायर्थत्वादतन्त्रत्वाभिप्रायेण। परस्य तु शब्दरूपाभेदात्साधारण्या-

---

१ जै० सू० (२—१—१) इत्यत्र भाष्यकार इति शेष।

अतस्तन्त्रेणोभाभ्यां संभन्त्स्यत इति । नैतदस्तीदर्शनेन रूपेणेति । यद्यज्ञातस्ततो विधिः, यदि ज्ञातस्ततोऽनुवादः । न च ज्ञाताज्ञातश्च युगपत्संभवतीति । आह—यदिदमुक्तं गुणविधिपक्षेऽनुवादो यजेतेति । यद्ययमनुवादः केनेदानीं गुणो विधीयते । वाजपेयशब्देनेति मा बोचः । न ह्याख्यातमन्तरेण कृत्यं वा नामशब्दस्यार्थव्यापारो विधीयते । यश्चात्राऽऽख्यातशब्दो यजेतेति सोऽनुवाद इत्युक्तम् । केनेदानीं तस्य व्यापारो विधीयते । अतः स्वाराज्यकामं गुणं च प्रति यजेतेति विधिः । तस्मादुभाभ्यां संबध्यत इति । यद्युभयत्र विधिः, वाजपेयो न स्वाराज्यकामस्य यागेन संबध्येत । द्वे ह्येते तदा वाक्ये, न स्वाराज्यकामस्य यागेन सह गुणविधेरेकवाक्यता । प्रकरणात् संबन्धः स्वाराज्यकामस्य यागेनेति चेन्न । वाक्येन यागमात्रे विधानात् । अस्तु यागमात्रेण संबन्ध इति चेन्न । स्वाराज्यकामस्य यागेन सहैकवाक्यताया गम्यमानत्वात् । तदेवं प्रकरणस्य वाक्यस्य चाबाधा युज्यते यदि कर्मनामधेयम् । गुणविधिपक्षे हि सर्वे इमे वाक्यभेदादयो दोषाः प्रादुर्भवेयुः । तस्मात्कर्मनामधेयं वाजपेयशब्द इति सिद्धम् ॥ ८ ॥

[ ९ ] तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे
न चेदन्येन शिष्टाः ॥ ९ ॥ सि० ।

यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति इत्येव-

---

भिमानः । नैतदस्तीति—कार्यप्राधान्याच्छब्दरूपस्य तद्गतवैरूप्याद्दोषापत्तिः । आह यदिदमुक्तमिति—वैरूप्यं परिहरति । गुणविधिपक्षेऽपि ह्यवश्यमाख्यातं विधिरूपमेवाभ्युपगन्तव्यम् । वाजपेयपदस्यानाख्यातत्वेनाविधायकत्वात् । यद्युभयत्र विधिरिति—द्रव्यसंस्कार्यत्वप्रसङ्गमनादृत्याऽऽख्यातगुणभावकृतप्रत्येकवाक्यपरिसमाप्तिनिमित्तपरम्परासंबन्धोपन्यासः । प्रकरणानुरोधात् 'व्रीहिभिर्यजेत' इत्यादिवद्व्यवस्थेति चेत् । न । वाक्येन यागमात्रे विधानादिति—समस्तसंबन्धे हि परस्परानिरपेक्षयोर्योगेन संबन्धः । एकविशेषितेतरसंबन्धे वाक्यभेदप्रसङ्गात् । तत्रानिष्पन्ने स्वाराज्ययागप्रकरणे गुणो विधीयमानः शुद्धयजतिसंबन्धात्सार्वत्रिकोऽपूर्वयागसंबन्धो वा विज्ञायते । दर्शपूर्णमासादिवाक्यैस्तु निष्पादिते प्रकरणे विधीयमाना व्रीह्यादयोऽवतिष्ठन्त इति वैषम्यम् । तेन स्वाराज्यकामैर्योगैकवाक्यता गम्यमाना नोत्सृष्टा भविष्यतीति नामधेयता ॥ ८ ॥

(इति वाजपेयाधिकरणम् ॥ ९ ॥)

---

एवं सिद्धेषु नामधेयेषु नामधेयकार्येषु चेदानीमपवादः प्रस्तूयते । कस्माद्नारैव

मादयः श्रूयन्ते । तत्र संदेहः । किमाग्नेयो ग्नीषोमीय इत्येवमादयो गुण विधयः कर्मनामधेयानीति । किं तावत्प्राप्तम् । गुणविधौ सत्यनेको गुणो विधीयेत । अग्निपुरोडाशाष्टाकपाला इति । तस्मान्न गुणविधय इति । एवं प्राप्ते ब्रूमः । तद्य कर्म, गुणाश्चास्य विधीयेरन् । अविभक्ता हि ते कर्मणो विधानार्थे तद्धितान्ते शब्दे । तत्र ह्यष्टाकपालस्याऽऽग्नेयता विधीयते । स एष एवमाग्नेयो भवति यद्यग्नये संकल्प्य

---

दर्विहोमपदं न विचार्यते, विचारितमेतदपि तत्प्रख्यमित्यनेन । विध्युद्देशगतानां चेह विचारस्तत्र स्वर्गवादगतानां 'यदेकया जुहुयाद्दर्विहोमं कुर्यात्' इति । सिद्धे वा कर्मनामधेयत्वे तद्विशेषविचारस्तत्र । इह पुनः सामान्यचिन्तेति नोपन्यस्तम् । या तु तत्र गुणविध्याशङ्का साऽधिकरणमध्ये परिचोदनामात्रं सर्वमेवैतत्प्रासङ्गिकम् । अष्टमे च पूर्ववदपूर्वचिन्ताधिकारात् । केन पुनर्विहितानां कर्मणामाग्नेयादीनां नामधेयत्वमाशङ्क्यते । तदुच्यते । अष्टाकपालो भवतीत्यादिभिर्द्रव्यमात्रयुक्ताः क्रमवत्यो भावनाः प्रतिपाद्यन्ते । तासां च स्थानक्रमेणाग्न्यादिदैवत्यानि याज्यानुवाक्यायुगलान्याम्नायन्ते । तानि क्रमविनियुक्तानि सन्ति मान्त्रवर्णिकीं कर्माङ्गभूतां देवतां कल्पयन्ति । न ह्यन्यथा ते मन्त्राः कर्मोपयोगं गच्छेयुः । क्रियास्वरूपप्रकाशनेन तत्संबन्धिप्रकाशनेन वा मन्त्राः कर्मोपयोगितां गच्छन्ति । न चैतैः क्रिया द्रव्यं चाभिधीयते । यदग्न्याद्यभिधीयते तस्य संबन्धित्वं न ज्ञातं तत्रासंबन्ध्यग्न्यादिप्रकाशनेऽनङ्गत्वप्रसङ्गः । तेनावधारिताङ्गत्वमन्त्रानुरोधेनैव विज्ञायते यानेते वदन्ति ते नूनमग्न्यादयः क्रियाङ्गमिति ते च मन्त्रेषु प्राधान्याभिधानाद्देवतात्वेन प्रज्ञाता इति तद्वैलक्षण्यात्कर्मस्वपि देवता भवन्ति । पुरोडाशादिभिरपि च हविरात्मकत्वाद्योग्यतया यागसाधनत्वेनोपप्लवमानैर्देवताऽऽकाङ्क्षितेति द्रव्यदेवतासंबन्धनिष्पत्तेरनुमितानां यागानां 'तत्प्रख्यं चान्यशास्त्रम्' इत्याग्नेयादीनां नामधेयत्वम् । अथ वाऽष्टाकपालादीनां हविष्ट्वात् 'द्विर्हविषोऽवद्यति' इति ह्यवदाने गृहीते चोदनान्तरेण च तत्संस्कारार्थोपस्तरणाभिघारणग्रहणाच्चतुरवत्ते निष्पन्ने 'चतुरवत्तं जुहोति' इति वचनाद्यावद्द्रव्यं निष्पन्नानां होमानां तथैवाग्न्यादिषु प्राप्तेषु नामधेयत्वम् । एवं चानेकार्थविधिदोषो न भविष्यति । तथा प्राप्तेऽभिधीयते—

■ चेदन्येन शिष्टाः स्युर्धर्माः शब्देन केनचित् ।
ते गुणाश्चोपदिश्येरन्विधिना ह्यविभागतः ॥

---

१ जै० सू० (१।४।३)। २ तै० स० (३।६।८)।

दीयते । तेनायमनेन प्रकारेण यागो विहितो भवति । स एवं विधीयमानो न शक्योऽग्निमष्टाकपालं चाविधाय विधातुम् । संबन्धो हि विधीयमानो न शक्यते संबन्धिनावविधाय विहित इति वक्तुम् । तस्माद्गुणविधयः । अष्टसु कपालेषु संस्क्रियमाणो व्रीहिमयो यवमयो वा पुरोडाश एव भवति । सोऽनुवादः । सिद्धश्चाष्टाकपाल उच्यते कपालेषु श्रपयतीति वचनाद् नान्येन श्रपितं गृह्णन्ति । तेनाऽस्मिन्

न तावद्द्रव्यदेवतासंस्कारसंयोगेन यागविधिरुपपद्यते । कथम् ।

न द्रव्यस्य स्वरूपेण मन्त्राकाङ्क्षाऽवकल्पते ।
न चान्यथाविना तस्य संबन्धः संप्रतीयते ॥

नाष्टाकपालो भवतीत्येतावता कश्चित्पुरुषव्यापारो विधीयते योऽनुष्ठानाय स्मृतिकरणं मन्त्रमपेक्षेत । न च पुरोडाशभवनं पुरुषस्यानुष्ठेयं, प्रतिनियतकर्तृत्वात्क्रियाणाम् । नापि द्रव्यं, स्वरूपेण सिद्धात्मकत्वात् कर्तव्यं येन स्मर्येत । न च 'अग्निर्मूर्धा' इत्यादिभिर्द्रव्यं तद्व्यापारो वाऽभिधीयते येनाऽऽकाङ्क्षयाऽपि संबध्येरन् । अन्याद्यभिधायिनां न कश्चित्तैः संबन्धो विद्यते ।

न च यागो हविष्ट्वं वा पुरोडाशेऽवधारितम् ।
येन स्याद्देवताकाङ्क्षा तन्मन्त्राणां च संगतिः ॥

यदि हि प्रथमं यागत्वमवधार्येत ततो देवताकाङ्क्षायां सत्यां देवताभाविनो मन्त्राः संबध्येरन्, न तु तद्भवतिशब्देनोक्तम् । न च यागसंबन्धात्प्राक् पुरोडाशादीनां हविष्ट्वमवधार्यते । संबन्धिशब्दो ह्ययं न द्रव्यस्वरूपप्रयुक्तः । तदेव हि द्रव्यमयागसंबद्धं पयःप्रभृति न लोके हविःशब्दवाच्यं भवति । एतेन चतुरवत्तचोदनाकल्पितकर्मनामत्वं प्रत्युक्तम् । आघारादिषु तु क्रियात्मकत्वान्मन्त्राकाङ्क्षायां वचनविनियोगवशाच्च भवति मान्त्रवर्णिकदेवताकल्पना । सर्वजघन्यश्चायं देवताविधिः सर्वेऽपेक्षे तद्धितदेवताविधौ संभवति किमित्याश्रीयते । अन्यथानुपपत्तिमूलश्चासौ । न च तद्धिते संभवत्यन्यथानुपपत्तिः । तस्मादनेनैव कृते द्रव्यदेवतासंबन्धेऽर्थवादपुरःसरेण भवतिशब्देन विहिते विशेषार्थं क्रमेण मन्त्राम्नानम् । अगत्या चानेकार्थविधिरङ्गीक्रियते । विधानार्थे तद्धितान्ते शब्द इति—विधिप्रयोजनत्वाभिप्रायेण । सर्वं चैतत्तस्मादविभक्तं गम्यते । देवता तावत्प्रातिपदिकेनोक्ता तद्विशिष्टं द्रव्यं तद्धितेन संबन्धोऽपि तत्रैवार्थगृहीतस्तत्सामानाधिकरण्याच्चाशेषात्मीयोपसर्जनयुक्तमष्टाकपालपदं विशेषणत्वेन तत्रैवान्तर्गतम् । द्रव्यस्य चाऽऽश्रेयत्वेन भवनमभान्यमानम्ग न सिध्यतीति तदाक्षिप्ता भावनाऽपि तत्रैव ।

पक्षे न वाक्यभेदो भवति । न चेदन्येन शिष्टाः । यत्र पुनरन्येन वचनेन शिष्टा गुणा भवन्ति, भवति तत्र नामधेयम् । यथा, अग्निहोत्रं जुहोति इति ॥ ९ ॥

[७] बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥ सि० ।

बर्हिराज्ययोः पुरोडाशे च संदेहः । किमेते संस्कारशब्दा उत जातिशब्दा इति । संस्कारशब्दा इति ब्रूमः । संस्कृतेषु तृणेषु बर्हिःशब्दमुपचरन्ति, सर्वत्र, नासंस्कृतेषु । संस्कृते च घृते आज्यशब्दम् । तथा संस्कृते पिष्टे पुरोडाशशब्दम् । नन्वसंस्कृतेऽपि कस्मिंश्चिद्देश उपचर्यते । यथा बर्हिरादाय गावो गता इति भवन्ति वक्तारः । तथा, आज्यं क्रय्यमिति, पुरोडाशेन[1] मे माता प्रहेलकं ददातीति । सादृश्यात्तेषु प्रयोगः । यथोपशयं यूपशब्दः । कुत एतत् । यत एकदेशे हि शब्दप्रयोगः । तस्मात् संस्कारशब्दा इत्येवं प्राप्तम् ।

एवं प्राप्ते ब्रूमः । बर्हिरादिष्वसंस्कृतेष्वपि शब्दलाभाच्च संस्कारशब्दाः । नन्वुक्तं सादृश्यादेकदेशे भविष्यन्ति । तन्न । प्रसिद्धे हि संस्कारशब्दत्वे,

न च योगेन विनाऽऽग्नेयत्वं भावयितुं शक्यमिति पुरुषव्यापारविशेषोऽपि यागस्तदन्तर्गतः । ततश्च तद्धितान्तपदोपात्तविधिना सर्वमन्यदर्थादाक्षिप्यमाणं न वाक्यं भिनत्ति । भावनाविधिपूर्वकश्च सर्वत्र धात्वर्थकारकविधिर्भवतीत्यश्रूयमाणाऽपि सैव तावद्विशिष्टा विधीयते । ततो विशेषणान्यथानुपपत्त्या सर्वसंसर्गात्मकत्वाच्च तामेव संबन्धशब्देनाभिधत्ते, न त्वव्यापारात्मकत्वाद्द्रव्यदेवतासम्बन्धः शक्यते विधातुम् । 'अविभागात्' इति—अर्थाक्षेपहेतुः । 'न चेदन्येन' इति—अन्यथानुपपत्तिशरणाभिधानम् ॥ ९ ॥

( इति आग्नेयाधिकरणम् ॥ ६ ॥ )

नामधेयप्रस्तावेन द्रव्यनामसु निमित्तं प्रत्यधिकरणत्रयमारभ्यते । तुल्यहेतुत्वात्पुरोडाशोऽप्युदाहृतः । तत्र 'शास्त्रस्था वा तन्निमित्तत्वात्'[2] इति याज्ञिकानां संस्कृतेषु प्रयोगात्सार्थकत्वाल्लौकिकानां संस्कारनिमित्तता । तथा हि—

पुरोडाशादिभिर्लोके व्यवहारो न दृश्यते ।
तस्माद्यूपादिवद्वेदात्तेषां संस्कारहेतुता ॥

तत्राभिधानम् । कुतः ।

---

१ पुरोडाशेन मे प्रहेलकमिति—पिष्टपिण्डात्मकपुरोडाशकृतक्रीडासाधनमित्यर्थः । २ जै० सू० ( १—३—८ )

सादृश्यादिति शक्यते वक्तुम् । तच्चासिद्धम् । कथम् । बर्हिरादिशब्दे-ष्वुद्दिश्य संस्कारा विधीयन्ते । तेन सत्सु शब्देषु संस्कारैर्भवितव्यं सति च संस्कारे शब्दलाभ इतीतरेतराश्रयं भवति । न चाविहिताः संस्कारा भवन्ति यानालोच्य लोकः प्रयुञ्जीत । तस्माच्च लोकाः संस्कृतेषु बर्हिरादीन् प्रयुञ्जते । तत एकदेशेऽपि जातिनिमित्ता दृष्टाः सर्वत्र जातिनिमित्ता भवितुमर्हन्ति । न चालौकिकानां सतां वेदादेव पूर्वोत्तर-पदसंबन्धमनपेक्ष्य शक्यतेऽर्थोऽध्यवसातुम् । पूर्वोत्तरपदे अनर्थके मा भूतामित्येवं स परिकल्प्येत । अशक्यस्त्वनवगम्यमानः परिकल्पयि-तुम् । अर्थवती च ते पदे पूर्वोत्तरे [illegible] भवि-ष्यतः । तस्माज्जातिशब्दा एवंजाती
वटमवस्तृणाति इति संस्कृतैरेव स्तरि
सिद्धान्ते ॥ १० ॥

एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः ।
तत्त्यागान्न तस्यास्ति निमित्तान्तरकल्पना ॥

य एव लौकिकाः शब्दास्त एव वैदिकास्त एवामीषामर्था इति स्थितत्वाल्लोकप्रसि-द्धिप्रतीते वेदे यत्रैकदेशेऽपि जातिनिमित्तता लभ्यते न तत्र पुनर्निमित्तान्तरशक्तिक-ल्पना संभवति । संस्कृतेष्वपि जातेरनपगमात्तन्निमित्तताऽतिक्रमो न शक्यो वक्तुम् । अतश्च शास्त्रस्थैरप्यविरोधान्न बाधः । किं च ।

वेदेनापि च संस्कारात्प्रागेव च्छेदनादिकात् ।
तादृशी जातिशब्दत्वमाश्रितं लोकसंमतम् ॥

तेन जातिमेते न व्यभिचरन्ति । व्यभिचरन्ति तु संस्कारान्, अविहितत्वाल्लोकव्य-वहारवेलायां संस्काराणामभावात् ।

न च यूपादिशब्दत्वमन्यथाऽप्युपपत्तितः ।
लोकादलभ्यमानार्थास्ते ह्यगत्या तथाऽऽश्रिताः ॥

यदि हि च्छेदनविधिवेलायां बन्धनविधौ वा कश्चिल्लौकिकोऽर्थो लभ्येत ततः स्थितमिदं व्यवस्थितव्यक्तिविपर्ययेण कल्प्येत यच्छिद्यते स नूनं यूप इति । अस्ति च बर्हि-रादेर्जातिस्तस्माददुक्तता ॥ १० ॥

(इति बर्हिराज्याधिकरणम् ॥ ७ ॥)

१ एकदेशाधिकरणं इति क्व ।

## [ ८ ] प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥ सि०

प्रोक्षणीरासादय इति श्रूयते । तत्र प्रोक्षणीशब्दं प्रति संदेहः किं संस्कारनिमित्त उत जातिनिमित्त उत यौगिक इति । तत्र संस्कारेषु सत्सु दर्शनात्संस्कारशब्दतायामवगम्यमानायामसंस्कृते शब्दलाभाज्जातिशब्दः । असंस्कृतास्वेवाप्सु प्रोक्षणीभिरुद्वेजिताः स्म इति कर्मिप्रदेशे भवन्ति वक्तारः । तेन जातिशब्द इति प्राप्ते । यौगिक इत्युच्यते । कुतः । अर्थसंयोगात् । प्रोक्षण्य इत्युपसर्गधातुप्रत्ययसमुदायस्य जातिनिमित्तता प्रयोगादनुमीयते । सेचनसंयोगात्तूपसर्गधातुकरणप्रत्ययसहितोऽप्सु प्रवर्तत इति प्रसिद्धिरनुगृहीता भविष्यति । यदाऽन्यदपि सेचनं प्रोक्षणशब्देनोच्यते तदा तत्संयोगादेवाप्सु भविष्यतीति न समुदायार्थः कल्पयितुं शक्यते । तस्माद् यौगिकः । प्रयोजनं, घृतं प्रोक्षणं भवति

ननु समुदायप्रसिद्धेः श्रुतिस्थानीयत्वाद्वाक्यस्थानीयावयवप्रसिद्धिर्दुर्बला स्यात् । तथा हि ।

> अक्षरैरेव बुध्यन्ते समुदायप्रसिद्धिषु ।
> अर्थभागोपसंहारादितरा विप्रकृष्यते ॥

सत्यमेवमेतत् । अवश्य त्ववयवानामपि स्वार्थे शक्तिराश्रयणीया तदनाश्रयणेऽवयवप्रसिद्धत्वाभावात् । तत्र च ।

> असत्स्ववयवार्थेषु योऽन्यत्रार्थे प्रयुज्यते ।
> तत्रानन्यगतित्वेन समुदायः प्रसिध्यति ॥

लब्धात्मिका हि समुदायप्रसिद्धिरवयवप्रसिद्धिं बाधते तस्यास्त्वात्मलाभो यत्र प्रमाणान्तरेण पूर्वानुभूतावयवार्थरहितेऽर्थे शब्दप्रयोगो दृश्यते यथाऽश्वत्वकर्णत्वरहिते वृक्षेऽश्वकर्णशब्दस्य । न ह्यत्र पूर्वशक्त्यनुसारेण प्रतीतिरुपपद्यत इत्यर्थापत्त्या शक्त्यन्तरं कल्प्यते । ततश्चोभयसंभवेऽवयवार्थानुसंधानाद्विक्षिप्ताया अवयवप्रसिद्धेरक्षरश्रवणमात्रलभ्यत्वादियं बलीयसी भवति । अत्र पुनरप्सु प्रकर्षसेचनक्रियाकरणत्वसंभवादवयवशक्तिभिरेव वाक्यवत्प्रयोगोपपत्तेः शक्त्यन्तरे प्रमाणाभावात्समुदायप्रसिध्यभाव. । तथा हि ।

> प्रवेता यदि वृक्षेषु वाजिकर्णो कथचन ।
> अदृष्टा समुदायस्य कः शक्तिं जातु कल्पयेत् ॥

तस्मादप्सु समुदायप्रसिद्धिरिति द्रवद्रव्यमात्रसाधारणता । ननु संस्कारनिमित्तत्वेऽप्यप्सामानाधिकरण्यकृतत्वादीकारस्य घृतान्निवृत्तिः स्यात् । यदि हि प्राग्विकारात्संस्कारनिमित्तताऽवगम्येन तत. स्त्रीप्रत्ययोऽयमाश्रयलिङ्गनिमित्त इत्यवधारणादन्यलिङ्गा-

इति, यदि संस्कारशब्दः प्रोक्षणीरासादयेति भेपः । यदि जातिशब्दः, घृतमासादयेति । यदि यौगिकः प्रोक्षणीरिति ॥ ११ ॥

[९] तथा निर्मन्थ्ये ॥ १२ ॥ सि०

निर्मन्थ्येनेष्टकाः पचन्ति इति संस्कृते दर्शनात्संस्कारशब्दो निर्मन्थ्य इति । असंस्कारेऽपि दृश्यते । निर्मन्थ्यमानयौदनं पक्ष्याम इति । निर्मन्थनयोगात्पूर्ववद् यौगिक इति संस्थितम् । प्रयोजनं, संस्कारनिमित्ते संस्कृतेनेष्टकाः पक्तव्याः । जातिशब्दे यथोपपन्नेन । यौगिकेऽचिरनिर्मथितेन यथा नावनीतेन भुङ्क्त इत्यचिरनिर्दग्धेनेति गम्यते ॥ १२॥

---

न्निवर्तेत । अयं पुनरन्यप्रयोगः संस्कारेष्वीकारान्त एवानवगतविभागो वेद्यादिवत्प्रयुक्त इत्यन्यादृशस्य वाचकत्वं नावधार्येत तस्मादीकारान्तः स्यात् । यौगिकत्वे तु प्रागीकारायोगो गम्यत इति स्त्रीप्रत्ययोऽयं निमित्ताभावाद्घृते न प्रयोक्ष्यते, चोदकप्राप्तं तु प्रातिपदिकमात्रं प्रयोक्तव्यम् । न च द्रव्येष्वर्थसमवायाद्विविधशब्दप्रयोगनियमो, यतः प्रोक्षणशब्दबाधेन जातिपक्षवद् घृतमित्येव प्रयोगः स्यात् ॥ ११ ॥

( इति प्रोक्षण्यधिकरणम् ॥ ८ ॥ )

निर्मन्थ्येऽपि पूर्वाधिकरणवज्जातिसंस्कारनिमित्तपक्षानुद्ग्राह्यानन्तरेण यौगिकत्वं साधनीयम् ।

वैद्युताश्माभिघातोत्थसूर्यकान्तादिजन्मनाम् ।
निवृत्तौ चरितार्थः सन् निर्मन्थ्योऽभिनवः कथम् ।

'लोके कर्मार्थलक्षणम्' इत्यशब्दार्थेनापि व्यवहाराद्वेदचिरनिर्दग्धघृतप्रतीतिः । सर्वघृतानां च नवनीतविकारत्वात्पुनः श्रुतेरचिरनिर्दग्धनवनीतार्थता स्यात् । इह तु शब्दप्रमाणकेऽन्यक्रियानिततनिवृत्तमात्रचरितार्थो निर्मन्थ्यशब्दाश्चिरावशेषोपादानासमर्थः कथमचिरनिर्मथितविषयः कल्प्यते । महाप्राचिरत्वमपि योगेऽन्तर्गतं, क्रियायोगमात्रनिमित्तत्वात् । तस्मादसदेतत् । नैष दोषः ।

पाकेनाग्नेरुपात्तत्वाद्विशेषणपरा श्रुतिः ।
तच्च पाकाङ्गभूतत्वात्तद्देशादौ करिष्यते ॥

यथैव लोहितोष्णीषादिविधिषु विशेष्याणां प्राप्तत्वाद्विशेषणपरत्वमेवमिहापि विशेष्यानुवादेन विशेषणभूता क्रियैव पाकाङ्गत्वेन विधीयते । अङ्गानां च प्रधानेनैकदेशकालकर्तृत्वं वक्ष्यते । तेनाचिरनिर्मथितेनादूरनिर्मथितेनानन्यकर्तृनिर्मथितेनेति वक्तव्ये प्रदर्शनार्थमचिरग्रहणम् ॥ १२ ॥

( इति निर्मन्थ्याधिकरणम् ॥ ९ ॥ )

## (१०) वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥ पू०

चातुर्मास्येषु प्रथमे पर्वणि वैश्वदेवे संदेहः । वैश्वदेवेन यजेत इति किं वैश्वदेवशब्दो गुणविधिरुत कर्मनामधेयमिति । इति यदि संदेहो न संदेहः । वैश्वदेवे विकल्पः । गुणविधिर्वैश्वदेवशब्दः । गम्यते हि गुणविधानम् । विश्वे देवा विधीयन्त आग्नेयादिषु यागेषु । तत्राग्न्यादीनां विश्वैर्देवैर्विकल्पः । एवं प्रसिद्धिरर्थवती भविष्यति ॥ १३ ॥

---

तद्धितोपात्तत्वान्मत्वर्थस्य न लक्षणा । न चानेकार्थविधित्वेन वाक्यं भिद्येत । न च समस्तेषु कर्मसु तत्प्रख्यशास्त्रसद्भावः । न च यथाऽग्निहोत्रे समासोऽनभिव्यक्तमत्वर्थोऽत्र तद्धितः । सर्वत्र द्रव्यरूपा एव देवताविधयो भवन्ति । न च श्येनयागवद्विधेयैर्वै धर्म्यादिव्यपदेशः । न च फलपदाश्रवणाद्वाजपेयवद्वैरूप्यं यजेः, शक्यते हि केवलयज्यनुवादेन देवता विधातुमित्यारम्भः । सर्वत्र च नामचिन्तानुसारान्न बर्हिराज्यादिविचारेण व्यवधानम् । अथ वा नामधेयान्यपि यौगिकानि निर्मन्थ्यादिष्वप्रासार्थत्वाद्विधिफलानि दृष्टानि वैश्वदेवशब्दोऽपि तथाऽभिप्रत्यनन्तरं सम्बन्धः । तत्र विकल्प इति गुणविधेः फलेन प्रतिज्ञानम् । एवं हि शङ्क्यते । यद्ययं गुणविधिर्न तर्हि कर्म विधीयते । न चापि द्रव्यमनुवदितुं शक्यते तत्र प्रकृताग्नेयादिकर्मानुवादेनाशक्यं देवताविधानमुत्पत्तिवाक्यशिष्टदेवतान्तरावरोधादत आह—विकल्पस्ताभिः सह भविष्यति । न चाद्यापि सूत्रकारभाष्यकाराभ्यामुत्पत्तिरबलीयस्त्वं क्वचिद्दर्शितमिति तुल्यबलत्वं मन्यते । किं च ।

> न समस्तानुवादस्य किंचिदस्ति प्रयोजनम् ।
> विश्वे देवा न च प्राप्ताः प्रत्येकं सहितेषु वा ॥

यदि हि गुणो न विधीयेत ततः समस्तमेव वाक्यमनर्थकं स्यात् । विश्वेदेवसंबन्धश्च न प्रकृतानां प्रत्येकमस्ति, न समुदाये येनानूद्येत । न चाऽऽमिक्षायागस्य केवलस्य यजिना ग्रहणम् । न च वैश्वदेवशब्दस्तद्विषयत्वेनेष्यते । तस्मात्सप्तसु यागेषु गुणविधिः तन्त्रता स्यात् । एक एव शब्दः सप्तसु विधिरामिक्षायां चानुवाद इति विप्रतिषिध्येत । तत्र ।

> प्रकृताविशेषेऽपि यत्र प्राप्तिर्न विद्यते ।
> विधिस्तत्रापि संप्राप्तः वैरूप्यं भविष्यति ॥ १३ ॥

---

१ तै० ब्रा० (१-४-१०)।

न या प्रकरणात्प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य॥ १४॥ सि०

नैतदेवम्। प्रत्यक्षश्रुतिविहिता अग्न्यादयस्तेषां यागानां, विश्वेदेवा वाक्येन। प्रकरणात्तेनैव नान्येनेति गम्यते। न चायं विषमशिष्टो विकल्पो भवितुमर्हति। न हि प्रकरणं श्रुतस्य द्रव्यस्य बाधने समर्थम्। तस्मात्कर्मनामधेयम् ॥ १४ ॥

मिथश्चानर्थसंबन्धः ॥ १५ ॥

अथोच्येत वैश्वदेव इत्यनेन शब्देन प्रत्यक्षमग्न्यादिगुणविशिष्टो

---

अत्रोच्यते। नायं प्रकृतेषु गुणविधिरुपपद्यते। कथम्।

गुणान्तरावरुद्धत्वान्नावकाशोऽस्य गुणोऽपरः।
विकल्पोऽपि न वैषम्यात्तस्मान्नामैव युज्यते ॥

अग्न्यादयो ह्युत्पत्तिवाक्ये तद्धितश्रुत्याऽष्टाकपालादीनां देवता, विश्वेदेवा वाक्येन। नन्वत्राप्यष्टाकपालादिसंबन्धाद्वाक्यमेव। न। तद्धितेन द्रव्यविशेषस्य कृते देवतासंबन्धे वाक्येन विशेषणविशेष्यभावमात्रकरणात्। वैश्वदेवशब्देऽपि तथेति चेत्। न। यागलक्षितद्रव्यसंबन्धकल्पनाविप्रकर्षात्। न तावद्वैश्वदेवेनेति प्रकृतमप्रकृतं वा द्रव्यं देवतासंबन्धि श्रूयते। तत्र यजेतेति सामानाधिकरण्यादेवं तावद्विज्ञायते वैश्वदेवेन यागेनेति। ततश्चान्यथा यागसंबन्धानुपपत्त्या तत्साधनं द्रव्यं लक्षणया देवता स्कन्दति। वाक्येन च यागमात्रसंबन्धे सति प्रकरणादिदं कल्पनीयं तेनैवाऽऽग्नेयादिना यागेन वैश्वदेवेन यजेत नान्येनेति। न त्वग्न्यादिविधौ काचिल्लक्षणापेक्षा प्रकरणापेक्षा वेति वैषम्यम्। न हि प्रकरणं द्रव्यस्येति। यदा द्रव्यस्याग्न्यादिसंबन्धो विधीयते न तदा प्रकरणापेक्षेत्यर्थः। अथ वा यद्द्रव्यस्य प्रकरणं न तद्वैश्वदेववाक्येनाऽऽश्रितम्। भाष्ये तु द्रव्यशब्दो वस्तुवाची[1] न हि श्रौतस्याग्न्यादिद्रव्यस्य देवताभूतस्य प्रकरणं बाधकं, वैयधिकरण्यं वा, द्रव्यस्य यत्संबन्धित्वेन श्रुतमग्न्यादि तस्य प्रकरणं न बाधकमिति। प्रकृतयागेषु देश्य न दूरस्थानुवादेन गुणविधिर्विशिष्टापूर्वकर्मविधानं वा। विप्रकीर्णयागैकीकरणाच्च समुदायानुवादोऽर्थवान्। न हि 'वसन्ते वैश्वदेवेन' 'प्राचीनप्रवणे वैश्वदेवेन' इत्यादि विधानं परस्परसहितानामष्टानां हविषां समुदायपदाद्दृतेऽवकल्पते। तस्मादेकदेशस्थैरपि विश्वैर्देवैरुपलक्षितानां छत्रिन्यायेन तत्प्रख्यतयैव सर्वेषां नामधेयत्वम् ॥ १४ ॥

वैश्वदेवमुपादाय देवता नोपदिश्यते।
सह विध्यनुवादौ हि नैकः शब्दः समश्नुते ॥

---

[1] तै० ब्रा० (१-४-१०)

-यागगणो लक्ष्यते । वैश्वदेवी हि तत्राऽऽमिक्षा समवैति । यदि वैश्वदेवशब्देन यागगणो लक्ष्यते, न तर्हि विश्वेदेवा विधीयन्ते । कथं सकृदुच्चरितो वैश्वदेवशब्दो यागगणं लक्षयिष्यति विश्वांश्च देवान् विधास्यतीति नायं वैश्वदेवशब्दस्य विश्वैर्देवैर्मिथः संबन्धो घटते । तस्मात्कर्मनामधेयमेव न गुणविधिरिति ॥ १५ ॥

परार्थत्वाद्गुणानाम् ॥ १६ ॥

परार्थाश्च गुणाः । ते न शक्नुवन्ति प्रधानमावर्तयितुम् । तेन सकृद्यागः कर्तव्यो न गुणानुरोधेनाऽऽवर्तितुमर्हति । संमतिपन्नदेवतत्वाच्च न विरोधः । तत्रैकस्यां प्रधानाहुतौ त्रिंशदाहुतयो हूयन्त इति त्रिंशत्संख्यासंपत्तिराहवनीयाहुतीनां नावकल्पते । तस्मात्कर्मनामधेयमिति सिद्धम् ॥ १६ ॥

(११) पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥ पू०

वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जात इति श्रूयते । तत्र यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनातीत्येवमादयः कपालविकल्पाः श्रूयन्ते । तेषु संदेहः । किमष्टत्वादयो गुणविधय उतार्थवादाः ।

अथ वा यदुक्तं निर्मन्थ्यादिवत्रामैव सद्गुणमपि विधास्यतीति । तत्राभिधीयते । मिथश्च नामगुणविध्यर्थयोरसंबन्धः । निर्मन्थ्यस्तु गुणविधिरिति ॥ १९ ॥

पूर्वोक्तसूत्रमपि संभवति । मिथः सह प्रदाने क्रियमाणे त्रिंशत्संपत्त्यभावादनर्थसंबन्धः स्यात् । कुतः ।

हविषो गुणभूतत्वान्न कर्मावृत्तिहेतुता ।
देवनैक्यात्सह त्यागो ह्यवबाद्धि प्रसज्यते ॥

तेन सकृत्त्यागः कर्तव्य इति सत्यां सहप्रदानशक्तौ नाऽऽवृत्तिर्युक्ता । संप्रतिपन्नदेवतात्वाच्च सहप्रदानमविरुद्धं शक्यं कर्तुं तनश्च त्रिंशत्त्वविरोधः । त्रिंशत्पूरणं च केषांचिदेव, नव प्रयाजाः, नवानुयाजाः, द्वावाघारौ, द्वावाज्यभागौ, अष्टौ प्रधानाहुतय इति । अपरेषां तु स्विष्टकृद्वाजिनेज्याग्रहणादाघारौ न गणितौ । सर्वथा तु प्रधानाहुतिभेददर्शनसिद्धिः ॥ १९ ॥

( ॥ इति वैश्वदेवाधिकरणम् ॥ १० ॥ )

गुणविधिनामधेयविचारे पर्यवसितेऽधुना केवलगुणविधित्वमेवास्ति न वेति विचार्यते । अथ वाऽष्टाकपालत्वस्य वैश्वानरसामानाधिकरण्याद्द्वादशत्वान्तर्गतत्वात्तत्प्रत्ययत्वेन नामधेयत्वमाशङ्क्य गुणविधिः प्रसिद्धयादिभिः प्रकृतयजिबुद्धेस्तत्प्रत्ययत्वाभावाच्च समर्थनीय-

१ तै० सं० (२-२-५)

वादा इति । तत्र गुणविधय इत्येव ब्रूमः । कथम् । ये हि पूर्ववन्तो=
विदितपूर्वमर्थमभिवदन्ति तेऽविधानार्थाः । तदेतदस्य वाक्यस्य समा-
म्नाये सामर्थ्यं यदविहितपूर्वकाभिधानम् । किं तत्, विधानसामर्थ्यम् ।
एवमविहितमर्थं विधास्यति । इतरथाऽर्थवादाः सन्तोऽनर्थकाः स्युः ।
न च द्वादशकपालस्य शेषभावमुपगन्तुमर्हति । मत्यक्षा ह्यष्टानां कपा-
लतमपि निराकृत्यार्थवादता पूर्वसिद्धैवोपसंहरिष्यते । तत्र पूर्ववतां विधानेनार्थवत्त्वमपू-
र्वाणां नामधेयत्वावधारणात् 'यदुत्पत्तावपूर्वम्' इति । तस्माद्गुणविधयोऽष्टत्वादय-
इति केचित् । तदयुक्तम् । न ह्यपूर्वत्वान्नामधेयत्वं सिद्धम् । अपूर्वाद्धि यथैव
लौकिकार्थापरिज्ञानान्न गुणविधित्वमेवं वैदिककर्माभिधायित्वं सुतरामप्रसिद्धमिति नामधे-
यत्वमपि न स्यात् । सत्येव च सर्वत्र लौकिकेऽर्थे समभिव्याहारादिभिर्नामधेयतोक्ता ।
तस्माद्यथाभाष्यमेव सूत्रार्थः ।

पूर्वज्ञातार्थवाचित्वे नामधेयार्थवादने ।
अप्राप्तत्वादिहैते स्युर्वैश्वदेवाविकल्पवत् ॥

यदि हि वैश्वानरयागेऽष्टत्वादयः कुतश्चित्प्राप्ता भवेयुस्ततः संवादद्वारेण नामधेयत्व-
मर्थवादता वा स्यान्न तु प्राप्तिरस्ति केवलद्वादशत्वविधानात् । तथा हि ।

यद्यप्यर्थात्मनाऽस्त्येव महासंख्यास्ववान्तरा ।
अपरिच्छेदकत्वात्तु नासौ कर्मविशेषणम् ॥

न हि सत्तामात्रेण संख्या व्याप्रियते किं तर्हि संख्येयपरिच्छेदेन । द्वादशत्वेन च
कपालेषु परिच्छिद्यमानेषु नाष्टत्वादीनां परिच्छेदकत्वमित्यविद्यमानता । यद्यपि च यथा-
कथंचिदस्तित्वमाश्रीयते तथाऽप्येतावन्मात्रं भवेदष्टौ भवन्तीति न तु यदष्टाकपाल
इति । संस्कृततद्धितो ह्येषः, तद्धितार्थनिमित्तश्च समासस्तौ च सति सामर्थ्ये भवतः ।
सामर्थ्यं चान्यनिरपेक्षस्ये भवति । सापेक्षाश्च द्वादशत्वेनाष्टत्वादय इति न द्वादशकपा-
लोऽष्टाकपालादिशब्दाभिधानं यकं लभते । तेन स्वरूपसंकीर्तनस्यासत्त्वात्परोक्षमसंबद्ध-
तरमापद्येत । न च द्वादशत्वविलक्षणोऽष्टत्वादेः कर्मोपयोगः संभवति, संख्यात्वात् । यद्यपि
चाष्टत्वस्तुत्या द्वादशत्वं स्तूयते न त्वष्टाकपालस्तुत्या द्वादशकपालस्य स्तुतिः । विशे-
षणविशेष्ययोरत्यन्तभेदात् । अपि चास्त्येव द्वादशत्वस्याऽऽत्मीया स्तुतिः 'जगत्यैवास्मि-
न्' इति । तस्माद्द्वादशत्वेन सह विकल्पमाना गुणविधय एवैतेऽपि । सर्वं चेदं वैकल्पि-
कानेकसंख्याविशिष्टवैश्वानरविधानादेव भवोत्पत्तिवाक्यमिति न भवानके विरोधः । तस्मा-

१ जै० सू० (१-४-१)

लानां स्तुतिः परोक्षा द्वादशानाम्। प्रत्यक्षाभावे च परोक्षा स्यात्। तस्माद्गुणविधयः ॥ १७ ॥

## गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ताऽस्ति ॥ १८ ॥ सि०

नैतदस्ति गुणविधय इति। गुणस्य विधानार्था एते सन्तः पुरोडाशस्य कपालेषु संख्यां विदध्युः। न शक्नुवन्ति यागप्रयोगस्य विधातुम्। द्वादशकपालता हि यागस्य वाक्येन, अष्टाकपालादयः प्रकरणेन। तेन ते यागे न भविष्यन्ति। अपि चाष्टत्वादयः पुरोडाशे-

---

ष्वसामर्थ्यमिति च पूर्वप्रकृतयोरप्यपेक्षत्वाद्वैश्वदेवपूर्वपक्षातिदेशः। तदीयं हि सामर्थ्यमस्मिन्समाम्नायेऽस्ति, न च तदुक्तः परिहारः। तस्माद्विधानार्थ इति ॥ १७ ॥

प्रकृताप्रकृते यागे तथा द्रव्येऽपि वा गुणः।
द्रव्यं गुणस्तदेवं च न कथंचिद्विधीयते ॥

प्रकृते तावद्द्वादशत्वावरोधान्नाष्टत्वादयो विधीयन्ते। न च दूरस्थे, तदुपादानशब्दाभावात्। न च कर्मान्तरं केवलाष्टत्वादिगुणकं संभवति। द्रव्यदेवतासंयोगप्रत्यक्षयागाश्रवणात्। एतेन पुरोडाशे संख्याविधिस्तेषामपि प्रत्युक्तः। तथाऽष्टाकपालादि पुरोडाशविधानम्। न हि द्वादशकपालपुरोडाशावरुद्धो यागः पुरोडाशान्तरं गृह्णाति। नाप्यननूदिते कर्मणि स्वशब्देनाप्रकृते पुरोडाशविधानं फलतत्साधनासंबद्धं कश्चिदुपयुज्यते। नाप्यव्यापारात्मकत्वाद्द्रव्यं विधातुं शक्यते। अत एव विश्वजिदादिवदपि नाध्याहारेण फलं कल्प्यते।

वैश्वानरपदं नापि यागायात्रानुषज्यते।
विभक्त्यन्तरयोगित्वान्न चर्तेऽस्मादनर्थकम् ॥

स्यादेतत्। वैश्वानरपदानुषङ्गादष्टाकपालादिद्रव्यदेवतासंबन्धविधेर्यागान्तरसिद्धिरिति। तन्नास्ति। प्रथमान्तेषु द्वितीयान्तानुषङ्गात्। न च विभक्तिविपरिणामः। अन्यथाऽप्युपपद्यमानत्वात्। यदि ह्यनुषङ्गविपरिणामावन्तरेणाष्टत्वादिश्रवणमनर्थकं स्यात्ततः किं वा न क्रियेत, तत्तु स्तुत्यर्थत्वेनोपपन्नतरत्वान्नानर्थकम्। तदा चानुवादत्वाद्विपरिणतविभक्तिसंबन्धेऽप्यदोषः। तस्मान्न पुरोडाशविधानम्। न च द्वादशकपालेऽष्टाकपालादयः पुरोडाशाः स्वात्मभिर्विभक्ता विद्यन्ते। अष्टत्वादिमात्रविशेषदर्शनात्। ते चाष्टत्वादयो न यागे नापि पुरोडाशे विधीयन्त इत्युक्तम्। न चाष्टत्वादीनां द्वादशकपालेनैकवाक्यता तत्रोपपद्यते। नानाविधेयप्रयोगनवशेनार्थैकत्वाभावात्। न च नानाविधाना विभज्यमानाना

नैकवाक्यभूताः प्रकरणं बाधित्वा न यागस्य भविष्यन्ति । यागासंबन्धे चानर्थकाः पुरोडाशसंबन्धे फलाभावात् । अर्थवादत्वेन तु वैश्वानरयागस्य स्तुतिरुपपद्यते । तस्मादर्थवादा इति ॥ १८ ॥

तच्छेषो नोपपद्यते ॥ १९ ॥

इति यदुक्तं तत्परिहर्त्तव्यमित्यामापोन्तं सूत्रम् ॥ १९ ॥

अविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन् ॥ २० ॥

यदा स्वष्टाकपालादिप्ररोचनार्था अनर्थका इत्यवगतं तदा लक्षणया द्वादशकपालस्य स्तुतिर्वैश्वानरयागप्ररोचनार्था भविष्यति । सन्ति हि द्वादशसंख्यायामष्टत्वादयः संख्याविशेषा अविभक्ताः । अतो द्वादशकपा-

---

साकाङ्क्षत्वं विद्यते । यदि नैकं वाक्यं भवेत्ततः सर्वविशिष्टैकभावनाविधानाच्च विकल्पः स्यात् । अष्टत्वादीनां च गुणत्वान्न प्रत्येकं वाक्यपरिसमाप्त्या पृथगनुष्ठानोपपत्तिः । न च संख्यानां समुच्चयः संभवति । संख्यान्तरोपजननेन सर्वाभावप्रसङ्गात् । संख्यान्तरानुपजननसमुच्चयस्तु द्वादशत्वेऽस्त्यात्यन्तमोचात् । तथाभूतानां च द्वादशत्वविधिनैव प्राप्तेरनुवादत्वापत्तिः । तेनैतैर्भिन्नैर्वाक्यैः स्वतन्त्रा विधीयन्त इत्यवश्यं भवताऽभ्युपगन्तव्यम् । ततश्च द्वादशत्वमुत्पत्तिवाक्यशिष्टमितराणि तु वाक्यान्तरैः प्रकरणापेक्षैर्दुर्बलानि सन्ति न संबध्यन्ते । एवं तावद्वैश्वानरयागो बलवत्तरगुणावरोधान्नाष्टत्वादीन्प्रतीच्छति । अपि चाष्टत्वादयोऽपि नैवाविसोढास्तेऽपि हि पुरोडाशेनैकवाक्यभूतत्वान्नैव वैश्वानरयागस्य प्राप्नुवन्ति । तत्प्रकरणं बाधित्वा न तस्य भविष्यन्ति । तथा चातद्गुणाः केवलपुरोडाशसंबन्धे प्रयोगे स्युरनर्थकाः । न हि स—पुरोडाश प्रत्यर्थवत्ताऽस्ति । अथ वा कथमतद्गुणा इत्यत आह—न हि तं—यागमन्यावरुद्धं प्रत्यर्थवत्ताऽस्तीति ॥ १८ ॥

अष्टत्वाद्यविधानत्वाद्व्यर्थेयं तत्प्ररोचना ॥ १९ ॥

तस्मादवयवद्वारं द्वादशत्वं प्ररोच्यते ॥

यद्विधेयमवधार्यते तदेव स्तोतव्यं द्वादशत्वं चात्र विधेयं तस्माद्यथाकथंचित्तदेव स्तोतव्यम् । तत्सामीप्याच्च शक्नुवन्त्यष्टाविशब्दास्तदेकदेशप्रतीतिं कर्तुम् । एकदेशस्तुतिद्वारेण चैकदेशी स्तुतो भवति । तेनैतदुक्तं भवति, ईदृशोऽयं द्वादशकपालो महाभागो यस्मिन् क्रियमाणेऽष्टाकपालादयोऽपि समाविता भवन्ति ते चाष्टत्वादयो ब्रह्मवर्चसादिसिद्धिप्रशस्तास्तस्मात्प्रशस्तोऽयमिति । यत्वस्त्येव द्वादशत्वस्यान्या स्तुतिरिति । नैष दोषः । कुतः ।

सूत्रेऽवशिरमाणत्वाद्यावती हि प्रतीयते ।

तां सर्वामेकरूप्येण विध्युद्देशः प्रतीच्छति ॥

लानां स्तुतिः परोक्षा द्वादशानाम् । प्रत्यक्षाभावे च परोक्षा स्यात् । तस्माद्गुणविधयः ॥ १७ ॥

गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ताऽस्ति ॥ १८ ॥ सि०

नैतदस्ति गुणविधय इति । गुणस्य विधानार्था एते सन्तः पुरोडाशस्य कपालेषु संख्यां विदध्युः । न शक्नुवन्ति यागप्रयोगस्य विधातुम् । द्वादशकपालता हि यागस्य वाक्येन, अष्टाकपालादयः प्रकरणेन । तेन ते यागे न भविष्यन्ति । अपि चाष्टत्वादयः पुरोडाशे-

---

ह्सामर्थ्यमिति च पूर्वप्रकृतयोर्व्यापेक्षत्वाद्द्वेश्वदेवपूर्वपक्षातिदेश । तदीयं हि सामर्थ्यम-स्मिन्समाम्नायेऽस्ति, न च तदुक्तः परिहारः । तस्माद्विधानार्था इति ॥ १७ ॥

प्रकृताप्रकृते यागे तथा द्रव्येऽपि वा गुणः ।
जनकत्वेन पूतादेरष्टत्वादीनि कारणम् ।
तेषां कारयितृत्वाद्वा पूतादेः कारणाभिधा ॥

यदुक्तं द्वादशत्वावरोधादनर्थकमष्टत्वादिविधानं स्तवनं चेति । तन्नानर्थकम् । नित्यं हि द्वादशकपालता । यस्तु गुणफलानि ब्रह्मवर्चसादीनि प्रार्थयते तस्याष्टत्वादीनि द्वादशत्वोपमर्देन निवेक्ष्यन्ते । तथा हि—

पुरुषार्थसमासत्तेः काम्यं नित्यस्य बाधकम् ।
विशेषतश्च सामान्ये पूर्वप्राप्ते प्रवर्तनात् ॥

पुरुषार्थसिद्ध्यर्थो हि सर्वः प्रयास इति तत्प्रत्यासन्नं वस्तु बलीयो भवति । दूरे च द्वादशत्वं पुरुषार्थस्य तत्साधनयागद्रव्यसंस्कारार्थकपालपरिच्छेदात् । अष्टत्वादयस्तु तदाश्रिताः सन्तः साक्षाद् ब्रह्मवर्चसादि साधयन्तीति प्रत्यासत्तेर्बलीयांसो भवन्ति। तस्मादर्थवन्त इति । ननु च—

ब्रह्मवर्चसयोगादि फलत्वेन यदीष्यते ।
श्रुत्यभावाद्विधिः केन वर्तमानापदेशिनाम् ॥

तत्र केचिदाहुः । औदुम्बराधिकरणपूर्वपक्षन्यायेनात्र प्रत्यवस्थानमिति । तत्र युक्तम् । तत्रैव दत्तोत्तरत्वात् । अतोऽयमभिप्राय । 'पूत एव स तेजस्वी' इत्यादिना फलमुच्यते । 'गायत्र्येनम्' इत्यादिश्रुतेः प्रत्याम्नातो विधि । 'यदष्टाकपाल' इत्यादिभिः सार्थवादैः प्रत्येकं विहितानां ... पूत एवेत्यादिभिः फलसंबन्धः क्रियते ॥ २१ ॥

नैकवाक्यभूताः प्रकरणं चाधिरत्वा न यागस्य भविष्यन्ति । यागासंबन्धे चानर्थकाः पुरोडाशसंबन्धे फलाभावात् । अर्थवादत्वेन तु वैश्वानरयागस्य स्तुतिरुपपद्यते । तस्मादर्थवादा इति ॥ १८ ॥

तच्छेषो नोपपद्यते ॥ १९ ॥

इति यदुक्तं तत्परिहर्त्तव्यमित्याभाष्यान्तं सूत्रम् ॥ १९ ॥

अविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन् ॥ २० ॥

यदा त्वष्टाकपालादिभिरोचनार्था अनर्थका इत्यवगतं तदा लक्षणया द्वादशकपालस्य स्तुतिर्वैश्वानरयागमरोचनार्था भविष्यति । सन्ति हि द्वादशसंख्यायामष्टत्वादयः संख्याविशेषा अविभक्ताः । अतो द्वादशकपा-

---

साकाङ्क्षत्वं विद्यते । यदि चैकं वाक्यं भवेत्ततः सर्वविशिष्टैकभावनाविधानाञ्च विकल्पः स्यात् । अष्टत्वादीनां च गुणत्वाञ्च प्रत्येकं वाक्यपरिसमाप्त्या पृथगनुष्ठानोपपत्तिः । न च संख्यानां समुच्चयः संभवति । संख्यान्तरोपजननेन सर्वाभावप्रसङ्गात् । संख्यान्त-

---

त्रिष्टुभैवास्मिन्निन्द्रियं दधाति तेनेन्द्रियावी । यस्माज्जगत्यैवास्मिन् पशून् दधाति तेन पशुमानिति । ततः कामाय विधयोऽसंभवन्तो यद्यर्थवादा अपि न भवेयुरानर्थक्यमेवैषां स्यात् । तस्मादकारणं ब्रह्मवर्च-

---

वाक्यानि यावदर्थं स्युर्गुणेभ्यः फलकल्पने ।
एकोपक्रमसंहारादेकं चेदं प्रतीयते ॥

पुत्रे जाते द्वादशकपालमिति यदेवोपक्रान्तं तदेवाष्टत्वादीनामन्ते ' यद्द्वादशकपालो भवति ' इति ' यस्मिञ् जात एताम् ' इति चोपसंह्रियमाणं पश्यामः । तावति च नाष्टत्वादयः पृथग् भवितुं लभन्ते तदेकवाक्यता च न स्तुत्या विनोपपद्यते । अर्थान्तरपरतायामानर्थक्यात् । यदि हि कर्तृसंबन्धीन्येतानि भवेयुस्ततस्तस्य कारणानि प्रयोजकानि स्युः । वैश्वानरसंबन्धीनि त्वेतानि । तस्माद्गुणार्थोऽन्यासंभवान्निति स्तुत्यर्थो विधीयते । पूत एव स इत्येवमादीनां च तच्छब्दयुक्तानां यस्मिञ् जात इत्यनेनापेक्षितत्वाच्च पूर्वैः सह फलत्वेन संबन्धः । न चात्रानुपयोगो येन बलादाच्छिद्य नीयेरन् । न चाष्टत्वादिब्रह्मवर्चसादीनामेभिर्विभागेन संबन्धः । यत्र तु विभागो ' गायत्र्यैवैनम् ' इत्यादौ तत्र स्तुतित्वमभ्युपगतमेव । अतो या नाम पूत इत्येवमादीनां फलकल्पना सा यागमेव प्रति नाष्टत्वादीन् । प्रथमोपनिपाते च यागस्यापि स्तुतिरेव । एवं कामकाररहितत्वेन फलविध्यसंभवत्वात् । एतैरेव स्तूयमाने यद्द्वादशकपाल इत्यादीनामुपप-

सत्वादयोऽष्टत्वादीनाम् । तस्मादष्टत्वादयोऽर्थवादा इति ॥ २२ ॥

## [ १२ ] तत्सिद्धिः ॥

यजमानः प्रस्तरः, यजमान एककपाल इत्यादि समाम्नायते । तत्र संदेहः । किं यजमानः प्रस्तर इत्येष गुणविधिः, किमर्थवाद इति । तथा यजमान एककपाल इति । किं तावत्प्राप्तम् । गुणविधिरिति ।

---

त्यर्थता । तस्मान्न गुणविधय इति सिद्धम् ॥ २२ ॥

( इति वैश्वानरेष्ट्यधिकरणम् ॥ ११ ॥ )

---

तत्सिद्धिः। अर्थवादप्रसङ्गात्तदुपकारिगुणवादविधितल्लक्षण तत्र नोक्तमिदानीमभिधीयते । ननु च तत्रैव ' रूपात्प्रायाद् ' 'दूरभूयस्त्वात्' इति निमित्त कथितम् । सत्य कथितम्, न तु लक्षणत्वेन । कथ तर्हि, इह सिद्ध तत्रोदाहृतार्थवादलक्ष्यविषयव्यवहारार्थ नीतम् । अत्र तु सर्वगौणवृत्तीना लक्षणमुच्यते । ननु च सहचरणस्थानादीन्यन्यान्यप्यक्षपादप्रभृतिभिर्गौणनिमित्तान्युक्तानि । लोके च दृश्यते यष्टी प्रवेशय, मञ्चा क्रोशन्ति, अश्वसहस्रेणामुको राजा जित इति । तान्युपसहर्तव्यानि । लिङ्गसमवायेनैवोपसहृतानीति केचित् । छत्रिसमवेतेतरप्रत्ययवद्धि यष्टिसहचरितादिप्रत्ययो भवति । अथ वा गौण्या वृत्तेरिह निमित्तमभिधीयते न लक्षणाया । किं चानयोर्भेदोऽप्यस्ति । बाढमस्ति । कुतः—

> अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते ।
> लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥

तत्र यथैवाऽऽकृतिवचन शब्दस्तत्सहचरिता व्यक्ति लक्षयति तथैव यष्टिमञ्चाश्वादयस्तत्सबद्धपुरुपलक्षणार्था भवन्ति । अग्निर्माणवक इति तु नाग्नित्वाविनाभावेन माणवक प्रतीयते । किं तर्हि—

> वह्निस्वलक्षितादर्थात्पैङ्गल्यादि गम्यते ।
> तेन माणवके बुद्धि सादृश्यादुपजायते ॥

सर्वत्र च तत्सिद्धिकराद्यविषयमेव प्रस्तरप्रभृतौ यजमानादिशब्दाना वृत्तिरिति त उदाहृता । अत्रापि च सामानाधिकरण्यादेकतरस्य नामधेयत्व, निमित्ताभावादनेकशक्तिकल्पनाभयाच्च तदनुपपत्त्या कार्यलक्षणाद्वार प्रयोजनवत्तरत्वेन गुणविधित्व, अशक्तेर्वा तत्सभवादर्थवादत्वमिति त्रय एव पक्षा । तत्र गुणविधिवादी मन्यते । न का

---

१ तत्सिद्धीत्यारभ्य इति गुणाश्रया इत्य तस्यैकसूत्रत्वेऽपि भाष्ये प्रत्येक प्रथमान्तसूत्रोपन्यासो व्याख्यानार्थो इति न विरुध्यते । २ तै० स० ( २–६–५ ) । ३ जै० सू० ( १–२–१ )

क्रिमेवं भविष्यति एवमपूर्वमर्थं विधास्यति । इतरथाऽर्थवादोऽनर्थकः स्यात् । अर्थवत्त्वं च न्याय्यम् । तस्माद् विधिः । नैतदेवम् । यदि विधिः स्यात्प्रस्तरकार्ये यजमानो नियम्येत। यजमानकार्ये वा प्रस्तरः। प्रस्तरे जुहूमासादयति, सर्वा वा स्रुच इति यजमाने जुहूरासाद्येत सर्वा वा स्रुच इति । तथा सति न याजमानं शक्यते कर्तुम्, दक्षिणतो ब्रह्मयजमानावासाते कर्मणः क्रियमाणस्य, इति । न च प्रस्तरो याजमानं शक्नोति कर्तुम् । तथा यदि यजमान एककपालकार्ये विनियुज्येत सर्वहुतः क्रियेत । तत्र सर्वतन्त्रपरिलोपः स्यात् । न चैककपालो याजमानं शक्नोति कर्तुम् । तस्मान्न विधिः । विध्यन्तरं चास्ति प्रस्तरमुत्तरं बर्हिषः सादयति, एककपालं सर्वहुतं करोति, इति । तस्मादपि न विधिः । किं तर्हि । अर्थवादः । यजमानो ज्ञायत एव प्रस्तर एककपाल इति च ।

कथं पुनरनयोः सामानाधिकरण्यं ज्ञायते । न हि प्रस्तर एककपालो वा यजमानः । न च यजमान एकस्मिन् कपाले संस्कृतः पुरोडाशः, प्रथमो वा कुशमुष्टिलूनः । कथं परशब्दः परत्र वर्तते, किमर्थं वा ज्ञायमानस्य संकीर्तनमिति । उच्यते। ज्ञायमानः संकीर्त्यते स्तोतुम् । प्रस्तर उत्तरो बर्हिषः सादयितव्यो यजमानत्वात् । तथा यजमान एककपालः सर्वहुतः कर्तव्यः स्वर्गं आहवनीयस्तत्र प्रतिष्ठापितो भवति, इति ।

कथं परत्र वर्तते परशब्द इति । गुणवादस्तु । गुणादेष वादः । चित्प्रस्तरयजमानयोरितरेतरसमभिव्याहारेण स्तुतिः प्रतीयते । न च स्तोतुमपि परशब्दः परत्र वर्तते । न च प्रवृत्तिनिमित्तमस्ति । न च प्रवृत्तस्य प्रयोजनमन्यस्कार्यलक्षणातः । तस्मात् 'यो होता सोऽध्वर्युः' इत्यादिवदन्यतरः कार्यलक्षणार्थः । तत्रापि 'मुख्यं वा पूर्वचोदनात्' इति यजमानशब्दः स्वार्थवृत्तः प्रस्तरशब्दः स्रुग्धारणादिकार्यलक्षणार्थ इति गुणविधिः । अत्रोच्यते—

न तावत्कार्ययोगित्वमेकस्याप्युपपद्यते ।
विरोधाद्यजमानस्य प्रस्तरादेरचोदना ॥

एककपालवत् 'सूक्तवाकेन प्रस्तरं प्रहरति' इति यजमाने प्रहियमाणे सर्वतन्त्रविलोपप्रसङ्गः । तस्मादेकवाक्यगतोत्तरसादनसर्वहोमविधिस्तुत्यर्थः संवादः । कथं पुनः पर-

कथमगुणवचनो गुणं ब्रूयात् । स्वार्थाभिधानेनेति ब्रूमः । सर्व एवैते गौणाः शब्दा न स्वार्थं हित्वा गुणेषु वर्तन्ते । प्रसिद्धहानिर्हि तथा स्यादप्रसिद्धकल्पना च । [1]न च सर्वे गुणसमुदायवचनाः । गुणहीनेऽपि दर्शनात् । अप्रसह्यकार्यपि हि कदाचिद्रोगेणोपहतः सिंहः पुनः सिंह एव । [2]समुदायवाची च नावयवे प्रवर्तितुमर्हति । सर्वासिद्ध्युक्तिषु यत्सामान्यं तद्वचनः शब्द इति स्थितो न्यायः प्रत्युदाध्रियेत । न

---

शब्दस्य परत्र सामानाधिकरण्यम् । किमाकारा वा स्तुतिरिति । यजमानो हि सर्वाभ्यर्हितत्वादशत्वाद्बर्हिष उपरि प्रस्तर सादयितव्य । स्वर्गत्वेन संस्तुते चाऽऽहवनीये सकलो यजमान आरोपितो भवत्येकपालेनाखण्डितेनेति स्तुति. । गुणाच्च शब्दवृत्ति । कथमगुणवचन इति—वाचकत्वमभ्युपेत मन्वानस्य प्रश्न । सिद्धान्तस्तु, अजहत्स्वार्था सर्वा शब्दप्रवृत्तय पूर्वशक्त्यनुसारसम्भवे शक्त्यन्तरकल्पने प्रमाणाभावात् । सम्भविष्यति चात्र सिंहत्वावगत शक्त्युपस्थापितप्रसह्यकारित्वाद्यनेकधर्मप्रत्ययाद्देवदत्तप्रत्यय इति पूर्वैव शक्तिर्निमित्तमिति न संशयहेतुत्वेन व्यवहारोच्छेदकारणं प्रसिद्धहानाप्रसिद्धकल्पनमाश्रयणीयम् । अन्येषां तु दर्शने सर्व एव हि सिंहादिशब्दा जातिगुणक्रियासमुदायवाचिन समस्तार्थासम्भवे देवदत्तादिषु कतिपयगुणक्रियायोगादुपचर्यन्त इति । तत्राभिधीयते—

> समुदायार्थवाचित्वे नैकदेशे भवेद्गति ।
> यतशब्दात्र पञ्चाशन्मुख्यरूपेण गम्यते ॥

भवति तु जातिमात्रे दृष्टे सर्वक्रियागुणप्रत्यस्तमयेऽपि प्रयोग । प्रत्ययश्च मुख्यात्मनैव न देवदत्तादिष्विव सिंहशब्दादुपचरित । सामान्यवाचिता चाऽऽकृत्यधिकरणसिद्धा

---

१ भाष्यरूपकरण इति पाठ । २ किमर्थं इति प्रश्नोत्तरभाष्ये विप्रलम्भादभिन्नोपक्रमेण देवादस्य स्तुतप्रकारत्वादस्तुत्यमिव मत्वा स्तुतिप्रकारप्रश्नविषयतया व्याचष्टे–किमाकारेत्यादिना । ३ अजहत्स्वार्था इति०—न जहाति शब्द स्वमर्थं यासु वृत्तिष्विति विग्रह । इदं च 'सर्व एवैते गौणा' इत्यादिभाष्यस्य, प्रसिद्धार्थपरित्यागेनाप्रसिद्धगुणवाचित्वरूपपरपक्षगौणीलक्षणनिराकरणपरस्य व्याख्यानार्थं वार्तिकम् । ४ परत्र, समुदायवाचिन पदस्य एकदेशे वृत्तिनिराकरणपरभाष्यस्य, 'न च सर्वे गुणसमुदायवचना' इति भाष्यं स्वरूपाभ्यामारभते—अन्येषां त्वित्यादिना ।

चासति सिंहे परिकल्पनया भवतीत । कल्पनाया अशक्यत्वात् । कथं नु स्वार्थाभिधानेन प्रत्ययव्यवस्थेति चेत् । अर्थसंबन्धात् । सिंह-इति. निर्ज्ञायते प्रसह्यकारिता तत्र प्रायेणेति प्रसह्यकारीति गम्यते, अर्थ-प्रत्ययसामर्थ्यात् । यो हि मन्यते प्रसह्यकारिणं प्रत्याययेयमिति स यदि सिंहशब्दमुच्चारयति सिध्यत्यस्याभिमतम् । सिंहार्थः प्रतीतः

---

बाध्यते । क्रियागुणानां चाऽऽनन्त्यान्न शक्यः प्रतिव्यक्ति संबन्धोऽनुभवितुम् ।

एकस्यामेव च व्यक्तौ बाल्यादिषु गुणक्रियाः ।
अन्याश्चान्याश्च शक्यन्ते नाभिधातुमसंगतेः ॥

न चासामान्यात् सामान्यं शक्यते कल्पयितुं जात्यन्तरेऽपि क्वचित्कासांचित्स-द्भावात् ।

तत्र सिंहत्वमेवाऽऽसां व्यवच्छेदकरं भवेत् ।
तच्चानभिहितं नैवमुक्तं चेन्नान्यवाचिता ॥

न ह्यनभिहितं सिंहत्वं गुणक्रियाणां व्यवच्छेदकरं भवति । अप्रतीतेः । अभिहितं चेत्तु प्रत्ययादेवाशेषगुणक्रियावगमादभिधानशक्त्यनवसाय इति समुदायवाचिनामेकदे-शेषु न गौणत्वसंभवः । कश्चित्पुनराह—समारोपिततद्भावो गौण इति । तस्यैतन्मतम् । न कथंचन परशब्दस्तया जात्या स्वनिबन्धनभूतया विनाऽत्यन्तानभिधेयक्रियागुणमात्रद्वा-रेणान्यत्र वर्तितुमर्हति । न च सिंहशब्देनाप्रवर्तमानेन सिंहो देवदत्त इति सामानाधिक-रण्यप्रयोगो घटते । कथं तर्हि—

अर्थेष्वर्थान्तरात्मानमध्यारोप्योपपादितम् ।
वाच्यमासाद्य शब्दाना स्वयमेव प्रवर्तनम् ॥

सिंहादिसदृशक्रियागुणदर्शनेन हि देवदत्तादयः सामर्थ्यपरिकल्पनया सारूप्यमा-पद्यन्ते । ततश्च स्वार्थ एव शब्दः प्रयुज्यते । न चैतावता मुख्यप्रसङ्गोऽर्थस्य, अध्यारो-पितत्वात् । यत्र तु स एवार्थो न समारोप्यते तत्र मुख्य इत्यदोषः । तत्रेदमुच्यते । नैतत्क-ल्पनाया अशक्यत्वात् । तथा हि—

असंकीर्णस्वभावं सद्वस्तुवस्त्वन्तरात्मना ।
आरोप्यतेऽभिधानार्थं कथं न भ्रान्तिवर्जितैः ॥

---

१ अध्यारोपितार्थवृत्तित्वरूपपक्षोक्तलक्षणदूषणार्थमन्यद्भाष्यं, 'नचासति सिंहे' इति, तद्व्याख्या-स्यति—कश्चित्पुनरित्यादिना ।

यदा तावद्भ्रान्त्या मृगतृष्णायां तोयमध्यारोप्य शब्दं प्रयुङ्क्ते, तदोभयोर्मुख्यार्थाध्यवसानरूपेण तोयप्रतीतेर्भ्रान्तिमुख्यत्वम् । अथापि वक्ता विवेकी सन्नितरवञ्चनार्थं प्रयुङ्क्ते, श्रोता च न विविङ्क्ते, तदाऽप्येकस्य विवेकेनाध्यारोपाभावादितरस्य भ्रान्त्याध्यवसानान्नैकमपि प्रति गौणत्वोपपत्तिः । यदा तु द्वावप्यभ्रान्तौ तदोभयोः सादृश्यादिनिमित्तान्तर्णीतस्वरूपार्थाध्यवसानादारोपाभावः । तथा हि—

द्वावपि प्रतिपद्येते सिंहपुंसोर्विविक्तताम् ।<br>
नाध्यारोपयितुं शक्तिस्तेनैकस्यापि विद्यते ॥

यथैव ह्यसदृशानामर्थानां तिक्तमधुरादीनां न कथंचिदपि प्रतीत्यभावात्परस्पराध्यारोपणमेव सदृशानामपि विवेकज्ञाने नोपपद्यते । न ह्यर्थाध्यवसानादन्यादृशं नाम ज्ञानं व्यवहाराङ्गं भवतीति । किं च—

शब्द एव यदा तावदनिमित्तो न वर्तते ।<br>
बुद्धिर्दुर्बलिका तत्र भवेन्निर्विषया कथम् ॥

न चार्थरहिता बुद्धिरात्माकारमात्रमनुभवन्ती जायत इत्युक्तं शून्यवादे । अपि च—

पूर्वानुभूत एवार्थः स्मर्यते प्रथमं पदात् ।<br>
तेन मुख्ये प्रतीतेऽर्थे ह्यध्यारोपो भविष्यति ॥

सर्वथा तावदयं गौणमुख्यविभागः श्रोतॄणामर्थविशेषावधारणे व्याप्रियते । ते च पदवेलायामनध्यारोपितस्वार्थवृत्त्यैव सिंहादिपदमध्यवसाय देवदत्तादिपदसामानाधिकरण्यान्यथानुपपत्त्या गौणतां कल्पयन्ति । तत्र चैषां स्वयमनारोप्यैव सिंहत्वं तत्सादृश्यादिप्रतीतिर्भवति । सा च किं शब्दादुतार्थादित्यन्विच्छतामन्वयव्यतिरेकाभ्यामाकृत्यधिकरणन्यायेनार्थादिति निश्चयो जायते । कथम्—

सिंहशब्दे ह्यनुच्चेऽपि सिंहार्थात्सदृशे मतिः ।<br>
जायते न त्वबुद्धेऽर्थे सिंहशब्दे श्रुतेऽपि न ॥

तस्माद्गुणप्रवृत्तिप्रयोजनो गौण इत्येव लक्षणं न्याय्यं नान्यथा । नन्वेवं सति खपुष्पादीनां स्वार्थाविनाभूतगुणाभावाद्गौणप्रयोगाभावप्रसङ्गः, साङ्ख्यादिकल्पितप्रधानादिनिषेधे च बौद्धाद्यैर्विनाऽध्यारोपेण प्रयोगासंभवोऽनभ्युपगते हि प्रतिषेधानर्थक्यमभ्युपगते तद्विरोधः स्यादध्यारोपितनिषेधे त्वदोष इति । अत्राभिधीयते । तत्रैवायं दोषः । कुतः—

> अध्यस्यते खपुष्पत्वमसत्कथमवस्तुनि ।
> प्रज्ञातगुणसत्ताकमभ्यारोप्येत वा न वा ॥

यत्तावत्खपुष्पस्थानीय आत्मा, खपुष्पं भवत्सिद्धान्त इत्यादिप्रयोगः । तत्र कतरत्खपुष्पमन्यस्त्वया सिंहत्ववदवधारितं यदध्यारोप्येत तेन खपुष्पस्वरूपमेव तावदध्यारोपात्मकमभ्युपगन्तव्यं न चैतस्य लोके गौणत्वप्रतीतिर्मुख्यार्थान्तराभावात् । प्रथमप्रतीतत्वाद्धि खपुष्पादिस्वरूपं न मुख्यत्वादपैति । कथममतो मुख्यत्वमिति चेत्, तुल्यमिदं गौणत्वेऽपि । यत्र त्वभ्यारोप्यते स गौणः, न योऽभ्यारोप्यते खपुष्पं वाऽऽरोप्यमाणं विषयान्तराभावात्स्वयमेवाध्यारोप्यते वा तत्रैतत्स्यात् । विद्यमानघटादिरूपं तत्राभ्यारोप्यते न गौणत्वमिति । तदयुक्तं, खपुष्पादौ सद्रूपप्रत्ययानुत्पादात् । अवश्यं हि यादृक्संबन्धकालेऽर्थोऽनुभूतस्तादृगुत्तरकालं ग्रहीतव्यम् । न च शशविषाणाद्यर्थः सद्रूपेणानुभूतपूर्वः, न चार्थान्तरसद्रूपग्रहणेन खपुष्पादेः संबन्धो गृह्यते ययोस्तदवयवयोरर्थसंबन्धोऽनुभूतस्तयोर्नैव गौणत्वं मुख्यात्मनाऽवबोधात् । कथं तर्हि शशविषाणं नास्तीत्युच्यते यदि तत्सद्रूपेण न प्रतीतपूर्वं सद्रूपप्रतीतस्य वा कथमत्यन्तप्रतिषेधोपपत्तिः । पश्य—

> अन्यत्र ज्ञातसद्भावः पदार्थोऽन्यत्र वार्यते ।
> न त्वेकत्रैव सद्रूपमसद्रूप च गम्यते ॥

तेनैवाध्यारोप्यत इति चेत्, नाभ्यारोप्यस्याप्येवमेव प्रदेशान्तरसद्भावाधीनत्वात् । न चान्यसद्भावेनान्यस्याध्यारोपः सिध्यति, असंबन्धात् । कथमूपरसद्भावेन तोयरूपाध्यारोप इति चेत् । प्रदेशान्तरे तोयसद्भावप्रतीतेर्वैषम्यम् । कथं तर्हि शशविषाणं नास्तीति प्रयोगः । पूर्वेणैवाभावेऽवगते नास्तिशब्दोऽनुवादक इति केचित् ।

---

१ परपरिकल्पितानां गौणीवृत्तिलक्षणानां वेदाप्रामाण्याप्रतिपादकत्वेऽपि मास्तदभिमतस्येति निष्कृष्टं लक्षणमाह—तस्मादित्यादिना । तस्मात्—गुणयोगनिमित्तायाः शब्दप्रवृत्तेर्गौणत्वेनेष्टत्वात् । गुणता स्वसमानाधिकरणवृत्तिधर्माणां, देवदत्तादिरूपार्थान्तरे, प्रवृत्ति—योग, प्रयोजनं—शब्दप्रवृत्तौ निमित्तं यस्य शब्दस्य ॥ गौण इत्यर्थः । तत्त्वं तु, स्वसमानजातीयधर्मवत्त्वाध्यारोपितत्वान्यतरसंबन्धेन स्वदान्यवृत्तिधर्मवत्त्वं गौणीलक्षणं विज्ञेयम् ।

प्रसद्यकारीति संबन्धादितरमर्थं प्रत्याययति। एवं स्वार्थाभिधानेन तद्गुणसंबन्धः प्रतीयते।

इह तु यजमानः प्रस्तरः, यजमान एककपाल इति कीदृशो गुणसंबन्धः प्रतीयते। तत्सिद्धिकर इति। सर्वो ह्यात्मनः कार्यसिद्धिं करोति। अन्योऽपि यस्तस्य कार्यसिद्धिं करोति स तस्मिन्नुच्चरिते हृदयमागच्छति। यथा राजा पत्तिगणक इति। पत्तिगणको राज्ञः कार्यं साधयति। स राजशब्द उच्चरिते प्रतीयते। एवमिहापि यजमा-

---

अथ वा सामान्येन प्रागभावादिषु नास्तिशब्दं प्रवर्तमानं शशविषाणशब्देन विशेष्यते न शशविषाणमव्यभिचारात्तेनेत्यदोषः। अथ वा येनावयवार्थौ गृहीतौ समासाच्च राजपुरुषादिवत्सामान्यतो दृष्टेन षष्ठ्यर्थस्मृतिः प्रसक्ता, न च कदाचिच्छशः शृङ्गसहितत्वेनावधारितपूर्वस्तस्यैतत्संसर्गानुसंधानं वार्यते। अथ वा विनैव समासेन शशमधिकरणत्वेन निर्दिश्य विषाणं च गवादिगतं विनैवाध्यारोपेणानयोः संबन्धो नास्तीति कथिते तेनैवानुभूतसंबन्धस्य शशविषाणशब्दस्तमेवाभावं गमयिष्यति। अथ वा शशमूर्धवर्तिनां पृथिव्यवयवानामुपर्युपरि चीयमानानां दृढदीर्घसंनिवेशरूपेण परिणतानां नीचैर्वृत्ताकारेण यदवस्थानं सोऽस्य वाक्यस्याध्यासमन्तरेणोक्तविषयः संभवतीत्यविरोधः। तथा चाऽऽह[1]—

या निषेधा क्रियामाहुर्न यातीत्येवमादयः।
तिष्ठतीत्यादिभिः सैव वस्तुरूपा प्रतीयते॥

तेन लब्धमुख्यार्थानां शशविषाणादीनामन्यत्रापि प्रसिद्धत्वेऽन्यथास्थायिन्यर्थे सिद्धो गौणप्रयोगः। तत्र तु मुख्याभावात् दूरीभूतो गौणः। यदि च स्वार्थ एव गौणता ततोऽर्थान्तरेणैव वृत्तेरत्यन्ताभावः स्यात्। न ह्यग्निशब्दो माणवके गौणीभूतस्तद्द्वारेण पुनरन्यत्र गौणतां प्रतिपद्यते तथा च वक्ष्यति 'न प्रतिनिधौ समत्वात्' इति। येऽपि प्रधानत्वादीनां प्रतिषेधास्तेऽपि नाध्यारोपनिमित्ताः। किं तर्हि—

परमाणुशरीरादिकारणात्मादिवादिभिः।
ततोऽन्यादृक् प्रधानात्मरूपं नास्तीति वर्ण्यते॥

प्रधानादिशब्दा जगत्कारणादिविषयास्तथैव बौद्धादिभिः परमाण्वाद्यात्मकत्कारणाभ्युपगमात्। शरीरमनानाद्यात्मकत्कल्पनाच्च तद्व्यतिरिक्तकारणादिनिषेधः क्रियते, पर

---

[1] उद्धृत च प्रसिद्धिस्थानान्यत्र प्रकारेण—अप्रदर्शनावस्थानं यत्यन्यर्थ। २ जै० सू० (६-१-१८)।

नकार्ये प्रस्तरैककपालौ साधयतः, तौ यजमाने प्रतीते प्रतीयेते । तस्मात्तौ यजमानशब्देन प्रत्याय्येते।कर्यं स्तुतौ स्यातां बर्हिष उपरिसादने सर्वहोमे चेति । तस्मादेवंजातीयका अर्थवादा न विधय इति ।

जातिः ।

आग्नेयो वै ब्राह्मणः, ऐन्द्रो राजन्यः, वैश्यो वैश्वदेव इत्येवमादयः श्रूयन्ते । तत्र किं गुणविधयः, अर्थवादा इति संदेहः । गुणविधय इति ब्रूमः । एवमपूर्वमर्थं विधास्यन्ति, इतरथाऽर्थवादाः सन्तोऽनर्थकाः स्युः । न विधिर्विध्यन्तरस्य भावात् । तस्मात् संवादः । तस्य संकीर्तनं विधिस्तुत्यर्थम् । अनाग्नेयादिष्वाग्नेयादिशब्दाः केन प्रकारेण, गुणवादेन । को गुणवादः, अग्निसंबन्धः । कथम् । एकजातीयकत्वात् । किमेकजातीयकत्वम् । प्रजापतिरकामयत प्रजाः सृजेयमिति । स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवताऽन्वसृज्यत, गायत्री च्छन्दः, रथंतरं साम, ब्राह्मणो मनुष्याणामजः पशूनाम् । तस्मात्ते मुख्याः, मुखतो ह्यसृज्यन्त । उरसो बाहुभ्यां पञ्चदशं निरमिमीत, तमिन्द्रो देवताऽन्वसृज्यत, त्रिष्टुप् छन्दः, बृहत् साम, राजन्यो मनुष्याणाम्, अविः पशूनाम् । तस्मात्ते वीर्यवन्तः, वीर्याद्धि असृज्यन्त । ऊरुभ्यां मध्यतः सप्तदशं निरमिमीत, तं विश्वे देवा देवता अन्वसृज्यन्त, जगती च्छन्दः, वैरूपं साम, वैश्यो

---

माणुशरीरादिष्वेव प्रधानात्मादिशब्दवृत्तिरिति यावत् । तस्मात्स्वार्थाभिधानेनैव गौणत्वमित्यदुष्टम् । अतश्च यजमानः प्रतीतः स्वार्थसिद्धिकरत्वं लक्षयति, प्रस्तरैककपालावपि च पारम्पर्येण यजमानार्थसिद्धिं कुरुत इति कार्यापत्तेस्तच्छब्देन स्तूयेते । एतेन जातिसारूप्यादीनि व्याख्यातानि ।

जातिः । तत्राऽऽग्नेयादिशब्दानां ब्राह्मणादिषु मुख्यत्वमेव येन केनचित्संबन्धेन तद्धितोत्पादात् । देवतासंबन्ध एव नाऽस्ति न हि यदेव त्यज्यते तस्यैव केवलं देवतासंबन्धः, स्पष्टुरपि तेनैव संबन्धेन सैव देवता भवति । यथा च वैद्यपति 'भवति पुरुषस्यापि पशुः सा देवता' इति । तस्मादनुदाहरणत्वम् । अतो यत्राग्निर्वै ब्राह्मण इत्यादिप्रयोगास्तदुदाहर्तव्यम् । अग्निर्हि प्रतीतो मुखप्रभवत्वसामान्येन ब्राह्मणादीनुपस्थाप-

---

१ तै० सं० (२—६—३) । २ तै० सं० (७—१—३) । ३ (अ० ५ पा० ४ अ० ६ सू० १९) इत्यत्र भाष्यकार इति शेषः ।

मनुष्याणाम्, गावः पशूनाम्। एवमुक्ते सत्येकस्मिन्नेवंजातीयके विज्ञातेऽन्योऽपि तज्जातीयको हृदयमागच्छति। तस्मादर्थवादः।

## सारूप्यम्।

यजमानो यूपः, आदित्यो यूप इत्यादि श्रूयते। तत्र गुणविधिः, अर्थवादः, इति संदेहः। अपूर्वत्वाद् गुणविधिः। असंभवत्वाद् यूपकार्यसाधने यजमानस्य, यजमानकार्यसाधने वा यूपस्य विध्यन्तराभावाच्च न विधिः। विधिस्तुत्यर्थं संवादः। गुणवादात् सामानाधिकरण्यम्। को गुणः, सारूप्यम्। किं सारूप्यम्, ऊर्ध्वता, तेजस्विता च। तस्मादेवंजातीयका अर्थवादः।

## प्रशंसा।

अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः, अयज्ञो वा एष योऽसामा, असत्रं वा एतद् यदच्छन्दोमम्, इति श्रूयते। तत्र विध्यर्थवादसंदेहे अर्थवत्त्वाद्विधय इति प्राप्ते। अभिधीयते। यदि विधयो भ-

---

यति। नास्तीति चात्र नञ्योपादानं विवक्षितं, यद्यपि च तथा वस्तु नास्ति तथाऽप्यर्थवादान्तरे यथोक्तत्वादिह तदुक्तनिमित्तता प्रतिपत्स्यते।

सारूप्यम्। ननु सर्वत्रैव सारूप्यनिमित्तं गौणत्वम्। सत्यमेवम्। इह तु चक्षुर्ग्राह्यसारूप्यविवक्षया पृथगुपादानम्। चाक्षुषं हि यूपस्योर्ध्वत्वमञ्जननिमित्तं च तेजस्वित्वं तद्द्वारेण यजमानादित्यवाक्याभ्यां स्तूयते। यजमानस्य हि पशुधारणे विनियुक्तस्य निश्चलस्य च स्वपदार्थकरणाभिप्रायः। सद्भावदेवमवश्यमयमेव यूपकार्यमापादयितुम्। यदि च कश्चिन्नादित्यवादस्यानिष्टप्रियुपादानात्तस्यापि गौणत्वापत्तिर्विवक्षया स्यात्तद्दूरं स्तुतावेव तन्निष्पन्नमित्यविहितं स्यात्।

प्रशंसा। ननु सर्वत्र प्रशंसानिमित्तत्वं गुणवादस्योक्तम्। सत्यं, फलमन्यत्र गुणवादस्य प्रशंसा। अत्र तु गुणवादस्यापि प्रवृत्तिनिमित्तम्। कथमिति चेत्—

गवाश्वादिभिः पूर्वपक्षस्य प्रशंसनात्।

येयुः, गोअश्वा एव पशवः स्युः, सामवानेव यज्ञः, छन्दोमवदेव सत्रम् । अन्येषां पशूनां यज्ञानां सत्राणां चोत्पत्तिरनर्थिका स्यात् । विध्यन्तरं च नावकल्पेत । अतः स्तुत्यर्थं संवादः । गोऽश्वान् प्रशंसितुमन्येषां पशूनां निन्दा । सामवतः प्रशंसितुमसाम्नां निन्दा । छन्दोमवन्ति प्रशंसितुमच्छन्दोमकानि निन्द्यन्ते । यथा, यदघृतमभोजनं तत् । यन्मलिनमवासस्तदिति ।

भूमा ।

सृष्टीरुपदधाति इति श्रूयते । तत्र गुणविधिरर्थवाद इति संदेहे, अपूर्वत्वाद् विधिरिति प्राप्ते । उच्यते । यदि विधिः, सृष्टिमन्त्रका उपदधातीष्टका इत्यर्थः । तत्र नेष्टकानां विशेषः कश्चिदाश्रीयते, एवंरूपाः सृष्टिमन्त्रका नैवंरूपा इति । तत्र सर्वासां सृष्टिलिङ्गा मन्त्राः प्राप्नुयुः । अन्येषामसंयुक्तानां मन्त्राणामानर्थक्यं स्यात्[१] । तस्मादनुवादो मन्त्र-

---

मुख्यार्थत्यागः, 'पशवो गोअश्वा' इति च पुनरुपादानमनर्थकम् । न च पशुत्वैकार्थसमवायिनः क्रियागुणाः शक्याः प्रविवेक्तुम् । अथ गवाश्वसमवायिनो विशेषाः प्रतिषिध्येरन्, एवमपि मन्दं फलम् । अन्यशब्देनैव च तावानर्थः सिद्ध इत्यनर्थकम् । अवश्यं चोत्तरपदेन प्रतिषेध्येऽर्थे प्रथममुपात्तेन तत्रानुवर्तितव्यं, विषयरहितप्रतिषेधासंभवात् । न च प्रशस्तत्वादन्यदुपादीयमानमुपयुज्यते । शक्नुवन्ति च गवाश्वादिसंबन्धात्तद्गतं प्राशस्त्यं गमयितुम् । यद्यप्यप्रशस्तत्वमपि शक्नुवन्ति तथाऽपि प्रक्रमापेक्षया तदिहानाकाङ्क्षितमिति प्राशस्त्यमेव निषिध्यते । तत्प्रतिषेधमात्रमपि च नैवौपयिकमिति तद्द्वारेणान्येषां प्रशस्ततरत्वं कथ्यते । एतदुक्तं भवति । गवाश्वादीनपेक्ष्य नैवान्यस्य प्राशस्त्यं विद्यत इत्येवमन्यगतप्रशंसानिमित्तः प्रतिषेधः । सा चेह प्रथमतरमाश्रितेत्यनन्यप्रयोजनतया पश्चादवगम्यते । अन्यत्र पुनरुत्तरकालमेवैषा भवन्ती निमित्तत्वेनोच्यते ।

भूमा । यदि 'सृष्टीरुपदधाति' इत्याख्यातप्रत्ययबलाद्विधिराश्रीयते तत्र न जात्या धर्मविशेषेण वा काश्चिदिष्टकाः सृष्टयो नामान्याभ्यो विलक्षणा विज्ञायन्ते, या एवंविधालिङ्गैर्मन्त्रैरुपधीयन्ते ता एव सृष्टयः, तत्रोपधानमात्रमुद्दिश्य मन्त्रेषु विधीयमानेषु सकलन्यासेः प्रत्यक्षवचनाविनियुक्तलिङ्गप्रकरणविनियोज्यमन्त्रानर्थक्यप्रसङ्गः । तस्मात्प्रकरणपाठादेव सर्वत्र मन्त्रेषु प्राप्तेष्वेकदेशानुवादः सृष्ट्यभिधाननिमित्तार्थवादार्थः । अत्र चोदयन्ति । चयनचोदनयैवोपधानस्य प्राप्तत्वाल्लिङ्गप्रकरणानुमितया च श्रुत्या मन्त्रप्राप्तेः प्रदेशान्त-

---

१ तै० सं० (५—३—४)

समाम्नानात्प्राप्तानामुपधानमन्त्राणाम् । स्पृष्टीनां स्पृष्टिषु संकीर्तनं सर्जनार्थवादार्थम् । अपि च विधित्वे लक्षणा, एकया स्तुवत इत्यत्र या अस्पृष्टस्पस्ता लक्षयेत् । नन्वनुवादेऽपि लक्षणा । नानुवादपक्षे लक्षणाया दोषः । कथं त्वस्पृष्टिषु स्पृष्टिषु च स्पृष्टिशब्द इति । भूम्ना । बहवस्तत्र स्पृष्टिलिङ्गा मन्त्रा अल्पशो विलिङ्गा इति ।

## लिङ्गसमवायः ॥ २३ ॥ सि०

प्राणभृत उपदधाति, अज्यानीरुपदधाति, इति । विधित्वे प्राणभृन्मन्त्र-

---

रन्यार्थवादानुपपत्तिरेकवाक्याधीनत्वादर्थवादप्रवृत्तेः । तथा च प्रथमार्थवादे व्याख्यातम् । न चान्यो गुणः श्रूयते यदर्थता कल्प्येत तत्र परिसंख्यार्थतैव प्राप्नोति । ततश्च तदवस्यमानर्थक्यमिति वाच्यं पुनः श्रुतिप्रयोजनम् । तत्र केचिदाहुः । उपधानमेवात्र विधीयते तन्माहात्म्यप्रदर्शनार्थं च मन्त्रग्रहणम् । इत्थमिष्टकाः प्रशस्ता यदेवंरूपैर्मन्त्रैः क्रियन्त इति । चयनेनार्थगृहीतमुपधानमिति चेन्न । संहतस्थापनेनापि चयनोपपत्तेः । न चैव संहतानामेवोपधानं स्यात् । न तस्येष्टका प्रत्युपादीयमानस्य प्रतिप्रधानावृत्तिन्यायसिद्धेः । अपि च—

> प्राप्नुवन्त्यपि वक्तव्या पुनरेवंविधा क्रिया ।
> आध्वर्यवसमाख्यानं तथा हि प्रतिपद्यते ॥

ततश्चाध्वर्युकर्तृकत्वं च लभ्यते । अर्थगृहीतायां त्वनियमः स्यात् । न चावश्यमुपधान एव सर्वे मन्त्रा विनियुज्येरन् । अविशिष्टसामर्थ्यो हि केचिद् ग्रहणाद्यपि कुर्युः । अपि च—

> प्रत्यक्षब्राह्मणोक्तानां मध्यमा चितिराश्रयः ।
> तदर्थमपि संबन्धः कार्यो मन्त्रोपधानयोः ॥

ये त्वौपानुवाक्यकाण्डाधीनास्तेषां वाक्यादृते संबन्ध एव नास्तीत्यर्थवदेव वचनम् । न चावश्यमनेन सूत्रेणार्थवादत्वं प्रतिपाद्यते तल्लिङ्गात्तल्लिङ्गेषु भूयस्त्वनिमित्तशब्दप्रवृत्तिमात्रस्थापनादतो नातीव सृष्टीनामात्रिन्नमादर्तव्यम् ।

भाष्यकारेण तु विधौ लक्षणां परिहरताऽनुवादत्वमाश्रितम् । 'एकया स्तुवते' इति ह्यनुवादाभ्युपेयात्सृष्टिलिङ्गत्वादात्मपरित्यागेनेतरलक्षणार्थता स्यात्, लक्षयित्वा च पुनरात्माऽपि प्रतिपादनीय इत्यतिगौरवम्, उपधानस्तुत्यर्थत्वेन पुनरनुवादत्वाददुष्टा लक्षणा ।

लिङ्गसमवायः । सृष्टिवदेव प्राणभृदादिषु चोद्यपरिहारावेतेन निर्दिश्यन्ते-

कासूपधीयमानासु विलिङ्गानां मन्त्राणामानर्थक्यम् । तस्मादनुवादः । लिङ्गसमवायात्परशब्दः परत्र वर्तते । यथा छत्त्रिणो गच्छन्तीत्येकेन छत्त्रिणा सर्वे लक्ष्यन्ते । न चायं प्राणभृच्छब्दः सृष्टिशब्दश्च अहरस्वार्थं मन्त्रगणं लक्षयेत् । यद्गुणे च सृष्टिप्राणभृच्छब्दौ समवेतौ तावपि परिगृह्येते । यथा छत्त्रिशब्देन स्वार्थलक्षणार्थेन सोऽपि च्छत्त्री गृह्यत इति ॥ २३ ॥

[ १३ ] संदिग्धेषु वाक्यशेषात् ॥ २४ ॥ सि०

अक्ताः शर्करा उपदधाति तेजो वै घृतम्, इति श्रूयते । तत्र संदेहः किं घृततैलवसानामन्यतमेन द्रव्येणाञ्जनीयाः शर्करा उत घृतेनैवेति । कथं संदेहः । अञ्जनसामान्येन वाक्यस्योपक्रमो घृतेन विशेषेण निगमनं, यथोपक्रमं निगमयितव्यमेकस्मिन् वाक्ये । तत्र यद्वा सामान्यमादौ विशेषोपलक्षणार्थं विवक्ष्यते । यद्वा निगमने विशेषः सामान्यलक्षणार्थः । तदारम्भनिगमनयोः किं सपक्षसमिति संशयः । एवं संदि-

लिङ्गानां लक्षणमित्युदाहरणभेदः स्वार्थापरित्यागाच्चोभयत्र लक्षणस्यापि ग्रहणमुपादीयमानत्वादिति ।

आह च—

यत्र लक्षणमुद्दिश्य लक्ष्ये कार्यं नियुज्यते ।
तन्मात्रग्रहणं तस्मिन्नुपादाने द्वयोरपि ॥ २३ ॥

( इति तत्सिद्धिपेटिका ॥ १२ ॥ )

विधिस्तुत्योः सदा वृत्तिः समानविषयेष्यते ।
तस्मादेकत्र संदिग्धमितरेणावधार्यते ॥

किं पुनरत्र संदेहकारणं, विधौ सामान्यग्रहणमिति केचित् । तदयुक्तम् । तत्र तावन्मात्रनिर्णयात् । स्यादेतत् । कथं निर्विशेषं सामान्यं संभवतीति, घृतवदिति वदामः । तत्रापि च नवपुराणगव्यमाहिषादिसंदेहस्तदवस्थः । तेन यथाऽत्र घृतमात्रनिर्णयादसंदेहो विशेषानभिधानेऽपि सर्वैः कार्यसिद्धिरेवमिहापि स्नेहनसमर्थद्रव्यमात्रग्रहणादसंदेहः । तस्मादर्थवादे घृतश्रवणात्संशय इत्यपरे । तथाऽपि न युक्तः, विशेषप्रतिपत्त्या निर्णीतत्वात् । न हि गौरानीयतां शुक्ल इत्यत्र केचित्संदिहते । विषम उपन्यासः ।

१ तै० ब्रा० ( ३-१२-५ ) तै० सं० ( ५-३-१० )

न्येऽपूपक्रमे सामान्यवचने विरोधाभावान्न विशेषः परिकल्प्यः । निगमने तूपजातः सामान्यप्रत्यय इति विरोधाल्लक्षणार्थं घृतवचनम् । यथा सृष्टिष्वसृष्टिषु च सृष्टिशब्दः, एवं घृतमघृतं च घृतमित्युच्यते । संदि-

---

ग्धम्—

विधौ यदि विशेषः स्यात्संदेहः कस्य वा भवेत् ।
स्तुतिस्थे त्वितरस्यापि तुल्यैवैषा विचारणा ॥

यदि ह्येवं भवेत् ' अक्ताः शर्करा उपदधाति ' घृतेनेति । ततो नैव किंचिद्विचार्येत । अथ स्वजनवाक्यवदिहाप्येवं श्रूयेत गामानय शुक्लः प्रशान्त इति ततोऽप्यस्त्येव संदेहकारणमित्येतदप्युदाहरणमेव स्यात् । अतोऽन्यत्र सामान्यमन्यत्र च विशेष इत्येतस्मात्संदेहः । केचिच्च संशयदर्शनादेव विधिस्तुत्योर्वाक्यान्तरत्वमाचक्षते ।

यदि ह्येकं भवेद्वाक्यं विशेषे तत्समाप्यते ।
विशेषावगमात्तत्र न सन्देहः प्रसज्यते ॥

वाक्यभेदे पुनरेकं सामान्ये परिसमाप्तमन्यद्विशेषपरमिति युक्तः संदेहः । यत्तु ' विधिना त्वेकवाक्यत्वात् ' इति तदङ्गप्रधानवाक्यानामिव पश्चात्संबन्धसद्भावाभिप्रायेण । तथा हि—

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥

न त्वेतद्युक्तमिव, ये हि पदसंघाताः कर्मोपयिकेष्वर्थेषु पर्यवस्यन्ति तेषां नानावाक्यत्वं युक्तम् । न त्वर्थवादानामेकवाक्यत्वात्प्राक्प्रयोजनलाभ इति प्रथममेवैकवाक्यता । दुर्लभतरश्च संदेहः स्यादन्योन्यनिरपेक्षयोः सामान्यविशेषयोरितरेतरत्र च पर्यवसानात् । यदैव हि यत्रोपात्तं तदैव तत्रासंदिग्धं गृह्यते सामान्यसमासश्चात्र विधिः पश्चाद्विशेषः स्यात् । मन्त्रवर्णवदिति चेत्, एवमपि तदधिकरणविषयत्वात्पौनरुक्त्यप्रसङ्गः । तस्मादेकवाक्यतायामेवोपक्रमोपसंहारयोः सामान्यविशेषविषयत्वेन विप्रतिपत्तेरवश्यंभाव्येकतोबलत्वाच्च किमर्थानां कस्य प्रवृत्तिरिति जायते संदेहः । कस्य सामञ्जस्यमिति— यच्छ्रुतिवृत्तं तत्समञ्जसं न लक्षणावृत्तम् । तत्र च—

स्तुतीनां विध्यधीनत्वाद्गुणत्वाच्च लक्षणा ।
मुख्यत्वात्तु विधेर्नाभावविरोधाच्च कल्प्यते ॥

---

१ मी० सू० ( १-२-१ ) २ ( अ० १ पा० ८ अ० १० सू० ३० )

यद्यप्येवं प्राप्तं ब्रूमः—

सामान्यवचनेन विशेषापेक्षिणोपक्रमो वाक्यस्य विशेषे निगमन-वशेन। कुतः। न हि सामान्यं विहितम्। येन विरोधो निगमनस्य। कथमविहितम्। संदिग्धेषु विधानशब्दाभावात्। न हि विधानशब्दोऽस्ति। अक्ताः शर्करा उपदधाति इति। वर्तमानकालनिर्देशात्। नापि सामान्यस्य साक्षात्स्तुतिः, प्रत्यक्षं तु घृतस्य स्तवनम्। श्रुत्या घृतस्य स्तुतिः, लक्षणया सामान्यस्य। श्रुतिश्च लक्षणाया ज्यायसी।

---

विधीयमानं हि स्तोतव्यं न तु स्तुत्यं विधेयमप्राप्तार्थश्च विधिरिति न श्रौतार्थात् प्रच्यवते। यद्यपि तावदर्थवादोपक्रमत्वं भवेत्ततः प्रथमज्ञानानुरोधेन कदाचिद्विधिर्वशीक्रियेत विध्युपक्रमं त्विदं 'अक्ताः शर्कराः' इति। तस्मान्निर्दिष्टसामान्ये यद्यर्थवादो न तादर्थ्यं प्रतिपद्यते ततोऽनर्थको भवतीत्यशक्तः स्वतन्त्रीभवितुं, विनाऽपि चार्थवादेन विध्युद्देशः समर्थत्वात्स युक्तस्तद्वशः कर्तुम्, अर्थवादस्त्वगतित्वाद्विधिवशेन वर्तते विशेषश्च सामान्यमव्यभिचाराच्छक्नोति लक्षयितुं, न सामान्यं व्यभिचाराद्विशेषं तस्माद्घृतशब्दः स्नेहमात्रलक्षणार्थः।

काममस्तु सोऽर्थवादोऽस्तु सामान्यस्थो घृते विधिः।
विना स्तुत्या विधानं तु स्नेहद्रव्यान्तरे भवेत्॥

यथा रौद्रेणापि मन्त्रेण सोमो गृह्यमाणो न केवलं तदर्थो भविष्यत्यन्यदेवत्यस्यामन्त्रग्रहणोपपत्तेरेवमनर्थवादकं तैलवसयोर्विधानं, यत्रैव चासौ स्तुतिर्दृश्यते तत्र विध्युद्देशस्य प्ररोचनाशक्तिरुपगच्छति, अन्यत्र त्वविहतशक्तिना विधानमिति सर्वस्नेहग्रहणम्। उच्यते—

समाप्यते विधिः कश्चित्कदाचिन्नाप्ररोचितः।
घृते प्ररोचना दृष्टा विधिस्तत्रानुमीयते॥

यद्यपि तावद्विधिप्रक्रमे तैलवसयोरप्युपादानं, तथाऽपि प्ररोचनातो विधिर्घृते दृश्यते नेतरयोरित्यनुपादातव्ये कल्पयितव्या च तद्विषया विधेः प्ररोचनाशक्तिः क्लृप्ता च घृते। तस्यां च सत्यां काल्पनिकी वाक्यं भिनत्ति घृते च क्लृप्ता गृह्णन्नितरत्र च कल्पयन् वैरूप्येणापि विधिर्भिद्येत। तस्माद्विध्युद्देशोऽपि तैलादिभ्योऽपनीयते। यद्यपि च सामान्यशब्दः स्यात्तथाऽपि न कश्चिद्विशेषः। तत्र सामान्यान्यथानुपपत्त्या यत्र कचनानुश्रुते विशेषेऽपेक्षिते वाक्यशेषाद् घृत एव प्रत्ययो भवति, घृते च शब्दार्थे यदि श्रुत्यनुरोधेनास्वन्ताश्रुततैलादित्यागः क्रियते किं विरुध्यते संदेहमात्रं हि तत्र बाधितं न तु प्रमाणं किंचित्। क्रियामात्रमेव चेह चोदितं न द्रव्यं तत्र न—यावत्किंचित् द्रव्यमा-

तस्माद् घृतविधानम् । एवं, वासः परिधत्ते, एतद्वै सर्वदेवत्यं वासो यत्क्षौममिति । तथा, इमां स्पृष्ट्वोद्गायेत्, इमां ह्यौदुम्बरीं विश्वाभूतान्युपजीवन्ति इति ॥ २४ ॥

[ १४ ] अर्थाद्वा कल्पनैकदेशत्वात् ॥ २५ ॥ सि०

स्रुवेणावद्यति, स्वधितिनाऽवद्यति, हस्तेनावद्यति इति श्रूयते। तत्र संदेहः । किं स्रुवेणावदातव्यं सर्वस्य द्रवस्य संहतस्य मांसस्य च । तथा स्वधितिना, हस्तेन च, उत सर्वेषामर्थतो व्यवस्था द्रवाणां स्रुवेण, मांसानां स्वधितिना, संहतानां हस्तेनेति । अविशेषाभिधानादव्यवस्थेति । एवं प्राप्ते ब्रूमः । अर्थाद्वा कल्पना,—सामर्थ्यात् कल्पनेति । स्रुवेणावद्येद् यथा शक्नुयात् । तथा, यस्य शक्नुयात्

---

लिप्येन यदि कश्चिदपि श्रुतिक्लेशो न स्यात् । घृतार्थवादर्शनात्त्वपदकर्तव्याघामश्रुतद्रव्यविधिकल्पनाया नान्यत्र प्रमाणमस्तीत्यङ्गीकृत्य घृताञ्जनविधिर्गम्यते । तत्र भ्रान्त्युत्पन्नतैलाद्याकाङ्क्षा निर्मूलत्वाद्बाध्यमाना न दुष्येतेत्यविरोध, तैलादिग्रहणे च लक्षणात्रयं स्यात् । क्रियया द्रवद्रव्येण च विशेषो घृतशब्देन च सामान्यं लक्षयितव्यम् । तस्माद्घृतग्रहणं प्रमाणमिति सिद्धम् । वृत्त्यन्तरे त्वत्रैव मन्त्रवर्णोऽप्युदाहृतः । तत्र तु घृतेन किं करिष्यत इति वक्तव्यम् ॥ २४ ॥

( इत्यक्ताधिकरणम् ॥ १३ ॥ )

---

अथ यत्रेति सन्दिग्धे वाक्यशेषो न विद्यते ।

तत्र सामर्थ्यसिद्धेन विध्यशेनैव निर्णयः ॥

देवताप्रसादाभयप्रार्थनादौ सहतहस्तसंयोगमात्रमञ्जलिं, ' नाञ्जलिना वारि पिबेत्' इत्यादौ व्याक्रोश । सक्तुहोमचोदनाया शब्दात्संदेहे सत्यसति चाऽऽक्रोशस्य वाक्यशेषेऽन्यथानुपपत्तेरेवाऽऽक्रोशाश्रयणम् । नन्वनेनैव न्यायेन यथा शक्नुयादिति वाक्यशेषादन्धादीनामाज्यावेक्षणादिरहित कर्माधिकार स्यात् । न । असंदेहात्, सन्दिग्धनिर्णयार्थस्यैव कल्पना भवति । न चाधिकारे संदेह समस्तधर्मोपेतं यथा शक्नुयात्तथा कुर्यादिति वाक्यशेषात् । सन्ति च तादृशाम्य कर्तारश्चक्षुष्मदादय इति न प्रयोगचोदनान्यथानुपपत्तिः । यत्र तु यावज्जीवचोदनातश्चैव भविष्यति [illegible] शक्तिहानावत्यागेऽपि

---

१ अस्मिन्नधिकरणे वृत्त्यन्तरोदाहृतमन्त्रवर्णोदाहरणे भाष्यकृतोऽप्रि प्रायमाद—वृत्त्यन्तरे त्विति । भिन्नवाक्यगताज्ञात्प्रमाणान्तरानां मन्त्राणामप्यत्रैव सन्दिग्धार्थनिर्ण[illegible] [illegible] [illegible]मर्पिते पञ्चमे पशुव्यागाधिकरणे लिङ्गाधार्थमावेन तदधिकरणमनवकमावर्णेति भाव ।

तस्य चेति । आख्यातशब्दानामर्थं ब्रुवतां शक्तिः सहकारिणी । एवं चेद् यथाशक्ति व्यवस्था भवितुमर्हति । तथा, अञ्जलिना सक्तून् प्रदाव्ये जुहोति इति । द्विहस्तसंयोगोऽञ्जलिः, स व्याकोशोऽर्थात् कर्तव्यः । तथा हि शक्यते होमो निर्वर्तयितुम् । तद् यथा, कटे भुङ्क्ते कांस्यपात्र्यां भुङ्क्त इत्यर्थात् कल्प्यते—कटे समासीनः कांस्यपात्र्यामोदनं निधाय भुङ्क्त इति ॥ २५ ॥

इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये प्रथमाध्यायस्य चतुर्थः पादः ।

---

सत्यवैगुण्यं प्रधानस्य चोदितमित्याश्रयिष्यामह एव । तस्माद्यावदेव लक्षणात्मको वि स्तारवत् कल्पते तद्वैदिकं, सिद्धे तु तत्कल्पनं पौरुषेयत्वादप्रमाणं सामर्थ्याधीनत्वाद्वा- न्यथोपपत्तिसिद्धेः । आह च—

यथैव पाठः प्रतिपत्त्युपायस्तथैव सामर्थ्यमपि श्रुतीनाम् ।
तेनैव चैता न समामनन्ति सहस्रभागं तु समामनेयुः ॥
इति कृतबहुमार्गे मन्त्रविध्यर्थवादैः स्मृतिपरिरवगूढां खेदशाखोपगूढाम् ।
अनभिभवसमर्थं धर्मदुर्गं प्रविश्य प्रविभजति समर्थामर्थचिन्तामिदानीम् ॥२९॥

( इति सामर्थ्याधिकरणम् ॥ १४ ॥ )

इति श्रीभट्टकुमारिलविरचिते मीमांसाभाष्यव्याख्याने तन्त्रवार्तिके प्रथमस्याध्यायस्य चतुर्थः पादः । समाप्तः प्रथमाध्यायः ॥

अथ द्वितीयेऽध्याये प्रथमः पादः ॥

## [ १ ] भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ १ ॥ सि० ॥

प्रथमेऽध्याये प्रमाणलक्षणं वृत्तम् । तत्र विध्यर्थवादमन्त्रस्मृतपरतः स्वतो निर्णीताः । गुणविधिर्नामधेयं परीक्षितम् । संदिग्धानामर्थानां

---

सम्बन्धं तावल्लक्षणद्वयस्य करोति तत्र प्रथमेऽध्याये प्रमाणलक्षणं वृत्तमित्युक्तम् । तत्तु न, नैव हि प्रथमेऽध्याये सूत्रकारेण किंचन लक्षणेन प्रमाणादेः स्वरूपमुपवर्णितम् । तन्नाम लक्षणमुच्यते येन तद्व्यतिरिक्तेभ्यस्तस्य स्वरूपं व्यावृत्ताकारं निरूप्यते । न चेह प्रमाणादीनां लक्षणमुक्तम् । अनुमानादीनि तावन्नैव सूचितानि । प्रत्यक्षमपि धर्मं प्रत्यनिमित्तत्वेनोपन्यस्तं न लक्ष्यत्वेनेति व्याख्यातम् । न च शब्दोऽपि कश्चिद्धर्मप्रमाणभूतो लक्षितः, अभिज्ञत्वाधिकरणे तस्य लक्ष्यमाणत्वात् । यदपि च वृत्तिकारेण सर्वथा लक्षणं प्रदर्शितं न तस्याध्यायार्थत्वेनोपसंहर्तुं युक्तम् । सूत्राध्यायार्थानुपसंहारात् । कथं च समस्तलक्षणार्थव्यतिरिक्त एवार्थे सूत्राणि क्षीयेरन् । अपि च वृत्तिकारेण योऽप्युक्तः प्रत्यक्षपूर्वकोऽपरीक्ष्यतया सोऽपि नैव लक्षणगोचरः, लोकप्रसिद्धार्थानि हि तान्यपरीक्ष्यत्वेनैतानि न प्रथमाध्यायविषयत्वेनोपसंहारमर्हन्ति । तस्माद्यत्प्रथमाध्याये वृत्तं तदाक्षेपेणैवाध्याहृत्य नेयम् । तत्र प्रमाणलक्षणं तावच्चोदनालक्षणाश्रयणस्य, विध्यादितत्त्वनिर्णीतिः प्रमाणेनैव स्थिता । सम्बन्धो हि प्रथमपादश्चोदनासूत्रपरिकरः । तत्र च धर्मस्य चोदनालक्षणत्वमुक्तम् । अनवधारितार्थलक्षणशब्दसाहचर्यात्प्रमाणशब्दं प्रतिपादयन्नित्येवं तुल्यत्वाद्धर्मविषय एव व्याख्येयः । सत्यपि प्रमेयमात्रवाचित्वे, अस्मिञ्छास्त्रे जिज्ञास्यत्वेन धर्मः प्रमेयः प्रक्रान्त इति स एव गृह्यते । अथ वा करणमेव प्रमाणं तस्यैव लक्षणमुक्तम् । यद्यपि च सर्वप्रमाणानां तत्रोक्तं तथाऽपि धर्मप्रमाणस्य चोदनाख्यलक्षणमित्येतावतैवोक्तं मन्यते । न चावश्यं सर्वात्मनैव लक्षिते लक्षणत्वम् । विशेषरूपाणामानन्त्येन सर्वलक्षणाशक्यसंग्रहात् । अपि चौत्पत्तिकसूत्रेण विशेषोऽप्युक्त एव येनाऽऽगमविशेषो गम्यते । अथ चोपन्यस्तस्य चोदनात्मकस्य प्रमाणस्य लक्षणं प्रामाण्यकारणमित्युपसंहारः । तथा यद्यपि विधेरिदं रूपमिदमर्थवादस्येदं मन्त्रस्येत्येवं नोक्तं तथाऽपि धर्मं प्रत्युपयोगाभिधानात्तत्त्वं निर्णीतम् । अथ स्मरणस्य तु तत्त्वं न निर्दिष्टम् । श्रुतिमूलत्वं विज्ञातस्य स्मृतिप्रामाण्ये तत्त्वम् । नामधेयस्य चोदनान्तर्गतत्वं लक्षणं दृष्टम् । संदिग्धार्थनिर्णये वाक्यशेषसामर्थ्ययोः प्रामाण्य-

वाक्यशेषादर्थाच्चाध्यवसानमुक्तम् । तत्र प्रस्मर्तव्यम् । अनन्तरं प्रधानाप्रधानानि परीक्षिष्यन्ते, भिन्नान्यभिन्नानि चेति । एष एवार्थो वर्ण-

---

नित्येव समस्तमन्याय प्रमाणलक्षणमाचक्षते। तत्र प्रस्मर्तव्यमिति । अविस्मृतप्रामाण्यो हि भेदादिप्रतिपादनम् 'अविशेषादनर्थकं हि स्यात्' इति क्रियमाणं सहते । अन्यथा ह्यनर्थकं नामैवैष प्रत्यवतिष्ठेत । ननु प्रधानाप्रधानचिन्ता तृतीयचतुर्थयोर्विषय कथमत्रोपन्यस्यते । के चिदाहुः । इह द्रव्यकर्मणोरुक्तत्वात् तु कर्मणामेव गुणप्रधानत्व-विचारात्पौनरुक्त्यमिति । तदयुक्तम् । 'द्रव्यगुणसंस्कारेषु' इत्यत्र सर्वाभिधानात् । तेनैव वाच्यम्—

लक्षणार्थोऽत्र तत्त्वेन भेदः शब्देतरादिभिः ।
तत्पूर्वमपूर्वभेदोऽपि प्राधान्यं तत्प्रसिद्धये ॥

कर्मभेदस्तावदौत्सर्गिको लक्षणार्थस्तदपवादत्वेनाभेदः । तदनुनिष्पादिनौ त्वपूर्वभेदाभेदौ । तत्र प्रतिकर्मभेदमपूर्वभेदप्रसक्तौ तृतीयसिद्धः प्रधानाप्रधानविचारः पुनरपवादत्वेनाऽऽरभ्यते । सत्यप्यवहन्त्यादीनां शब्दान्तरादिभिर्भेदे कर्मोत्पत्तिदृष्टप्रयोजनपर्यवसानाच्च क्रियाजन्यापूर्वान्तरोत्पत्तिः । यत्तु नियमापूर्वं तन्नियाकृतं न भवतीति न तथा व्यपदिश्यते । तेन यत्रैव द्रव्यादीनि प्रति क्रियाणां प्रधानत्वं तत्रैव तद्भेदनिमित्तापूर्वभेदसिद्धिः । अस्य च विवेकार्थं यद्गुणप्रधानलक्षणं वक्ष्यते तदपवादार्थं 'धर्ममात्रे तु' 'स्तुतशस्त्रयोः' इति चाधिकरणद्वयं प्रस्तूयते । ततश्चाऽऽख्यातद्वित्वे विचारिते प्रसङ्गात्तृतीयं प्रकारमभिधायकस्य प्रतिपादयितुं मन्त्रप्रस्तावः, तल्लक्षणादीनि प्रसक्तानुप्रसक्तेन पादसमाप्तिः । ततः शब्दान्तराभ्यासाभ्यां भेदमुक्त्वा पौर्णमास्यधिकरणेनाभ्यासापवादं करिष्यते समुदायानुवादत्वात् । ततस्तदपवादार्थमुपांशुयाजाग्रयणेष्टिप्रपञ्चतोऽधिकरणानि । तत्र सङ्ख्यासञ्ज्ञागुणैर्भेदः । तावच्च गुणगतो विचारो यावत्प्रकरणान्तराधिकरणम् । ततस्तन्न्यायानुवृत्तिः शाखान्तराधिकरणात् । तत्र च षट्कातिरिक्तभेदकारणयुक्तानां सर्वासामगुणक्रियाणां चाऽऽशङ्कानिवृत्तिरित्येतावान् भेदलक्षणार्थः । एष एव चार्थोऽवश्यं वस्तु योद्धाविस्थायावधारणार्थम् । न चान्यस्येदानीमवसरोऽस्तीत्ययमेवाध्यायसम्बन्धः । कुतः—

दोषदोष्याद्यत्र सर्वे कर्मभेदनिबन्धनाः ।
कार्ये ज्ञातेऽधिकारः स्यादुपदेशोऽतिदेशयोः ॥

---

१ (अ० २ पा० २ अ० २ सू० २)। २ (अ० ३ पा० १ अ० ३ सू० ३)। ३ द्वयन्तरितं ग्रन्थान्तरितं चाधिकरणद्वयमित्यर्थः ।

नीयो नान्यः । एष एव चाध्यायसंबन्धः । तदिह षड्विधः कर्मभेदो वक्ष्यते—शब्दान्तरम्, अभ्यासः, संख्या, गुणः, प्रक्रिया, नामधेयमिति । वक्ष्यमाणमनुसंकीर्त्यैतत्, प्रदर्शितमुच्यमानं सुखं ग्राहयिष्यत इति श्रोतुश्च बुद्धिः समाधीयते । तदेतन्नानाकर्मलक्षणमित्यध्यायमाचक्षते, एतत्तात्पर्येणातोऽन्यदुपोद्घातप्रसक्तानुप्रसक्तं चेति ॥

तत्र प्रथमं तावदिदं चिन्त्यते । प्रथमेऽध्याय इदमुक्तं—चोदनालक्षणोऽर्थो धर्म इति । चोदना च क्रियाया अभिधायकं वाक्यं वाक्ये च पदानामर्थाः । तत्र किं पदेन पदेन धर्म उत सर्वैरेक एवेति । किं ताव-

---

प्राक्तावत्प्रमाणलक्षणाद्वेदार्थविचारात्मकत्वान्न कस्यचिद्भेदलक्षणादेः प्रस्ताव इत्युत्तरकालमारम्भः । तत्रापि शेषशेषित्वप्रयोज्यप्रयोजकत्वक्रमश्च भिन्नाना भवतीति न भेदलक्षणात्प्रागारभ्यते । तथाऽधिकारः कर्मस्वरूपेऽवधारिते तद्योग्यतया शक्यो निरूपयितुमिति पश्चादपि लक्षणानि प्रतीक्षते । तथोत्तरः षट्कोऽतिदेशविषयत्वादुपदेशज्ञानाधीनसिद्धिः समस्तं समस्तं पूर्वषट्कमपेक्षते । ततश्च पारिशेष्यसिद्धोऽयं भेदलक्षणस्य सम्बन्ध इत्यनाऽऽरभ्यते । षड्विधः कर्मभेद इति—साधनभेदोपचारात् । वक्ष्यमाणसूत्रक्रमानुरोधान्नामधेयं संख्यानन्तरं पठितव्यं सदनादरादन्ते पठितम् । इतिकरणो हेत्वर्थः । षड्विधं कर्मभेदं एतैः कारणैरिति यावत् । अथ वा करणे भेदशब्दं व्युत्पाद्य सामानाधिकरण्येनैव शब्दान्तरादीनि व्याख्येयानि । संज्ञाशब्दान्तरयोः संख्यागुणयोश्चापौनरुक्त्यं स्वस्थाने वक्ष्यामः । सर्वदा चैषां भिन्नविषयत्वान्न श्रुत्यादिवद्बलाबलचिन्ता भविष्यतीति तद्भेदप्रतिपादनमात्रतात्पर्येण । अन्यदुपोद्घातप्रसक्तानुप्रसक्त्यादिना । तत्र—

> चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते ।
> प्रसक्तानुप्रसक्तादि प्रस्तुतादुपजायते ॥

यथेदमेवाधिकरणं प्रकृतानुनिष्पाद्यपूर्वभेदानुसारासिद्ध्यर्थमुपोद्घातत्वेन भविष्यति पुनरस्मात्पदात्फलेन सम्बध्यमानादपूर्वभेदाभेदावनुगन्तव्याविति । यदा निरवयवौ वाक्यवाक्यार्थौ स्यातां तत्र किं प्रतिपदं धर्म इत्यादिरसम्बद्ध एव विचारः स्यादित आह—वाक्ये च पदानामर्था इति । अत्रापि चोद्यते—

> चोदनालक्षणत्वेन वाक्यार्थोऽवस्थितो यदा ।
> धर्मः प्रतिपदं वाक्ये कथमाराद्ध्यते तदा ॥

यदि हि धर्मस्वरूपमभिधीयेत तत्र किं पदेन पदेनोच्यत इति विचारो युज्यते

स्यात्तम् । प्रतिपदं धर्म इत्येवं प्राप्ते, उच्यते । यद्येकस्मादपूर्वं, तदाऽन्य- त्सदर्थं भविष्यति । एवमन्यीयस्यादृष्टानुमानमसकृत्कल्पना भविष्यति । तस्मादेकमपूर्वम् ।

यद्येकं तदा संदेहः । किं भावशब्देभ्य, उत द्रव्यगुणशब्देभ्य

---

ख्यातानीति स्थितः ॥ तदुच्यते—

धर्मत्वं फलसंबन्धात्पदार्थस्यैव युज्यते ।
तद्विशेषस्य सर्वेषामिति युक्ता विचारणा ॥

न चात्र यो धर्मः स किं पदेन पदेनोच्यत इत्येवं विचार्यते किं तर्हि यः पदेन पदेनोच्यते स किं फलसंबन्धीतरवाक्यं वाक्यार्थात्मना गम्यमानो धर्मो भवति, अथेतरे- पदार्थानुगृहीत एकः पदार्थ इति । तथा च सर्वैरेकस्य धर्मत्वं प्रतिपादितं भवति । साक्षात्फलसाधनमात्रस्य धर्मत्वाभ्युपगमात् । न तु सर्वेषामेकः कश्चिद्धर्मोऽस्ति यः सर्वै- रेक इत्येवमाश्रीयेत । यच्च फलपदेन सह संबध्यते तस्यार्थं धर्मपूर्वसाधनं च मन्यन्ते । तेन किं सर्वाणि पदानि फलेन संबध्यन्ते किं चैकमिति विचारः । किं प्राप्तं, प्रति- पदमिति । कुतः—

ऐकरूप्येण संबन्धः प्रधानेन च सिध्यति ।
तस्मात्फलपदेनैव सर्वं संबध्यते पदम् ॥

यदि हि विशेषो गम्येतेदं फलसंबन्धयोग्यमिदं नेति ततः किंचिदेव संबध्येत, अन- वगम्यमाने तु सर्वाणि पदानि फलेनैव संबध्यन्ते । यदि चैकं फलसंबन्धीतराणि च तत्संबन्धीनीति कल्प्येत ततो वाजपेयाधिकरणन्यायेनैकस्य फलं प्रत्युपादानविधानगुण- भावादितरत्तु प्रत्युद्देशानुवादमात्रान्यायाद्वैरूप्यनिमित्तवाक्यभेदप्रसङ्गः । सर्वेषां तु फलं प्रत्यु- पादीयमानानामैकरूप्यात्तत्संबन्धोपपत्तिः । सर्वत्र सति संभवे गुणमनिच्छन्प्रधानेनैव नित्यं संबध्यते । तस्मात्सर्वेषां फलसंबन्धाद्धर्मत्वं, तत्र तु किं सन्निपत्यैकं कृत्स्नं फलं साधयन्ति, अथ दर्शपूर्णमासवत्संहत्य, तथा किं विकल्पेन समुच्चयेन चेत्यादि पर्येषं कल्पनीयम् । तत्र फलभूयस्त्वागमाद्बहुशब्दोपादानाभावात्सन्निपत्यैकं साधनशास्त्र- सामर्थ्यात्सर्वेभ्यः पृथक्फलमिति पक्षः । अथ वाऽरुणादिन्यायेनैकवाक्योपादानात्संहतानां फलम् । अथ वैकानेकत्वाकल्पनात्तदानीमेकेनैतरसंबन्धोपपत्तिस्तस्माद्विकल्प इति । अत्रा- भिधीयते—

फलेन यस्य संबन्धस्ततोऽपूर्वं प्रकल्प्यते ॥
तदन्यत्वोपपत्तौ च न युक्ता बहुकल्पना ॥

---

१ (अ० १ पा० ४ अ० ५)।

इति । कः पुनर्भावः, के ते पुनर्भावशब्दा इति । यजतिददातिजुहोतीत्येवमादयः ।

---

यदि हि फलसम्बन्धमात्रपर्यवसाय्येव वाक्यं भवेत्ततः कदाचिदपि सर्वाणि फलेन संबध्येरन् । इह तु तावन्मात्रेणासिद्धेरपूर्वमन्यत्कल्पयितव्यम्, तच्चानुपपत्तिप्रमाणकं, तेनैकापूर्वकल्पनयोपपन्ने नादृष्टान्तरकल्पनाप्रमाणमस्ति । यो ह्यनेकान्यपूर्वाणि कल्पयति कल्पयत्यसावेकं, तच्चैककल्पनसमर्थत्वाद्वाक्यस्य क्षीणान्यथानुपपत्तिर्नापूर्वान्तरस्य प्रमाणं भवति । तस्मादेकमेव फलसम्बन्धि तस्माच्चापूर्वमितरत्फलवदुपकारीत्यवसीयते । न चात्र विरोधो भविष्यति नामधेयत्वेन परिहारात् । अगत्या वा 'दशापवित्रेण ग्रहं संमार्ष्टि' इतिवन्मत्वर्थलक्षणाश्रयणात्, अर्थाक्षिप्तसाध्याहारद्वारेण वा धात्वर्थैरात्मीयकरणग्रहणसिद्धेः । एवं स्थिते कतरदेकं भवत्वनामिति सर्वथाऽनेकादृष्टकल्पनापरिहारादनियमप्राप्तावुच्यते—

प्रधानफलवद्धि तत्सर्वं यन्नाङ्गमिष्यते ।
प्रधानाङ्गत्वमेकस्य न चैकत्रावकल्पते ॥

न ह्येकस्मिन्वाक्ये तदेव कदाचित्फलसम्बन्धात्प्रधानं कदाचित्फलवदुपकारादङ्गं युज्यते नियतरूपत्वादङ्गाङ्गिभावस्य । तस्मान्नियोगेनैवाऽऽख्यातपदान्नामपदाद्वाऽपूर्वप्रतीतिः । कः पुनर्भावः के वा भावशब्दा इति । यावन्न फलसम्बद्धेषु वाक्येष्वाख्यातशब्दा यजतिजुहोतीत्येवमादयस्तेषु प्रत्ययार्थप्राधान्यात्कर्तरि लकारोत्पत्तेर्यागादिविशिष्टकर्त्रभिधानं, कथं चिद्वा विपर्ययात्कर्तृविशिष्टयागाद्यभिधानं मन्वानस्य प्रश्नः । सत्यामपि चैकपर्यनुयोगेनोभयपर्यनुयोगसिद्धौ योऽयं यजनक्रिया याग इत्याद्युदाहरिष्यत्र भावार्थेनाब्रवीति तन्मूलं केऽप्यतोऽन्ये वा भावशब्दा अपीत्युभयप्रश्नः । सिद्धान्तवादी तु भवतेर्णिजन्तात् 'एरच्' इत्यच्प्रत्यये कृते भावनावाचिनं भावशब्दं व्युत्पाद्याऽऽख्यातस्य चान्वयव्यतिरेकाभ्यां तत्परत्वं कर्त्रभिधानप्रतिषेधं चाभिप्रेत्योदाहरति—यजति ददाती

---

१ अनेन च सदृष्टानुमानस्य प्रसङ्गो यस्याः कल्पनाया भाष्यकारीयत्वं भविष्यतीति भाष्यार्थं । सूचितं । २ कः पुनर्भाव इत्यनेनैव भाष्येण भावनाक्षेपद्वारा तद्वाचिशब्दाक्षेपसिद्धेः के पुनर्भावशब्दा इति पुनरुपादानमयुक्तमिति मत्वा तदभिप्रायमाह—सत्यामपीत्यादिना । अयमाशयः । यदि कश्चिद्वादी भावशब्दादिप्रत्याख्यानस्य भावनाभ्युपगमेनोभयपर्यनुयोगं परिहरति प्रति इत्येवं यथेनेत्यादेर्दधिकरणविषयभूतेषु वाक्येषु तादृशभावशब्दा भावादन्य एव भावो भावशब्दार्थाभिमत इति प्रत्युत्तरसूचनायोभयप्रश्न इति । न केवलं भाव एवाक्षेपिकः किं तु भावशब्दा अपीत्यपिशब्दार्थो ज्ञेयः । ३ पा० सू० (३-३-५६)।

ननु यागदानहोमशब्दा एते न भावशब्दाः । नैतदेवम् । यागादिशब्दाश्चैते भावशब्दाश्च । यज्यार्थश्चातोऽवगम्यते, भावयेदिति च । तथा यजेत यथा किंचिद्भवतीति । तेनैते भावशब्दाः । द्रव्यगुणशब्देभ्यो द्रव्यगुणप्रत्ययो न भावनायाः । अतस्ते न भावशब्दा इति । किं तावत्प्राप्तम्, अविशेषेणानि[1] । तत उच्यते । भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत, यजेतेत्येवमादिकाः । कुतः । भावार्थत्वादेव । य आहुः—किमपि भावयेदिति, ते स्वर्गकामपदसंबन्धात् स्वर्गं भावयेदिति ब्रूयुः । तस्मात्तेभ्यः क्रिया प्रतीयेत । फलस्य क्रिया करणं निष्पत्तिरिति । ते च यागदानहोमसंबद्धाः स्वर्गस्योत्पत्तिं वदन्ति । कुतः । एष ह्यर्थो विधीयते । यथा यागादिना । स्वर्गकामः केन भावयेत् स्वर्गम्, यागादिनेति । [2]यस्य च शब्दस्यार्थेन फलं साध्यते, तेनापूर्वं कृत्वा नान्यथेति ततोऽपूर्वं गम्यते । अतो यस्तस्य वाचकः शब्दस्ततोऽपूर्वमिति । पर· पुनर्भवतेर्णिजन्तादन्येन नैषोऽर्थोऽभिधीयते, न चाऽऽख्यातप्रत्ययस्यात्र व्यापारो, धात्वन्तरार्थत्वात् । काम तुल्यजातीयत्वेन धातवो ब्रूयुस्तेऽपि तु यागादिवचनत्वादसमर्था इति मत्वाऽऽह—ननु यागदानहोमशब्दा इति । अत्रोच्यते—

> यागदानाद्यनुस्यूतो भावनात्माऽवगम्यते ।
> नित्यमाख्यातशब्देभ्यस्तस्माद्भावार्थतेष्यते ॥

यावानेवाख्यातेभ्योऽर्थः शब्दाद्गम्यते स सर्वः शब्दार्थः । सर्वत्र चाऽऽख्याते धात्वर्थश्च तदनुरक्ता च भावना विज्ञायते । तस्माद्भावार्थत्वव्यपदेशः । तद्व्यतिरिक्तास्तु द्रव्यगुणशब्दा विज्ञायन्त एवेति न दृष्टा । तत्र द्रव्यादिशब्दानां निष्पन्नार्थाभिधायिनां करणार्थत्वयोग्यत्वात्प्राप्नोति फलसंगतिः । सर्वत्र हि फलं साध्यस्यासिद्धरूपं साधनमपेक्षते न साध्यान्तरं, नामार्थश्च सिद्धत्वात्तदपेक्षापूरणसमर्थो नाऽऽख्यातार्थः, स्वयमेव तावत्साध्यत्वात् । तस्माद्द्रव्यादिभिः फलमिति प्राप्ते सूत्रेणोत्तरं दीयते—

> भावार्थाः कर्मशब्दा ये तेभ्योऽपूर्वक्रियागतिः ।
> ते कुर्याद्यजिना स्वर्गमेष ह्यर्थो विधीयते ॥

---

१ अविशेषेणेति—यदि भावशब्देभ्य एव भाव्याकाङ्क्षोत्पद्यते न द्रव्यगुणशब्देभ्य इति विशेषः स्यात्तदा द्रव्यगुणशब्दानां नैराकाङ्क्ष्येणाऽऽकाङ्क्षानिबन्धनफलसंबन्धायोगादपूर्वगमकत्वं स्यात् । नत्वेतदस्ति, द्रव्यगुणशब्देभ्योऽपि करणविभक्त्यन्तेभ्यः साध्याकाङ्क्षोत्पत्तेरविशेषादित्यर्थः । नातोऽव्यवस्थितशब्दार्थानुपपत्तेरनियमपूर्वपक्षायोग इति शङ्कावसर इति भावः । २ अनेन प्रतिपदाधिकरणपूर्वोत्तरपक्षयोरनुवादत्वमुक्तं भवति ।

प्रतीयत इति। तेन भावशब्दा अपूर्वस्य चोदका इति ब्रूमः। न तु कश्चि च्छब्दः साक्षादपूर्वस्य वाचकोऽस्ति। भावार्थः किमपि भावयि-तव्यं, स्वर्गकामस्य च केनापि भाव्यतेति। तयोर्नष्टाश्वदग्धरथ वत्संप्रयोगः। यजेतेत्येवमादयः साकाङ्क्षा यजेत किं केन कथमिति, स्वर्गकाम इत्यनेन प्रयोजनेन निराकाङ्क्षाः। नैव द्रव्यगुणशब्दाः। तस्माद् भावार्थाः कर्मशब्दा अपूर्वं चोदयन्तीतिः।

---

फलसंबन्धो हेतुरपूर्वप्रतिपत्ते। सबन्धश्चाऽऽकाङ्क्षापूर्वक। सा च भावशब्दस्य प्रसर्पन्ती दृश्यते न द्रव्यगुणशब्दस्य। तस्माद्व्याख्यातेभ्योऽपूर्वभावना गम्यते। तत्र च धात्वर्थस्य करणत्वप्रतिपत्ति प्रत्यासत्ते। अनन्तरेण फलकरणभूतेनान्यथानुपपत्त्याऽपूर्वं मान्यत इत्यवधार्यते। कथ पुनर्यजादीन्पृथक्कृत्य केवलप्रत्ययवाच्य एव भावनार्थो लभ्यते भावयेदिति। कुत —

अभिदध्यु स्वशक्त्या हि विधिमात्र लिडादय।
ण्यन्तस्य भवतेरर्थं केनादोनाभिधीयते॥

न च धात्वन्तरार्थं यज्यादय प्रतिपादयन्ति। स्वार्थमात्रव्यापृतत्वात्। अत शब्दरहितमेवेदरोप्यते भावयेदिति। किं च—

शब्दान्तरस्य योऽप्यर्थ पर्यायैरभिधीयते।
न स तेनैव सहितस्तस्मिन्नर्थे प्रयुज्यते॥

तद्यथा पिकमानयेत्युक्ते यो नामार्थं न प्रतिपद्यते तस्मै कोकिलशब्दमेव केवल प्रयुङ्क्ते न कोकिल पिक इति, तथाऽत्र यद्यास्यातस्य करोतिर्ण्यन्तो वा भवति पर्याय तत्स्तदर्थकथने तन्मात्रमेव प्रयोक्तव्य नाऽऽख्यातप्रत्ययोऽपि, न हि तदानीं विविच्य ज्ञायते केनादोन क्रिया प्रत्याख्यात इति। अत्र तु भावयेत्कुर्यादिति वा पुन रपि लिङ् प्रयुज्यत एव। अतश्च योऽनेन यजते परेणार्थ प्रतिपादितोऽसौ भावयते रपि परेण तेनैवेत्यविकाराप एव भावयति। तस्माद्वैदिक इति। अत्राभिधीयते। सर्वैरेव तावत्—

सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति।
सामानाधिकरण्येन करोत्यर्थोऽवगम्यते॥

इह केभ्यश्चिद्धातुभ्य परा सिद्धविभक्तिरुच्चार्यमाणा कर्तात्मलाभमात्रमेव व्यापार प्रतिपादयति यथाऽस्तिभवतिविद्यतिभ्य। अपरेभ्यस्तु सिद्धे कर्तर्यन्यात्मलाभविषयव्यापा-रमनीति। यथा यजति ददाति पचति गच्छतीति। द्रव्यमेव च विशिष्टशास्त्रगुणेन प्रचारिता

त्मतत्त्वं विप्रकीर्णस्वभावं पूर्वापरीभूतं प्रथमावस्थातः प्रच्युतं परामवस्थामप्राप्तं व्यापारशब्दवाच्यं भवति । तत्र कदाचित्कर्तैवैवमवस्थः प्रतीयते, कदाचित्सिद्धे कर्तर्यन्यः। तद्यदा कर्तुरेवैषाऽवस्था भवति तदाऽसौ स्वयमेवान्यस्मादात्मलाभमपेक्षमाणः परनिष्पत्त्यव्याप्रियमाणत्वान्न करोतिशब्दवाच्यतां प्रतिपद्यते । यदा तु लब्धात्मकोऽन्यत्र व्याप्रियते तदा करोतीत्येवमपदिश्यते । तथा च किं करोति पठति गच्छतीति सामान्यविशेषरूपेण सामानाधिकरण्यप्रयोगो दृश्यते, न तु किं करोति भवत्यस्ति वेति प्रयुज्यते। तस्माल्लब्धात्मककर्तृव्यापारवचनानि करोत्यर्थवन्त्याख्यातानि । तत्र च क्रियमाणेन केनचिदवश्यं भवितव्यम्। कुतः—

करोतिः क्रियमाणेन न कश्चित्कर्मणा विना।
भवत्यर्थस्य कर्ता च करोतेः कर्म जायते॥

करोतेर्नित्यं सकर्मकत्वाद्यावत्क्रियमाणं न लभ्यते न तावदर्थः पर्यवस्यति । सर्वकारकाणां चावान्तरक्रियासु कर्तृत्वं प्रतिपाद्यमानानां प्रधानक्रियासु कर्मादिविभागो जायते। प्रतिक्रियं योग्यताभेदादवान्तरक्रियावैचित्र्यं भवति । तत्रान्वयव्यतिरेकाभ्यामिदमवगतं भवतिक्रियायाः कर्ता करोतेः कर्म संपद्यत इति । तथा हि—

नित्यं न भवनं यस्य यस्य वा नित्यभूतता।
न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव॥

य एव हि प्रवृत्तभवनः संभावितभवनो वाऽन्येन प्रयुज्यते स एव क्रियमाणत्वेनावधार्यते नान्यः। तथा च न कश्चित्खपुष्पमाकाशं वा कुर्वन्नुपलभ्यते। यत्रापि पादौ कुर्वित्यादिषु निष्पन्नानां कर्मत्वप्रयोगो दृश्यते तत्राप्यनिष्पन्नसंस्कारादिविवक्षया पादादिशब्दप्रयोगादव्यभिचारः। सत्यपि च करोतेरनेकार्थत्वे सर्वत्र गन्धनावक्षेपणादौ किंचिदनुत्पन्नोत्पादनसामान्यमवगम्यते। अथ वा यदाऽन्योत्पादनाभिधायित्वं तदैव विशिष्टाख्यातसामानाधिकरण्यं दृष्टमिति तद्वशस्योत्पाद्यमानमेव कर्म भवतीत्युपपन्नम्। तेन भवतिक्रिया तावल्लब्धा। तत्र च—

करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः।
भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते।

भवतिकरोत्योः शक्तिभेदाद्विच्छिदिपचत्योरिव नियतं प्रयोज्यप्रयोजकव्यापारवचनत्वम्। तत्र च कदाचित्क्रियमाणकर्मावस्थाऽऽश्रितयोरुभयोर्व्यापारो वा स्वयमेवाऽऽक्षि-

१ भवेत् करोतीत्यत्र द्वितीयाभिहितया कर्माख्यया, शक्त्या, आक्षिप्तः प्रयोज्यस्य पदस्य, भवनाख्यो व्यापारो यस्य धातोरित्यर्थः। करोतिमात्रप्रयोगे कथमाक्षेप इत्याशङ्कायामाह—स्वयमेवेति। घटो भवतीत्यादौ प्रथमाभिहितकर्तृशक्त्याक्षिप्त प्रयोजकव्यापारो भवतीत्यर्थः। तथा च प्रयोज्यप्रयोजकव्यापारयोरन्यतरस्य विधातुरितरप्रतीतिराक्षेपेणैवेति न तस्मिन्नपि शब्दव्यापारकल्पनावसर इति भावः।

प्रयोज्यव्यापारो वा केवलः प्रयोजकव्यापार एव विवक्ष्यते कटं करोति, ओदनं पचतीति । कदाचिन्निलिप्तप्रयोजकव्यापारः प्रयोज्यव्यापारमात्रं, घटो भवति, विक्लिद्यन्ति तण्डुला इति । कदाचिदुभौ भिन्नौ समुच्चित्य प्रयोगः, करोति कटं देवदत्तः स च भवति । कदाचिदुपसर्जनीभूतप्रयोजकव्यापारः प्रयोज्यव्यापारः क्रियते देवदत्तेनेति स्वयमेवेति वा प्रयोगे । कदाचित्पुनः समानपदैकदेशोपात्तोपसर्जनीभूतप्रयोज्यक्रियः प्रयोजकव्यापारो विवक्ष्यते तत्र च करोतिपचत्योस्तादात्म्येनाशक्तेरप्रयोगाद्भू विक्लिद्योश्च केवलप्रयोज्यक्रियानिष्ठत्वान्न साक्षात्प्रवर्तितुं शक्तिरस्तीति वाचकत्वेन द्योतकत्वेन वा णिजपरं प्रयुज्यते भावयति विक्लेदयतीति च । तथा चाऽऽह—

प्रयोज्यकर्तृकैकान्तव्यापारप्रतिपादकाः ।
ण्यन्ता एव प्रयुज्यन्ते तत्प्रयोजककर्मसु ॥

न च तेषामण्यन्तानामशक्तिरित्यन्येषामशक्त्या भवितव्यम् । अन्येषां वा शक्तिरित्येषामपि तद्वद्भवितव्यम् । कुतः—

शक्तयः सर्वभावानां नानुयोज्याः स्वभावतः ।
तेन नाना वदन्त्यर्थान्प्रकृतिप्रत्ययादयः ॥

एवं करोत्यर्थद्वारेण सर्वाख्यातेषु भावयत्यर्थः सिद्धः ।

तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः ।
प्रयोजकक्रियामाहुर्भावनां भावनाविदः ॥

यदुक्तं न विधित्वव्यतिरिक्तं लिङादयोऽर्थं वदन्तीति ।

तत्प्रयुक्तम् । पुनः—

अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥

यदा हि सर्वाख्यातानुवर्तिनी करोतिधातुवाच्या पुरुषव्यापाररूपा भावनाऽवगता भवति तदा तद्विशेषाः सामान्याख्यातव्यतिरिक्तशब्दविशेषवाच्या विधिप्रतिषेधभूतभविष्यद्वर्तमानादयः प्रतीयन्ते । तथा च सर्वत्र सामान्यतः करोत्यर्थोऽवगम्यते, किं करोति पचति, किमकार्षीदपाक्षीत्, किं करिष्यति पक्ष्यति, किं कुर्यात्पचेत्, किं न कुर्यान्न पचेदिति । तत्रार्थात्मिकाया भावनाया लिङादिशब्दाना च पुरुषं प्रति प्रयोजकव्यापारः सा द्वितीया शब्दधर्मोऽभिधात्मिका भावना विधिरित्युच्यते । विशेषतश्चेयमर्थवादाधिकरणे वर्णिता यत्तु पदार्थमिव्यक्त्यतिरेकेण प्रत्ययार्थापरित्यागात्मिहितम् । तत्रोच्यते—

केवलस्याप्रयोगित्वात्कर्तृसंख्यादिसंग्रहात् ।
रूपाविनाशसिद्धेश्च प्रत्ययोऽपि प्रयुज्यते ॥

यदि हि केवलः करोतिर्भावयतिर्वा प्रयोगार्हौ स्यातां ततः कोकिलशब्दप्रयोगे पिकशब्दवत्प्रत्ययो न प्रयुज्येत, न तु केवलायाः प्रकृतेः प्रयोगः, अपभ्रंशत्वप्रसङ्गात् । तेन यस्मिन् कस्मिंश्चित्प्रत्यये प्रयोक्तव्ये यस्यैवार्थः कल्प्यते स एवानुवादभूतः प्रकृत्यनुग्रहार्थं प्रयुज्यते नान्योऽप्यधिकार्थान्तरापत्तिप्रसङ्गात् । ननु च, इक्श्तिपौ धातुनिर्देशे विहितावतस्तद्युक्तौ करोतिभावयती प्रयुज्येयाताम् । नैतदस्ति । तथा सति शब्दपदार्थकत्वान्नैव ताभ्यामाख्यातार्थः कथ्येत । यत्तु क्वचिदर्थेऽपि धातुभिक्श्तिबन्तं प्रयुज्यते यजिः, यजतिः, इति च । तत्, शब्देऽभिहिते लक्षणयाऽर्थप्रतीतिरित्यवगन्तव्यं, न चेह किंचिल्लक्षणाश्रयणे प्रयोजनमस्ति येनावाचकः प्रयुज्येत । तत्रान्यदेवानिष्टमापद्येत कृञ्भुवौ धातू तिबाऽभिधीयेते इति । तस्मादर्थपरत्वसिद्ध्यर्थमाख्यातप्रत्ययसहितावेव प्रयुज्येते । यदि ■ भावनैवैका प्रत्ययार्थः स्यात्करोतिभावयती वा समस्तप्रत्ययार्थोपादानसमर्थौ भवेतां ततः केवलप्रयोगोऽप्याशङ्क्येत, न तु तदुभयमप्यस्तीति करोतिभावयतिभ्यां कथितेऽपि भावनार्थे कर्तृसंख्यादिप्रत्यायनार्थं पुनः प्रत्यय उच्चार्येते । यस्तु तत्र भावनाभिधानांशः ■ प्राप्तत्वादनूद्यते, अन्यथा हि भावनैवैका प्रत्ययार्थः करोतिभावयती वा कर्तृसंख्यादीनामप्यभिधायकाविति भ्रान्तिः स्यात् । नित्यं च पूर्वापरीभूता भावनाऽऽख्यातेनोच्यते । तत्र यदि प्रत्ययान्तरं प्रयुज्यते ततः करोतिभावयतिभ्यां द्रव्यवदुपसंहृतरूपोच्यमाना नैवाऽऽख्यातसदृशी कथ्येत । तस्मादवश्यं तदपि प्रयोक्तव्यमिति । किं च—

भावना गम्यमाना च धातुप्रत्ययसंनिधौ ।
कस्य वाच्येति विस्पष्टं न कदाचित्प्रतीयते ॥

यदि ह्येकान्तेनास्याः प्रत्ययार्थत्वमवधार्येत ततः करोतिभावयतिभ्यां प्रत्ययपीनरुक्त्याशङ्का स्यान्न तु तदस्ति, उभयसंनिधौ गम्यमानत्वात् । केवलप्रकृतिप्रत्ययप्रयोगाभावाद्धि न विवेको विज्ञायते । शक्यते हि वक्तुं धातुसहितेन प्रत्ययेनोच्यत इति । अथवा प्रत्ययानुगृहीतेन धातुना, अथ चोभाभ्याम् । न च शक्तिकल्पनायां विशेषः, सर्वथाऽर्थापत्तिसाम्यान्न च विवेकज्ञानप्रयोजनमस्ति । स्यादेतत्, कृदन्ताद्धातोरप्रतीतेस्तिङ्व्यभिचारिण्येव नेति । तदयुक्तम् । अस्तिविद्यतिभवतिपरेषु प्रत्ययेष्वप्यदर्शनात् । न वा कृदन्तेष्वप्यत्यन्तं भावना नास्ति किंचिदपकृष्यमाणरूपप्रतीतेः । कृत्येषु तावद्दोक्तव्यम् पक्तव्यमिति किंचिन्न्यूनाऽऽख्यानाद्गम्यते । तत्रापि कर्मोत्पन्नेषु द्रव्यप्राधा-

न्यादब्राह्मणो न हन्तव्य इति भावोत्पत्तेभ्यो न्यूनतरा । न हि तत्र प्रयोजकव्यापारप्राधान्यम् । एकत्र धात्वर्थप्राधान्यादपरत्र स्वव्यापारविशिष्टप्रयोज्यपरत्वात् । एतेन भावकर्मोत्पन्नलकारास्तिङोऽपि व्याख्याताः । तेष्वपि हि प्रयोजकव्यापारगुणत्वप्रतीतिरविशिष्टा । अतो न तिङन्तानां तुल्यकल्पत्वम् । तथा 'अव्ययकृतो भावे भवन्ति' इति स्मरणाविशेषेऽपि स्वसंवेद्यमपि न्यूनभावनाविज्ञानम् । 'अभिक्रामं जुहोति'[1] 'दर्भतरणकेनोपयात जुहोति' अभिषुत्य हुत्वा भक्षयन्ति 'पुरा वाचः प्रवदितोः' इति सर्वत्र श्रुत्यैव भावनान्तरसापेक्षा भावनाऽवगम्यते । पक्तः पक्तवानित्यपि निर्वृत्तरूपभावनोपसर्जनद्रव्यप्रतीतिः प्रत्यक्षा । एवं पाचकादिष्वपि द्रष्टव्यम् । तथा च सर्वत्र कारकापेक्षा दृश्यते । अन्यथा हि रूढितद्धितसमासेष्विवैष न स्यात् । न च निर्व्यापाराणामेते व्यपदेशा भवन्ति । न चास्ति स व्यापारो यत्र किंचिदसन्न जन्यते । ततश्च सिद्धः करोतिभावयत्योरर्थः । शक्यते च सर्वत्र सामानाधिकरण्यमपि दर्शयितुं विनाऽपि पूर्वापरीभूतत्वेन । तद्यथा किं कर्तव्यं पक्तव्यं, कथंकारं जुहोति अभिक्रामम्, किं कृत्वा जुहोति अभिषुत्य, किं कृतवान् पक्ववान्, किं कृतं पक्वं, किंक्रियो देवदत्तः पक्ता, केयं क्रिया पाक इति । न च करोतिसामानाधिकरण्यातिरिक्तमाख्यातेष्वपि भावनाप्रमाणं विद्यते । तस्माद्धातवोऽपि भावनां न मुञ्चन्ति । तथा चाऽऽहुः[2] करोतिरर्थेष्विव सर्वधातूनिति । यत्त्वस्याः प्राधान्यं तन्नाम लिङाऽभिधेयं द्योत्यं वाऽन्वयव्यतिरेकाभ्यामस्तु न स्वरूपम् । नन्वेवमपि यागेनेति धात्वर्थे निष्कृष्टे तेनैव भावनाऽप्युपात्तेति भावयेदिति पुनः प्रयोगो न प्राप्नोति । नैष दोषः । तथा हि । व्यर्थस्य धातोर्भेदेनार्थे वक्ष्यमाने यागेनेति विशेषरूपं करणात्मना निष्कृष्टम् । इतरत्तु भावनात्मकं सामान्यरूपं शब्दान्तरेण भावयेदित्यनेन वक्ष्यते । अथवा केचित्करणकर्तृसंख्यादयः प्रकृतिप्रत्यययोर्भेदेन वाच्याः । भावना तु समुदायाव्यभिचारात्समुदितयोरेवार्थ इत्यपि शक्यं वक्तुम् । तथा च सूत्रकारभाष्यकाराभ्यां भावार्थाः कर्मशब्दा इति सामानाधिकरण्यमेवाऽऽश्रितं न भावार्थत्वेन प्रत्ययाः कथिताः । शास्त्रे तु सर्वत्र प्रत्ययार्थो भावनेति व्यवहारः । तत्रायमभिप्रायः —

> प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययौ सदा ।
> प्राधान्याद्भावना तेन प्रत्ययार्थोऽवधार्यते ॥

---

१ तै० सं० (७-६-१) २ सर्वधातूनां करोत्यर्थवाचित्वे वृद्धसंमतिमाह—तथा चाऽऽहुरिति । विभज्य सेना परमार्थकर्मा सेनापतीनामपि पुरन्दरोऽयम् । नियामयामास स धातुनन्ये करोतिरर्थेष्विव सर्वधातून् ॥ इति ।

यद्यप्यन्यद्विवेककारणं नास्ति तथाऽपि प्राधान्यं प्रत्ययार्थधर्म दृष्ट्वा नूनमियं प्रत्ययार्थ इत्यवगम्यते—

तथा क्रमवतोर्नित्यं प्रकृतिप्रत्ययांशयोः ।
प्रत्ययश्रुतिवेलायां भावनात्माऽवगम्यते ॥

न केवलमेतावेवान्वयव्यतिरेकौ यौ परस्परपरित्यागेन लक्ष्येते तस्मिन्नेव हि पदे 'तदागमे हि तद्दृश्यते' इत्यनेन न्यायेन विवेकोऽवधार्यते । यत्त्वस्त्यादिपरः प्रत्ययोऽपि भावनां जहातीति तुल्यं धातुसमुदायपक्षयोरप्येतत् । सर्वथा यत्र प्रतीयते तत्र तावत्प्रत्ययार्थत्वं निश्चीयते । अन्यत्र त्वयं विचार एव नास्ति । क्वचिद्व्यभिचारस्य चोत्तरमुक्तं तद्भूताधिकरणे । अथ वा नैवात्रापि व्यभिचारः । कुतः—

अस्त्यादावपि कर्त्रंशे भाव्येऽस्त्येव हि भावना ।
अन्यत्राशेषभावात्तु न तथा सा प्रकाशते ॥

यद्यपि कर्तुरनिष्पन्नत्वाद्व्यतिरिक्तभावयितव्याभावादस्त्यादिषु प्रयोजकव्यापारो नातीव लक्ष्यते तथाऽपि प्रत्ययसामर्थ्याद्भावयतीत्यवगम्यते । किमित्यपेक्षिते चानिष्पन्ने कर्तर्यन्यत्किंचिदित्यकल्पनादात्मानमित्येव संबध्यते केन भावेन कथं, अवयवजननादिप्रकारेणेति । प्रयोगोऽपि तत्र भावनांशः भवनेनैव पर्यन्ते व्यापारान्तरासंभवात् । तत्र केचिद्यथा भावनव्यापृताः प्रयुज्यन्ते केचित्सिद्धभवनाः प्रयोजकाः । सिद्धभवनासिद्धभवनवर्ति च सामान्यमुभयमपरोक्षं भावनेत्युच्यते । एतेन जायते निष्पद्यते सिध्यतीत्यादीनि व्याख्यातानि । अस्तिः पुनर्जनिमात्रनार्थाद्भवनेभ्यो निर्गमवस्थामभिव्यक्तस्तथाऽऽत्मभवनं भवद्भावयतीत्येवमाख्यातप्रत्ययं लभते । तत्रापि तु यावत्कृतमेव पूर्वोत्तरसामान्यसत्तारूपेण पूर्ववदेव प्रयोज्यप्रयोजकव्यापारकल्पनाऽनुसर्तव्या । सत्यामपि स्वैषमादिषु भावनायां निष्पन्नेनेनकर्तृविषयत्वाद्विधिप्रतिषेधयोरसंभवः । स्यादेतत् । दृष्टो विधिरपि 'तस्मात्प्रायणीयस्याह्न ऋत्विजा भवितव्यम्' 'रथंतरं भवति' 'अग्राहस्युः स्यात्' 'इहोक्थ्यानि स्युः' इति । सत्यं दृश्यते न त्विह पूर्वेण तुल्यो भवत्यर्थः । सिद्धो हि पुरुषः कर्मसंबन्धनिमित्तमृत्विक्त्वं भवन्नन्यैरेव वाक्कायमनो व्यापारैर्भावयेदित्युच्यते । तथा रथंतरादिषु सत्यपि श्रुत्या भवनविधिसंबन्धे तत्र संभवादनुमीयमाना भावनैव विधीयते । यत्र त्विहामुत्र भवेदिति प्रयोगस्तत्र भवनेऽनिष्टत्वस्यार्थत्वानिन्त्यासंभवस्यैव व्यतिरिक्तं भावयितव्यमित्येवं विज्ञायते । ध्यानेनात्मतिरोभिद्भावयेदिति । तेन भूतभविष्यद्वर्तमानापदेशमात्रेऽव्यापारमात्रिकं भवितव्यापारस्य भावनात्वं न विध्यादिषु । भवादिकृत-

नेऽपि यदा समस्तव्यापारं धातुरेवोपादत्ते नावयवशब्दादिकृतभेदाश्रयणं तदा विस्पष्टा-द्विरोधाद्धात्वर्थमात्रं कर्तृमत्त्वाद्यवश्याऽऽख्यातपदार्थत्वेनावधार्यन्ते न भावना । न च भावनाव्यभिचारेण दोष इत्युक्तम् । यत्तु कृदन्तेष्वपि धातवो भावनां न व्यभिचरन्तीति । सत्यं धात्वर्था न व्यभिचरन्ति तैरेव तु गम्यमानत्वादनभिधेयत्वमपि शक्यं वक्तुम् । तथा हि—

> धात्वर्थकारकैरेव गुणभूतोऽवगम्यते ।
> भावनात्मा कृदन्तेषु तस्मान्नैवाभिधीयते ॥

यथैव भावप्रधानत्वादाख्याते तत्सम्बन्धादेव गुणभूतकारकप्रतीतिसिद्धेर्न कर्तृकर्मणोरभिधानं भविष्यत्येवं कर्त्राद्यभिधानादेव तदन्यथानुपपत्त्या भावनासिद्धेरनभिधानं, गम्यमानापेक्षयैव च करोतिसामानाधिकरण्यं यथा पचतिशब्दस्य देवदत्तशब्देन, अतथाभूतयैव च कारकसम्बन्धोऽप्युपपत्स्यते । अथ वा भावनोपसर्जनधात्वर्थनिष्पत्त्यर्थत्वात्कारकाणां धात्वर्थेनैव सम्बन्धसिद्धिः । स एव हि तानि स्वसिद्ध्यर्थमपेक्षते भावनाऽपि च तथाभूतान्येव तानि गृह्णातीत्यविरुद्धः सम्बन्धः । कृत्यानां तु प्रैषवाचित्वात्सत्यपि भावनानभिधाने तावत्स्वार्थपर्यवसानं नास्ति यावदंशत्रयपरिपूर्णा भावना न लब्धा । कुतः—

> स्वव्यापारे हि पुरुषः कर्तृत्वेन नियुज्यते ।
> प्रैषैस्तस्य स्वरूपं च भावनाऽशत्रयात्मिका ॥

न हि पुरुषं स्वव्यापारं मुक्त्वाऽन्यमनुष्ठातुं शक्ताः प्रैषाश्चैनमनुष्ठापयन्ति । ते यदि तद्व्यापारं कथञ्चिन्नोपादद्युर्न नियोक्तुं शक्नुयुरित्येवमपि भावनाक्षेपसिद्धिः । यावांश्च ब्राह्मणगतः कश्चित्प्रैषः स सर्वः प्राप्स्यमानाद्विधिरेव भवतीति विनाऽपि स्मरणेन कृत्यानां विधायकत्वम् । अयमेव च विधिप्रैषयोर्विशेषः ।

> प्रवर्तनंस्मृतिः प्राप्ते प्रैष इत्यभिधीयते ।
> अप्राप्तप्रेषणं सर्वं विधित्वं प्रतिपद्यते ॥

तस्मात्प्रत्ययार्थो भावनेत्युपपन्नम् । ननु च यदि प्रयोजकव्यापारो भावनेष्यते ततः पचावधिश्रयणादीनि, यत्नो च मानसः सङ्कल्प इत्यादीनां भावनात्वं त एव धात्वर्था इति धातुवाच्यैव भावना स्यात् । नैष दोषः —

> धात्वर्थव्यतिरेकेण यद्यप्येषा न लभ्यते ।
> तथाऽपि सर्वसामान्यरूपेणान्याऽवगम्यते ॥

सर्वत्र ह्यधिश्रयणादौ करोतीत्यपि सामान्यव्यापारांशः प्रतीयते पचत्यादिवाच्या विक्लित्त्यधिश्रयणाद्यः कर्मभ्यः कर्तृभ्यश्च । तत्र यत्नोदासीन्यप्रच्युतिमात्रेण परिस्पन्द

रूपं निरूप्यते सा भावना । ये तु तदनुरञ्जनसमर्थाः कर्तृकर्मगता विशेषास्ते तस्या एव करणेतिकर्तव्यतांशयोर्निविशन्ते । एवं तर्हि धात्वर्थसामान्यं भावनेत्येतदापन्नम् । सत्यं साध्यतया सामान्यं न तु गोत्वादिरूपेण । कथम्—

अन्यदेव हि यागादौ सामान्यं करणात्मकम् ।
अन्यच्च भावना नाम साध्यत्वेन व्यवस्थितम् ॥

भावनायां हि स्वयमेव प्रतिपुरुषं सामान्यविशेषौ भवतः । तथा तत् करणभूते यागादौ समवेतं भावनाकरणांशापेक्षितं धात्वर्थसामान्यं नाम यत्कर्मशब्देनाभिधीयते । विशेषणभावाच्च यागादयो भावनाविशेषा इत्युच्यन्ते न तद्व्यक्तित्वेन । शास्त्रप्रदेशे तु क्रियाकर्मशब्दौ कदाचिद्धात्वर्थे प्रयुज्येते कदाचिद्भावनायां कदाचित्तु प्रत्यासत्त्यो-भयत्रापि प्रयोगो न स्वरूपाभिधानेन । कुतः—

यादृशी भावनाऽऽख्याते धात्वर्थश्चापि यादृशः ।
नाम्नि तेनैव रूपेण कथ्यतेऽन्यैः पदैः क्वचित् ॥

भावनाशब्दो हि निष्पन्नात्मिकां सत्त्वरूपापन्नां लिङ्गसंख्यायोगिनीमभिधत्ते न चासावाख्याते तादृश्यभिधीयते लिङ्गसंख्यारहितरूपेण गम्यमानत्वात् । एवं धात्वर्थोऽपि वेदितव्यः । तथा करोति भावयतीत्येताभ्यामपि श्रुत्या तावदन्यादृगेवार्थः प्रतीयते कृञ्भावयत्यर्थकरणिका भावना न चैवंरूपाऽसौ यजेतेत्यादिष्वस्तीत्यपर्यायत्वम् । तत्रानन्तरप्रत्ययोत्थापितभावनान्तरबुद्धिमविश्वसित्वाऽर्थसंवादः कर्तव्यः । तेनादूरविप्रकर्ष-मात्रेणैव प्रयोगो नार्थसाम्येनेत्यवस्थितमनन्यशब्दवाच्यत्वं भावनायाः । सा तु प्रतीत-मात्रैव प्राधान्यादपेक्षान्तरानधीनत्वाच्च प्रथमं तावत्साध्यांशमपेक्षते भावयेत्किमिति । तत्र यावती विध्युपेता भावना तस्यां पूर्वप्रतीतमपि विधित्वं तावन्नाऽऽश्रीयते यावदंशत्रय-पूर्णा भावनाऽनुष्ठानयोग्या न भवति । विधित्वप्रक्रमाच्च प्रथममेवैतज्ज्ञायते यादृशैरंशैः पूर्णेयं विधानमर्हति तादृशैः पूरयितव्येति । न च बुद्धिपूर्वकारी पुरुषः पुरुषार्थरहितं व्यापारं वचनशतेनाप्युक्तोऽनुतिष्ठति । न च पुरुषार्थः साध्यव्यतिरिक्तांशपातित्वेन कैश्चित्प्रा-र्थ्येत ततोऽर्थहीनतरस्यान्यस्य साध्यस्याविद्यमानत्वात् । तत्र यद्यस्यां भावनाया-मपुरुषार्थः साध्यः स्यात्ततः पुरुषेष्वप्रवर्तमानेषु प्रत्ययस्य प्रयोगः कदाचिद्बाध्येत । तेन यद्यपि समानपदोपादानप्रत्यासत्तेर्धात्वर्थः साध्यांशपूरणायोपस्थिते तथाऽप्ययोग्यत्वा-न्निराक्रियते, न हि प्रत्यासत्तिरेवैका संबन्धकारणं, योग्यत्वाद्यपि । तथा च वक्ष्यति यस्य येनार्थसंबन्ध इति । किं च—

१ यस्य येनार्थसंबन्धो दूरस्थस्यापि तेन सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् । इत्या-दिना विप्रकृष्टस्य पूर्वापरौ स्कन्नाप्येवं हृदयंगमतामाह—यथा वेदादिना ।

सम्बन्धमात्रमुक्तं च श्रुत्या धात्वर्थभावयोः ।
तद्देशाशनिवेशे तु व्यापारोऽस्या न विद्यते ॥

संबन्धमात्रं कृत्वा निवृत्तव्यापारायां श्रुतावन्यतरांशनिवेशो योग्यत्वादाश्रयितव्यः । तद्यदि साध्यांशादेः प्रत्ययोपात्तेन प्रत्यासन्नतरेण विधित्वेन प्रख्याप्यते ततोऽंशान्तरेण नूनं समपत्स्यत इत्येव प्रतीक्ष्यते । किं च—

साध्यांशे पुरुषाणां च प्रत्ययो न नियोगतः ।
स्वयमेव हि जानन्ति स्वर्गं च पुरुषाः सदा ॥

यत्र हि शास्त्राधीना पुरुषप्रवृत्तिस्तत्र तत्सन्निकर्षविप्रकर्षावपेक्ष्येते, साध्यं पुनः स्वर्गपशुपुत्रग्रामादि प्रागेव शास्त्रात्सर्वे पुरुषाः प्रतिपद्यन्ते । ततश्च भावयेत्किमित्यपेक्षितमात्रे विनैव तावच्छास्त्रेणावगतं पुरुषार्थं कश्चिदिति । तत्र विशेषमात्रमनवगतत्वादपेक्ष्यते । तदपि च न साध्यात्मना, किं तर्हि, एतद्भावनाविषयत्वेन । ततश्च दूरस्थस्यापि स्वर्गादेरेव कृतास्पदस्य भवति । धात्वर्थसंबन्धस्त्वनपेक्षितः क्रियेत विध्यानर्थक्याच्च बाध्येततरां श्रुतिः । किं च—

भवने यस्य कर्तृत्वं कथंचिदवधारितम् ।
स्ववाक्ये वाऽन्यवाक्ये वा स साध्यत्वं प्रपद्यते ॥

न चात्र धात्वर्थादेर्भवनक्रियासंबन्धोऽवगतः स्वर्गादीनां तु कामशब्दोपबन्धाद्भवनसंबन्धो विज्ञायते । कुतः—

स्वर्गो मे स्यादितीत्थं हि स्वर्गादि प्रार्थ्यते भवत् ।
तेनासौ भावनापेक्षः प्रयोज्यत्वेन गम्यते ॥

ततोऽवधृतस्वर्गादिसाध्यांशा भावना केन भावयेदित्येव करणमपेक्षते । तत्र च शास्त्राधीनप्रवृत्तित्वात्तत्संनिकर्षादावाश्रीयमाणे प्रमाणान्तरगम्ययोग्यायोग्यत्वयोरज्ञानादिष्यविरोधाच्चात्यन्तप्रत्यासत्त्युपस्थितधात्वर्थातिक्रमकारणाभावात्सर्वफलभावनानां च केनचिद्धात्वर्थविशेषेण विनाऽनुपपत्तेर्यागेनेत्येव विज्ञायते । यद्यपि च यागः स्वयमेव तावदनिष्पन्नस्तथाऽपि स्वसाधननिष्पादितः सन्साधयिष्यति सर्वेषां च कदाचिन्निष्पन्नं कदाचिदनिष्पन्नम् । न च प्राक्प्रवृत्तेर्निष्पत्तिः क्वचिदुपयुज्यते फलसिद्धिकालमात्रोपयोगित्वात्करणनिष्पत्तेः । प्रमाणवशाच्च त्रिकालवर्तिनामपि साधनत्वाविरोधः । तस्माद्यागादीनां करणत्वं तच्चापूर्वद्वारेणेति तदुक्तेभ्योऽपूर्वप्रतीतिः । अनर्थकमपि सूत्रार्थं समर्थयति । ये भावार्था —भावनाप्रयोजनाः कर्मशब्दाः —धात्वर्थास्तेभ्यः क्रिया प्रतीयेतेति । ननु चोक्तेन कर्मकरणसामान्यायेन सकर्मकधातुयुक्तादेवाऽऽख्या-

तद्भावनाऽवगतिः प्राप्नोति। तथा हि—

येनेप्सिततमं भावेः किमित्यंशोऽवरुध्यते।
तद्योगी तेन धात्वर्थो न कश्चित्स्यादकर्मकः॥

यदि वा सर्वधातूनां सकर्मकत्वापत्तिरथ वाऽकर्मकेभ्यो भावनया न भवितव्यम्। नैष दोषः। कुतः—

अन्यदेव हि धात्वर्थप्राप्यं कर्म सकर्मके।
अन्यदेव च सर्वत्र प्रत्ययार्थनिबन्धनम्॥

ओदनं पचति ग्रामं गच्छतीति धात्वर्थावगम्यमेकं कर्म, अपरं पुनर्भावनाकर्म। तत्र कदाचिद्धात्वर्थकर्मैव भावनाकर्मत्वमपि प्रतिपद्यते पाकेनौदनं भावयतीति। कदाचित्पुनः स्वकर्मविशिष्टधात्वर्थयुक्ता भावना कर्मान्तरेण युज्यते ग्रामगमनेन स्वार्थं भावयेदिति, ओदनपाकेन चेति। तच्चैतद्धात्वर्थोत्पत्त्यनन्तरं तद्व्याप्यमात्रत्वेन गम्यमानं धात्वर्थान्तरतिरोहितं भावनाकर्मतया सर्वत्रावधार्यते। तच्च प्रायेणैवं कामशब्देनैव संबन्धमापद्यते। सुखकाम आसीत, स्वास्थ्यकामः शयीतेति। सत्यपि आसिशेत्योरकर्मकत्वे यः प्रत्ययेन करोत्यर्थोऽभिहितस्तत्कर्मत्वेन च स्वादीन्यवधार्यन्ते। तेन करोतेः सर्वदा सकर्मकत्वादकर्मकाख्यातानामपि च तत्सामानाधिकरण्यदर्शनात्किं करोत्यास्ते, किं करोति शेत इति सिद्धेरभावादिष्वपि सकर्मिका भावना।

यजेरपि तु यत्कर्म पूज्यत्वाद्देवतेष्यते।
तदुज्झित्वैव पुत्रादेः कर्मत्वं भावनाश्रितम्॥

तस्मात्सकर्मकाकर्मकयोरविशेषादासनेन भावयेदित्यपि प्रयोगसिद्धिः। कस्तर्हि सकर्मकाकर्मकयोर्भेदः। उच्यते—

साक्षादव्यभिचारेण धात्वर्थो यत्र कर्मभाक्।
सकर्मकः स धातुः स्यात्पारम्पर्ये त्वकर्मकः॥

अथ कस्मादुभयं सूत्रितं—भावार्थाः कर्मशब्दा इति। उच्यते। भवन्ति केचित् कर्मशब्दा न भावार्थाः, यथा श्येनैकत्रिकादयः। केचिद् भावार्था न कर्मशब्दाः, यथा भवनं भावो भूतिरिति। किं पुनरिहोदाहरणम्। श्येनेनाभिचरन् यजेत, चित्रया यजेत पशुकाम इति। किं श्येनेनाभिचरन्नुत यजेताभिचरन्निति। तथा चित्रया पशुकामः, उत पशुकामो यजेतेति स्थित एतस्मिन्नधिकरणे गुणविधिः, नामधेयमिति विचारो भविष्यति। तथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति दर्शः कालः, पूर्णमास इति च किं ताभ्यां स्वर्गकामः, उत स्वर्गकामो यजेतेति। दर्शपूर्णमासाभ्यामिति च, श्येनेनेति च, चित्रयेति च नैते भाववचनाः। न चैषामर्थेन कश्चित् सम्बन्धोऽस्ति, विविभक्तित्वात्। त-

योर्येति विधीयते। तद्विधानाच्चार्थापत्त्या यागादिविधानमित्युपपन्नं भावार्थसूत्रम्। भवन्ति केचित्कर्मशब्दा यागो यजनमित्येत्युदाहर्तव्ये तत्सामानाधिकरण्यसिद्धश्येनैकत्रिकाद्युदाहरणं यागादिकरणत्वचोदनोत्तरकालभाविकर्मशब्दत्वेन पारतन्त्र्यात्सुज्ञानम्। स्वतन्त्राणां कथंचिदपि भावार्थत्वाशङ्कासम्भवात्। यागादयो हि स्वातन्त्र्येणापि कदाचिदनुमानाद्भावार्थाशङ्काविषयाः स्युरिति। के चिद्भावार्था न कर्मशब्दा यथा भावयेत्कुर्यादिति चोदाहरणं भूत्यादयस्तु प्रयोज्यव्यापारवचनत्वान्नैव यथावर्णितभावार्था इत्यनुदाहरणम्। तत्र यथाकथंचिण्णिजन्तव्युत्पत्त्या भावशब्द एको नीयेत नेतरौ। तावपि तु प्रयोज्यव्यापारांशेन कथंचिद्भावार्थावित्युदाहृतौ। अथ वा द्वितीयसूत्रार्थव्याख्यानेन भावनाप्रयोजनत्वमशब्दवाचित्वे नास्तीति विनाऽपि सकलार्थाभिधानाद्भवन्ति भावार्थाः। कथं पुनरमी न कर्मशब्दा यत्र धातुमात्रं कर्मशब्दत्वेनोक्तं, निर्विशेषस्य सामान्यस्यानुष्ठातुमशक्यत्वादकर्मशब्दत्वम्। अतो विशेषवाचिनामेव धातूनां कर्मशब्दत्वग्रहणादचोद्यमेतत्। यदि हि श्येनचित्रादर्शपौर्णमासशब्दाः फले सम्बध्येरंस्ततो यागकरणत्वाभावात्तत्सामानाधिकरण्यनिमित्तनामधेयत्वानुपपत्तेः प्रसिद्ध्यादिभिर्गुणविधित्वमेव स्यादत स्थित एतस्मिन्नधिकरणे इत्याह। कस्मात्पुनरिदं तत्रैव न नीतं प्रमाणलक्षणेनासम्बन्धात्। अथ नामधेयत्वं कस्मादत्र नाऽऽनीयते भेदलक्षणेनासम्बन्धात्। तस्माद्यथान्यासमेव स्थितयोरर्थात्पौर्वापर्यसिद्धिः। न चैषामर्थेनेति—फलपदाभिप्रायम्। विविभक्तित्वादिति। सम्बन्धनिमित्तार्थानां विभक्तिविगमादथ वा निष्पन्नार्थाभिधायिषु विभक्तिविशेषयोगो विविभक्तित्वम्। तस्मात् द्रव्यादिशब्दानां फलसम्बन्ध इति। आह च—

स्यार्थे द्रव्यगुणशब्दा अपूर्वस्य विधायका इति ॥ १ ॥

सर्वेषां भावोऽर्थ इति चेत् ॥ २ ॥

एवं चेद् भवान् पश्यति, अभावशब्दत्वान्न द्रव्यगुणशब्दा अपूर्वस्य विधायका इति, सर्वेषां भावोऽर्थः । स्वर्गकामो दर्शपूर्णमासाभ्यामित्येतयोः संबन्धं यजेतेति करोति, श्येनेनाभिचरन्यजेतेत्यनयोश्च । तथा, चित्रया यजेत पशुकाम इति । तस्मादेतेऽपि साकाङ्क्षत्वाद् भाववचनाः । सर्वेषु भाववचनेषु नास्ति विनिगमनायां हेतुः । कर्मशब्दा एवापूर्वस्य विधायका न द्रव्यगुणशब्दा इति ॥ २ ॥

येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात् स्वे प्रयोगे ॥ ३ ॥

येषां शब्दानामुच्चारणोत्पत्तौ स्वेऽर्थे प्रयुज्यमानानां रूपमुपलभ्यते, यत् सकृदुत्पन्नं कालान्तरं तिष्ठति, न क्रियेवोत्पन्नमात्रं विनश्यतीत्यर्थः । तानि नामानि । ते द्रव्यगुणशब्दाः । ईदृशो द्रव्यगुणशब्दानामर्थः । ते द्रव्यगुणशब्दा इति वक्तव्ये तानि नामानीति सूचितम् ।

---

साध्यसाधनसंबन्धः सर्वदा भावनाश्रयः ।
तेन तस्य न सिद्धिः स्याद्भावनाप्रत्ययादृते ॥ १ ॥
न तावत्प्रत्ययस्येष्टमपूर्वप्रतिपादनम् ।
न च धातोः स्वतन्त्रस्यास्त्यसौ वा परतः समम् ॥

यदि हि भावनावचनस्यैवापूर्वप्रतिपादकत्वमिष्यते धातोर्वा प्रत्ययनिरपेक्षस्य ततो नामपक्षो दुर्बलः स्यादिह तु यथैव धातोः प्रत्ययसंबन्धानुगृहीतस्य भावनानुरञ्जनानिमित्तं करणत्वाविरुद्धं भवत्येवं नामपदस्यापीत्यविशेषः ॥ २ ॥

यदुक्तं यद्येकस्मादपूर्वं तदेतरस्यापि भविष्यतीति तद्गतं तावद्वस्तुधर्मेण विशेषं दर्शयति । कथम्—

महददृष्टप्रसङ्गाद्धि धर्मो नेष्टः पदे पदे ।
नाम्नः फलेन संबन्धे परिहारो न तस्य च ॥

एकस्माददृष्टे कल्पिते यदीतरद् दृष्टार्थत्वेन तादर्थ्यं भजते ततो लाघवं लभ्यते । अस्य तु तादर्थ्यसिद्ध्ये ततोऽपि पुनरदृष्टं कल्प्यत एव ततो वरं फलेनैव सर्वाणि संबद्धानि । न च संबन्धवैरूप्यक्लेशाश्रयणं, नाम्नश्च फलसंबन्धेऽवश्यं धात्वर्थस्तदनुग्रहार्थोऽभ्युपगन्तव्यः । स च स्वयं निष्पाद्यः सिद्धस्य नामार्थस्य न शक्नोति दृष्टे-

अतो नामानीत्येषा पर्यायशब्दः । कथं गम्यते, यत एषा विभक्तयो नामिक्य उच्यन्ते । कतमास्ताः । वृक्षः वृक्षौ वृक्षाः, शुक्लः शुक्लौ शुक्लाः इत्येवमादयः । तस्मात् सम्यक् सूत्रितम् । यत एषां न क्षणिकोऽर्थस्तत स्तेभ्यः पराकाङ्क्षा प्रधानाकाङ्क्षा न विद्यत इति । नैषामुत्पत्तिः कर्तव्या । भूतत्वात् स्वे प्रयोगे स्वप्रयोगकाले विद्यमानत्वादित्यर्थः ॥ ३ ॥

येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि तस्मात्तेभ्यः प्रतीयेताऽऽश्रितत्वात् प्रयोगस्य ॥ ४ ॥

येषां तु शब्दानामुच्चारणोत्पत्तौ स्वेऽर्थे प्रयोगो न विद्यते । प्रयोग काले येषामर्थो नोपलभ्यत इत्यर्थः । तान्याख्यातानीति भावशब्दान् पर्यायशब्देनोपदिशति । कथं पर्यायशब्दता भावशब्दानाम् । यत एषा विभक्तय आख्यातिक्य इत्युच्यन्ते । कतमास्ताः । पचति पचतः पचन्तीत्येवमादयः । तस्मात्तेभ्योऽपूर्वं प्रतीयेत । भव्यार्थास्ते भूतार्थैः समुच्चारिताः । भूतस्य भव्यार्थतया दृष्टार्थता, भव्यार्थस्य प्रयोजन वत उत्पत्तिरर्थवती । सा च भूतेन क्रियत इति दृष्टोऽर्थः । भव्यस्य पुनर्भूतार्थतया न किंचिद् दृश्यते, कल्प्यते चादृष्टम् । तस्मान्न यागो द्रव्यार्थः ।

नोपकर्तुम् । न हि नामार्थस्तमपेक्षते शब्दप्रयोगवेलायामेव निष्पन्नतया गम्यमानत्वादपेक्षणीयस्य वा सिद्धत्वेनायोग्यत्वात्प्रयुज्यतेऽस्मिन्निति चाभिधेय एव प्रयोग । तदाधारेव हि निष्पन्नरूपोपलब्धिरनुत्पन्नत्वे क्रियारूपस्य वक्तव्ये विनाशित्वप्रदर्शन निष्पन्नस्यापि क्षणिकत्वेन पुन पुनर्निष्पत्त्यपेक्षोपपत्ते । तेभ्य पराकाङ्क्षा—अन्याकाङ्क्षा, निष्पाद्यत्वेन वा प्रधानाकाङ्क्षा न विद्यत इत्यध्याहार । अथ वा तेभ्य परा—दूरे, आकाङ्क्षेत्यर्थ । कुत , भूतत्वादेवेति । स्वरूपकथनार्थमुपन्यस्त निष्पन्नत्वादेवेति । पुनरन्ते तदेव हेतुत्वेनोद्दिष्ट सूत्रकारेण ॥ ३ ॥

> आख्यातवर्ती धात्वर्थ साध्यरूप प्रतीयते ।
> तस्मिन्फलवतीष्टे तु नाम्नो दृष्टार्थतेष्यते ॥

धात्वर्थस्तावत्प्रकृत्यैव साध्यात्मको विशेषतस्त्वाख्यातगतेन धातुनोच्यमान । स यदि फलसाधनत्वेन चोद्यते ततोऽसिद्धरूपत्वात्तस्य साधनाकाङ्क्षायां सत्या नामपद गुणविधित्वेन नामधेयत्वेन वोभयथाऽपि दृष्टेनैव तादर्थ्यं लभते । ननु नामधेयपक्षे नाम पदमपि साध्यार्थं भविष्यतीति धातुतुल्य स्यात् । न । तस्य फलसम्बन्धे गुणविधित्वेन सिद्धार्थत्वात् । अपि च—

१ निष्पाद्यत्वेन प्रधानस्य सता या साधनाकाङ्क्षा सा न विद्यते निष्पाद्याभावादित्यर्थ ।

किंच, आश्रितत्वात् प्रयोगस्य । एतेषां प्रयोगः पुरुषेणाऽऽश्रितो भवति, पुरुषसंबद्धा भावनोच्यते । पुरुषं हि वदति । भावयेदिति । तेन स्वर्गकामो यजेतेति पुरुषोऽपि प्रतीयते, यागोऽपि संबन्धोऽपि । स्वर्गकामो द्रव्येणेति द्रव्यं प्रतीयते पुरुषश्च, न तु संबन्धः । नन्वेतदुक्तं भवति । अर्थिनश्च द्रव्यस्य च संबन्धं यजेतेति वक्ष्यति, द्रव्येण भावयेदिति । अतो द्रव्येणार्थस्य भावना गम्येत, आकाङ्क्षा चेति । सत्यं गम्यते । द्रव्येण भावयेदिति तु वाक्येन, यागेन भावयेदिति तु श्रुत्या । यदा तु, यागेन भावयेदिति यागसंबन्धो विधीयते, न तदा द्रव्येण भावयेदिति द्रव्यसंबन्धः । न च द्रव्यसंबन्धे विधीयमाने यजेतेत्यनेन संबन्धः । अनूद्यमाने तु संभवति । न च यौगपद्येन विध्यनुवादौ संभवतः । तस्माच्छ्रुतिवाक्ययोर्विरोधः । विरोधे च श्रुतिर्बलीयसी । तेनार्थिना न द्रव्यसंबन्धः । तत्र द्रव्यमसति स्वर्गकामसंबन्धे स्वर्गार्थं भविष्यतीत्यनुपपन्नम् । एष विनिगमनायां हेतुर्येन भावशब्दा एवापूर्वस्य चोदकाः, न द्रव्यगुणशब्दा इति । यदा यागेन कुर्यादिति तदा यागवचनमेव भवति दर्शपूर्णमासाभ्यामिति लक्षणया, दर्शे च पूर्णमासे च यागो विहित इति ॥ ४ ॥

कथं पुनरिदमवगम्यते, अस्ति तदपूर्वमिति । उच्यते—

[२] चोदना पुनरारम्भः ॥ ५ ॥ सि० ॥

---

साध्यात्मकोऽपि धात्वर्थो यदा नाम्नाऽभिधीयते ।
तदा द्रव्यवदेवासौ निष्पन्नात्मा प्रतीयते ॥

यद्यपि वस्तुस्वरूपेण धात्वर्थः साध्यस्तथाऽपि नामपदेनोच्यमानो लिङ्गसंख्यायोगित्वात्सिद्धरूपोऽभिधीयते । अभिधानकृता चाऽऽकाङ्क्षोत्पत्तिर्न वस्तुकृता । तस्मादुक्ता धातोरेवाऽऽकाङ्क्षा न नाम्न इति । किंचाऽऽश्रितत्वात्प्रयोगस्य इति । अधुना शब्दप्रत्यासत्तिकृतो विशेषोऽभिधीयते । पुरुषव्यापारात्मिकायां भावनायां धात्वर्थोपश्लेषोऽपि पुरुषेणाऽऽश्रितस्तत्प्रतिक्रमहेतुत्वभावाच्च न नामपदश्रवणम् । तस्मादस्ति विशेषः ॥ ४ ॥

( इति भावार्थाधिकरणम् ॥ १ ॥ )

चोदनेत्यपूर्वं ब्रूमः। अपूर्वं पुनरस्ति, यत आरम्भः शिष्यते स्वर्गकामो यजेतेति। इतरथा हि विधानमनर्थकं स्यात्। भङ्गित्वाद्यागस्य। यद्यन्यदनुत्पाद्य यागो विनश्येत्, फलमसति निमित्ते न स्यात्। तस्मादुत्पादयतीति।

---

सिद्धं कृत्वाऽपूर्वं तत्प्रतिपत्त्युपायशब्दविशेषविचारः कृतः। तस्य सिद्धत्वमेवाप्रसिद्धमतस्तदेव तावत्प्रतिपादनीयमित्यत आह—

फलाय विहितं कर्म क्षणिकं चिरभाविने।
तत्सिद्धिर्नान्यथेत्येवमपूर्वं प्रति गम्यते॥

वेदवाक्योपात्तस्वर्गयागादिसम्बन्धान्यथानुपपत्त्या चोदनयैवापूर्वमपि चोदितं भविष्यतीति प्रमाणवत्। तस्मादस्त्यपूर्वमिति। अत्रापरे निपुणमन्यास्तन्निराकरणमाहुः—

प्रमाणपञ्चकाज्ञानादपूर्वं षष्ठगोचरं।
तस्मादन्वर्थनामैतन्न वस्तुत्वेन गम्यते॥

वस्त्ववबोधनार्थानि प्रत्यक्षादीनि पञ्च प्रमाणानि। तद्यत्र तानि न प्रवर्तन्ते तदभावेनाभावात्मनैवावगम्यते। न चापूर्वे तानि प्रवर्तन्ते। तस्मात्सर्वप्रमाणापूर्वत्वादन्वर्थनामैवासद्रूपमपूर्वं प्रतिपत्तव्यम्। तत्र प्रत्यक्षेण तावन्नावगम्यते, रूपाद्यनात्मकत्वेन चक्षुरादिभिरसम्बन्धात्। नाप्यनुमानेन, केनचिल्लिङ्गेन सहादृष्टसङ्गतित्वात्। न हि विशेषतः सामान्यतो वाऽस्य केनचित्सम्बन्धोऽनुभूतपूर्वः। सर्वत्रैव च वस्तुसत्ताबोधायानुमानमपर्याप्तमित्युक्तं प्राक्।

पदवाक्ये न चैतस्य वाचके शृणुमः क्वचित्।
शब्दगम्यत्वमप्यस्य तेन नैवोपपद्यते॥

आगमिकत्वमप्यस्य पदेन बोध्यमानस्य स्याद्वाक्यगम्यस्य वा। तत्र पदं न तावत्किंचित्साक्षादेतस्य वाचकमस्ति। यत्त्वपूर्वमिति तदन्वर्थत्वात्सुतरामसत्त्वं बाधते। न च प्रमाणान्तरानवगतेऽर्थे पदं प्रवर्तते। न च स्वातन्त्र्येण प्रमाणमिति स्थितम्। तथा च वाक्यस्यावाचकत्वादेवाप्रामाण्यम्। न च केचित्पदार्थाः श्रूयन्ते येषां भेदः संसर्गो वाऽपूर्वं भवेत्। येऽपि शब्दान्तरादयः श्रुतिलिङ्गादयश्च शब्दप्रकारास्तेऽपि च स्वभावसिद्धे वस्तुनि भेदे विनियोगे वा कारणं न सद्भावे कस्यचिदित्यपूर्वे प्रत्ययप्रमाणम्। उपदेशानवगते चातिदेशोऽपि न प्रवर्तते विशिष्टातिदेशविषयत्वाच्च समस्तस्य वेदस्य। न कश्चिद्वस्तुस्वरूपप्रतिपादनार्थत्वं भवतीति नाऽऽगमगम्यमपूर्वम्। न चादृष्टपूर्वस्यादृष्टसदृशस्य चोपमानविषयत्वम्। कामं वाऽनुपलभ्यमानशशविषाणादिसारूप्यादभावात्मकं चोपमानप्रसङ्गः। तस्मादसद्रूपेणोपमेयम्।

---

१ सत्ता च नानुमानेन कस्यचित्संप्रतीयते। इत्यनेन प्रत्यक्षसूत्रे श्लोकवार्तिके उक्तमित्यर्थः।

अर्थापत्त्याऽपि नैवैतदस्तीत्येवं प्रतीयते ।
अन्यथाऽप्युपपन्नत्वात्फलयागादिसंगतेः ॥

दृष्टार्थापत्तिस्तावद्धर्मास्तित्ववदेवात्रापि निराकर्तव्या । स्वभावादिनाऽपि ईश्वरदरिद्रादिवैचित्र्योपपत्तेः । श्रुतार्थापत्तिरपि कीदृशी भवति यत्र प्रत्यक्षेणैवानुपपत्तिर्दृश्यते । न च कल्प्यमानोऽर्थः केन चिद्विरुध्यते, तद्यथा 'स्रुवेणावद्यति' इत्युक्ते न च कथंचिदपि मांसपुरोडाशादीनि तेनावदातुं शक्यन्त इति । प्रत्यक्षगम्यत्वात् । अपि च तत्रापि प्रसक्तेरेवं कल्प्यते द्रवाणामिति । न चैषा कल्पना केन चिद्विरुध्यते श्रुतहान्यश्रुतपरिकल्पनाभावात् । अपूर्वं तु न कदाचित्फलसाधनत्वेन संभाव्यते । यतोऽन्यकारणनिषेधे सति तद्विषया परिशेषसिद्धिः स्यात् ।

यदि त्वन्यनिवृत्त्यैव परिशेषः प्रकल्प्यते ।
शशशृङ्गनिमित्तत्वं फलानां किं न गम्यते ॥

न हि कारणान्तरप्रतिषेधमात्रेणापूर्वनिमित्तता गम्यते, शशविषाणादिभिरनैकान्तात् । अपि च यदि तावदपूर्वं यागस्य साध्यमिष्यते ततः श्रुतं स्वर्गं परित्यज्याश्रुतं परिकल्पितं भवेत् । अथ फलं प्रति साधनभूतं, ततः श्रुतयागपरित्यागात्सैव गतिः । न चाऽऽकारान्तरेण[1] तन्निरूपयितुं शक्यते । तेनाऽऽगमप्रामाण्याद्यागादेव फलेन भवितव्यम् । कथं नष्टः साधयतीति चेत् । यदि शास्त्रादेवं गम्यते किं भवतो विरुध्यते । ध्रियमाणेन वा फलं साधनीयमित्यत्र किं प्रमाणम् । अपि चाऽऽकाशादीनि नित्यावस्थितानि कस्मात्फलं न साधयन्ति । यदि च श्रूयमाणातिरेकेणावस्थायित्वसंभवादपूर्वेण फलं साध्यत इति कल्प्यते ततो वरमाकाशादेरेव कल्पितं, तस्य हि स्थानसद्भावावपि तावत्प्रसिद्धौ केवलं फलनिमित्तत्वमाश्रयणीयम् । अपूर्वे तु सद्भावप्रभृति सर्वं निष्प्रमाणकं कल्पनीयम् । अथ यागसंबन्धिना केनचिदवस्थितेन फलं दातव्यमित्यभिप्रायः । तथा सत्यपि—

यष्टुरेवाऽऽत्मनो यागैः संगतस्य स्थितस्य च ।
निमित्तत्वं वरं क्लृप्तं लाघवं हि तथा सति ॥

यदि यागस्य विनाशित्वादन्येन तत्संबन्धिना फलं साध्यमानं यागेन साधितं भवति ततो लाघवादविक्रान्तयागेनाऽऽत्मनैव वरं साधयितव्यम् ।

यद्वा कर्मविनाशोऽयं फलं नः साधयिष्यति ।
भक्तियागविधानाद्धि तदयत्नेन कल्प्यते ॥

---

१ साध्यसाधनभावरहिताकारान्तरेण नापूर्वं निरूपयितुं शक्यमित्यर्थः ।

विनाशिनि हि कर्मणि चोदिते किं दृश्यते, कर्म च विनष्टं शास्त्रप्रत्ययाच्च कालान्तरे फलं भविष्यतीति निश्चीयते । यच्चै यत्, प्रतीत्योपजायते तत्र तस्य निमित्तत्वमित्यवधार्यते । तस्मादभावनिमित्तमेव फलमस्तु । स्यादेतत् । न कश्चिदवस्तुनः साधकत्वं दृष्टमिति । तदुच्यते । अपूर्वस्य वा क्व दृष्टं येनात्राऽऽश्रीयते तदवश्यकर्तव्ये लौकिकनिमित्तधर्मातिक्रमे किमपूर्वनिमित्तत्वं कल्प्यतामुताभावनिमित्तत्वमिति, वलृप्ताभावनिमित्तत्वातिलङ्घनेन काल्पनिकापूर्वनिमित्तत्वपरिग्रहो न युज्यते । किं च—

यदि चैवान्ततो ब्रूयु. शब्दाः कालान्तरे फलम् ।
ततस्तेनैव कल्प्येत निमित्तं वस्तु किंचन ॥

क्रियाफलसंबन्धप्रतिपत्तिमात्रचरितार्थासु चोदनास्वनुपात्ते कालान्तरे कर्मस्वभावादानन्तर्ये गम्यमाने कुत एतत्कालान्तरभावि फलं तत्सिद्ध्यर्थं चापूर्वं कल्प्यत इति । तत्रैतत्स्यात् । कृते कर्मण्यनन्तर फलमनुपलभ्य कालान्तरफलोत्पादद्वारमपूर्वकल्पनमिति । तदयुक्तम् । कुत.—

पूर्वं निश्चित्य शास्त्रार्थं प्रयोगे हि प्रवर्तते ।
प्रयोगोत्तरकाले तु न शास्त्रार्थोऽवधार्यते ॥

'नह्यविद्वान्विहितोऽस्ति' इति तावदवश्यं यावच्छास्त्रगम्य तत्सर्वं प्रागनुष्ठानादवगन्तव्यम् । न च तत्काले कर्मफलकालवियोगज्ञानकारणमस्ति । यच्च शास्त्रप्रवृत्तिवेलाया तदन्तर्गतत्वेन नावधारितं तदुत्तरकालमेवावधार्यत इति कुत एतत् । अपि च—

सर्वकर्तृष्वशक्तत्वाद्वैगुण्यं संप्रतीयते ।
तेन च प्रतिबद्धत्वात्कार्यापत्तिरपूर्वभाक् ॥

दृश्यत एवानन्तरफलानुत्पत्तिकारणवैगुण्यमिति न कालान्तरफलसिद्ध्यर्थमपूर्वं कल्पनीयम् । अनैकान्तिकी हि तदाऽर्थापत्तिर्वैगुण्यमेव परमननुभूतमपि कल्पयेत् । न च जन्मान्तरफलोपपत्त्यर्थमपूर्वकल्पना । कुत.—

सुखदुःखात्मकत्वेन समानेष्वेव जन्मसु ।
क्रियानन्तरमेवेह स्तः स्वर्गनरकावपि ॥

१ यच्चेति—यच्च—फल, यत्—विनष्टं कर्म, प्रतीत्य—अधिगम्य, प्राप्येत्यर्थः । २ यज्ञोके तृप्त्यादिफलोत्पत्तिनिमित्तस्य भोजनादे. क्रियात्वं धर्मो दृष्टस्तदतिक्रमेत्यर्थः । ३ ( अ० ३ पा० ८ अ० ८ सू० १८ ) । ४ सर्वेषु पदार्थेषु बहवः कर्तारस्तेषु मध्ये, क्वचित्पदार्थे कस्यचित्कर्तुरशक्तेरपरिहार्यत्वादित्यर्थः ।

न हि स्वर्गनरकौ नाम निरतिशयसुखदुःखस्वभावौ देशविशेषात्मकौ वा यावि[1]हैव जन्मनि नानुभूयेयाताम् । अलौकिकानां जिहासोपादित्सानुपपत्तेः । ये तु लौकिके प्रकृष्टे सुखदुःखे ते कर्मानन्तरमेव संभाव्येते इत्यविशेषः । किं च—

प्रतिषेधेषु चापूर्वं न शास्त्रार्थेन जन्यते ।
तदतिक्रमजन्यं तु न भवेच्छास्त्रपूर्वकम् ॥

' ब्राह्मणो न हन्तव्यः ' इति हि निवृत्तिः शास्त्रार्थः । न च तया कालान्तरे किंचिज्जनयितव्यमिति नापूर्वकल्पनामपेक्षते । हननस्य तु नरकपातः फलं, तद्यदि तेनाऽपूर्वं जन्येत ततो हननस्याचोदितत्वाल्लौकिकक्रियाजन्यं सदपूर्वं न वेदमूलं स्यात् । कल्पितमपि च तत्क्रियत्वाचैव देशान्तरे शरीरादिप्रापणसमर्थमित्यनर्थकम् । न चास्याऽऽश्रयः संभवति, क्रियाश्रयस्य पुरोडाशादेर्विनष्टत्वात्तद्व्यतिरिक्ते चाऽऽरम्भानुपपत्तेः । एवमङ्गापूर्वाण्यपि निराकर्तव्यानि । किं च—

अङ्गानि यदि वाऽपूर्वं कुर्वन्त्याराद्व्यवस्थितम् ।
असंबन्धात्प्रधानानां न स्यात्तेनोपकार्यता ॥

न हि कल्पितमप्यङ्गापूर्वं प्रधानैरसंबध्यमानमुपकर्तुं समर्थं, न चामूर्ते प्रधाने तदपूर्वं वा निपतितुं समर्थम् । यदपि च प्रोक्षणादिनिमित्तं द्रव्यसमवायि तदपि तन्मात्रोपक्षीणत्वादन्यत्रासंचरच्चैव फलसाधनस्यापूर्वस्योपकुर्यात् । अथ त्वङ्गापूर्वाण्यपि यजमानात्मन्येवावतिष्ठेरन्, एवं सति पुरुषार्थत्वापत्तेः कर्माङ्गत्वहानिः स्यात् । अपि च युगपत्प्रयोगवचनेन ग्रहणादङ्गापूर्वैर्युगपदेवोपकर्तव्यम् । न च परस्परेणासंबद्धानां यौगपद्यं संभवति । न चैषां कश्चित्संबन्धे हेतुरस्ति । एतेन प्रधानापूर्वाणां फले यौगपद्यं प्रत्युक्तम् ।

तस्मात्कृतत्वमात्रेण प्रधानं पुरुषे फलम् ।
अङ्गानि च प्रधानेषु जनयन्तीति गम्यते ॥

न चापूर्वस्योत्पत्तिरभिव्यक्तिर्वोपपद्यते । कुतः—

न तावदुत्पत्तिजन्यं कर्मभिः क्षणवर्तिभिः ।
न चानवयवत्वात्तत्क्रमशोऽपि प्रतीयते ॥

एवं तावन्नोत्पद्यते । न चाभिव्यज्यते । कथम् ।

इन्द्रियार्थाभवेषां मः संस्काराभिव्यक्तिरिष्यते ।
न च यागादिभिः किंचित्संस्कृतं संप्रतीयते ॥

सर्वाभिव्यक्तीनां समान्यत्वसंस्कारहारत्वात्संस्कारान्तरमवश्यं कल्पनीयं तत्र पुनः

---

[1] स्वर्गनरकयोरप्यैहिकत्वेन पश्वादेरविशेष इत्यर्थः ।

स एव क्लेश इत्यप्रमाणता । यदि च क्रियानन्तरमपूर्वमुपलभ्येन ततोऽभिव्यज्यत इति ब्रूयाम । यदि चास्य प्रागस्तित्वे प्रमाणं भवेत् । न तु तदुभयमप्यस्तीति । सर्वथा नास्त्यपूर्वं । न चैतत्सूत्रं तत्प्रतिपादने विस्पष्टमित्यव्याख्यानमेतत् । अत्रोच्यते । यदिदं स्वमतिपरिकल्पितं विग्रहवदेवापूर्वं भवद्भिर्निराक्रियते न तेनास्माकं किंचिद्विरुध्यते । यतो नैवत्तादृशं कस्यचिदिष्टं, किं तर्हि—

कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा ।
योग्यता शास्त्रगम्या या परा साऽपूर्वमिष्यते ॥

प्रधानकर्मणामङ्गकर्मणा वा प्राक्करणात्स्वर्गादिप्राप्त्ययोग्या पुरुषाः क्रतवश्च स्वर्गकार्यायोग्याः । तामुभयीमप्ययोग्यता व्युदस्य प्रधानैरङ्गैश्च योग्यतोपजन्यत इत्यवश्यं सर्वेणाभ्युपगन्तव्यम् । असत्यां तस्यामकृतसमत्वप्रसङ्गात् । सैव च पुरुषगता क्रतुगता वा योग्यता शास्त्रेऽस्मिन्नपूर्वमित्यपदिश्यते । यत्तु प्रत्यक्षादिगम्यत्वमस्य नास्तीति सत्यं, श्रुतार्थापत्तिव्यतिरिक्तैर्न गम्यते न त्वदोषः । किं कारणम्—

श्रुतार्थापत्तिरेवैका प्रमाणं तस्य वेष्यते ।
शब्दैकदेशभावाच्च स्वार्थेऽप्यागम एव न ॥

येन वाक्येन यागात्स्वर्गो भवति प्रयाजादिभिश्च प्रधानोपकारो भवतीत्येतच्चोद्यते तेनावश्यं विनष्टानामविनष्टानामपि चैषां काऽपि स्वकार्योत्पादनशक्तिरस्तीत्यभ्युपगन्तव्य सर्वभावानामशक्तानां कार्यारम्भाभावात् । नियोगतश्चात्रातीतानामेव शक्तिरेष्टव्या । कुतः—

क्षणिकत्वेन सर्वत्र नैकस्यापि हि कर्मणः ।
कथंचिद्युगपद्वृत्तिः फले किमुत भूयसाम् ॥

यदैव हि कर्म गृहीतं तदैव हि क्षणिकसूक्ष्मावयवत्वात्फलं प्रति युगपद्भावितुमसमर्थं किमुत यान्यनेककालभावीनि दर्शपूर्णमासप्रभृतीनि । यदा हि पूर्णमासो भवति न तदा दर्शो यदा दर्शस्तदा पूर्णमासश्चिरविनष्टस्तथैकस्मिन्नेव समुदाये यदाऽऽग्नेयस्तदाऽग्नीषोमीयो पांशुयाजो न स्तः, यदा तयोरेकस्तदेतरौ न विद्येते इति यौगपद्यासंभवः । तद्यदा दर्शपूर्णमासस्तत्त्वयवो वा कश्चित्पुरुषे शक्तिमनाधायैव विनश्येत्तत प्रागवस्थातुल्यत्वाद्-सत्कर्मणा पूर्वं सह स्वफलं शक्तिर्नो वा साहित्याभावाच्च केवलकरणात्तस्थाद्विशेष इति सहितसाध्यत्वेन श्रुतं फलं साहित्यासत्त्वात् नोपपद्येत । न हि केवलो दर्शस्तत्साधनत्वेन श्रूयते तदन्यो वा कश्च । नियोगतश्च कर्मानन्तरफलोत्पत्तिर्वादिनाऽपि सर्वकर्मान्ते ऽभ्युपगन्तव्या । तत्र यस्यैवाऽऽनन्तर्यं तदेवैकं साधनं प्राप्नोति नेतराणि चिरविनष्टत्वात्पूर्वाणि शास्त्रचोदितानि तेन स्वरूपाणामतन्त्रत्वात्तेष्वस्त्यपि प्राग्यागस्य वाङ्मात्रं परिश्रियते । तथा चाऽऽह—

शक्तिभिः सर्वभावानां व्यवहारानुपातिता ।
तेनान्यदेशकालेऽपि रूपे तासां स सिध्यति ॥
लौकिकं चापि यत्कर्म फले कालान्तरोद्भवे ।
तत्रापि शक्तिरेवाऽऽस्ते न त्वपूर्वमिहेष्यते ॥

यान्यपि च लौकिकानि कृषिघृतपानाध्ययनप्रभृतीनि कर्माणि कालान्तरफलत्वेने-ष्यन्ते तेषामपि स्वरूपावस्थानासम्भवात्संस्कारैरेव तिष्ठद्भिर्व्यवहारसिद्धिः । ते त्ववैदिक-त्वात्संस्कारा नापूर्वशब्दाभिधेयत्वेन प्रसिद्धाः । तेन प्रागेवानुष्ठानाच्छास्त्रश्रवणवेलायामेव क्षणिकानेकाङ्गप्रधानप्रयोगसाध्यं फलं विदित्वा शास्त्रप्रत्ययादेषा बुद्धिर्भवति नूनं केना-प्यात्मना समस्तान्यङ्गप्रधानानि फलकालं यावत्तिष्ठन्तीति । प्रत्यक्षं च स्वरूपभङ्गदर्शनान्न शक्तिव्यतिरिक्तस्यावस्थानोपपत्तिः । यत्तु श्रुतहान्यश्रुतकल्पनाप्रसङ्ग इति । तत्र—

यागादेव फलं तद्धि शक्तिद्वारेण सिध्यति ।
सूक्ष्मशक्त्यात्मकं वा तत्फलमेवोपजायते ॥

यदि ह्यसम्बन्धिना केनचित्फलं साध्येत ततो दोषः स्यात् । यागाहितया तु शक्त्या साध्यमानं यागेनैव साधितं भवति । सर्वसाधनानामिष्टफलप्रवृत्तानामान्तरालिकव्यापारा-वश्यभावित्वात् । अथ वा सर्वमेव कार्यं दध्यादि क्षीरादेरुत्पद्यमानं न सहसैव स्थूले-नैवाऽऽत्मनोत्पद्यते । किं तर्हि, सूक्ष्माणि तावद्रूपान्तराण्यनुभवति । एवं स्वर्गादयोऽप्यङ्कु-रादिस्थानीयां तावदपूर्वावस्थां प्रतिपद्यन्ते तया चोत्पद्यमानया त एवोत्पन्ना भवन्तीति । एतावानेव चात्र वर्तमानः कालो यदच्युतिः कर्मसम्बन्धात्प्रभृत्यासर्वान्त्यफलावयवोपभोगात्[1] । आह च—

काष्ठे पचत्यपीत्युक्ते निर्दिष्टा ज्वलनक्रिया ।
अङ्कुरे जायमाने च वृक्षोऽप्युत्पन्न इष्यते ॥

यत्तु समाम्नानादृष्टमपूर्वं नाऽऽरूढमिति । तदयुक्तम् । कुतः—

विनाशित्वेन विज्ञातं साधनं लोकवेदयोः ।
असंभावितसामर्थ्यस्थायित्वं[2] चोद्यते कथम् ॥

नूनं विनश्यदप्येतस्य सामर्थ्यं फलनिर्वृत्तिकालावधि यावदास्त इति हि यावन्ना-वधार्यते तावद्विनाशिनी क्रिया चोदयितुमेवाशक्या । तस्मात्समाम्नानादवधारणा च

१ यदा च स्थाप्यपूर्वं शक्त्यात्मकं यागकर्मफलाभ्यामनत्यन्तभिन्नं तदा फलं भावयेदनेनेत्थमि-ति त्रयाणामपि भावनांशानां यौगपद्याभिधानमपि कर्मफलकालव्यापाराविच्छेदादुपपन्नं भवति । एतावानित्यादिना । २ न संभावितं सामर्थ्यरूपेण स्थायित्वं यस्येति विग्रहः ।

प्रथममेव सिद्धेति ।

न वाऽतिक्रान्तयागेभ्य पुरुषेभ्य फलोद्गति ।
अतिक्रान्तानतिक्रान्तविशेषस्तत्र नास्ति हि ॥

यदि ह्यनाहितसंस्कारा एव यागा नश्येयुस्तत प्रागवस्थातुल्यत्वादतिक्रान्तानतिक्रान्तयागयो को विशेष स्यात् । आत्मतत्त्व तावदविशिष्टमुभयो । यागत्वमपि हि विनष्टाकृतयागयोस्तुल्यम् । न च क्रियारहितस्यावस्थान्तरगतस्य वा कर्तृत्वमवतिष्ठते । कर्तृशक्तिस्तिष्ठतीति चेत् । न । तस्या प्रागपि यागकरणाद्विद्यमानत्वेनाकरणत्वात् । अपि च यदि पुरुष फलसाधन सर्वकर्मणा शुभाशुभानामविशिष्ट इत्येकरूपफलप्रसङ्ग । तथैकेन यागेन बहुभिश्च तदतिक्रमलक्षणलक्षितत्वाविशेषाद्बहुयाजिन फलविशेषो न स्यात् । एतेनैव बहुप्रयोगानुष्ठायिन प्रत्युक्ता । कर्मैवमिथ्यायिति वाऽऽख्याते कथमयमर्थो विज्ञायते । यस्य त्वपूर्वाणि क्रियन्ते तस्य प्रतिकर्म प्रतिप्रयोग च तद्भेदादुत्पन्ने फलनानात्ववैचित्र्ये । किं च ।

अङ्गमध्येऽपि कर्तैव भवेच्चेदुपकारक ।
प्रसङ्गसिद्धेरङ्गानामप्राप्तिर्विकृतौ भवेत् ॥

प्रयाजादीनामपि क्षणिकत्वात्स्वरूपसांनिध्याभावे भवत्पक्षे कर्तैव प्रधानोपकार कर्तव्य इति सोऽपि चापूर्वाभावात्कर्त्रात्मन एवोपकारकस्तत्र येन प्रकृतौ प्रयाजादय कृतास्तस्य विकृतिषु तद्धृतोपकारसद्भावाद्भिनाऽपि तन्त्रमध्यविधानेन तत्फलावाप्ते प्रसङ्गलक्षणमस्तीति न पुनरङ्गान्यनुष्ठातव्यानि । तत्र ' प्रयाजे प्रयाजे कृष्णल जुहोति ' इत्यादीनि नोपपद्येरन् । नन्वन्यस्मिन्काले भेदान्नैतत्प्रसज्यते । वक्ष्यत्यस्योत्तरम् ' अर्थेनाविकृतत्वात् ' इति । यदेव हि प्रत्यासन्नानि प्रति कर्त्रात्मक तदुपकाररूपमिष्यते तदेव दूरस्थायामपि विकृतावित्यविशेषः । एते कर्मविनाशपक्षेऽपि दोषा प्रसक्तव्या । यस्यापि च कर्मविनाशादेव फल भविष्यतीत्यभिप्रायस्तस्यापि शुभाशुभैकानेककर्मतत्प्रयोगविनाशाना प्रागभावप्रध्वंसाभावाना वाऽवस्तुत्वेनाविशेषात्फलभेदवैचित्र्यानुपपत्ति । तथा हि—

एको रोगो हतो यस्य यस्य वाऽपहृता दश ।
अरोगित्वे तयोर्भेदो न कश्चिदपि दृश्यते ॥

यदि [illegible] प्रतिकर्म विनाशाना वैचित्र्यमिष्यते तथा सति वस्तुत्वापत्तेर्नस्त्वन्तराभावाच्चापूर्वमस्त्येव विनाशशब्देनाभिधीयेत ।

न च कर्मविनाशेभ्य स्वर्गादि श्रूयते फलम् ।
विपर्ययाच्च नैतेभ्यो जात यागस्य तद्भवेत् ॥

1 (अ० १२ पा० १ अ० १ सू० ४)

' यजेत स्वर्गकाम ' इति हि श्रूयते न यागाभावं प्रतिपद्येतेति । तत्र भावांशसाध्यसाधनसंबन्धनिष्ठे वाक्ये यस्तथाभावांशसाध्यसाधनसंबन्धं कल्पयति तेन वेदस्तावदप्रमाणीकृतः । कुतः । कर्मविनाशप्रभवं हि सदेतत्त्व कथंचित्कर्मसम्बन्धीति शक्यं वदितुम् । अत्यन्तविपरीतत्वात् । न ह्यन्यातपप्रभवो दाहः शैत्यसंबन्धीत्युच्यते । अथ वा यथैव यागाच्छ्रुतं तदभावात्कल्प्यते तथैव स्वर्गे श्रुते तदभावः फलमित्यपि कल्प्येत । अपूर्वपक्षोऽपि तुल्यमिति चेत् । न । तस्य कर्मफलशक्त्यात्मकत्वेनात्यन्ताभेदात् । उक्तं ह्येतत्पुरस्तात् । अपूर्वेण क्रियमाणं यागेनैव क्रियते, अपूर्वे वा कृते फलमेव कृतं भवतीति । न च लोकेऽपि कश्चिदभावः कारणत्वेन दृष्टः । यदि तु क्वचिदुदाहियेत, शक्यं तत्र भावान्तरं दर्शयितुं न त्वत्रापूर्वादन्ते तादृक्किंचिदस्ति । यत्त्वपूर्वस्यापि नैव कारणत्वं दृष्टमिति तदयुक्तम् । सर्वत्र शक्तिसामान्योपलम्भमात्ताद्विशेषमात्रत्वाच्चापूर्वस्य । यत्तु शास्त्रेण कालान्तरफलं नाऽऽश्रितं प्रयोगोत्तरकालकल्पना च शास्त्रेऽन्तर्भवति । तस्मादानन्तर्यमेव चोदितमिति । तत्र यथाश्रुतक्षणिकानेककर्मानन्तर्यं न संभवतीत्युक्तं प्राक् । स्वर्गनरकौ च निरतिशयसुखदुःखात्मकत्वाद्देशान्तरजन्मान्तरानुभवनीयौ न कर्मानन्तरं संभवत इति पष्ठाद्ये वक्ष्यामः ।

> ऐहिकं चापि पुत्रादि क्रमजन्मस्वभावकम् ।
> न कर्मानन्तरं कश्चित्फलं लब्धुं व्यवस्यति ॥
> न च ग्रामादिसंप्राप्तिः केवला फलमिष्यते ।
> उपयोगश्चिरेणैषां न निमित्ताद्विना भवेत् ॥

चिरकालोपभोगफलात्मकत्वाद्ग्रामादीनां क्रियानन्तरं तादात्म्यासंभवे सति यत्रैवान्तराले निमित्तं क्षीणं तत्रैवापहारः प्रसज्येतेत्यवश्यं समस्तोपभोगं यावदवस्थितेन केनचिद्भवितव्यम् । ततश्च प्रागेव प्रयोगादित्यभवधारणास्कर्तृवैगुण्याशङ्कयाऽर्थापत्तेरनैकान्तिकत्वमित्ययुक्तमेतत् । यत्तु प्रतिषेधेषु न शास्त्रगम्यमपूर्वमित्युच्यते ।

> विधेयेभ्यो यथाऽपूर्वं विधिशास्त्रेषु गम्यते ।
> तथैव प्रतिषेध्येभ्यः प्रतिषेधैस्तदुच्यते ॥

यथा हि लौकिकानामेव द्रव्यादीनां फलविप्रयुक्तरकालं वैदिकत्वाद्वेदगम्याऽपूर्वसिद्धिः, एवं ब्रह्महत्यादीनामनवगतनरकफलानां प्रतिषेधोत्तरकालभाविना वैदिकत्वेनैव नरकप्राप्तिसमर्थाऽपूर्वकल्पनोपपत्तिः । सत्यपि चास्य चलनादिक्रियारहितत्वे कर्तृसंबन्धमात्रेण तद्देशान्तरप्रापणादिक्रियासंबन्धाभ्युपगमान्निष्क्रियताऽनुपालम्भः ।

> आत्मैव चाऽऽश्रयस्तस्य क्रियाऽप्यत्रैव च स्थिता ।
> आत्मवादे स्थितं ह्येतत्कर्तृत्वं सर्वकर्मसु ॥

---

१ ( अ० १-पा० १-सू० ५ ) इत्यत्र वृत्तिकारमतानुवादे प्रत्यक्षविसंवादपरिहारग्रन्थे भाष्य इति शेषः ।

द्रव्यदानप्रक्षेपादीनां हि सर्वेषां सङ्कल्पादिद्वारेणाऽऽत्मैव कर्तेत्यवधारितम् । अतश्च ते प्रलीयमानास्तत्र स्वर्गाद्युपभोगशक्तिमाधाय प्रलीयन्त इत्यविरोधः । कथं विनष्टस्य कर्मणः शक्तिस्तिष्ठतीति चेत् । अत्राभिधीयते—

यदि स्वसमवेतैव शक्तिरिष्येत कर्मणाम् ।
तद्विनाशे ततो न स्यात्कर्तृस्था तु न नश्यति ॥

कथमन्यशक्तिरन्यत्र समवैतीति चेत् । न । क्रियात्मनोरत्यन्तभेदाभावात् । अपि च—

शक्तिः कार्यानुमेयत्वाद्यद्गतैवोपयुज्यते ।
तद्गतैवाभ्युपेतव्या स्वाश्रयाऽन्याश्रयाऽपि वा ॥

यदा कर्मविनाशात्तद्गता शक्तिरपि निष्प्रयोजना भवति, अवश्यं चासौ कल्पयितव्या, तदाऽस्याः स्वरूपवदेवाऽऽश्रयविशेषोऽपि कार्यक्षम एव प्रमातव्यः । तथाऽङ्गापूर्वाणामप्यात्माश्रितानामेवैकार्थसमवायेन प्रधाने सन्नद्धानामप्युपकुर्वतामाश्रयशेषत्वाभावादारादुपकारकत्वप्रसिद्धिः । यत्तु पुरुषार्थत्वं प्रसज्यत इति । नैष दोषः —

तादर्थ्येन हि शेषत्वं नाऽऽश्रयाश्रयिभावतः ।
राजर्थोपयिक नित्यमुष्ट्रो वहति कुङ्कुमम् ॥

न चामूर्तानामाश्रयाश्रयिभावेन न भवितव्यम् । आत्मसुखादिवत्तदुपपत्तेः । यत्तु व्रीह्यादिसमवायिप्रोक्षणादिनिमित्तं तण्डुलादिद्रव्यावस्थासञ्चरणपरम्परया द्रव्यदानं यावद्गतं तत्रापि प्रधानस्यापि केनचिदंशेन समवायात्तदीयापूर्वनिष्पत्तावेव व्यापृत्य निवर्तते । तेनैव चैषां नाऽऽरादुपकारकत्वं शेषप्रधानार्थत्वमभ्युपगम्यते । यथैव चैकार्थसमवायादङ्गप्रधानापूर्वाणां सम्बन्ध एवमङ्गापूर्वाणामन्योन्यं प्रधानापूर्वाणां च वक्तव्यः । ततश्च युगपत्कार्यारम्भसिद्धिः । कथं पुनः क्रमोत्पत्तीनां प्रधानापूर्वाणां क्रमवर्तिभिरेवाङ्गापूर्वैः प्रागूर्ध्वं चोत्पद्यमानैर्युगपदुपकर्तुं शक्यम् । केचित्तावदाहुः । अक्रमवर्तिषु प्रधानेषु पूर्वाङ्गापूर्वैर्निष्पन्नैरागामिभिश्च क्रमवशात्प्रचलितावस्थैरेकैकं प्रधानं स्वापूर्वं साधयति । आतिथ्याबर्हिर्वच्च साधारण्यादेकप्रधानापूर्वनिष्पत्तौ तान्युपयुज्यन्ते । कथं पुनरनागतानामुपकारकत्वं भवति । एकान्तावधारणाद्भोजनप्रत्यासत्तौ स्थालीपरिमार्जननिष्पत्तिवदिति द्रष्टव्यम् । ननु च यद्यनागतावस्थेष्वेतेषु प्रधानापूर्वाणि निष्पद्यन्ते ततो नैवोत्तराङ्गाणि कर्तव्यानि । कथं ■ कर्तव्यानि, यदा तत्करिष्यमाणतामभावनया तानि निष्पन्नान्यपि तदकरणाद्यापद्यन्ते । अन्ये पुनराहुः । एकैकमङ्गमितरेतरनिरपेक्षमात्मीयमात्मीयं तावदपूर्वं करोति, तथा प्रधानमप्याग्नेयादि यथाश्रुतमसमस्ताङ्गापूर्वत्वामात्तन्निरपेक्षं तथाऽनुत्पन्नप्रधानान्तरनिरपेक्षं च प्रथमकृतमात्मसमवायिकाङ्गापूर्वमात्रानुगृहीतं स्वापूर्वमेव तावत्साधयति । एवं यदा दर्शापूर्वाणि तदङ्गापूर्वाण्यपि समस्तानि निष्पन्नानि तदा तदीयब्राह्मणतर्पणानन्तरमपर्यायविधानाद्युगपत्प्रयोगवचनोपसंहारक-

ल्पितमङ्गानि प्रधानानि च प्रति, तन्त्रभूतं समस्तान्यङ्गापूर्वाण्यपूर्वात्मकमेकं युगपन्निरवयं प्रधानोपकारं कृत्वा निवर्तन्ते। ततश्च तद्वशेन प्रधानापूर्वाण्यप्येकफलोत्पत्तिशक्तिभूतं संहत्य सर्वाण्येकमपूर्वान्तरं जनयित्वाऽपवृज्यन्ते। तच्चाफललाभादजरं तिष्ठति। यदि पुनः प्रतिबन्धकराहितं तदानीं फलमेवोत्पद्यते ततोऽपि किं कल्पनीयमेवापूर्वम्। बाढम्। न हि तस्मादृते समस्तफलोपभोगसिद्धिरित्युक्तम्। अथ कस्मात्प्रात्यात्मिकान्येवाङ्गापूर्वाणि प्रधानोपकारकत्वं भिन्नानि च प्रधानापूर्वाणि फलबीजत्वं न प्रतिपद्यन्ते। सत्यं, न हि कश्चिदत्र दोषः। किं तु—

अर्थापत्तेरिहापूर्वं पूर्वमेकं प्रतीयते।
ततस्तत्सिद्धये भूयः स्यादपूर्वान्तरप्रमा॥

प्रधानानां फलं प्रत्यङ्गानां च प्रधानानि प्रति युगपदुपादानादपेक्षावशेनैकापूर्वकल्पनया च तत्संबन्धोपपत्तेर्नेतरकल्पनाप्रमाणमस्तीत्येकमेव तावदवधार्यते। ततः पुनः क्रमवर्तिभिः कर्मभिस्तदशक्यं युगपत्कर्तुमिति तत्सिद्ध्यर्थं प्रात्यात्मिकापूर्वान्तरकल्पना भवति। सर्वत्र च—

प्रमाणवन्त्यदृष्टानि कल्प्यन्ते सुबहून्यपि।
अदृष्टशतभागोऽपि न कल्प्यो ह्यप्रमाणकः॥

केचित्त्वत्र चोदयन्ति। यदि पौर्णमास्यां कृतान्यङ्गापूर्वाण्यमावास्यां यावत्तिष्ठेयुस्ततस्तैरेव कृतार्थत्वान्नैवाङ्गानि पुनः प्रसज्येरन्। एवं च सति 'त्रयोदशामावास्यायाम्' इत्याहुतिसंख्या बाध्येत। अन्ये तु परिहरन्ति। साङ्गयोःपौर्णमास्यमावास्ययोः कालान्तरसंबन्धात्सर्वैरङ्गैर्द्विः प्रयुक्तैः समुदायद्वयस्योपकर्तव्यमित्यवधारणात्पुनः प्रयोगः सेत्स्यतीति। अथ वा, एवं वक्तव्यं साङ्गा पौर्णमास्यमावास्याऽसहिता स्वार्थं करोतीति करणविभक्तिश्रुतेरवगमात्पूर्वोक्तेनैव न्यायेन प्रधानापूर्वद्वयं स्वाङ्गापूर्वानुगृहीतमेकमपूर्वं कृत्वाऽपवृज्यते। तत्पुनरेवं निष्पन्नेनैवामावास्यापूर्वेण सहापरमपूर्वमारभेत। ततश्च निवृत्तेष्वङ्गापूर्वेष्वमावास्यायां क्रियमाणान्यङ्गानि न निराकरिष्यन्त इत्यदोषः। एतयैव च दिशोत्पत्तिविरोधः परिहर्तव्यः। आह च—

आवृत्तिभिर्यथाऽभ्यासे संस्कारो भवति क्रमात्।
वाक्यावयवरूपेण तथाऽपूर्वं भविष्यति॥

---

१ पञ्च प्रयाजास्त्वयोऽनूयाजा द्वावाज्यभागौ स्विष्टकृदित्येकादश। सान्नाय्यस्य संप्रतिपन्नदेवताकत्वेन सह प्रक्षेपाद्दध्नैवेन सह प्रधानाङ्गद्वयमिति त्रयोदशत्वं ज्ञेयम्।

यदि पुनः फलवचनसामर्थ्यात्तदेव न विनश्यतीति कल्प्यते । नैवं शक्यम् । न हि कर्मणोऽन्यद्रूपमुपलभामहे । यदाश्रयं देशान्तरं प्रापयति, तत्कर्मेत्युच्यते । न तदात्मनि समवेतम् । सर्वगतत्वादात्मनः ।

---

न चामूर्तस्यावश्यमवयवैर्न भवितव्यम् । अनयैव ह्यर्थापत्त्या शक्यते वक्तुं सूक्ष्मावयवरूपेण तत्प्रतीयत इति । यदाऽप्यत्यन्तासतामनुत्पत्तेः प्रागवस्थानास्तित्वमभिव्यज्यते तदाऽपि प्रतिपुरुषं कर्मभिः स्वीकरणात्फलाभिमुखकरणं शब्दादिविलक्षणाऽस्याभिव्यक्तिर्भविष्यति । तथा हि—

नैकरूपैव भावानामभिव्यक्तिः प्रतीयते ।
आत्मस्थोन्मीलनं तेन व्यक्तिरस्य भविष्यति ॥
सर्वाभिमतसमर्थो वा प्रकृत्यात्मा सदेष्यते ।
कश्चित्तु प्रतिबन्धोऽस्य कर्मभिः सोऽपनीयते ॥

तस्मादस्त्यपूर्वम् । सूत्रस्यापि च न प्रकृतोपयिकमन्यमर्थं पश्यामः । तेनाऽऽरम्भचोदनैवापूर्वस्यापि चोदनेत्ययमेवार्थः । यदि पुनः फलवचनसामर्थ्यात्तदेव न विनष्टमिति, अपूर्वकल्पनानिष्प्रमाणकत्वं मन्वानो वरमेतदित्याह । न हि कर्मणा रूपमुपलभामह इत्ययुक्तं, ' रूपशब्दाविभागाच्च ' इत्यत्र प्रत्यक्षोपलब्ध्यभिधानात् । यागप्रस्तावे च सति तस्याचलनात्मकत्वात्, यदाश्रयं देशान्तरं प्रापयतीत्यसंबद्धम् । अत्रोच्यते—

कालान्तरसमं रूपं कर्मणो नोपलभ्यते ।
साक्षिरूपोपलब्धिस्तु न फलायोपयुज्यते ॥

यद्यपि कर्मस्वरूपमुपलभ्यते तथाऽपि कालान्तरावस्थानाभावान्न तदुपयुज्यत इति नोपलभामह इत्युच्यते ।

यागेऽपि प्रस्तुते चात्र चलनं यदुदाहृतम् ।
तत्प्रदेशाशरूपेण यागेऽप्यस्तीति निश्चयात् ॥

न हि संकल्पमात्रेण फलनिष्पत्तिः । समस्तात्मसमवेतनिर्वर्त्यनाशाच्च कर्मणः फलश्रवणात्तत्र द्रव्यवदुत्क्षेपणादीनां सद्गामादानादीनां च संयोगविभागफलत्वात्स्थायित्वे तदाश्रयेणावश्यं भवितव्यम् । न चात्रास्ति । न चाभिव्यक्तं रूपमुपलभ्यते । संकल्पादीनामपि संकल्पान्तरादिनिरोधानाशात् स्वरूपावस्थानापत्तिः । अवस्थानं चाऽऽत्मसमवेतस्य वा स्यात्प्रदेशद्रव्यसमवेतस्य वा । न तावदात्मनि चलनं समवैति, सर्वव्यापिनः संयुज्यमानविभुज्यमानदेशासंभवे चलितुमसामर्थ्यात् । कथं सर्वव्यापित्वमस्येति चेत्सर्वत्रोपलभ्यमान-

---

१ ( अ० ६ पा० ३ अ० २ सू० १२ )

सर्वत्र कार्योपलम्भः सर्वत्र भावे लिङ्गम्। ननु तदेव देशान्तरादागमनस्य। न ह्यसत्यागमने किंचिद्विरुद्धं दृश्यते।

---

कार्यत्वात्। अहंप्रत्ययेन हि चैतन्यस्वभावस्याऽऽत्मनोऽस्तित्वमात्रमवगम्यते न तु देशतः कालतो वा विशेष्यते। ततश्च—

अनवच्छिन्नसद्भावं वस्तु यद्देशकालतः।
तन्नित्यं विभु चेच्छन्तीत्यात्मनो विभुतेष्यते॥

सर्वत्र कार्योपलम्भ इति—अहंप्रत्ययमेवाविशेषितं वदति। सुखदुःखाद्युपलब्धिर्वा। न हि क्व चिन्नृतेऽस्ते नोपलभ्यन्ते। न चैते शरीरधर्मा इति स्थितमात्मवादे। तत्र यद्य-सर्वगत आत्मा भवेत्ततो यदैव तद्गता देशेन शरीरं युज्यते तदैव सुखाद्युपलब्धिः स्यान्नान्यत्र। शरीरमात्रान्तर्गतात्मवादी त्वाह—ननु तदेव देशान्तरादागमनस्य लिङ्गम्। अतश्च विरुद्धहेतुत्वमस्येति। कुतः—

युगपद्यदि सर्वत्र कार्यमात्मगतं भवेत्।
ततः सर्वगतत्वं स्यात्पर्याये तु शरीरवत्॥

यदि हि शरीराद्बहिरपि किंचिदात्मकार्यमुपलभेमहि शरीरान्तरे सुखदुःखादीन्वा ततः सर्वगतत्वमभ्युपयेम। यतस्तु स्वशरीरान्तर्वर्त्येव कार्यं यत्र यत्र च तद्गतिस्तत्र तत्र पर्यायेणोपलभ्यते तच्छरीरकार्यवदेव तत्सहितगतस्योपपत्स्यते। अन्यथा हि शरीरमपि सर्वगतं स्यात्। तस्माच्छरीरवदेवास्य तत्र तत्र गमनापत्तेः सुतरां सक्रियत्वप्रसङ्गः। संदेहो वाऽस्तु साधारणानैकान्तिकत्वात्। आह च—

आत्मा शरीरसंमिश्रस्तेनैव सह संगमात्।
तत्र तत्र सुखादीनि कार्याणि प्रतिपद्यते॥

तत्रोत्तरं न ह्यसत्यागमने किंचिद्विरुद्धमिति। येषां तु न तु तदेवेति पाठ तेषां सिद्धान्तवाद्येव पर्यायेण सर्वत्राऽऽत्मकार्योपलम्भमनागमनलिङ्गत्वेऽप्यविशिष्टमाशङ्क्योत्तरं वदतीति सम्बन्धयोजना। कथं पुनरिदमुत्तरं न ह्यसत्यागमन इति। तथा हि—

नैवाविरोधमात्रेण स्वपक्षः सिध्यति क्वचित्।
परस्याप्यविरोधित्वमविशिष्टं हि दृश्यते॥

परेणापि हि शक्यं वदितुं न हि सति गमने किंचिद्विरुद्धमिति। अत्राभिधीयते।

उभयत्राविरोधित्वे प्राप्ते न ह्यसतीति यत्।
पुनर्ब्रवीति तन्नूनं विरोध्यागमनं मतम्॥

परिसंख्यारूपेणासत्येवाऽऽगमने न किंचिद्विरुद्धं सति तु बहु विरुद्धमित्याह। तदुपवर्ण्यते—

स्वतस्तावदमूर्तत्वान्न मूर्तैर्मिश्रताऽऽत्मनः ।
ततश्च तैरसंश्लिष्टो न नेतुं शक्यते क्वचित् ॥

यदा मूर्तानामपि सूक्ष्माणां चन्द्रादित्यप्रकाशादीनां न मृत्पिण्डादिभिः सह मिश्रत्वमुपपद्यते, तन्नयनेन वा नयनं तदाऽऽत्मनः स्वभावेनात्यन्तामूर्तस्य ज्ञानसंतानस्य वा मूर्तैर्मिश्रत्वं भवेदिति कुत एतत् । योऽपि स्याद्वादी बद्धात्मना शरीरादत्यन्तव्यतिरेकाऽभावदस्येव मूर्तत्वं जीवस्येति ब्रूयात्तस्यापीतरेतराश्रयप्रसक्तिर्मिश्रत्वान्मूर्तत्वं मूर्तत्वाच्च मिश्रभाव इति । तस्मान्मुक्तावस्थानिदर्शनेन लक्षणतोऽस्यामूर्तत्वान्न शरीरसंपर्कनिमित्तमूर्तत्वसिद्धिः । ततश्च शरीरादन्यस्तेनासंपृक्तश्च । अप्यदोत्वा आनाकृष्यमाणं शरीरे गच्छति तद्गताकाशप्रदेशवदात्मा पश्चान्नि सृतस्तत्रैव तिष्ठेत् । न हि तस्य वायुना पृथिव्यादिभिर्वा प्रेरणं येन स्वतन्त्रः परप्रेरितो वा गच्छेत् । ज्वालाप्रभृतीनां तु स्पर्शवत्त्वाद्वायुना प्रेर्यमाणानामुल्मुकादिना वा नीयमानानां युक्तं गमनम् । तेन केवलं शरीरं गच्छदचेतनं स्यात् । सर्वगतत्वे तु यत्र यत्र गम्यते तत्र तत्राऽऽत्मानुस्यूतिरस्तीति युक्ता चैतन्यानुवृत्तिः, यथा पूर्वाकाशप्रदेशत्यागे सर्वगतत्वादेव परेणावकाशदानसिद्धिः । किं च—

असर्वगतपक्षे स्याज्जीवो देहादनिर्गतः ।
अणुः शरीरमात्रो वा सर्वथाऽपि न युज्यते ॥

ज्ञानसंततिपक्षस्तावन्निराकृतः । तत्र नित्यः सन्नात्मा शरीराभ्यन्तरवर्ती ।

यद्यणुः कल्प्यते तत्र देहं न व्याप्नुयादसौ ।
ततश्च सर्वगात्रस्थसुखदुःखाद्यसंभवः ॥

यदा ह्यणुमानात्मा भवति तदा यावानेव प्रदेशविशेषस्तेनाधिष्ठितस्तन्मात्रगतानामेव सुखदुःखादीनामुपलब्धिं प्राप्नोति, ततश्चैकस्मिन्क्षणे शिरःपादवेदनानुभवो न स्यात् । अथ लघुसंचारित्वात्तत्र तत्रोपलभ्यत इत्युच्यते, न तत्र प्रमाणमस्ति । न च कालभेदो लक्ष्यते, अनवस्थितस्योपलब्धिकालासमवायेनैकत्राप्युपलभ्येत । तस्मादफलत्वेयम् । शरीरावयवानां चापरिशोषणं पुष्ट्यादि चाऽऽत्माधिष्ठितानां भवति मृतावस्थायां विपर्ययदर्शनात् । तत्र य एवावयवस्तेनोत्सृष्टः स एव मृतवच्छुष्येत् । अथ शरीरपरिमित आर्हतपक्षेणाभ्युपगम्यते तत्रापि बह्वदृष्टं कल्पनीयम् ॥

सद्भावोऽवयवानां च तथा तेषामनन्तता ।
संश्लेषश्च विभाऽन्येन तद्भावेऽपि च नित्यता ॥
अतिसंकोचविस्तारौ पुत्तिकाहस्तिदेहयोः ।
अन्तराभवसंचारस्तद्भावाज्ञानकारणे ॥

सर्वे ह्यवयवसद्भावादयः प्रत्यक्षाद्यविषयाः सन्त उत्प्रेक्षामात्रेण कल्प्यन्ते । ते शब्दवच्चेहापि प्रत्याख्येयाः[1] । शरीरमात्रावधिकानां चैषामुत्प्रेक्षितुमप्यानन्त्यादशक्यं, न चैषां द्रवत्वादिना विना कश्चित्संश्लेषहेतुर्विद्यते । न चासंश्लिष्टानामेकजीवारम्भसामर्थ्यम् । सर्वसंयोगानां च वियोगाविनाभूतत्वाद्घटादितुल्यः कदाचिज्जीवस्य प्रध्वंसो भवेत् । गात्रच्छेदे च तद्वर्तिनां जीवावयवानां ततो निःसृत्याऽवशिष्टे शरीरभागे पुनः प्रवेश इत्येतदप्रमाणकम् । यत्तु वियोजितमात्राणां हस्तादीनां स्फुरणं दृष्टं, तदभिघातप्रेरितवायुनिमित्तमिति न तावता जीवावयवानुगतिर्विज्ञायते । तथा सति संकोचविकासावेतेषां भवत इत्यत्र न किंचित्प्रमाणं पश्यामः । दीपप्रभाप्रभृतीनां तु कथंचित्प्रत्यक्षत्वादुपपद्येते । न च प्रदीपप्रभायाः संकोचो भवति शरावादिच्छादने दीपप्रभाविनाशादनावृता हि ज्वालाऽऽत्मसमीपे प्रभामण्डलमारब्धुं समर्था नाऽऽच्छादिता । एतेनैव च विकासोऽपि प्रत्युक्तः । अन्य एव ह्यवयवास्तत्र प्रचीयमाना विस्तारं जनयन्ति न तावतामेव विकासः । स्पर्शवतां च परस्परदेशप्रतिबन्धाद्देशान्तरव्याप्त्या विकासो घटते, जीवावयवानां त्वमूर्तत्वात्सर्वेषां समानदेशत्वाविघातान्नित्यमणुमात्रत्वप्रसङ्गः स्यात् । कथं चैकस्य जीवस्य पुत्तिकाहस्तिशरीरपरिमितौ संकोचविकासौ युज्येते । मरणकाले चान्तराभवशरीरसंचरणं तच्चास्ति, केन चित्प्रतिबन्धेन सदपि न गृह्यते, तेन च शरीरान्तरे जीवनिक्षेप इत्यादि निष्प्रमाणकम् । तस्मात्सर्वगतत्वम् । यत्तु श्यामाकतण्डुलमात्रादिप्रदर्शनमुपनिषत्सु तद्वाक्यान्तरप्रदर्शितविभुत्वस्यैव सतः सूक्ष्मग्रहणगोचरत्वात् । यदपि द्वैपायनेनोक्तम् । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यम इति । तदपि काव्यशोभार्थं विस्पष्टमृत्युव्यवहारप्रशंसनार्थं च प्रतिव्रताप्रशंसापरे वाक्ये प्रजापतिवपोत्खेदनादिवद्द्रष्टव्यम् । तथा हि तेनैव गीतादिष्वनेकप्रकारं सर्वगतत्वं वर्णितम् । ननु च सर्वगतत्वे व्योमवत्सर्वशरीरेष्वेक एवाऽऽत्मा प्राप्नोति । नैष दोषः । शरीरभूयस्त्वात्प्रतिशरीरं च सुखदुःखोपलब्धिव्यवस्थादर्शनात् । इतरथा ह्येकशरीरेणैव चरितार्थत्वादनेकशरीरवैयर्थ्यं स्यात् । जन्मान्तरशरीरवददोष इति चेत् । न । तत्र कर्मान्तरवशेनोपभोगान्तरार्थं पुनः पुनरारम्भात्सर्वशरीरगतसुखाद्युपलब्धिश्च प्रतिशरीरं स्यात् । अन्यदीयैश्चेन्द्रियैः शरीरान्तरगतस्याऽऽत्मीयस्याद्युपलब्धेरन्धबधिरादीनामभावः स्यात् । वर्णविशेषव्यवस्थया च कर्मचोदनाभेदो न स्यात् । एकस्यैवाऽऽत्मनस्तेन तेन शरीरेण संबध्यमानस्य सर्ववर्णोपपत्तेः । आत्मनानात्वे त्वदोषः । सर्वेषामपि च सर्वगतत्वे मूर्तिरहितत्वात्समानदेशवृत्त्यविरोधः । तदपेक्षयैव च चैतन्यात्मकत्वाद्यविभागाच्चोपनिष-

---

१ भारते इति शेषः ।

यत्र समवेतमासीत्, तद्विनष्टं द्रव्यम् । तस्य विनाशात्तदपि विनष्टमि-
त्यवगम्यते । आश्रयोऽप्यविनष्ट इति चेन्न । भस्मोपलम्भनात् । सत्यपि
भस्मन्यस्तीति चेन्न । विद्यमानोपलम्भनेऽप्यदर्शनात् । फलक्रिया लिङ्ग-
मिति चेत् । एवं सत्यदर्शने समाधिर्वक्तव्यः । सौक्ष्म्यादीनामन्यतमद्भ-
विष्यतीति यदि चिन्त्यते, कल्पितमेवं सति किंचिद्भवति तत्रापूर्वं वा
कल्प्येत, तद्वैरूप्यविशेषकल्पनायामस्ति हेतुः, न विशिष्टकल्पनायाम् ।

---

स्यैकात्म्यव्यवहारः । कथं पुनर्नानात्वेऽपि सर्वेषां सर्वशरीरैः संबन्धादन्यदीयसुखदुः-
खाद्यनुपलब्धिः । के चित्तावदाहुः—

यथा शरीरमात्रेऽपि मातृगर्भान्तवर्तिनाम् ।
सुखादीनां व्यवस्थैवं सर्वत्रैषा भविष्यति ॥

शरीरपरिमाणात्मवादिनोऽपि किलायं तुल्यो दोषस्तस्यापि गर्भात्मसमानदेशत्वान्मा-
तृक्षेत्रज्ञसम्बद्धानि सुखादीन्युपलभेत । तत्र यस्तस्य परिहारः स सर्वात्मनां सर्वशरीरेषु
भविष्यतीत्यविरोधः । यत्रोपपत्तिरुच्येत न तु परपक्षसाम्यापत्तिरेवोपपाद्यस्तस्य च
तत्र चोभयोरप्यन्येन पर्यनुयोगात् । अपि च तस्य त्वगिन्द्रियपरिमाणत्वादन्तःशरी-
रावस्थो बाह्यदेशात्मनोऽनभ्युपगमान्न गर्भशरीरेण मातृक्षेत्रज्ञस्य प्राप्तिरस्ति येन
तुल्यदोषता स्यात् । तस्मादेवं परिहर्तव्यम् ॥

देशप्राप्त्या यदीष्येत सुखादेरुपभोग्यता ।
ततो दोषः प्रसज्येत योग्यभोगे त्वदुष्टता ॥

यदि ह्यात्मनः सुखादीनां च समानदेशलक्षण एव संबन्ध उपभोगकारणमिष्येत
ततोऽयं दोषः स्यात् । इह तु चक्षुरादीनामिव क्षेत्रज्ञयोग्यतालक्षणः संबन्धः । तत्र
यथैव त्वगिन्द्रियेण स्पर्शसमानदेशानामपि रूपादीनामग्रहणम्, एवमन्येनाऽऽत्मनाऽन्यदी-
यधर्माधर्मोपात्तसुखदुःखाद्यग्रहणम् । तस्मादात्मवादोक्तस्वस्वामिभावव्यवस्थानाददोषः । एवं
सर्वगतत्वात्सिद्धमात्मनो नित्यत्वम् । अथ द्रव्यनाशानपगमेनाभाषितत्वात् आह—तद्विनष्ट-
मिति । न च तस्याविनाशः । तद्विपरीतद्रव्यान्तरोपलम्भात् । न चास्य ग्रहणप्रतिबन्ध-
हेतुः कश्चिदस्ति येन न गृह्येत । अथापि वस्त्या ग्रहणप्रतिबन्धादि कल्प्येत तथाऽपि सत्य-
पूर्वोद्भूततरमदृष्टं दृष्टविपरीतं च कल्पयितव्यं, तावदविनष्टमास्ते, तथा न दृश्यते, तथा
प्रतिबन्धहेतुः, तस्याप्यदर्शननिमित्तं चेत्येवं तस्य तस्यान्यदित्यनवस्था, तथा क्षणिकस्य
कर्मणः स्थानमनुपलब्धिकारणं च कल्प्यमित्यतिगौरवम् ।

---

१ सम्बन्धे इति पाठान्तरम् । २ विशेषकल्पनाया इति पाठान्तरम् ।

अनाश्रितं कर्म भविष्यतीति चेत् । तदपि तादृशमेव—। स्वभावान्तरकल्पनेन देशान्तरं न मापयिष्यतीति तादृशमेव । तस्माद्दृङ्गे यजिः, तस्य भङ्क्तित्वादपूर्वमस्तीति । किं चिन्तायाः प्रयोजनम् । यदि द्रव्यगुणशब्दा अप्यपूर्वं चोदयन्ति, द्रव्यगुणापचारे न प्रतिनिधिरुपादातव्यो यथा तर्हि पूर्वः पक्षः । यथा तर्हि सिद्धान्तो द्रव्यं गुणं वा प्रतिनिधाय प्रयोगोऽनुष्ठातव्य इति ॥ ५ ॥

## [२] तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥ सि० ॥

अवगतमेतद् भावशब्दाः कर्मणो वाचका इति । बहुप्रकाराश्च भावशब्दाः । यजति, जुहोति, ददातीत्येवंप्रकाराः । दोग्धि, पिनष्टि, विलापयतीत्येवमादयश्च । तेषु संदेहः । किं सर्वे प्रधानकर्मणो विधायका उत केचित् संस्कारकर्मण इति । भावार्थत्वाविशेषात् सर्वे

---

एवमनाश्रितकर्मावस्थानकल्पनायाम् । अथाऽऽस्माश्रितमेव संयोगविभागावकुर्वदासीत् । तत्रापि दृष्टविपर्ययादृष्टकल्पने स्याताम् । तस्माद्वरमपूर्वकल्पनमेवेति सिद्धं मूलाधिकरणप्रयोजनम् । द्रव्यादीनां फलसंबन्धे तेषामदृष्टार्थत्वात्कर्मणामिव प्रतिनिध्यभावः । कर्मफलसंबन्धे तु द्रव्यादेः कर्मोत्पत्त्या दृष्टार्थत्वात्सामानकार्यत्वज्ञानादस्ति प्रतिनिधिः । कथं तर्हि पूर्वपक्षवादिनः प्रक्रान्तापरिसमाप्तिदोषाभावः । समापनीयमेव कर्म येन केनचिद्द्रव्येण । सदृशोपादाने तु न यतितव्यं सदृशादपि फलाप्राप्तेः, कर्मणश्चाविहितसाधनविशेषस्यानपेक्षितसदृशत्वाद्येन केन चित्सिद्धेः । न च तत्पूर्वद्रव्यस्य प्रतिनिधिरित्युच्यते । अन्यार्थत्वादसादृश्याच्च । पूर्वद्रव्यं हि फलाय प्रवृत्तमासीदिदानीमानीयमानं ■ प्रत्यवायपरिहाराय नैमित्तिकफलाय वा प्रवृत्तस्य कर्मणः सिद्ध्यर्थमिति । नामधेयसिद्धिरपि प्रयोजनमेव । सा तु पूर्वोक्तत्वान्न प्रदर्शिता ॥ ५ ॥

( इत्यपूर्वाधिकरणम् ॥ २ ॥ )

---

एवमाख्यातभेदानुसारेणापूर्वभेदानुगमे सर्वत्र प्राप्ते तदपवादार्थं गुणप्रधानविवेकारम्भः । तत्र तावत्—

आख्यातत्वाविशेषेण भूतेर्भव्यार्थजन्मनः ।
सिद्धे च साध्यताशक्तेः सर्वाख्यातप्रधानता ॥

यावद्धि प्रयोजनकल्पनं तत्सर्वं भाव्यर्थान्वाय्यं प्रयोजनवच्च प्रधानमपूर्वसाधनं च । तेन यज्यादिवद्दोहनस्यादीनामपि व्रीह्यादिर्निष्पाद्योऽर्थः । अतश्च तेऽप्यपूर्वसाधनमिति । अत्रोच्यते—

प्रधानकर्मणो वाचका इति प्राप्तम् । ततो ब्रूमः । तानि द्वैधं भवितुमर्हन्तीति द्विप्रकाराणि, कानिचित्प्रधानकर्मणो वाचकानि, कानिचित्संस्कारकर्मणः । एवमपि सर्वाण्यर्थवन्ति, अर्थवत्त्वे सति सर्वेभ्यो न शक्यमपूर्वं कल्पयितुम् । अतो न सर्वाणि प्रधानकर्मणो वाचकानि ॥ ६ ॥

येर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥ ७ ॥

एवं सत्यल्पीयस्यदृष्टकल्पना न्याय्या । ननु न विनिगमनाया हेतुमवगच्छामः कुतोऽपूर्वं कुतो नेति । तदुच्यते । यैर्भावकर्मभिर्न द्रव्यं संस्कर्तुमिष्यते, उत्पादयितुं वा, तानि प्रधानभूतानि प्रधानकर्मणो वाचकानि । द्रव्यस्य गुणभूतत्वात् । द्रव्यं हि गुणभूतं, कर्मनिर्वृत्तेरीप्सिततमत्वात् ॥ ७ ॥

यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात् ॥ ८ ॥

यैस्तु द्रव्यं चिकीर्ष्यते, गुणस्तत्र प्रतीयेत कर्म । कुतः । तस्य द्रव्यप्रधानत्वात् । प्रत्यक्षं यजेतेत्येवमादिभिर्द्रव्यं न चिकीर्ष्यते । तस्मात्तानि प्रधानकर्मणो वाचकानि । द्रव्यस्य गुणभूतत्वात् । पिनष्टीत्येवमा-

---

नामाख्यातार्थसंबन्धे यदक्लृप्तप्रयोजनम् ।
तस्यादृष्टार्थता युक्ता नेतरस्याप्रमाणिका ॥

सर्वत्रैव द्रव्यकर्मसंबन्धे कर्मणा द्रव्येण विनाऽनुपपत्तेः प्रथमं तावद्‌द्रव्यं कर्मोत्पादयत, दृष्टोपकारित्वात्तदर्थमाभासते । तत्र कश्चिद्‌द्रव्य कर्म परावृत्त्य द्रव्यस्योपकरोति क्वचिदात्मलाभमात्रमनुभवति । तद्यदाऽऽत्मलाभमात्रं तस्य दृश्यते तदा साकाङ्क्षत्वाददृष्टं कल्पयितुं शक्यते । यदा तु कार्यान्तरोपयिकेन दृष्टेनैव तण्डुलनिर्वृत्त्यादिना द्रव्योपकारेण निराकाङ्क्षी भवति तदानीमदृष्टकल्पनावसराभावाद्‌द्रव्यैव विधानार्थवत्त्वोपपत्तेर्नादृष्टसाधनत्व प्रतीयते ॥ ६ ॥

*यैः कर्मभिर्द्रव्यं संस्क्रियते अर्थते वा न कर्तुमिष्यते यथा प्रयाजादीभिस्तानि स्वसाधनानि प्रति प्रधानभूतत्वाददृष्टार्थानि भवन्ति ॥ ७ ॥*

ये पुनर्द्रव्यमुत्पाद्यते यथाऽऽधानेनाग्नयोऽवाप्यन्ते क्रियन्ते वा यथा वरणेनर्त्विजः संस्क्रियन्ते, यथाऽवहन्तिना व्रीहयः, पेषणेन तण्डुलास्तानि गुणभूतानि प्रयोजनवद्‌द्रव्यसंस्कृतेरीप्सितत्वात् । यदा दृष्टार्थमदृष्टार्थं चोभयथाऽपि तुल्यवदनुष्ठीयेत तदा किं प्रयोजनं चिन्तायाः ।

दिभिर्द्रव्यं संस्क्रियते । तस्मात्तानि गुणकर्मवचनानि । एष एव विनिगमनायां हेतुः । प्रयोजनं तु पूर्वस्मिन्पक्षे प्रैयङ्गवेऽपि चरौ व्रीहय उत्पाद्या अवघातार्थत्वेन, सिद्धान्ते नोत्पाद्याः ॥ ८ ॥

---

तदुच्यते । प्रैयङ्गवेऽपि चरावतिदेशप्राप्तो व्रीहिसाधनक एवावहन्तिः कर्तव्यः पूर्वपक्षे । कुतः—

प्रधाने हि श्रुतं द्रव्यं नाङ्गद्रव्यस्य बाधकम् ।
प्रयाजेष्वाज्यवत्तेन हन्तिः स्याद्व्रीहिसाधनम् ॥

सिद्धान्ते तु बाध्यन्ते । कुतः—

प्रधानौपयिकं द्रव्यं संस्कारैरपि युज्यते ।
तेन हन्त्यादिभिः सर्वैः संस्कर्तव्याः प्रियङ्गवः ॥

ननु च पूर्वपक्षेऽपि प्रधानप्रयुक्तव्रीह्याश्रयत्वेन प्रकृतावप्रयोजकत्वात्प्रैयङ्गवे चरौ प्रधानेनागृह्यमाणान्व्रीहीनवघातो न लभते । नैतदेवम्—

तुल्यो हि व्रीहिसम्बन्धः शास्त्राद्यागावघातयोः ।
यजिनेज्यादि तुल्यं च नाप्रयोजकलक्षणम् ॥

'व्रीहिभिर्यजेत' 'व्रीहीनवहन्ति' इति तुल्ये चोदने, तत्रेयं प्रयोजिकेयं नेति नास्ति विशेषहेतुः । न च याजिनादिवदवहन्तेरनुनिष्पादित्वम् । न च पैष्टकर्मवत्परप्रयुक्तप्रकृतव्रीह्यन्यप्रधाननिराकाङ्क्षत्वम् । न चैकदेशद्रव्यत्वमुत्तरार्धादिवत् । नापि 'पुरोडाशकपालेन' इतिवदर्थाभिधानकर्मत्वम् । तस्मादवहन्तिरपि प्रयोजकः । न चास्मिन्पक्षे नियोगतो यागार्था एव व्रीहयोऽवहन्तव्याः । लौकिकैरपि कर्मसिद्ध्यविशेषात् । न चात्र प्रकृतग्रहणे प्रमाणं, प्रकरणस्याविशेषकत्वात् ।

न चाधिकाराद्विशेषः 'तुल्येषु नाधिकारः स्यात्' इति न्यायात् । संस्कारपक्षे तु लौकिकानामानर्थक्ये नासंस्कार्यत्वादपूर्वसाधनविशेषणत्वेन कथंचित्प्रकृतग्रहणं क्लेशेन भविष्यति । न चाऽऽरादुपकारकत्वेऽवहन्तेर्यागम्येव लौकिकैः साध्यमानस्य किं विधानर्थक्यमिति श्रौतत्वाद्व्रीहिमात्रग्रहणमेव युक्तम् । धर्ममात्रे च तदाऽवहन्तिः सर्वोपधावहन्तिधर्मस्तद्वदेव च कर्तव्यो नाऽऽतण्डुलनिर्वृत्तेः । प्रधानव्रीहीणां च दलनादिभिरपि तण्डुलीभावः स्यात् । सान्नाय्योपांशुयाजाङ्गत्वमपि चास्य प्रकरणाविशेषात्तथा भवतीति तद्विकारेष्वपि प्रयोक्तव्य इत्यादीनि प्रयोजनानि ॥ ८ ॥

( इति तान्द्वियाधिकरणम् ॥ ३ ॥ )

[४] धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥ ९ ॥ पू० ॥

स्रुचः संमार्ष्टि, अग्निं संमार्ष्टि, परिधिं संमार्ष्टि, पुरोडाशं पर्यग्निकरोति, इति श्रूयते । तत्र संदेहः । किं पर्यग्निकरणं संमार्जनं च प्रधानकर्म, उत गुणकर्मेति । किं तावत्प्राप्तम् । तदुच्यते । कर्ममात्रमेवंजातीयकमपर्याप्तं यत्प्रयोजनस्य दृष्टस्य, तद्धर्ममात्रमिति ब्रूमः । तत्र प्रधानकर्मत्वं स्यात् । कस्मात् । अनिर्वृत्तेरुपकारस्य । न ह्येवंजातीयकं द्रव्यस्योपकारकम् । द्रव्यं ह्येवंजातीयकमभिनिर्वर्तयद्गुणभूतम् । तस्य गुणभूतत्वादिदं प्रधानभूतम् ॥ ९ ॥

तुल्यश्रुतित्वाद्वेतरैः सधर्मः स्यात् ॥ १० ॥ सि० ॥

वाशब्दः पक्षं व्यावर्तयति । इतरैर्गुणकर्मभिः सधर्मः स्यादेवं जातीयकः । यथा व्रीहीनवहन्ति तथा । कुतः । तुल्यश्रुतित्वात् । तुल्या हि द्वितीयाश्रुतिरेषा द्रव्येषु । यथा व्रीहीनवहन्ति इति । एवम्, अग्निं संमार्ष्टि, पुरोडाशं पर्यग्नि करोति इति । किं गुणकर्मणि द्रव्ये द्वितीया दृष्टेति । यतो द्वितीयादर्शनादिहापि सामान्यतो दृष्टेन गुणकर्मता । नेति ब्रूमः । द्वितीया विभक्तिः कर्तुरीप्सिततमे स्मर्यते । सा चेह द्वितीया विभक्तिः

---

स्रुक्परिध्यग्निपुरोडाशसमार्गाणामुत्तरोत्तरप्रधानप्रत्यासत्तिभेदेनोदाहरणपृथक्त्वम् । एतदुक्तं भवति—

दूरेणापि प्रधानानां यत्स्यादुपकारकम् ।
तेनापि कर्मसम्बन्धात्प्राधान्यं प्रपद्यते ॥

तत्र पूर्वपक्षवादी पूर्वोक्तेनैव 'येर्द्रव्यं न चिकीर्ष्यते' इत्यनेन प्रधानकर्मलक्षणेनाऽऽह—द्रव्येण निष्पादितं कर्म न किंचित्तस्य प्रत्युपकुर्वद्दृश्यते । तस्मात्प्रधानकर्म समार्गप्रोक्षणादीति ॥ ९ ॥

नैव ह्येतद्गुणकर्मलक्षणं यद् द्रव्यचिकीर्षा नाम, उपकारलक्षणदोषस्याप्रतिषेधात् । तादर्थ्यलक्षणं हि श्रुत्यादिप्रमाणकं तत्, न प्रत्यक्षाद्युपकारनिमित्तमिति वक्ष्याम । किमर्थं तर्हि द्रव्यचिकीर्षोपन्यस्ता । उच्यते—

अन्यत्र सिद्धरूपाणां येषां दृष्टोपकारिता ।
तेषां नापूर्वमस्तीति हन्त्यादीनामुदाहृतिः ॥

यत्र द्रव्यचिकीर्षया गुणभावस्तत्र नापूर्वमेतदनिष्पत्तत्वमिति यावत् । पूर्वपक्षवादी त्वेतदेव गुणकर्मलक्षणं मत्वा समार्गादिषु तदभावप्रत्ययात्प्रतिपन्नवान् । सिद्धान्ताभिप्रायस्तु

---

१ जै० न्या० (२—२—१) । २ (अ २ पा १ अ १ सू २) अत्रेति शेषः ।

तत एव तदीप्सिततममिति गम्यते । तचेदीप्सिततमं, कर्म गुणभूतम् । यद्यपि प्रत्यक्षादिभिर्गुणभावो न गम्यते, प्रमाणान्तरेण शब्देन गम्यते। तस्माद्गुणभूतमेवं जातीयकमिति ॥ १० ॥

द्रव्योपदेश इति चेत् ॥ ११ ॥

इति चेत्पश्यसि, द्वितीयादर्शनात्प्रधानभूतमत्र द्रव्यमिति। नैतदेवम्। गुणभूतेऽपि द्वितीया भवति । तथा हि दृश्यते । सक्तूञ्जुहोति, मारुतं जुहोति, एककपालं जुहोति, इति ॥ ११ ॥

न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥ १२ ॥

न गुणभूतेऽपि द्वितीया । एवं ह्यभियुक्ता उपदिशन्ति—कर्मणि द्वितीया, कर्तुरीप्सिततमं कर्म इति । न च लोके गुणभूते क्वचिद् द्वितीयां पश्यामः । यदपि च तण्डुलानोदनं पचेति, ओदनार्थं तण्डुलान्

---

सर्वेषां श्रुत्यादिभिस्तच्छूने तादर्थ्ये पश्चादुपकारदर्शनं तदभावेऽदृष्टकल्पनं वा । तत्रेप्सिततमत्ववाचिन्या द्वितीयया द्रव्यप्राधान्यद्वारेण क्रियाशेषत्वे प्रतिपादिते हन्त्यादीना दृष्टार्थत्वाविराकाङ्क्षत्वं जातं न तु संमार्गादीनामित्यदृष्टार्थेना, न च तावता पूर्वावगतशेषत्वहानिः ॥ १० ॥

परस्त्वाह—

अन्वयव्यतिरेकाभ्यामुपकारानुसारिता ।
शेषत्वस्य द्वितीया तु प्राधान्यव्यभिचारिणी ॥

सत्यम् प्रमाणं युक्तं पदमान्तिकम् । अनैकान्तिकी च प्राधान्ये द्वितीया, गुणभूतद्रव्योपदेशेऽपि दृष्टत्वात् 'सक्तून् जुहोति' इति । तथा 'प्रयाजशेषेण हवींष्यभिघारयति' इत्यन्तरेणापि द्वितीयामाज्यप्राधान्यं दृष्टम् । अतो 'व्रीहीनवहन्ति' इत्यत्रोभयसंभवेऽप्युपकारदर्शनात्तमेव द्रव्यप्राधान्यं न द्वितीयाकृतम् । न च तत्संमार्गप्रोक्षणादिष्वदृष्टीतीहापि द्वितीयया द्रव्यमेवोपदिश्यतामिति ॥ ११ ॥

तिष्ठतु तावत्प्रयोगः । किं कारणम् ॥

आचारत्वात्प्रयोगो हि स्मृत्या सर्वत्र बाध्यते ।
विपक्षानेऽकथा चात्र स्मरणे स्वैरकल्पना ॥

यदि ह्याचारस्यैकरूप्यं भवेत्तेन स्मृतयः प्रयत्नेन धारयेरन् । स एव तु संकीर्णत्वादस्फुटः स्मरणेन प्रतिपाद्यते । स्मर्यते च द्वितीयायाः प्राधान्यमर्थः । 'कर्मणि द्वितीया' 'कर्तुरीप्सिततमं कर्मेति'। तथा लोकवेदयोः प्रयुज्यते घटं करोति 'व्रीहीनवहन्ति' इति ।

---

१ पा० सू० ( २-३-२ ) २ पा० सू० ( १-४-४९ )

संस्कर्तुमीप्सिता एव तण्डुलाः । बल्वजान् शिखण्डकान् कुर्विति । बल्वजा एव तेनाऽऽकारेण संनद्धा ईप्सिता इति तत्राभिप्रायः । लौकिकश्च प्रयोगः शब्दार्थपरिच्छेदे हेतुर्न वैदिकः । या लौकिके जुहोतीति प्रयोगे द्वितीया, शक्यते तत्र वक्तुमीप्सिततम एव स प्रयोग इति तण्डुलानत्र जुहोति, तण्डुलानग्र होमेन संनन्यतेति लोके भवति हि बहुप्रकारा विवक्षा । अन्यायश्चाऽनेकार्थत्वम् । तेन प्रधानभावेन सिद्धा सती द्वितीया गुणभावेन कल्प्येत । वेदे तु कथं द्वितीयानिर्दिष्टे गुणभाव इति । द्वितीयानिर्देशात्प्राधान्यमेवावगच्छामः । एवमवगते प्राधा-

यानि च लोके व्यभिचाराशङ्कास्थानानि तान्युदाहरति तण्डुलानोदनं पच बल्वजान् शिखण्डकान् कुरु तण्डुलानग्र जुहुधीति । तण्डुलैर्बल्वजैरिति च प्रयोक्तव्ये या द्वितीया प्रयुज्यते तत्र तृतीसमानार्था सेति गम्यते । तत्रोच्यते—

> सर्वे पाकादिमत्त्वे द्व्याकारास्तण्डुलादय ।
> प्राधान्यांशमुपादाय द्वितीया तत्र वर्त्स्यति ॥

यदा पदार्थान्तरभूतौदनशिखण्डकसाधनत्वेन तण्डुलबल्वजा विवक्ष्यन्ते तदा तृतीयान्तपदभाजो भवन्ति । यदा तु भोजनयोग्यौदनावस्थापरिणतिरूपेण तण्डुला, मार्दवोत्पत्त्यर्थं च शिखण्डकाकारेण बल्वजा दृश्यन्ते ।

तथा वेदवाक्यावगतगुणभावाश्च ते द्रव्यसाधनत्वेऽग्निहोत्रे सुवर्णिहतारिच्छन्तो रम णीयत्वात्कस्याश्चिद्वा लव्या स्वकर्मसौमाहर्शनार्थं तण्डुला होमसंबन्धित्वेनाभिप्रेता । सैव प्रेष्यति गुणकामा वा यजमान तण्डुलानग्र जुहुधीति, तदा द्वितीयार्थमात्रत्व भवति । भवति हि लोके बहुप्रकारा विवक्षेति । गुणभूतेऽप्यर्थे केन चित्कारणेन कश्चित्प्राधान्यांशो विवक्ष्यते तथा प्रधानभूतेषु गुणांशः । यथा चित्रुर्भा कदा चिल्लोमौ ।

न च यद्विवक्ष्यते तच्छब्देनाभिधीयते यमित्यस्ति प्रमाण, विवक्षासंपत्यै तु लक्षणाद्युपायान्तराश्रयण न स्वार्थत्याग । तस्मात्प्राधान्यमेव द्वितीयार्थ । कथ तु सक्त्वादिषु गुणत्वमिति । तदुच्यते—

> प्राधान्यमेव तत्रापि द्वितीया वदति स्वत ।
> विरोधात्तेन संबन्धो गुणभावस्तु लक्ष्यते ॥

द्वितीया तावत्कर्मत्व प्रधानरूपमात्मशक्त्या वदति, तत्त्विह बलवता कारणान्तरेण विरुध्यमानत्वात्नाऽऽश्रीयते । तेन तु कारकविशेषा भवत्वाद्यत्कारकमात्रमप्रविनाभूत लक्ष्यते तदविरुद्धत्वाद्विवक्ष्यते । तत्रैतावानर्थो विज्ञायते होमस्य कारक सक्तव इति । न च सामान्य निर्विशेष व्यवहारक्षममिति विशेषापेक्षायां करणत्वं प्रवेक्ष्यति ।

न्ये बलीयसा हेतुना नास्ति प्राधान्यमित्यवगम्यते । कुतः । न होमस्य केनचित्प्रकारेण सक्त्वर्थताऽवकल्प्यते । कुतः । सक्तूनां निष्प्रयोजनत्वात् ।

न सक्तूनामन्यत्प्रयोजनं दृश्यते श्रूयते वा । यदि वा होमस्तदर्थो होमोऽपि निष्प्रयोजनः । अथाऽऽरादुपकारको होमस्ततः प्रयोजनवान् । ज्योतिष्टोमप्रकरणे पाठाद् गम्यते प्रयोजनवत्ता, नाप्रयोजन इति शक्यते वक्तुम् । प्रयोगवचनेन हि स आकाङ्क्ष्यते । ननु सक्तूनामपि प्रकरणपाठात्प्रयोजनवत्त्वं भविष्यति । को वा ब्रूते—नेति । प्रयोजनवत्त्वेव । प्रयोजनवत्त्वन्तु होममभिनिर्वर्तयतां नान्येन प्रकारेण । ननु तेऽपि प्रयोगवचनेनाऽऽकाङ्क्ष्यन्ते । तदुच्यते । न द्रव्यं तेनाऽऽकाङ्क्ष्यते । इतिकर्तव्यतां हि स आकाङ्क्षति । होमश्चेतिकर्तव्यता, न द्रव्यम् । ननु होमे कृते सक्तुभ्योऽदृष्टं निष्पत्स्यते । नास्त्यत्र प्रमाणम् ।

'द्रव्याणां कर्मसंयोगे' इति भूतभव्यसमुच्चारणन्यायात् । कथं पुनः सक्तुप्राधान्यविवक्षा विरुध्यते । तत्राऽऽह—

भूतभाव्युपयोगं हि संस्कार्यं द्रव्यमिष्यते ।
सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित् ॥

यस्य हि द्रव्यस्य क्वचिदुपयोगो निर्वृत्तो भविष्यतीति वाऽवधार्यते तत्संस्कारहेतुत्वात्कर्म प्रति प्राधान्यं प्रतिपद्यते । यत्पुनर्नोपयुक्तं नोपयोक्ष्यते वा तस्य संस्कारो निष्प्रयोजन इति तद्विधानवाक्यानर्थक्यप्रसङ्गः । तेचामी सक्तवो न होमात्प्रागुपयुज्यन्ते नोर्ध्वं, भस्मसाद्भावाद्भस्मविनियोगवचनाभावाच्च । तत्र समस्तं वाक्यमनर्थकं भवतु द्वितीया वा लक्षणावृत्तेति, स्थितत्वाद्वेदप्रामाण्यस्य लक्षणा ग्रहीतव्या । मुख्यार्थप्रयोगो ह्यौत्सर्गिकत्वादपवाददर्शनेन भ्रान्तित्वं प्रतिपद्यते । सर्वत्रैव लक्षणाश्रयणमानर्थक्यप्रसङ्गनिमित्तम् । अन्यथा मुख्यार्थोपपत्तेः ।

तेन विरोधात्सक्तुसाधनकहोमविधानं प्रकरणसंबन्धि गृह्यते । ननु सक्तूनामपीतिहोमवन्तः सक्तवोऽपि ज्योतिष्टोमस्योपकृत्याऽर्थवन्तो भविष्यन्तीत्याह । सिद्धान्तवादी तु च्छलेन होमसाधनीभूतानामेवार्थवत्त्वमभ्युपगच्छति को वा ब्रूते नेति । सर्वत्रैव च ॥

द्रव्याणां वाक्यसंयुक्तक्रियानिर्वर्तनाद्विना ।
न प्रयोजनमन्यत्स्यात्कार्यमात्राद्यसंगतेः ॥

यथा होमः क्रियात्मकत्वात्किमित्यपेक्षमाणः प्रधानकर्ममात्रेणेत्थमनुग्राहकत्वेन गृह्यते नैवं द्रव्यम् । न च तस्माददृष्टकल्पना, क्रियानिर्वर्त्यत्वादपूर्वाणाम् ।

ननु द्वितीया विभक्तिः प्रमाणम् । न हि द्वितीया विभक्तिर्होमस्य सक्त्वर्थतां ज्ञापयति । न सक्तवः प्रयोजनवन्त इति भवेद्धोमः सक्त्वर्थः, होमसंबद्धाः सक्तवः स्युरिति । भवन्ति होमे कृते सक्तवो होमसंबद्धाः । न होमस्य सक्त्वर्थता निष्प्रयोजनेषु सक्तुषु घटते । सक्त्वर्थतावचनं तु न पुरुषस्योपकारकं न क्रतोः । तदनर्थकमेव स्यात् । न च तद्वचनाच्छक्यमन्यत्कल्पयितुम् । स एव द्वितीयान्तः सक्तूनां होमस्य च संबन्धं करोति । संबन्धे च सति 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' इति भूतत्वाद्, गुणभावे च तृतीया । तेनोच्यते 'तृतीयायाः स्थाने द्वितीयेति । तेन तदर्थत्वाद्धोमार्थत्वात् सक्तूनां न प्राधान्यं द्वितीयासंयोगेऽपि । एवं सत्यर्थवद्वचनम् । न चार्थवत्त्वे सत्यानर्थक्यमित्युच्यते । तस्य च पुरोडाशादेर्यागादिषु शेषभावः, तेन प्रयोजनवन्तः । तत्र संस्कारो नानर्थकः । न स दृष्टोपकारायेति चेत् । अदृष्टार्थो भविष्यति । अदृष्टोऽपि संस्कारोऽस्तीत्यभ्युपगम्यते लोके, यथा

---

यत्रापि तावद्द्रव्यं साक्षात्फलाय चोद्यते यथा 'गोदोहनेन पशुकामस्य' इति तत्राप्यन्यप्रयोजनक्रियाद्वारमन्तरेण नापूर्वं भविष्यति । किमुत यदा न कस्य चिदङ्गत्वेन सक्तव श्रूयन्ते । न च किं चित्कल्पनाप्रमाणमस्ति । द्वितीयेति चेत् । न हीत्युत्तरम् । द्वितीया हि सक्तूनां प्राधान्यं वदन्ती होमं तदर्थं कुर्यात्र सक्तुभ्योऽपूर्वमिति प्रतिपत्तिम् । तेन द्वितीयाप्रसादाद्भवेद्धोमः सक्त्वर्थः । कथं नाम होमव्याप्ताः सक्तवः स्युरिति । नान्यस्मै प्रयोजनायाश्रवणात् । ते चामी भवन्ति होमे कृते सक्तवो होमसंबद्धा इति प्रागेव प्रयोजनलाभात्पर्यवसिता द्वितीया निष्प्रयोजनेष्वपि, होमं प्रति प्राधान्यमात्रेण कर्मत्वनिर्देशः । तत्र सिद्धे वाक्यार्थे पश्चात्त पुरुषस्य क्रतोर्वोपयुज्यन्त इति ज्ञात्वा तद्वचनाद्वाऽदृष्टं कल्प्येत प्राधान्यज्ञानं वा भ्रान्तिरिति । तत्राऽऽह—न च तद्वचनाच्छक्यमन्यत्कल्पयितुमिति ।

प्राधान्याविवक्षैव न्याय्या । ततश्च तृतीयार्थसिद्धिरिति मत्वा महाभाष्यकारेणोक्तं तृतीयायाः स्थाने द्वितीयेति । तेन वचस्य होमसंसर्गयोः, सक्तूनां निष्प्रयोजनत्वेन तदर्थत्वात्, पुरोडाशादेश्चान्यदोषमात्रेण पर्यग्निकरणादिसंस्कारार्हत्वात् । दृष्टे च शास्त्रार्थेऽवश्यिते दृष्टोपकाराभावेऽप्यदृष्टकल्पना भविष्यति । लोकेऽप्यदृष्टार्थाः संस्कारा आचाराद्दृश्यन्ते यथा ग्रामान्तरगतागतानां शान्त्यर्थमग्निदर्शनदध्यक्षतप्रभृतेः शिरस उपरि भ्रामणं शुचिदेशप्रतिष्ठापनं च ।

---

१ (अ० ६ पा० १ अ० १ सू० १)।

ग्रामान्तरादागतानां पुरुषाणां पर्यग्निकरणेनादृष्ट उपकारः क्रियत इत्यु-च्यते । लोके च नानुपपत्तिः ।

प्रयोजने च वरुणप्रघासेषु श्रूयते शमीमय्यः स्रुचो भवन्ति हिरण्मय्यो वा इति । प्रकृतौ नानात्वसस्रुक्संमार्गसाध्यमपूर्वमिति नानात्वसस्रुच उत्पादयितव्याः संमार्गार्थत्वेन यथा पूर्वपक्षः । यथा तर्हि सिद्धान्तः, शमीमय्य एव हि हिरण्मय्यो वा संमार्ष्टव्याः । तथा यत्र वाणवन्तः परिधयस्तत्रापि पालाशा उत्पादयितव्याः पूर्वपक्षे । सिद्धान्ते वाणवन्त एव संमार्ष्टव्याः । अवभृथे च पूर्वपक्षे उत्पादयितव्योऽग्निः संमार्गाय,

---

न चास्यानुपपत्तिराचारप्रामाण्यात् । तेनादृष्टार्थानामपि तुल्यश्रुतित्वात्सिद्धो गुण-भावः । नन्वेवं सति सर्वत्र प्रयोजनवत्ताकृतमेव द्रव्यप्राधान्यमिति न वक्तव्यं ' तुल्य-श्रुतित्वात् ' इति, दर्शयितव्यं वा यत्र प्रयोजनवत्तानिरपेक्षं द्वितीयाकृतमेव प्राधान्यं केवलतृतीयाकृतो वा गुणभाव इति । तदुच्यते । प्राधान्ये तावत् ' ऐन्द्या गार्हप-त्यमुपतिष्ठत ' इत्यत्र लिङ्गादिन्द्रार्थत्वावगतेर्गार्हपत्यैकवाक्यत्वाच्च तत्साधनकेन्द्रोपस्था-नप्रसङ्गे केवलद्वितीयाकृतमेव गार्हपत्यप्राधान्यम् ।

तथा ' सूक्तवाकेन प्रस्तरम् ' इत्युभयोः प्रयोजनवत्त्वाविशेषे केवलतृतीयाकृतमेव सूक्तवाकस्य प्रस्तरप्रहरणाङ्गत्वम् । तेन विभक्तिभिरेवाकाङ्क्षायेऽभिधीयमाने निष्प्रयो-जनत्वमपवादो न तु प्रयोजनसदसद्भावेनाकाङ्क्षित्वमिति विवेकः । प्रयोजनं त्वविकर-णस्य न सम्यगनुमन्यन्ते । तथा हि—

स्रुङ्मात्राद्यनुवादेन शमीमय्यादिचोदितम् ।
ज्ञायतेऽङ्गप्रधानार्थं पूर्वसिद्धान्तपक्षयोः ॥

प्रियङ्गवो ह्युत्पत्तिवाक्यात्केवलप्रधानार्थत्वेन ज्ञायमाना युक्तं यदङ्गेषु न भवन्तीति । शमीमयत्वादि तु स्रुगादिमात्रानुवादेन विधीयमानं 'सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात्' इत्यनेन वाक्यसंयोगबलीयस्त्वात्प्रकरणगम्यप्रधानार्थत्वबाधेनाङ्गप्रधानार्थं विज्ञायते ।

न चात्र विशेषणं किं चिदुपात्तं येन प्रधानगतस्रुगादिमात्रप्रतीतिः स्यात्, सदपि चोद्दिश्यमानविशेषणत्वान्न विवक्ष्येत ।

तस्मात्पूर्वपक्षेऽपि यानि च प्रधानसंबन्धीनि स्रुगादीनि यानि चाऽऽरादुपकारकसं-मार्गादिसंबन्धीनि तानि सर्वाणि शमीमयीत्वादियुक्तानीत्ययुक्तो नानात्वसस्रुक्संमार्गः । स्यादेतत् । 'मुख्यार्थो वाऽङ्गस्याचोदितत्वात् ' इति वैकृतविशेषाणां केवलप्रधानार्थत्वा-त्तेहाङ्गप्रधानार्थता भविष्यतीति । तदयुक्तम् ।

वाक्योपात्तप्रधानार्थसंबन्धो यत्र गम्यते ।
तत्रैतद्वक्ष्यते नात्र तादृशश्च प्रतीयते ॥

'यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्या' इति हि प्रधानैरेव का म्यशब्दोपात्तैरपांशुत्व संबध्यमानमङ्गस्याचोदितमिति वक्ष्यते, न चात्र तादृश प्रधा नसंयोग इति वक्तव्यम् । ननु चाऽऽतिदेशिकत्वात्प्राप्तावस्थेष्वङ्गेषु शमीमयीत्वाद्युपदि- श्यमान प्रधानमात्रार्थं भवेत् । नार्हत्येव भवितुम् । एवं हि स्थास्यति ।

लब्धोपकारसाकाङ्क्षा प्रथम प्राकृतै सह ।
संबध्यन्ते समीपस्थ विकारा प्रोऽङ्गय चोदितम् ॥

अवश्य चानेकार्थविध्यनुपपत्ते स्रुगादीन्यनुवदितव्यानि । तेन प्रत्यक्षोऽपि सन्नुपदे- शोऽतिदेश तावत्प्रतीक्षते । तत्र यावता कालेन प्रधानस्रुगादीनि प्राप्नुवन्ति तावतैवाङ्ग स्रुगादीन्यपीत्यविशेष । किं च ॥

यदि प्रधानमात्रेण शमीमय्यादिसंगति ।
प्राकृत्यस्तु प्रसज्यन्ते प्रयाजादिस्रुचस्तत ॥

॥ एवं हि समार्गस्रुचा वर्जनोपायलेनैव प्रयाजादिस्रुग्वर्जनमपि प्राप्नोति, ॥ चेत दिह युक्त्यभावात् । यद्यपि च किं चित्प्रधानमात्रसबन्धकारण भवत्तथाऽपि सौमिक- वेदिदक्षिणान्यायेन प्रसङ्गसिद्धेर्न प्राकृतजात्युपसंग्रहो युज्यते । किं च—

परिध्यादेश्च कार्येण स्वरूपमुपलक्षितम् ।
अतत्कार्यस्य समार्गे परिधेर्न कृतो भवेत् ॥

परिधिरित्यग्निपरिधानार्थं द्रव्यमुच्यते । तथा होमाद्यर्था जुह्वादयस्तत्र समार्गस्य 'अर्थाभिधानकर्मं च' इत्यप्रयोजकत्वमपि शक्य वक्तुम् । सतश्च बाणवत्परिधिश्रवणे यदि तावत्परिहितानेव पलाशादीन्स मार्ष्टि, अपरिधय एव समृष्टा भवेयु । अथ तानपि परि- दधीत, तत कृते परिधाने प्राप्तनार्थता न स्यात् । न च तुल्यार्थाना समुच्चयो दृष्ट । तस्मान्न परिध्यन्तरमुत्पादनीयम् । अवभृथस्य त्वपूर्वत्व यावदुक्तमात्रपर्यवसायिन साङ्गस्य चाप्सु चोदितस्य येन समार्गेऽग्निवो प्राप्नोति येनोत्पाद्येत । तस्मादप्रयोजना- न्येतानि ।

तस्योदाहरण त्वेव सत्यम् । तत्र हि 'मांस तु सवनीयानाम्' इति सिद्धान्तात्पुरो डाशमात्रेणासब यमान तरसमयत्वमसवनीयत्वात्र पर्यग्निकरणपुरोडाशेन संबध्यते । न हि सवनीयाङ्गे सवनीयशब्दप्रयोग । सवनसबन्धिविषयत्वात् । सवनीयाङ्गस्य चासवनार्थत्वार्थत्वात्तत्रापि तु व्रीहिमयत्व दुर्लभम् । 'व्रीहिभिर्यजेत' इति प्रधानपुरो-

१ (अ० ३ पा० ८ अ० १९ सू० ३४) इत्यत्रेति शेष २ (अ० ४ पा० १ अ० ११ सू० २६)। ३ (अ० ३ पा० ८ अ० २० सू० ४२)।

सिद्धान्ते चाऽऽपः संमार्जनीयाः । तथा षट्त्रिंशत्संवत्सरे तरसमयाः पुरोडाशाः सवनीया इति श्रूयते । तत्रापि पिष्टमयः पुरोडाश उत्पादयितव्यः पर्यग्निकरणार्थत्वेन पूर्वपक्षे । सिद्धान्ते मांसमया एव पर्यग्निकर्तव्या इति ॥ १२ ॥

## [५] स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥ १३ ॥ पू०

प्रउगं शंसति, निष्केवल्यं शंसति, आज्यैः स्तुवते, पृष्ठैः स्तुवते इति गुणवचनं स्तवनं शंसनं च । यथा इन्द्रस्य नु वीर्याणि प्रवोचम्[1] ।

---

डाशमात्रेण तेषां संबन्धात् । एवं तर्ह्यनियतद्रव्यकता पर्यग्निकरणपुरोडाशस्येति प्रयोजनम् । तदप्ययुक्तम् । तथा सति कांस्यभोजिन्यायेन[2] तरसमयपर्यग्निकरणेनैव शास्त्रार्थोपपत्तेः सिद्धान्तेऽसदृशकर्मप्रसङ्गः । तस्मात्कथं चित्प्रकृतौ व्रीहिमयपुरोडाशग्रहणात्तत्साधनत्वं शास्त्रकृतत्वात्प्राप्नोतीति वक्तव्यम् ।

तत्रापि स्वेकहायनीन्यायेनाप्रयोजकत्वात् तदभावे लोपप्रसङ्गः । तेनैतदेव प्रयोजनमित्याश्रयणीयम् । अनियतद्रव्यकत्वं वा । न चात्र कांस्यभोजिन्यायः संभवति । मांसेन पुरोडाशत्वानभिव्यक्तेः । सवनीयपुरोडाशो कथमिति चेत् । नैवं तत्र पुरोडाशत्वमिष्टं, वचनादपुरोडाशात्मकमेव मांसं पुरोडाशस्य स्थाने विधीयते यथा धानादीनाम् । न हि कथं चिदपि मांसेन धानादयो भवन्ति । अतश्च प्रैयङ्गवन्यायेन[3] प्रधानमात्रे मांसेन पुरोडाशो निर्वर्तितः । पर्यग्निकरणं तु पुरोडाशसाधनकमेव । तत्त्वनियतद्रव्यको वा कथं चित्प्रकृतिदर्शनेन व्रीहियवद्रव्यक इति स्थितम् । एतानि च प्रयोजनानि स्रुक्संमार्गस्य प्रकृतौ बहुसाधनत्वात्कपिञ्जलन्यायेन त्रित्वस्य शास्त्रीयत्वात्पात्रावृद्धावपि पशुचातुर्मास्येषु तिस्र एव संमार्ष्टव्याः पूर्वपक्षे । सिद्धान्ते तु सर्वाः, संस्कारस्य प्रतिप्रधानावर्तित्वात् ।

तथा पशुन्यायेन विवक्षितैकसंख्यत्वादेक एव संमार्ष्टव्यः परिधिः पूर्वपक्षे । सिद्धान्ते तु सर्वे । यत्र च परिधिवृद्धिस्तत्र विशेषः । एवमेकपुरोडाशे पर्यग्निकरणं सर्वपुरोडाशे च वक्तव्यम् । तथाऽपि ' विजये शौङ्किकः स्यात्' इत्येवम् ' अग्निमुपनिधाय

---

१ ऋ० सं० ( १-२-२६ )। २ अत्र चायं न्यायः । गुरुरनियतपात्रभोजी शिष्यस्तु नियतकांस्यपात्रभोजी गुरुश्चिह्नभोजी च, तयोरेकपात्रभोजने प्रसक्ते गुणभूतशिष्यानुरोधेन प्रधानभूतस्यापि गुरोः कांस्यपात्रभोजनमेव न्याय्यमविरोधात् इति । ३ (अ० ४ पा० १ अ० ५) अजयन्यायेनेत्यर्थः । ४ ( अ० ७ पा० ३ अ० १२ सू० ३० )।

इति। यदेतद् गुणवचनं श्रूयते, किमेतद् गुणभूतं देवतां प्रति, उत प्रधानमिति। तत्रोच्यते। स्तुतशस्त्रे संस्कारकर्मणी इति। कुतः।

देवताभिधानत्वात्। गुणवचने निर्वर्त्यमाने गुणिनी देवता संकीर्त्यते, नान्यथा तद्‌गुणवचनं भवति। तत्र प्रत्यक्षं देवताभिधानं गम्यते, देवताप्रकाशेन च प्रत्यक्ष उपकारो यागसिद्धिः। तस्माद् संस्कारकर्मणी याज्यावत्। यथा याज्यामन्वाह, पुरोऽनुवाक्यामन्वाह इति स्तुतिवचनं देवताप्रकाशनेनार्थवत् तद्वदेतदपीति ॥ १३ ॥

## अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ॥ १४ ॥ सि० ॥

यदि संस्कारकर्मणी एव स्तोत्रशस्त्रे, अर्थेनापकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वाद् देवतार्थस्य गुणभूतो मन्त्र इति तत्प्रधानभावे यत्र प्रधानं तत्र नीयेत। तत्र क्रमसंनिधी उपरुध्येयाताम्। तस्मादेष

स्तुवते' इतिवल्लौकिकाग्निसंमार्गकरणं पूर्वपक्षे। सिद्धान्ते तु तस्याप्रयोजनत्वेनासंस्कार्यत्वात्सर्वेषामाहवनीयादीनामिति विशेषः ॥ १२ ॥

( ॥ इति संमार्गाधिकरणम् ॥ ४ ॥ )

---

'येस्तु द्रव्यं चिकीर्ष्यते' इत्यस्यापवादत्वेन स्तोत्रशस्त्रोपन्यासः। स्तुतिरेव स्तोत्रं, शस्त्रमपि सैवाप्रगीतमन्त्रसाध्या, गुणगुणिसंबंधकीर्तनं च स्तुतिः शिष्यते। सा च प्रथमं गुणगुणिभ्यां निर्वर्त्यते। तदभावे शब्दोच्चारणमात्रस्य स्तुतित्वाव्यपदेशात्। तत्र गुणानां तावदकर्माङ्गतया निष्प्रयोजनत्वादेकान्तेन स्तुत्यर्थता। तन्निर्वर्तिता तु स्तुतिः किं स्तुत्यस्य स्मारकत्वेन शेषीभवत्युत स्वप्राधान्येनादृष्टार्था भवतीति। किं प्राप्तम् ॥

दृष्टेन क्रतुसिद्ध्यर्थां साधयन्ति यतः स्तुतिम्।
स्तोत्रशस्त्राणि तेन स्युः संस्कारा देवतां प्रति ॥ १३ ॥

प्रमाणान्तरविरोधेन दूषणं तावदुच्यते। तथा हि—

यद्यप्रविद्यमानार्थो मन्त्रः स्तोतुं प्रयुज्यते।
तस्यार्थेनापकृष्टत्वात्क्रमस्थानबाधः प्रसज्यते ॥

या यद्देवतानामसंयुक्ता स्तुतिचोदना भावनेति यावत्, चोद्यमानत्वात्, सा तदर्थपरत्वात्तस्मिन्नसति न स्वार्थं करोतीति तद्यथैन्द्रीस्तुतिर्माहेन्द्रग्रहयाजिमंनि, विमुलक्ष्य परेन्द्रस्तत्र गच्छेत्। ततश्च क्रमसंनिधिबाधः। क्रमश्चात्र यथासंख्येनोत्तरासु पाठः।

दुष्टः पक्ष इति पर्युदसितव्यः । कतमः पुनरसौ मन्त्रः, अभि त्वा शूरे-स्यैन्द्रः प्रगाथो माहेन्द्रस्य ग्रहयजेः संनिधावाम्नातो, यत्रेन्द्रस्तत्रापकृष्येत ॥ १४ ॥

वशावद्वाऽगुणार्थं स्यात् ॥ १५ ॥

न पर्युदसिष्याम इमं पक्षं, संस्कारकर्मणी एव स्तोत्रशस्त्रे, देवताभिधानत्वादेव । यदुक्तं, मन्त्रार्थस्योत्कर्ष इति तन्न । इन्द्रशब्देन महेन्द्रोऽभिधास्यते, स एवेन्द्रो महत्त्वेन गुणेन महेन्द्र इत्युच्यते । पश्यामो हीन्द्रशब्दं देवतावचनमुपलभामहे, महत्त्ववचनं च महच्छब्दम् । यथा, राजा महाराजः, ब्राह्मणो महाब्राह्मण इति । वशावत् ।

यथा, सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेतेत्यजावशाशब्देन चोदिते कर्मणि च्छागशब्देन निगमा भवन्ति तद्वत् सगुणे चोदिते निर्गुणेनाभिधानं भविष्यति । तेन न भविष्यत्युत्कर्ष इति ॥ १५ ॥

न श्रुतिसमवायित्वात् ॥ १६ ॥

नैतदेवम् । इन्द्रोऽस्य ग्रहस्य देवतेति तद्धितसंयोगेन विज्ञायते ।

---

संनिधिस्तु स्वतन्त्रचोदनयोपस्थाने प्रकरणपरामर्शो वा ॥ १४ ॥

नायं दोषः । किं कारणम्—

तत्र मन्त्रोऽपकृष्येत यत्र सोऽर्थान्तरं वदेत् ।
अभिवत्योऽर्थवत्त्वं तु साम्यादिन्द्रमहेन्द्रयोः ॥

य एव हि अभिवर्तादिभिरिन्द्रः स्तूयते स एव माहेन्द्रग्रहेणेज्यते तत्र सर्वेषामर्थे किमित्यपकर्षः स्यात् । न च यावत्कर्माङ्गभूतेऽर्थे क्रियते तत्सर्वं मन्त्रेणाभिधातव्यं, न्यूनमाधिकं वाऽसौ यदभिधातुं समर्थस्तदभिधत्ते । तेन निर्गुणेन्द्रप्रकाशनं गुणस्यातन्त्रत्वात्प्रकरणलभ्यत्वाद्वा निर्गुणद्रव्यप्रकाशनवदेव । न च शब्दमात्रं देवतेति यथमनुषाम-योरभिधास्यते । ततश्च य एव महेन्द्रशब्देनार्थश्चोदितः स एवेन्द्रशब्देनोच्यत इत्यर्थान्तरत्वकल्पनाप्रमाणाभावात् । तस्मादुत्कर्षोपलम्भाभावात्संस्कारकर्मत्वमेव युक्तमिति ॥ १५ ॥

नैतदस्ति निर्गुणेन्द्राभिधानादनुत्कर्ष इति । प्रसज्यत एवोत्कर्षः । कुतः—

---

१ प्रगाथ इति—अनेन च, पादं पुनरारभत इति वचनावयवस्य, आद्यामृचं द्वैरपठित्वा तस्या अन्त्यपादेन सह द्वितीयायाद्यर्धं पठित्वा तदन्त्यपादेन सह द्वितीयान्त्यार्धं पठनमध्यस्य प्रगथनस्य माहेन्द्रग्रहसंनिधानागतस्य तदङ्गत्वात्प्रकरणसंनिधिपाठ- सूचित । अन्यथा कर्मसंनिधौ उपलभ्येयातामिति द्विवचनानुपपत्तेरिति भावः ।

**न चास्य महत्त्वमपेक्षमाणस्य तद्धितसंयोग उपपद्यते । तद्धितसंयोगापेक्षस्य वा महत्त्वसंबन्धात् समासकल्पना ।**

यद्यभेदः प्रमाणेन भवेदिन्द्रमहेन्द्रयोः ।
ततोऽयं नापनीयेत भेदस्त्वत्र प्रतीयते ॥

यद्यवयवव्युत्पत्त्या महांश्चासाविन्द्रश्चेत्येवं महेन्द्रशब्दमन्वाचक्षाणैस्तद्धितानुगमः क्रियेत, तत इन्द्र एव गुणमात्रविशिष्टोऽस्य महस्य देवतेति गम्येत । न त्वेवमस्ति । समुदायप्रसिद्धिबलीयस्त्वेनेन्द्रव्यतिरिक्तरूढिशब्दाभिधेयमहेन्द्रप्रतीतेः । तथा हि—

व्युत्पाद्यते महेन्द्रश्चेद्वाक्यभेदादि दुष्यति ।
अव्युत्पत्तौ महेन्द्रार्थः स्फुटं वस्त्वन्तरं भवेत् ॥

**न चास्य महत्त्वमपेक्षमाणस्येति** अवयवव्युत्पत्तिं निराकरोति । कथम्—

वृत्तिद्वयेऽपि सामर्थ्यं स्मर्यते हि विशेषणम् ।
व्युत्पत्त्याश्रयणे चैतदुभयत्रापि दुर्लभम् ॥

'समर्थः पदविधिः' । 'समर्थानां प्रथमाद्वा' इति च समासतद्धितवृत्त्योर्विशेषणम् । अतस्तदभावे नैकत्रापि भवितव्यम् । यदि युगपत्समासतद्धितावन्वाख्यायेते ततो नैकत्रापि सामर्थ्यं लभ्यते । कुतः—

तद्धितेन ह्यसंबन्धो महत्त्वेऽपेक्षिते भवेत् ।
तस्मिन्ननपेक्ष्यमाणे च न महत्त्वेन संगतिः ॥

एकार्थीभावलक्षणं व्यपेक्षालक्षणं वा सामर्थ्यमुभयथाऽपि सापेक्षस्य नावकल्पते । कथम्—

अन्यत्रान्यानपेक्षत्वे ह्यन्योन्यैकार्थतेष्यते ।
सापेक्षस्त्वन्यविक्षिप्तो नैकार्थ्यं प्रतिपद्यते ॥

अविक्षिप्यमाणौ हि द्वावर्थावेकत्र लोलीभावं प्रतिपद्येयाताम् । न च विक्षिप्यमाणौ, नानात्वे बुद्धिकालुष्यात् । यो ह्यवयवाभ्यामेकत्रोपसंहृताभ्यामुभयविशिष्ट एकोऽर्थः प्रतिपाद्यते सोऽपि निरपेक्षाभ्यामेव । सापेक्षत्वे संशयरूपेणैकत्रानुपसंहारात् । एवं तावदैकार्थ्यलक्षणसामर्थ्याभावः ।

न च तद्धितार्थे वृत्तस्य महत्त्वसंबन्धः । न च समासार्थे वृत्तस्य तद्धितसंबन्धः । न चास्मिन्नेव प्रयोगे समासार्थे वृत्तिरिष्यते, एतस्मिन्नेव तद्धितार्थे । न चायमिन्द्रशब्दोऽविहितवत् स्वार्थे तद्धितार्थेन संबध्येत विहितवच्च परार्थे महत्त्वेन संबद्धुमनुज्ञेत । विस्पष्टश्चायमन्योऽर्थो महेन्द्रो भवति । महानिन्द्रो भवतीति महेन्द्रः । अन्यश्चेन्द्रो हविषो देवता भवतीति सकृदुच्चारणे च नोभयं शक्येत । तस्मान्नैन्द्री देवता, महत्त्वविशिष्टः । महेन्द्रशब्दात्तु तद्धित उत्पन्नः । तस्मात्तत्प्रातिपदिकमर्थवदिति गम्यते, न त्ववयवसंबन्धेन । तस्माद्देवतान्तरमिन्द्रान्महेन्द्रः । तेनैन्द्रस्य प्रगाथस्योत्कर्षः प्राप्नोति । अतः पर्युदसितव्य एष पक्षः ।

यदप्युच्यते, इन्द्रस्य वृत्रवधोत्तरकालं महेन्द्रत्वं दर्शयति, महान् वाऽयमभूद् यो वृत्रमवधीत् इति । तथा वेदस्यादिमत्त्वादोषः प्रसज्येत । अतोऽन्य इन्द्रो महेन्द्रात् ॥ १६ ॥

व्यपदेशाभेदाच्च ॥ १७ ॥

क्रमेणाऽऽख्यायमाने तु वाक्यभेदोऽसकृच्छ्रुतेः ।

कृत्वा समासमुच्चार्य पुनः शब्दद्वयं भवेत् ॥

एतदेवाभिप्रेत्याऽऽह—न च तद्धितार्थे वृत्तस्येत्यादि ।

तद्धितार्थे च वृत्तस्य वृद्धिः स्यादुत्तरे पदे ।

महत्त्वं द्रव्यसंबन्धि नोपसर्जनसंगति ॥

महेन्द्र इति हि स्यान्न चेन्द्रविशेषणं महत्त्वम् । न ह्युपसर्जनमभिभूतस्वार्थवृत्ति विशेषणान्तरैः संयुज्यते । न च समासार्थे वृत्तस्येति वाक्यभेदप्रसङ्गेनैवोच्यते । तेन क्रमवृत्तिरपि नास्तीति प्रतिपाद्य पुनर्युगपद्वृत्तिमेव दोषान्तराभिधित्सयोपन्यस्यति । ऐकशब्द्ये परार्थवत्[2] इत्यनेन न्यायेनेन्द्रशब्दस्य महत्त्वतद्धितार्थौ प्रति वैरूप्यनिमित्तवाक्यभेदप्रसङ्गः । विध्यनेकव्यापारात्मकव्यापारो वाक्यभेदः । तथा हि—

महत्त्वस्येन्द्रसंबन्धं तस्य च द्रव्यसंगतिम् ।

विदधत्प्रत्ययो वाक्यं भिन्द्यात्पुनरपि श्रुतेः ॥

तस्मान्नैन्द्री देवता महत्त्वविशिष्टः । किं तर्ह्यवयवसंबन्धानिरपेक्षान्महेन्द्रशब्दात्तद्धितोत्पत्तिः । अतश्च सिद्धं देवतान्तरत्वम् । न च वृत्रवधोत्तरकालं महत्त्वाभिधानेनेन्द्रस्यैव महेन्द्रत्वं भवेत् । वेदस्याऽऽदिमत्त्वप्रसङ्गात् । अतो नित्यरूढस्यैव स्तुतिमात्रार्थमेतत् ॥ १६ ॥

व्यपदेशभेदश्च भवति । दद्‌ दुग्धीन्द्राय देवेभ्यो हविः, इति यद्दु-दुग्धि महेन्द्राय देवेभ्यो हविरिति । अतोऽपि देवतान्तरम्, एकदेवत्वे मन्त्रविकल्पः स्यात् ॥ १७ ॥

---

व्यपदेशभेदाच्च भेदः । एवं च मन्त्रयोरर्थवत्ता भविष्यति । इतरथा विकल्पे पक्षे बाधः स्यात् । असति चार्थभेदे मन्त्रभेदस्यादृष्टार्थता प्रसज्येत ।

तस्माद्यथैव सूर्यादेरिन्द्रादत्यन्तभिन्नता ।
महेन्द्रस्य तथैवेति प्रमाणापनयो भवेत् ॥
एवं व्याख्यायमाने तु रूढित्वे तद्धिते सति ।
अग्नीषोमादयः सर्वे रूढित्वान्न द्विदेवताः ॥

यथैव हीन्द्रशब्दस्य महत्त्वतद्धितावपेक्षमाणस्य युगपत्क्रमेण वा वृत्तिर्न समवत्येवमेव सोमस्याग्निमपेक्षमाणस्य न तद्धितसम्बन्धस्तदपेक्षस्य वा नाग्निना सह समासः । तथा क्रमवृत्तौ पुनरुच्चारणे वाक्यभेदादन्यतरत्र वृत्तस्यान्यतरेण वृत्तिः, सोमपदस्य वैरूप्यं, प्रत्ययस्यानेकार्थवृत्तिरिति दोषाणां साम्येनारूढित्वप्रसङ्गात्समस्तद्विदेवत्यत्वव्यवहारोच्छेदः स्यात् ।

न चैषां रूढित्वं शक्यं वदितुं, सर्वत्र शास्त्रे द्विदेवत्यत्वाभ्युपगमात् । तद्यथा चैतुर्धाकरणेन्द्रपीतपूर्वप्रविष्टभागविचारेषु सापेक्षाग्निदेवत्यादीनामैन्द्राग्नाग्नीषोमीयादीनामाग्नेयादिशब्दैः केवलाग्न्यादिदेवताकरसामर्थ्यादग्रहणमिति वक्ष्यति । रूढित्वे हि कस्य कापेक्षा भवेत् ।

तथा द्विदेवतत्वसामान्येनैन्द्रापौष्णादीनामग्नीषोमीयैन्द्राग्नप्रकृतिकत्वं वक्ष्यते । तथा 'मेधपतिभ्यां मेधम्' इत्यत्र 'देवता तु तदाशीष्ट्वात्' इत्यर्धद्वयमाश्रयिष्यते । तथा मनोताधिकरणे वक्ष्यति सत्यमग्नीषोमौ देवनामकृतौ तावग्निश्च सोमश्च तत्राग्निरदेवता न त्वसमवेत इति । तथा देवताद्वन्द्वाश्रयाणि अग्नेरीत्वपत्वादीनि स्मर्यमाणानि न शक्यानि बाधितुम् ।

यदि च व्याकरणमेवमादावप्रमाणं तर्हि देवतातद्धितस्मरणाप्रामाण्यादग्नीषोमादीनां देवतात्वमपि न स्यात् । अथ तत्प्रतीतिरभ्युपगम्येत सा तुल्याऽर्धद्वयप्रतीतावपीति रूढित्वाभावः । एतेनाथर्वणादिवदर्थरहितसमासान्वाख्यानेन स्वरसंस्कारप्रसिद्ध्यर्थं

---

१ (अ० ३ पा० १ अ० १५)। २ (अ० ३ पा० २ अ० १८)। ३ (अ० ३ पा० ३ अ० १५) एतदधिकरणविषयं। ४ (अ० ८ पा० १ अ० ७) अत्रेति शेषः। ५ (अ० ९ पा० ३ अ० १२ सू० ३५)। ६ (अ० १० पा० ४ अ० २२ सू० ४२) अत्र भाष्यकार इति शेषः। ७ इदमे सोमवरुणयो, आमद्भुस्त्सोमसामा इति सूत्राभ्यां इति शेषः।

यज्ञीषोमीयादिद्वंद्वस्मरणप्रामाण्यकल्पनं प्रत्युक्तम् । तथा हि—

यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते ।
स्वरसंस्कारमात्रार्था तत्र व्याकरणस्मृतिः ॥

महदिन्द्रशब्दयोस्तावदवश्यं पृथगर्थाभिधानशक्तिः कल्पयितव्या । तयोश्च गुणगुण्य-भिधायित्वाद्विशेषणविशेष्यात्मकत्वमवधारितम् । तत्र यावदेव संहतावुच्चारितौ तावदेव पूर्वानुभूतार्थसंबन्धितया विशिष्टार्थप्रत्ययो जायते । न चास्य निवर्तकं किंचिदस्ति । न च समुदायस्यापूर्वशक्त्यन्तरकल्पनाप्रमाणं विद्यते । लक्षणात्मिका च समुदायप्रसिद्धिरव-यवप्रसिद्धिं बाधते । न चावयवार्थरहितार्थान्तरप्रयोगं विस्पष्टमन्तरेण तदात्मलाभः । किं च—

एकस्तावदातिदेशैरिन्द्रोऽस्तीत्यवगम्यते ।
महेन्द्रस्त्वपरः कल्प्यः पुनः क्लेशान्तरैर्भवेत् ॥

प्रत्यक्षेऽपि तावदर्थेऽनेकशब्दशक्तेः कल्पना निष्प्रमाणिका, किमुत यत्रार्थसद्भा-वोऽपि कल्पनीयः । तद्धि महेन्द्रशब्दप्रयोगान्यथानुपपत्त्येन्द्रस्तावददृष्टोऽपि कल्प्यते, तत्र यदि पुनर्महेन्द्रशब्दप्रयोगान्यथानुपपत्तिर्भवेत्ततोऽर्थान्तरं महेन्द्रो नाम कल्प्येत । यदा तु पूर्वकल्पिताभ्यामेव महदिन्द्रपदशक्तिभ्यां प्रयोगः सिध्यति, स एव चार्थः किंचिद्वि-शिष्टः प्रत्यभिज्ञायते, कस्तदाऽर्थान्तरं कल्पयितुं शक्ष्यति । तस्मादिन्द्र एव महत्त्व-विशिष्टो महेन्द्रो नान्य इति सिद्धम् । न च समासं कृत्वा तद्धिते क्रियमाणे कस्य चिदसामर्थ्यं समासवेलायां तद्धितवेलायां चापेक्षणीयार्थान्तरानुपादानात् । न च द्विरुच्चा-रणनिमित्तवाक्यभेदप्रसक्तिः । सकृदुच्चारितैकपदोपात्तानेकार्थकथनात् । वृत्तिद्वयात्मकं हि माहेन्द्रपदम् । एकैका च वृत्तिर्वाक्यार्थे वर्तते । तत्र ययोर्वाक्ययोरर्थौ माहेन्द्रपदेनोपात्तौ तौ ताभ्यां निर्भिद्य कथ्येते । यथात्रासकृदुच्चारणं दृश्यते न, तद्भेदवचनस्यैव । न हि कदा चिदप्येवंरूपो वेदोऽस्ति महांश्चासाविन्द्रश्च महेन्द्रो देवता अस्येति माहेन्द्रः । न चैतदेवं वैदिकं पदमेवं विभज्यते । विभागस्य पौरुषेयत्वेनावैदिकत्वापत्तेः । किं तु—

वेदे स्वरूपतः शब्दो माहेन्द्रादिरवस्थितः ।
तस्यार्थः सकलो वाक्यैः पौरुषेयैर्निरूप्यते ॥

विचित्रशक्तीनि हि पदानि एकानेकपदार्थप्रतीतेः ।

तथैषामर्थकथनं कदाचित्पदेनैवान्येन क्रियते कदाचिद्वाक्येन, तेनाप्येकेनानेकेन वा द्विपदेन बहुपदेन वेति वैचित्र्यम् । तद्यथा कः पिकः कोकिलः, क औपगव उपगोर-पत्यम् । उपगुना वा स्वकान्तायामुत्पादितः । तथा पचतीत्युक्ते पाकं परगामिफलमेकः कर्ता पूर्वापरीभूतं वर्तमानकाले निर्वर्तयतीति कथ्यते । न चैवं कथयता वाक्यभेदः प्रस-ज्यते । न वाऽशब्दार्थत्वमध्यवसीयते । एवमेव यदि माहेन्द्रपदोपात्तोऽर्थस्तदस्यशक्तिरेव

शब्दशक्तिविद्धि पुरुषै स्ववाक्यैनैकेनानेकेन वा कथ्यते कस्तत्र वाक्यभेद, शतकृत्वोऽपि हि स्ववाक्यमुच्चार्यमाण न वेद दूषयति। न च तदीयोऽर्थ कथ्यमान पौरुषेयत्व भजते, अवश्य चानेकोऽर्थ पुरुषै कथ्यमान क्रमेण कथयित य, सोऽपि च प्रकृति प्रत्ययपौर्वापर्येणेत्येव कथ्यते महाश्वासाविन्द्रश्चेत्यादि। न चैव सापेक्षत्वम्। 'अथवा भवति च प्रधानस्य सापेक्षस्यापि समास' इति यद्यपीन्द्रशब्दस्तद्धितापेक्षस्तथाऽपि महत्त्व प्रति प्राधान्याल्लभते समासम्। अतश्च युगपदपेक्षायामविरोधस्तथाऽपि तु वृत्ति क्रमेणैव। युत —

सापेक्षोऽपि महत्त्वेन प्रधानत्वात्समस्यते।
तदपेक्षो गुणत्वात्तु तद्धितेनैव वर्तते॥

तेन यत्रैव प्रधान सापेक्ष तत्रैतयैव तावद्वृत्त्या भवितव्यमिति समास एव प्रथम भवति। यदि वा कृत्वा समास तन्त्रेण वृत्तिरिष्येत, तत शुद्ध इन्द्रस्तद्धितसबन्धी शुद्धश्च समासभागिति निर्गुणस्यैवेन्द्रस्य देवतात्वापत्तेर्गुणानर्थक्यप्रसङ्ग।

न चेन्द्रमहत्त्वयोर्युगपत्ताद्धितार्थे निपतितयोरुणैकहायन्यादिवत्परस्परनियमो लभ्यते। न ह्यक्रियाया युगपत्सनिपातो नापि विशेषणवशीकारसामर्थ्यम्। सत्यपि च द्वन्द्वदेवतापत्ति। अकृतसमासयोश्च महदिन्द्रशब्दयोरनेकत्वाद्विवक्षितैकसख्यप्रातिपदिकनिमित्ततद्धितसबन्धाभावप्रसङ्ग। किं च—

सुबन्तौ यदि वैतौ ते, न प्रातिपदिक तत।
असुबन्तत्वक्लृप्तौ वा समासाशो न लभ्यते॥

तस्मान्न युगपद्वृत्तिरिति क्रमवृत्त्या समासार्थस्यैव देवतात्वम्। अतश्चेन्द्र एव गुणसयुक्तो महेन्द्रो नार्थान्तरमिति पूर्वपक्ष एव शोभन इत्यन्यदुत्तर वाच्यम्। तदुच्यते—

श्रुत्या हि देवता यागे समवैति न रूपत।
तस्मान्माहेन्द्रशब्दोक्त्या महेन्द्रो देवतेष्यते॥

यद्यप्यभिन्नोऽर्थस्तथापि 'विधिशब्दस्य मन्त्रत्वे भाव स्यात्तेन चोदना' इति महेन्द्रशब्देनैवोच्यमानस्यास्मिन् ग्रहयागे देवतात्व नान्यथा। तत्र सकलपर्यायेणापि बृहदिन्द्रादिशब्देनोच्यमानस्य देवतात्व न भवति किमुत न्यूनेनैवेन्द्रशब्देन। तथा हि—

अर्थोऽपि यादृशो यत्र देवतात्वेन चोदित।
मनागपि ततोऽन्यत्वे देवतेति न गम्यते॥

---

१ म० भा० (२—१—१)। २ श्लोकस्यायमर्थ। सुबन्तत्वे महदिन्द्रशब्दयो, 'अप्रत्यय प्रातिपदिक' इत्यनेनाप्रातिपदिकतया तद्धितवृत्त्ययोगदसुबन्तत्वे च समासायोगाद्वृत्तिद्वययौगपद्यवादिनस्तु युगपत्सुबन्तत्वासुबन्तत्वविरोध इति। ३ (अ० १० पा० ४ अ० १३ सू० २३)

देवतात्वस्य प्रत्यक्षाद्यनवगम्यत्वाच्चोदनैवैकं प्रमाणं सा च यं यादृशं यत्र यादृशे चार्थे विदधाति, स यदि तथैवानुष्ठानेऽपि संपाद्येत, ततस्तत्प्रमितोऽयमित्यवसीयते।

किंचिदपि चेदिहान्यथा जातं निवृत्तव्यापारायां चोदनाया प्रमाणान्तरं मृग्यं न च तदस्तीत्यप्रमाणता यथा वक्ष्यति। 'स एवाग्निरष्टाकपालस्य देवता नाऽऽज्यस्य' इति। तेन व्यवस्थावशाद्यथैवेन्द्रे चोदितेऽग्नेर्देवतात्वं न भवति, सोमस्य च चोदिते न पुरोडाशस्य, अभिषुतस्य च न लतायाः, शुद्धे च न सगुणस्य, तथैव गुणवति चोदिते न निर्गुणस्य। कुतः—

देवता हि विधेयत्वाद्विवक्षितगुणेष्यते।
लक्षणत्वे तु तस्याः स्यादविवक्षा गुणादिषु॥

यदि हि तद्धितसंबन्धे देवतोद्दिश्यमाना स्यात्ततोऽस्या गुणाविवक्षा भवेत्। इयं पुनरविधीयमाना देवतात्वमेव न प्रतिपद्यत इत्यवश्योपादातव्या। ततश्च विवक्षितगुणत्वात्तदपाये न कथं चिद्देवतेति गम्यते। यथा शुक्लवासा भोजयितव्यो 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' 'दण्डी प्रैषानन्वाह' इति विशेषणरहितानामकर्माङ्गत्वम्। यदा तेऽप्युद्दिश्यन्ते योऽयं शुक्लवासास्तमानयेत्यादौ तदा विनाऽपि विशेषणेनाऽऽनीयन्ते। तदिह यद्यपि तावद्देवतारूपेणोपकुर्यात्तथाऽपि न गुणरहिताऽऽश्रीयेत, किमुत यदाऽभिधानोपकारिणी विधिगतव्यतिरिक्ताभिधानाभिहिता नैव प्रत्यभिज्ञायते सैवेयं देवतेति।

समासेन च विधीयमानायां नानेकार्थविधिदोषप्रसक्तिः। तत्र माहेन्द्रग्रहगता न कथं चिदिन्द्रशब्देनोच्यते।

या तु तेनोच्यते सा तत्र नैव देवतेत्यनर्थकमेवास्याः प्रकाशनम्। अतश्च 'न श्रुतिसमवायित्वात्' इत्ययमपि सूत्रार्थो भवति श्रुतिसमवेतं देवतात्वं भविष्यति तदधीनज्ञानमित्यर्थः। तच्च तद्धितसंवादे सति ज्ञायते। तस्मादस्ति देवताभेद इति। कथं त्वस्मिन् पक्षे भाष्यगमनिका। तदभिधीयते।

पूर्वपक्षवादी तावदनुकर्म प्राधान्यं वदति, यश्च माहेन्द्राद्ग्रहादिन्द्राभिधानसमर्थमन्त्रानुकर्षं वदति तेनाकर्माङ्गभूतार्थप्रकाशनवैयर्थ्यादिन्द्र एवात्र शुद्धो देवताभूतः प्रकाश्यत इत्यभ्युपगतं भवति।

तस्य च देवतात्वं नाभ्युपगममात्रेण सिध्यति, नापि प्रमाणान्तरेणेति य एतद्ग्रहोत्पत्तिवाक्ये देवताभिधानशक्तिस्तद्धितः श्रूयते 'माहेन्द्रं गृह्णाति' इति तत्संयोगाद्विज्ञायते। स च यदि समासान्निष्कृष्य केवलादिन्द्रशब्दादुत्पाद्यते, ततो मन्त्राभिधेयसदृशं देवतात्वमुक्तं भवति।

सिद्धवच्चैतमर्थं पूर्वपक्षवादिनोऽभिप्रेतं मन्वानो निष्कृष्य ब्रवीति इन्द्रोऽस्य देव-

1 (अ० ३ पा० २ अ० ३ सू० ६) इत्यत्र अयमर्थः स्फुटो भवेत्।

सा—इति तद्धितसयोगेन ज्ञायते, न चास्य महत्त्वमपेक्षमाणस्याकृते समासे शुद्ध-स्योपसर्जनीभूतस्य तद्धितसंयोगः, तद्धितसंयोगापेक्षस्य वेति—सत्यपि सापेक्षप्रधान-समासे प्रातिपदिकावस्थाया तद्धितापेक्षा, न च तदानीमसुबन्तत्वात्समासोपपत्तिः। तेन यत्रैव पृथग्भूतं सुबन्तं संबन्धार्हमेव पदान्तरमपेक्षते यथा राजपुरुषः शोभन इति, तद्वि-षयमेवैत्, 'भवति वै प्रधानस्य सापेक्षस्यापि समास' इति द्रष्टव्यम्।

अकृते च समासे तद्धितापेक्षायां वाक्यात्तद्धितोत्पत्तिरित्यभ्युपेतं स्यात्। शुद्धस्य वा तद्धितसंस्पर्शाद्विशेषणानन्तर्गतिप्रसङ्गः। क्रमवृत्तिः पुनर्भवतो नाभिप्रेतैव, पूर्वं तद्धितसंबन्धे पूर्वोक्तावेव द्रव्यविशेषणोत्तरपदवृद्धिप्रसङ्गदोषौ।

न च समासार्थे वृत्तस्य शुद्धस्य तद्धितसंबन्धः। तेनैकस्मिन्नेव प्रयोगे तन्त्रसंबन्धोऽ-भ्युपगन्तव्यः। ततश्च 'ऐकशब्द्ये परार्थवत्' इति तथैव वैरूप्यदोषः।

विस्पष्टश्चायमन्योऽर्थ इति प्राक्समासादनेकार्थविधेः समासपदलभ्यत्वाद्वाक्यभेद-माह। कृते तु समासे नैष दोषः। तस्मान्नेन्द्रो देवताऽमहत्त्वविशिष्टः शुद्धः किं तर्हि, विशिष्ट एव।

अथ वा नेन्द्रो देवता केवलपदोपात्तः शुद्ध इत्यभिप्रायः। कथं तर्हि, महत्त्वविशिष्टः, समासप्रातिपदिकात्तद्धितोत्पत्तेः।

न स्वचयवसंबन्धेनेति—नावयवप्रसिद्धिनिराकरणपरं, किं तर्हि, नावयवसंब-न्धेन तद्धितोत्पत्तिर्निष्क्रष्टुमशक्यत्वादित्यभिप्रायः।

तस्माद्देवतान्तरमिति। सत्यपि द्रव्यैकत्वे सगुणनिर्गुणाश्रयणाद्देवतान्तरत्वम्। आह च—

> आचार्यो मातुलश्चेति द्रव्यैकत्वेऽपि दृश्यते।
> अपेक्षाहेतुभेदेन व्यवहारः पृथक्कथा॥

यदप्युच्यते इन्द्रस्य वृत्रवधोत्तरकालमिति। पूर्वं सर्वत्र शुद्धात्मनः प्रतिपन्न-देवतात्वस्य पश्चात्तनोऽयं गुणः स्तुतिमात्रोपयोगी न देवतात्वेऽन्तर्भवतीति मन्यते। अस्य तूत्तरं गतार्थम्।

स्थिते च देवतान्तरत्वे, शुद्धस्य देवतायाः प्रकाशनं, शुद्धेन वा विशिष्टस्य, विशि-ष्टचोदनायामपि वा शुद्धस्य देवतात्वं, शुद्धशब्दोच्चारणेऽपि वा विशिष्टे देवतात्वं प्रतिपद्यत इत्यादि सर्वमन्धकारनिरीक्षित साहसमात्रेणाभ्युपगम्येत, न चैतद्युक्तम्। अतो यत्र विधिमन्त्रयोर्देवतासंवादस्तत्र प्रमाणो नीयेत। अस्मत्पक्षे पुनः—

> या का चिदप्युपादाय देवता साधिता स्तुतिः।
> अदृष्टं यागमात्रार्थं करोत्याराद्व्यवस्थितम्॥ १७॥

1 (अ० १ पा० ४ अ० ५ सू० ८)

qualification can serve no useful purpose

## गुणश्चानर्थकः स्यात् ॥ १८ ॥

यद्वा विधिशब्दादवगतमेतद्भवति, इन्द्रो देवतेति, तदाऽस्य गुणाभ्याख्याने किं प्रयोजनं महत्त्वं नामेन्द्रस्य गुणो भवतीति । देवताभिधाने, कथं तस्यै देवतायै दीयत इति । गुणेऽपि हि विहिते सति तस्या एव देवतायै दीयतेऽविहितेऽपि । तस्माद् गुणविधानमनर्थकम् । अथोच्येत, योऽस्मिन् ग्रहे इन्द्रः स महानिति । नैवम् । ग्रहसंबन्धस्याप्रसिद्धत्वाद् विशेषणं नात्र कल्प्यते, गुणसंबन्धस्य चाप्रसिद्धत्वाद् गुणेन विशेषणमनवक्लृप्तम् । तस्मादपि देवतान्तरम् ॥ १८ ॥

## तथा याज्यापुरोरुचोः ॥ १९ ॥

एवं सति याज्यापुरोनुवाक्ययोर्भेदेन दर्शनमुपपद्यते । ऐन्द्रं सानसिं रयिम् [1] इत्यैन्द्रयाज्यापुरोनुवाक्याद्वयं, महाँइन्द्रो य ओजसा इति भेदेन माहेन्द्रं दर्शयति । तदेकत्वे विकल्प्येत । तत्र पक्षे बाधः स्यात् ॥ १९ ॥

## वशायामर्थसमवायात् ॥ २० ॥

यदुक्तम्, [3] अजावशाशब्देन चोदिते कर्मणि च्छागशब्देन निगमा भवन्तीति । तद् युक्तम् । वशायामर्थसमवायित्वं वयं प्रत्यक्षमवगच्छामः । छागस्य वपाया मेदसोऽनुब्रूहि इति यैव वशा सैव च्छागेति ।

---

यदि चाऽऽदिमानन्नादिर्वा गुणः केवलमिन्द्रस्तुत्यर्थमेवोपादीयते न देवतात्वेऽन्तर्भवति, ततोऽस्योपादानमेवानर्थकं स्यात् । सर्वा हि देवतैवमर्थमभिधीयते विधीयते वा, कथं नाम तदुद्देशेन कर्म क्रियेतेति ।

यदि चाविहिते विहिते च गुणे केवलेनेन्द्रेण व्यवह्रियते ततो नार्थो गुणाभिधानेन । किं च —

गुणोऽनन्तर्गतश्चात्र पश्चादपिहितो भवेत् ।
लक्षणत्वेन बोद्धः सम्बन्धाभावस्तदस्ति ते ॥

न हि ग्रहसंबन्ध इन्द्रस्य प्राप्तो येन तद्गतेन्द्रानुवादेन महत्त्वं केवलमेव स्तुत्यर्थमुच्येत । न च महानिन्द्रः प्राप्तो यतो गुणेनोपलक्ष्य विधीयेत । तस्मादप्राप्तविधेर्देवतान्तरता ॥ १८ ॥

पूर्ववन्मन्त्रव्यपदेशभेदव्यवस्था ॥ १९ ॥

वशादिद्रव्याणामर्थरूपोपकारित्वात्प्रत्यक्षलक्ष्ये विशेषे सामान्येनापि सिद्धेन विधि

---

१ तै० सं० (२-४-११) । २ ऋ० सं० (८-८-५) । ३ तै०ब्रा० (३-६-८) ।

तस्मात् प्रगाथस्योत्कर्षः संस्कारपक्षे । अतः प्रधानकर्मणी इति ॥२०॥

पू० यत्रेति वाऽर्थवत्त्वात् स्यात् ॥ २१ ॥

वाशब्दः पक्षं व्यावर्त्तयति संस्कारकर्मणी एव स्तोत्रशस्त्रे । यदे-तत् प्रगाथस्योत्कर्ष इति । उत्कृष्यतां यत्रेन्द्रस्तत्र प्रगाथः । लिङ्गेन हि क्रमसन्निधी बाधितव्यावेव ॥ २१ ॥

उ० न त्वाम्नातेषु ॥ २२ ॥

अपरेषां मन्त्राणामुत्कृष्टानामन्यथार्थवत्ता नास्ति तेषामानर्थक्यं स्यात् । यथा, याम्याः शंसति, शिपिविष्टवतीः शंसति, पितृदेवत्याः शंसति, आग्निमारुते, कुमुम्भकसूक्तम्, अक्षसूक्तं, मूषिकासूक्तमित्येवमा-दीनाम् ॥ २२ ॥

पू० दृश्यते ॥ २३ ॥

तदुच्यते । सर्वेषामर्थवत्ताऽस्ति । मण्डूकसूक्तस्याग्नौ, अक्षसूक्तस्य शब्दादर ॥ २० ॥

बलवत्प्रमाणविरोधे संस्कारपक्षस्त्यज्येत, न च सोऽस्ति, लिङ्गवर्णायस्त्वादुत्कर्षसि-द्धेरित्यपर्युदास संस्कारपक्षस्य ।

अथ वाऽर्थैकदेशोऽयं समासार्थप्रकाशनम् ।

करिष्यत्यविरोधाय मनोतास्थाग्निशब्दवत् ॥

अनुत्कृष्यमाण एव वा प्रगाथ सन्निधिवशाद्वयवद्वारेण महेन्द्रमविरोधाय दृष्टार्थ-त्वाय च प्रकाशयिष्यति, यथाऽग्नीषोमीये मनोतायामग्निशब्द प्रकरणात्समासस्य प्रती-यमान साहचर्यात्सोममपि प्रतिपादयन्समुदायार्थो विज्ञायते । अतश्चानुत्कर्षेऽप्य-दोष इति ॥ २१ ॥

आम्नातेष्वपि मन्त्रेषु नोत्कृष्टेष्वर्थदर्शनम् ।

सर्वेषु भवतीत्येव नोत्कृष्टत्व न दुष्यति ॥

न हि यमादीनां प्रहान्तरेष्वपि देवतात्वं येनेन्द्रवदुत्कृष्येरन्नेतं प्रकाशयेयुः । अत-स्तेषां तावद्विध्यानर्थक्यप्रसङ्गाददृष्टार्थत्वेन भवितव्यम् । ततश्च तत्सामान्यादि-तरेषु तथात्वं, तस्मात्सम्स्कारकर्मत्वमिति ॥ २२ ॥

यमादयो न विद्यन्ते यद्यपि ग्रहदेवता ।

अन्यकर्मोपयोगित्वात्प्रकाश्या स्युस्तथाऽपि न ॥

मण्डूकसूक्तस्याग्नौ प्रयोग, तत्र मण्डूकेनाग्निविकर्षणाम्नानात् । अक्षसूक्तस्य राज-सूये, तत्र 'अक्षैर्दीव्यति ' इति विधानात् ।

राजसूये, मूषिकासूक्तस्यैकादशिन्यां, सर्वेषां वाचस्तोमे, सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाचस्तोमे पारिप्लवं शंसति इति । तथा यस्याऽऽश्विने शस्यमाने सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयादिति । तस्मादस्त्यर्थवचोत्कृष्टानाम् । अतः संस्कारकर्मणी स्तोत्रशस्त्रे इति ॥२३॥

## अपि वा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥ २४ ॥

अपि वा प्रधानकर्मणी स्तोत्रशस्त्रे स्याताम् । कुतः । श्रुतिसंयोगात् ।

---

मूषिकासूक्तस्यैकादशिन्याम्, 'आसुत्ते' पशुः । इत्युपशयसंबन्धसंकीर्तने सति तद्द्वारेणोपशयस्यैव स्तुतिः । कुपुम्मकसूक्तादीनां तु यदि कश्चिद्विशेषरूपेणार्थो नास्ति ततः सामान्यविधानेनार्थवत्ता भविष्यति ।

वाचः स्तोमे सर्वमन्त्रोपदेशात् । तथाऽऽश्विने सूर्योदयावधि समाप्त्यसंभवे सर्वासामृचामुपदेशात् ।

तत्र वचनेनैवाऽऽसमवेतार्थमन्त्रविधानसामर्थ्यादगतेरदृष्टार्थोध्ययणं, न च कश्चिद्दृष्टार्थत्वेन सर्वत्रैव दृश्यमानमप्यर्थं प्रोज्झ्यादृष्टार्थत्वकल्पना युज्यते । तथा हि—

> न जपादावदृष्टार्थे वैष्णव्यादिनिदर्शनात् ।
> याज्यादावपि दृष्टार्थे स्याददृष्टार्थकल्पना ॥ २२ ॥

यदुक्तं मनोतायामिवाग्निशब्द इन्द्रशब्दः समासार्थं लक्षयिष्यतीति । तदयुक्तम् । कुतः । एतस्मादेव दोषात् । न हीन्द्रशब्दस्य स्वार्थमभिदधतः कश्चिद्विरोधो येन श्रुतिवृत्तिं जह्यात् ।

सर्वादृष्टार्थानां च यथाकथं चिल्लक्षणया दृष्टार्थत्वापादनसंभवादयुक्तमेतत् । यत्तूक्तमुत्कृष्यतामेवेति । तदयुक्तम् । कुतः—

> प्रकृतस्तोत्रशेषत्वं श्रुत्या संनिधिकल्पया ।
> विना सामान्यसंबन्धाल्लिङ्गं चाविनियोजकम् ॥

यदि ह्येकान्तेन प्रथमं दृष्टार्थत्वमवधारितं स्यात् ततः क्रमसंनिधिकल्प्या श्रुतिर्बाध्येत, यत्तु विनियोगोत्तरकाला प्रयोजनकल्पना न तद्वशेनैव विनियोगस्तेन क्रमसंनिधिभ्यां विनियुक्ते दृष्टमदृष्टं वा प्रयोजनं कल्प्यमानं न विरुध्यते । न चोत्कृष्टस्य प्रमाणस्यान्यत्र विनियोगहेतुरस्ति ।

लिङ्गं हि देवतां प्रकाशयितुं सामर्थ्येन तन्मन्त्रं स्वरूपे विनियुञ्जीत, तथा चाप्या-

सप्तमीश्रुतिसंयोगो हि भवति । कवतीषु स्तुवते, शिपिविष्टवतीषु स्तुवते इति । यदि स्तुतिस्ततः कवत्यक्षरेष्वाहिता । यदि प्रकाशनं, ततो देवतायाम् । तत्र करणं कवत्यस्तृतीययाऽभ्योष्यन्त, न सप्तम्या । अपि च, श्रुतिसंयोगो भवति । प्रउगं शंसति, निष्केवल्यं शंसति, इति । अतः स्तुतिरभिनिर्वर्तयितव्या तेन मन्त्रेण । गुणवचनः शब्दः स्तुतिनिर्वर्तनार्थो दृष्टमर्थं करिष्यति । तस्मात् प्रधानकर्माणि । अपि च श्रुतिसंयोगो भवति षष्ठीविभक्तिसंयोगः । यथा इन्द्रस्य नु वीर्याणि प्रवोचम् इति । तेन देवताशब्दः स्तुतिसंबन्धार्थ इत्युच्यते । देवताभिधानार्थे प्रातिपदिकार्थत्वात् प्रथमा स्यात् । अथ यत् प्रथमान्तं, तद्देवतार्थं भवितुमर्हति यथा, 'इन्द्रो यातोऽवसितस्य राजा' इति ।

नर्थक्यप्रसङ्गः । कर्मसंबन्धे तु न कश्चिदस्य व्यापारः । तदेतल्लिङ्गं यदि सामान्यतः केन चित्कर्मसंबन्धः क्रियते, ततः कथं तस्योपकरिष्यतीत्यपेक्षिते यथा शक्नोतीत्येवमाश्रयणाद्देवताप्रकाशनद्वारेणेति विनियुङ्क्ते ।

न चात्र सामान्यसंबन्धकारणं पश्यामः । तस्मादुत्कृष्टानामानर्थक्यमेव स्यादित्यदृष्टार्थतैव न्याय्या । किंच—

एवं च सप्तमी षष्ठी द्वितीया स्तौतिशंसती ।
श्रुतिवृत्ता भविष्यन्ति त्वत्पक्षेऽन्यार्थवृत्तयः ॥

गुणगुण्यभिधानक्रियाणामक्षरारूढत्वात्सप्तमीश्रुतिसंयोगो घटते । प्रकाशने हेतुकरणत्वात्तृतीयायुक्ताः कवत्यादयः श्रूयेरन् । ननु स्तुतावपि कवतीनां करणत्वात्तृतीयैव प्राप्नोति । नैष दोषः—

आधारत्वमपि ह्यासां करणत्वं च विद्यते ।
तत्रैतयोर्यथाभीष्टं निर्देश उपपद्यते ॥

प्रकाशनं पुनः परमार्थतस्तावदात्माधारम् । कर्मत्वप्रतिपत्त्युत्तरकालं च व्याप्यत्वाद्देवताधारम् । तत्र कवतीनामैकान्तिकमेव करणत्वमिति वैषम्यम् ।

अपि च स्तौति शंसतीति स्तुतिभावना पूर्वापरीभूता श्रूयते । तस्यां च धात्वर्थः करणभूतः शेषाणि च कारकाणि नित्यं धात्वर्थं निष्पादयन्ति संबध्यन्ते । तत्र यदि मन्त्राः स्तोत्रनिर्वृत्त्यर्था भवन्ति ततोऽपेक्षितार्थकरणाच्छास्त्रदृष्टमर्थं कुर्वन्तो दृष्टार्था भवन्ति । प्रकाशनं तु कुर्वन्तोऽचोदितकरणाददृष्टार्था भवेयुः । ततश्च वरं स्तुतीनामेवाऽदृष्टार्थत्वम् । किं च ।

श्रुत्यैव षष्ठी पारार्थ्यं देवताना ब्रवीति न ।
न प्रधानं गुणाश्लेषा. स्तुतेस्तेन प्रधानता ॥

वताप्राधान्ये हि प्रातिपदिकार्थपरत्वाद्व्यतिरिक्तार्थविषया 'अग्निर्मूर्धा' इत्यप्रथमैवश्रूयेत

१ ऋ० सं० ( १-२-३८ )।

नेत्युच्यते । तदपि वाक्यसंयोगात् स्तुत्यर्थमेव । ननु वाक्याल्लिङ्गं बलीयः । सत्यम् । एतदपि लिङ्गम्, यत् स्तुतिवाक्यस्य साकाङ्क्षस्य निराकाङ्क्षीकरणसामर्थ्यम् । तथाऽप्युभयथा लिङ्गेऽनुगृह्यमाणे कुतो निर्णयः, वाक्यशेषादेव, न देवताभिधानार्थे इति । देवताभिधानार्थे इत्येतस्मिन् पक्षे स्तुत्यर्थे साकाङ्क्षवचनमनर्थकमेव स्यात् । तस्माददृष्टार्थत्वात् स्तुतिवचनस्य प्रधानकर्मणी स्तोत्रशस्त्रे । अपिच, स्तौतिशंसतीति साक्षाद्गुणवचनौ लक्षणयाऽभिधायौ स्याताम् । तस्मात् क्रियोत्पत्तिम्—अपूर्वोत्पत्तिं विदध्यातामिति ॥ २४ ॥

* शब्दपृथक्त्वाच्च ॥ २५ ॥

शब्देन पृथक्त्वमेव गम्यते । द्वादशस्तोत्रशस्त्रोऽग्निष्टोमः । इतरथा हि द्वादशत्वं न स्यात् स्तोत्राणां शस्त्राणां च । एकमेव शंसनं स्तवनं च ।

---

यद्यपि किंचित्प्रथमान्तं तदपि योग्यतापूर्वकैकवाक्यत्ववशेन गुणसंबन्धार्थमेव । या इन्द्रो यातो—जङ्गमस्य, अवसितस्य—स्थावरस्य च राजेति ।

न च गुणानामुपयोगोऽस्तीति तत्प्राधान्यानाश्रयणे स्तुत्यर्थतैव युक्ता । सत्यमि अन्यच्छेदः । तत्रार्थवादन्यायेन शेषपदानर्थक्यप्रसङ्गात्सत्यपि पूर्वत्र प्राधान्यपर्यवसा संभवे स्तुत्यर्थेनैवैकवाक्यता युक्ता ।

न चैवं स्तौतिशंसत्योः प्रकाशनलक्षणार्थता भविष्यतीति स्तुतेरेव प्राधान्यम् ॥२

पृथक्त्वनिवेशिनी द्विद्वादशसंख्या न प्रकाशनाभेदे सति शब्देनोच्यते । सामान्य विवक्षाया वा प्रत्यृचं प्रतिपदं च तन्निर्वृत्तेर्न द्वादशत्वेऽवतिष्ठते । ननु च स्तुतावपि तुल्य मेतत् । तथा हि—

'सामान्यस्तुतिरेकैव भेदोऽपि प्रत्यृचं स्थितः ।
न चान्यथा विवक्षाऽस्ति यतो द्वादशता भवेत् ॥

अथ स्तोमवशादृक्समुदायसाध्या स्तुतयो गण्यन्ते तथा प्रकाशनान्यपीत्यविशेषः उच्यते—

क्रियाः फलापवर्गिण्यस्तत्संख्यागणनाः सदा ।
अपूर्वद्वादशत्वाच्च द्वादशत्वं निरूप्यते ॥

प्रकाशनार्थत्वे हि प्रत्यृचं प्रतिपदं च तन्निर्वृत्तिदर्शनात्क्रियासमाप्तेर्न किंचित्का रणमस्ति, येन द्वादशत्वं परिच्छिद्येत । अपूर्वार्थत्वे तु तेषां शास्त्रगम्यत्वात्पञ्चदशस्तोम पदः प्राङ्निर्वृत्तिप्रमाणाभावादृक्समुदायेनापूर्वनिर्वृत्तेस्तद्द्वारेण क्रियासमाप्त्युपलक्षणाद् वाणां द्वादशत्वेन स्तुतिद्वादशत्वाभिसिद्धिः । न हि प्रत्यृचं सर्वेभ्यो वा तत्कल्पनाय

अथ भेद आश्रीयते, ततो न द्वादशत्वेऽवतिष्ठते ॥ २५ ॥

अनर्थकं च तद्वचनम् ॥ २६ ॥

अग्निरुत्ति श्रूयते, आग्नेया ग्रहा भवन्ति इति। तत्र पुनरुच्यते, आग्नेयीषु स्तुवन्ति, आग्नेयीषु शंसन्ति इति। तत्र विधातव्यमेव, यदि संस्कारकर्मणी। तस्मादपि प्रधानकर्मणी इति ॥ २६ ॥

अन्यश्चार्थः प्रतीयते ॥ २७ ॥

सम्बद्धं वै स्तोत्रशस्त्रे वा इति। यदन्यत् स्तोत्रमन्यच्छस्त्रं, तत-स्तयोः संबन्धः। यदि वाऽपूर्ववचने ततोऽन्यत् स्तोत्रमन्यच्छस्त्रम्। इतरथा, यदेव स्तोत्रं तदेव शस्त्रं स्यात् ॥ २७ ॥

अभिधानं च कर्मवत् ॥ २८ ॥

प्रधानकर्मण इव चाभिधानं भवति द्वितीयासंयोगेन। प्रउगं शंसति निष्केवल्यं शंसति, इति ॥ २८ ॥

फलनिर्वृत्तिश्च ॥ २९ ॥

फलनिर्वृत्तिदर्शनं च भवति। स्तुतस्य स्तुतमसि इत्येवमादि–इन्द्रवन्तो

---

र्हि चित्प्रमाणमस्ति यथा प्रकाशनस्य दर्शनम् ॥ २६ ॥

ऋत्वामनूहात्वादाग्नेयग्रहचोदनयैवाऽऽग्नेयीनां स्तुतिसाधनत्वसिद्धेः 'आग्नेयीषु स्तुवते' इत्यनर्थकं वचनम् ॥ २६ ॥

सम्बन्धस्य भेदनिबन्धनत्वात्सम्बन्धवचनेन स्तोत्रशस्त्रयोर्भेदः। स च प्रकाशनैकत्वान्न प्राप्नोति। ननु स्तुत्येकत्वाविशेषादपि तुल्यमेतत्। अथ प्रगीताप्रगीतमन्त्रसाधनत्वेन भेदः, तद्वत्तिद्वारेण वा, स पूर्वपक्षेऽप्यविशिष्टः। तत्रोत्तरं द्वादशत्ववत्। अत्यन्तभेदाद्धि स्तोत्रशस्त्रापूर्वयोस्तद्द्वारेण क्रिययोर्भेदमुपचर्य सम्बन्धवचनम्। न तु प्रकाशनस्य तत्फलनो भिद्यते ॥ २७ ॥

यदिह द्वितीयाप्रतिपादितकर्मार्हमभिधानमिदं चापरं प्राधान्ये कारणम्। प्रधानक्रिया हि येन क्रियेणोच्यते 'अग्निहोत्रं जुहोति' 'आघारमाघारयति' इतिवद्भवति न संस्कारक्रियाऽऽयत्तगुणभूतत्वात्।

अथ वा स्तोत्रशस्त्रसमाख्ययोरभिधानस्य तत्प्राधान्यज्ञापनार्थम्। इतरथा हि प्रकाशनमित्येव समाख्या स्यात्। तत्रहत्यादिवद्धा नैव भवेत् ॥ २८ ॥

योऽयं मन्त्रे फलाशीरर्थवादः स स्तुतः प्रधानत्वे घटते सर्वत्र प्रधानविषयत्वात्प्रार्थनानाम्। उच्यते तु –

वनायद्दे धुक्षीमहि प्रजामिषं सा मे सत्याशीर्देवस्य भूयादिति स्तोत्रफलमनूद्यते, न देवतायाः । तस्मात् प्रधानकर्मणी स्तोत्रशस्त्रे । अन्यत्र सूत्रबद्धं प्रयोजनम् । दशमेऽध्याये प्रहाणां देवताऽन्यत्वे स्तुतशस्त्रयोः प्रधानकर्मत्वाद्विकारः स्यात् ॥ २९ ॥

[ ६ ] विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ ३० ॥ पू० ॥

इदं समाम्नायते न ता नशन्ति, न दभाति, तस्करो नासामामित्रो व्यथिरा दधर्षति । देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह इति । यजते ददातीत्युदाहरणम् । किं यद्ब्राह्मणे भावशब्दो विधायकस्तद्वन्मन्त्रेऽपि, उत मन्त्रेऽविधायक इति ।

किं तावत्प्राप्तम् । विधौ मन्त्रे चाऽऽम्नायमानस्य भावशब्दस्य एष एवार्थः स्यात् । ऐकशब्द्यात् । स एवायमेकः शब्दो ब्राह्मणगतो विधास्यति, मन्त्रगतो न शक्नोति विधातुमित्यनुपपन्नम् । तस्माद्विधायकः ॥ ३० ॥

---

देवतैव प्रधानत्वात्फलं याच्येत कर्मवत् ।
न स्वामिनि स्थिते कश्चिद्दासात्प्रार्थयते फलम् ॥ २९ ॥
( इति स्तुतशस्त्राधिकरणम् ॥ ९ ॥ )

---

इह मन्त्रा उदाहरणम् । किं तद्गता भावनावचना ब्राह्मणवद्विदधति नेति संदेहे शब्दाभेदाद्विधायका इत्याशङ्क्य मन्त्रत्वात्प्रार्थत्वाच्च विधित्वासंभवेन प्रयोगकालेषु ब्राह्मणविहितानामेवार्थानां स्मारका इत्युत्तरपक्ष उक्तः । तथा हि—

न कर्मान्तरताऽस्यत्र बलवत्प्रत्यभिज्ञया ।
न चोपात्तो गुणः कश्चिन्न च वाक्यान्तरे स्तुतिः ॥

स्मारकत्वप्रतिपक्षी हि विध्यर्थवादो स्याताम्, तदिह स्वरूपं तावदन्यतः क्रियायाः प्राप्तं गुणफलनिमित्तानि तु नैवोपात्तानि यानि विधीयेरन् ।

न च वाक्यान्तरस्थे पर्यवसितप्रयोजने विधौ स्तुतिरुपपद्यते । तदुक्तं प्रथममन्त्रे । तस्मात्प्रकारका मन्त्रा इति यद्व्याख्यायते तत्र वदामः । किं पुनः कारणं मन्त्रत्वेनाऽऽख्यातविशेषाणां विधिशक्तिस्तिरोधीयते, कथं च ब्राह्मणत्वेनासावाविर्भाव्यते । दृष्टाश्च मन्त्रगता अपि विधायका 'वसन्ताय कपिञ्जलानालभते' इत्यादयः ।

तथा ब्राह्मणगता अप्यविधायका यथा 'यस्योभयं हविरार्तिमार्छेत्' इत्यादयः । तस्मान्नायमेकान्तः । किं च—

---

१ तै० सं० ( ३-२-७ ) । २ ( अ० १० पा० ४ अधि० ५ सू० ४९ ) । ३ तै०ब्रा० ( ३-४-६ ) ।

## अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ॥ ३१ ॥ सि० ॥

अपि वेति पक्षो व्यावर्त्यते । एवंजातीयको मन्त्रोऽभिधानवचनः स्यात् । *the be expressive of mere assertion*

---

मासत्वाद्यदि चेष्येत मन्त्राणामनुवादता ।
तैरेव विहितं कस्माच्च स्मारयति चोदना ॥

न ह्यत्र विशेषहेतुरस्ति किं ब्राह्मणविहितमासाद्योपहतविधिशक्तिर्मन्त्रः स्मारको भवत्यथ वा विपर्यय इति ।

तत्रोभयोरनुवादत्वासंभवादगृह्यमाणविशेषत्वाच्च द्वयोरपि विधायकत्वम् । अभ्यासाच्च कर्मभेदः स्यात् । बलवत्प्रत्यभिज्ञायाश्चाभ्यासाधिकरण एवोत्तरं भविष्यति । तस्मान्नैवमभिधायकत्वसिद्धिः । येऽप्याहुः—

यस्माद्व्रीह्यादिवन्मन्त्राः करणत्वेन कर्मणाम् ।
ब्राह्मणेन नियुज्यन्ते तद्वत्ते न विधायकाः ॥

तैरपि सामान्यतो दृष्टमात्रं व्यपदिष्टम् । कुत.—

विधिशक्तिर्नियोगेन न मन्त्रस्यापनीयते ।
ततो विधास्यति ह्येष नियोगात्स्मारयिष्यति ।

न हि विनियुक्तेन न विधातव्यमिति किं चित्प्रमाणं यदि स्वतो विधिशक्तिरस्त्येव । अथ त्वसौ प्रथममेव नास्ति व्यर्थो विनियोगोपन्यासः । न चोभयकरणे विरोधः । तथा हि—

विधायकं सदप्यर्थं ब्राह्मणं स्मारयिष्यति ।
'मन्त्रतस्तु विरोधे स्यात्' इत्यत्रैतद्वदिष्यते ॥

ये च वचनेनाविनियुक्तास्ते च स्वपक्षे निराकरणहेत्वभावाद्विधायकाः प्राप्नुवन्तीत्येतदप्यकारणम् । न चात्र मन्त्रोपन्यासस्य कश्चित्सम्बन्ध इत्यन्यथा वर्ण्यते । विविधमेवाऽऽख्यातं गुणप्रधानकर्मत्वेनोक्तम् ।

अथेदानीं प्रस्तूयते किं तावेव द्वौ प्रकारावुतान्योऽप्यस्तीति । तत्र न तृतीयः प्रकारोऽस्तीति मत्वा पूर्वपक्षवादी वदत्यैवमर्थ्यमिति । तथा प्राप्तेऽभिधीयते ॥ ३० ॥

अस्ति तृतीयः प्रकारो यदभिधायकत्वं नाम । यथा—

---

१ (अ० २ पा० २ अ० ७) अत्रेति शेषः । २ (अ० ५ पा० १ अ० ३ सू० १६) ।

प्रयोगसामर्थ्यात् । प्रयोगे क्रियमाणेऽस्य सामर्थ्यं विद्यते,

गोदानं गोयागं च प्रत्याययितुं, न विधातुम् । कुतः ।

विहितत्वाद् गोदानस्य दक्षिणाविधाने, गोयागस्य त्वनुत्पन्त्या-

याम् । कर्मान्तरं भविष्यतीति चेन्न । असकृदप्युत्पन्त्याने तत्प्रत्ययादेव ।

स्तुत्यर्थकल्पनायामप्यानर्थक्यं, परिसमाप्तेन सार्थवादकेन वाक्येन

येषामाख्यातशब्दानां यच्छब्दाद्युपबन्धनात् ।

विधिशक्तिं प्रणश्येत्तु ते सर्वेनाभिधायकाः ॥

मन्त्रगतानां ब्राह्मणगतानां चाऽऽख्यातशब्दानां येषां शब्दान्तरेण विधिशक्तिरप-

गच्छति तेषामभिधायकत्वम् । तत्र 'न ता नशन्ति' इत्यत्र तावद्यच्छब्दोपहितो विधा-

यत्रोऽनुवादत्वं प्राप्यते । तथा 'अहे बुध्निय मन्त्रं मे गोपाय' इत्यामन्त्रणविभक्त्या ।

दामि गृह्णामीत्युत्तमपुरुषेण । 'यदि सोममपहरेयुः' इति यदिशब्देन । ते चैवमादय

प्रायेण मन्त्रेष्विति मन्त्रा उदाहरणम् । अविधायका मन्त्रा इति च प्रसिद्धिः ।

ब्राह्मणे तु भूयांसः प्रत्यया विधायकास्तेन तद्विधायकमिति प्रसिद्धम् । अल्पे त्ववि

विधायका इति तदिह नोदाहरणम् । विधायकत्वाविधायकत्वे तु तयोर्यथोक्तमेव कार-

णमिति न मन्त्रत्वब्राह्मणत्वयोर्व्यापारः ।

तत्र त्वेतावान्व्यापारो दृश्यते । रूपादेव ब्राह्मणगतानां विधित्वनिवृत्तौ सत्यां

निमित्तादिप्रत्यायनार्थता । न हि तेषां रूपं कर्मसु प्रयोगार्हम् । मन्त्रगतानां तु रूप-

मेवोपलभ्य दामि गृह्णामि निर्वपामीदमिदं च करोम्यग्नीन्विहर बर्हिः स्तृणीहि इदमिदं च

कुर्वित्यादिषु शक्यमेतत् कर्म स्मर्तुमिति विनियोगबुद्धिर्भवति । कुतः —

अनुष्ठाने पदार्थानामवश्यंभाविनी स्मृतिः ।

अनन्यसाधनाऽनन्यकार्यैर्मन्त्रैः प्रसाध्यते ॥

न तावदनुष्ठानवेलायामस्मृतः कश्चित्पदार्थः शक्यः कर्तुमित्यवश्यंभाविन्या स्मृत्या

योग्यसाधनमात्रापेक्षणाद्यत्किंचिद् ब्राह्मणपदार्थानुसंधानं वा पूर्वपदार्थप्रत्यवेक्षणं वा

सूत्रग्रन्थो वाऽऽत्मीयग्रहणवाक्यानि वोपद्रष्टादि वा साधनं ग्रहीतुमारभ्यते ।

तत्रानन्यप्रयोजनान्मन्त्रान्प्रकरणे पठ्यमानान्सामान्येन किमप्येभिः कर्तव्यमित्येवं

प्रयोगवचनेन गृह्यमाणाननुपलभ्य यादृशेन वाक्येन स्मृतिः कर्तुमाकाङ्क्ष्यते तद्रूपा एत

इति विदित्वा लिङ्गप्रकरणानुमितया श्रुत्या विनियोगे सत्यभिधानार्थता विज्ञायते ।

ततश्चोपायान्तराण्यप्रमाणकत्वान्निवर्तन्ते । नियमादृष्टसिद्धिश्च मन्त्रैरेव स्मृत्वा कृत

धर्माभ्युदयकारि भवतीत्यवगम्यते । भाष्यमप्यर्थेव योजनीयम् ।

नासकृदप्युच्चारणे तत्प्रत्ययान्निति न प्रासत्वाभिप्रायेणोच्यते । किं तु यच्छब्दोप-

विहितत्वात् यागस्य । तस्माच्च मन्त्रगतो भावशब्द एवंजातीयको विधायक इति ॥ ३१ ॥

[ ७ ] तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥ सि० ॥

मन्त्रगतो भावशब्दो विधायको नेति परीक्षितम् । कोऽयं मन्त्रो नामेति । उच्यते । अज्ञाते मन्त्रे तद्गतो भावशब्दः कथं विचारित इति, इदमथतोऽधिकरणं पूर्वं द्रष्टव्यम् । कथंलक्षणो मन्त्र इति । तच्चोदकेषु मन्त्राख्या । अभिधानस्य चोदकेष्वेवंजातीयकेष्वभियुक्ता उपादिशन्ति—मन्त्रानधीमहे, मन्त्रानध्यापयामः, मन्त्रा वर्तन्त इति ।

प्रायिकमिदं लक्षणम् । अनभिधायका अपि केचिन्मन्त्रा इत्युच्यन्ते यथा वसन्ताय कपिञ्जलानालभत इति । न शक्यं पृष्ठाकोटेन मन्त्रोपदेष्टुमिति लक्षणमुक्तम् ।

ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥

---

मन्त्राद्येव मन्त्राख्यातत्वात्ततः प्राणमह ब्रवीमीत्येवंरूपप्रत्ययात् । शतकृत्वोऽपि ह्यावृत्तादिरुच्चार्यमाणः स्वसामर्थ्येनैव नापूर्वप्रत्ययं करोति तत एव पूर्वप्राप्तबुद्ध्यु-त्पादात् ॥ ३१ ॥

( इति मन्त्राविधायकत्वाधिकरणम् ॥ ६ ॥ )

यथोक्तेन न्यायेन मन्त्रोदाहरणत्वात्तत्त्वात्प्रासङ्गिकमिदं पूर्वसूत्रप्रयुक्तमन्त्रशब्दार्थलक्षणाभिधानमिति नावश्यमिदमर्थतोऽधिकरणं पूर्वम् । शक्यं हि वाक्यमात्रमप्युदाहृत्य विचारयितुम् ।

भाष्यकारस्तु सूत्रकारोच्चारितमन्त्रशब्दादरेण पौर्वापर्यविशेषमाह । तच्चोदकेष्विति । तदभिधानं चोदकं प्रयोजकं येषामिति बहुव्रीहिः । अर्थदर्शनमात्रार्थं तु षष्ठीकथनं भाष्ये । अन्येतु वृद्धव्यवहारसिद्धं चेदं प्रायिकचिह्नयुक्तं लक्षणं लाघवार्थमुक्तम् ।

धरणिगतानेकवृक्षप्रत्येकनिरीक्षणे पुनः पुनः पृष्ठ कुटिलीक्रियत इति तत्सामान्येन पृष्ठाकोटाभिधानम् । श्लोकश्चैवं द्रष्टव्यः—

ऋषयोऽपि हि लक्ष्याणां नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥
दृष्टो लक्षणमेतेषामुक्तमन्त्यत्वात्तदप्यसौ ।
आदिमः स्मृतिसंरूढे न ग्रन्थे परिदेवितम् ॥

उदाहरणं, मेधोऽसि इत्येवमादयोऽस्यन्ताः । इषे त्वा इत्येवमादय- स्त्वान्ताः । आयुर्दा असि इत्याशीः । अग्निर्मूर्धा इति स्तुतिः । संख्या, एको मम इति । प्रलपितम्, अक्षी ते इन्द्र पिङ्गले कुलेरिव इति । परिदेवनम्, अम्बे अम्बिके इति । प्रैषः, अग्नीदग्नीन् इति । अन्वेषणं, कोऽसि कतमोऽसि इति । पृष्टं, पृच्छामि त्वा इति । आख्यानम्, इयं वेदिः, इति । अनुषङ्गः, अच्छिद्रेण पवित्रेण इति । प्रयोगः, त्रैस्वर्यं चातुःस्वर्यं च । सामर्थ्यमभिधानम् । सर्वैतद्वृत्तिकारेणोदाहरणापदेशे- नाऽऽख्यातम् ।

एतदपि प्रायिकमेव । असिमध्या अपि च मन्त्रा भवन्ति, इन्द्र- श्वासि धनाश्च वाजिन् इति । स्वामध्याश्च, तत्त्वा यामि इति । आशी- र्ब्राह्मणमपि, सोऽकामयत प्रजाः सृजेय इति । स्तुतिरपि, वायुर्वै क्षेपिष्ठा देवता इति । प्रलापो, न चैतद्विद्मो यदि ब्राह्मणा वा स्मोऽब्रा- ह्मणाः स्मो वा इति । परिदेवनं, ये मामधुक्षन्त ते मां प्रत्यमुञ्चन्त इति । प्रैषः, अमुतः सोममाहर इति । अन्वेषणम्, इह वा स इह वा इति । प्रश्नः, वेद कर्णवतीं सूर्मिम् इति । प्रतिवचनं, विद्मो वा इति । अनुषङ्गः, हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस इति । प्रयोगः, त्रैस्वर्यं चातुःस्वर्यं च इति । सामर्थ्यं, सुवेणावद्यति द्रव्येष्विति । लक्षणकर्मणि प्रयोजनं प्रसिद्धत्वान्न वक्तव्यं, लघीयसी प्रतिपत्ति- र्लक्षणेन ।

आक्षेपेष्वपवादेषु प्राप्त्यां लक्षणकर्मणि ।
प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्तते ।

आक्षेपेषु पूर्वाधिकरणस्य प्रयोजनम्, अपवादेषूत्सर्गस्य, प्राप्त्या- मुत्तरविवक्षा, कृत्वाचिन्तायां पूर्वाधिकरणस्य प्रयोजनम् । अस्ति वेदे मन्त्रशब्दो यस्यायमर्थः परीक्षितः । अहे बुध्निय मन्त्रं मे गोपाय

---

प्रैषान्वेषणपृष्टाख्यानानुषङ्गप्रयोगिताः ।
सामर्थ्यं चेति मन्त्राणां विस्तरः प्रायिको मतः ॥

कुलेरिवेति । कुलि —कच्छपः । प्रतिपुनात्विति शब्दमच्छिद्रेण पवित्रेणेत्यनुषङ्गः

यमृषयस्त्रयीविदो विदुः, ऋचः सामानि यजूंषि इति ॥ ३२ ॥

## [८] शेषे ब्राह्मणशब्दः ॥ ३३ ॥ सि० ॥

अथ किंलक्षणं ब्राह्मणं, मन्त्राश्च ब्राह्मणं च वेदः । तत्र मन्त्रलक्षणे उक्ते परिशेषसिद्धत्वाद्ब्राह्मणलक्षणमवचनीयम् । मन्त्रलक्षणवचनेनैव सिद्धम् । यस्यैतल्लक्षणं न भवति, तद्ब्राह्मणमिति परिशेषसिद्धं ब्राह्मणम् ।

वृत्तिकारस्तु शिष्यहितार्थं मपञ्चितवान्—इतिकरणबहुलम्(१) । इत्याहो(२)पनिबद्धमाख्यायिकास्वरूपम्(३) । हेतुः(४), शूर्पेण जुहोति तेन ह्यन्नं क्रियते इति । निर्वचनं(५), तद्दध्नो दधित्वम् । निन्दा(६), उपवीता वा एतस्याग्नयः । प्रशंसा(७), वायुर्वै क्षेपिष्ठा देवता इति । संशयः(८), होतव्यं गार्हपत्ये न होतव्यम् इति । विधिः(९), यजमानसम्मितौदुम्बरी भवति । परकृतिः(१०), माषानेव मह्यं पचत इति । पुराकल्पः(११), उल्मुकैर्ह स्म पूर्वे समाजग्मुः, इति । व्यवधारणकल्पना, यावतोऽश्वान् प्रतिगृह्णीयाद् इति ।

हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः ।
परक्रिया पुराकल्पो व्यवधारणकल्पना ॥
उपमानं दशैते तु विधयो ब्राह्मणस्य तु ।

---

सामर्थ्य—अभिधानशक्तिः । ये मा दुग्धवन्तस्त एव निराकृतवन्त इति धेन्वा परिदेवितम् । अमृतं सोममाहर इति सौपर्णोपाख्याने विनतया गरुत्मानमृतार्थं प्रेषितः । कर्णवन्तीं सूर्मिम् । सूर्मि —स्थूणा ॥ ३२ ॥

( इति मन्त्रलक्षणाधिकरणम् ॥ ७ ॥

=====

परिशेषसिद्धत्वाद्ब्राह्मणलक्षणमवचनीयमिति । सूत्रमिदमनारम्भ्यमिति प्रतिभाति । तत्र शेषशब्दप्रयोगाल्लक्षणानभिधानाच्च सूत्रव्याख्यानमेवेदमिति द्रष्टव्यम् ।

किमर्थं पुनः सूत्रमारभ्यते । नाऽऽरभ्येत, यदि मन्त्रब्राह्मणात्मक एव वेद इति सर्वेषां प्रसिद्धं भवेत् । येषां त्वप्रसिद्धं तेषां तृतीयादिप्रकारनिराकरणार्थं द्वैराश्यमेव वेदस्येति प्रतिपादयितुमाह—शेषे ब्राह्मणशब्द इति । एकपुरुषकर्तृकमुपाख्यानं परकृतिः । बहुकर्तृकः पुराकल्पः । यानान्यथाऽर्थं प्रतिभात पौर्वापर्यालोचनेन व्यवधार्यान्यथा कल्प्यते सा व्यवधारणकल्पना तद्यथा नातिगृह्णीयादिति, श्रुत प्रतिग्राहयेदिति

एतस्यारसर्ववेदेषु नियतं विधिलक्षणम् ॥

एतदपि प्रायिकम् ।

इतिकरणबहुलो मन्त्रोऽपि कश्चित्, इतिं वा इति मे मन इति । इत्या होपनिबद्धश्च, भगं भक्षीत्याह । आख्यायिकास्वरूपं च, उंप्रो ह भुज्यमिति । हेतुः, इन्द्वो वामुशन्ति हि इति । निर्वचनं, तस्मादापो नु स्थ न इति । निन्दा, मोर्घमन्नं विन्दते अप्रचेता इति । प्रशंसा, अग्निर्मूर्धा इति । संशयः, अधः स्विदासीदुपरि स्विदासीद् इति । विधिः, पृणीयादिन्नाधमानाय इति । परकृतिः, सहस्रमयुतादद्दत् इति । पुराकल्पः, यज्ञेन यज्ञमयजन्त देवा इति ॥ ३३ ॥

(९) अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः ॥ ३४ ॥ सि० ॥

ऊहप्रवरनामधेयेषु संशयः—मन्त्रा उत नेति । अभिधायकत्वान्मन्त्रा इति प्राप्ते ब्रूमः । अनाम्नातेषु मन्त्रत्वं न स्यादभिधायकेष्वपि । नाभिधायकत्वं मन्त्रत्वे हेतुः । किं तर्हि, अभियुक्तप्रयोगः । येऽभियुक्तैर्मन्त्रा इति नोच्यन्ते, न ते मन्त्राः ।

---

कल्पयिष्यते । विधिलक्षणमित्यत्र ब्राह्मणवाची विधिशब्दः ॥ ३३ ॥

( इति ब्राह्मणलक्षणाधिकरणम् ॥ ८ ॥ )

सूर्याय जुष्टं निर्वपामि, इत्यूहः । तथा यत्र यजमानस्याऽऽर्षेयं त्रियते स प्रवरः यच्च यजमानतत्पुत्रादीनां नामग्रहणं तन्नामधेयं, यथा सुब्रह्मण्यायां देवदत्तो यजत इत्यादि । तेषामपि ' तच्चोदकेषु ' इत्यस्माल्लक्षणान्मन्त्रमध्यपाताच्च मन्त्रत्वप्राप्तावुच्यते—

स्वाध्याये पठ्यमानेषु येषु मन्त्रपदं स्मृतम् ।
ते मन्त्रा नाभिधानं हि मन्त्राणां लक्षणं स्थितम् ॥

किं पुनरेकस्मिन्पद ऊह्यमाने समस्तस्यैवामन्त्रत्वं, ऊहितपदमात्रस्यैव वेति । समस्तस्यैवेति प्राप्तम् । कुतः—

स्वरवर्णानुपूर्व्यादिविशिष्टे हि प्रयुज्यते ।
[illegible]

संप्रदायकालावगनरूपान्यत्व चेत्केनचिदृष्येशेन जात न शक्यते मन्त्रत्व प्रत्यभिज्ञातुम् ।

अथैकदेशेऽपि त सद्भावाभ्युपगम । तत्र सर्वेषेव मन्त्रपदाविशेषान्मन्त्रत्वप्रसङ्ग । तस्मादेकवर्णापायेऽपि मन्त्रत्वाभावात्समस्ततत्कार्यनिवृत्ति । ततश्च यथैव तद्विनाशे सर्वावयववर्तिनि प्रायश्चित्ताभाव एव मन्त्रच्छन्दोविषयत्वेन यावन्त शब्दविशेषाः स्मर्यन्ते तैर्न भवितव्यमित्येवपदस्वरवयवोहे तत्मन्त्रगतसर्वच्छन्दसोपोद्धारेण लौकिकशब्दप्रयोग एवैष इति । अत्र ब्रूम । तावन्मात्रमेवामन्त्र इति । कुत ।

आकृतीनामपि व्यक्तिर्या कथंचिन्निरूपिता ।
नामावयवव्यक्तित्वविनाशेषु विनश्यति ॥

न हि गोर्गतुनि जाते विषाणे वा भग्ने गोत्व निरोधीयते, तथापि व्यक्तिमपर्यायवयवान्तरसद्भावान् । स्त्रियस्यपि सस्थाने क्रियमाणे सर्वा विज्ञायन्ते । सा चैव मन्त्राकृतिर्विशिष्टस्वरवर्णानुपूर्व्याद्याभिव्यक्ता न किंचिद्विकारदर्शने नश्यतीति प्रत्यक्षमुपलभामहे । तथा हि—

यत्र वर्णविकारो वा वर्णलोपोऽपि वा स्मृत ।
स्वरान्तरनियोगो वा न मन्त्रस्तत्र नेष्यते ॥

यत्र वचनाद्वर्णलोप विकार वा कृत्वा प्रयोग ' ऐर कृत्वोद्वैयम् ' इत्यादौ, यत्र च स्वाध्यायकालदृष्टस्वर्यादिपरित्यागेनैकश्रुत्य नियुज्यते न तत्र कस्यचिन्मन्त्रबुद्धिर्व्येति । स्यादेतत्, वचनसामर्थ्यादिह साधनीति ।

तदयुक्तम् । वचनेन हि प्रयोक्तव्यमेतदुच्यते न मन्त्रत्व न नश्यतीति न हि वचनविनियुक्ताना व्रीह्यादीना मन्त्रत्व भवति, अतश्चामन्त्राणामेव सता वचनाद्विनियोग इत्यापद्यते ।

न चार्हति भवितुममन्त्रत्व, मन्त्रत्वस्यभिज्ञानात् । अन्यथानापि काममिरापदादीनामेवामन्त्रत्व भवतु न सवलस्य वाक्यस्य ।

न च तेषामपि समस्तेनालोचनेन मन्त्रत्वनिरूपणादिह गिरापदवान्मन्त्र इहेराप दवानिह स्वैर्यवानिहैकश्रुतिमानिति इत्ति एवावधार्यते । यथैवमूहादीनामपि मन्त्रत्वप्रसङ्ग । तत्रापि हि प्रकृतिविकृत्यालोचनेन शक्यमेव निरूपयितुम् । इहाग्निपदवानिर्वपमन्त्र इह सूर्यादिपदवानिति । नैतत्समानम् । कुत —

यत्र वैदिकमन्त्रत्व तत्र मन्त्रत्वमिष्यते ।
न्यायेन कल्प्यमाने तु न शक्यं तन्निरूपणम् ॥

**नचैवमादयो मन्त्रसमाम्नाये सन्ति । तस्मादमन्त्राः । प्रयोजनं मन्त्रभ्रेषे यत्प्रायश्चित्तममन्त्रेषु तन्न ॥ ३४ ॥**

---

वैदिकं ह्यालोच्यैवमवधारणा भवति, इहेदृशो मन्त्र इहेदृश इति । सूर्यादिपदप्रयोगस्तु कार्यवशेन न्यायात्कल्प्यते, न च मन्त्रत्वं न्यायगम्यमिति वैधर्म्यम् ।

ननु चातिदेशोऽपि वेदप्रकार एवेति सर्वमूहादिकं वैदिकम्, इतरथा ह्यप्रमाणकमेव स्यात् । न ह्यङ्गाङ्गिभावः प्रत्यक्षानुमानादिगम्यः । तस्मात्सूर्येरापदयोरविशेष इति । अत्रोच्यते ।

सत्यमूहस्यापि वैदिकत्वम् । अत एव 'अनाम्नातेष्वमन्त्रत्वम्' इत्युच्यते । वेदभागो हि कश्चित्प्रत्यक्षः श्रूयते, कश्चिदनुमानादिगम्यः । प्रत्यक्षश्रुतश्चाऽऽम्नात इत्युच्यते । तत्र यथेरापदादीनां विनियोगः श्रूयते नैवं सूर्यपदादीनाम् ।

ननु 'सौर्यं चरुम्' इत्येतदेव श्रुतिसमवायित्वाद्देवतायाः सूर्यपदस्य विनियोजकं श्रूयते । नैतन्मन्त्रे सूर्यपदस्य प्रक्षेपं ब्रवीति । हविषस्त्यागकालमात्रे तदुच्चारणाभिधानात् । यस्तु मन्त्रेषु तत्प्रक्षेपः सोऽतिदेशकृतो भविष्यति । न चातिदेशवचनन्यायलभ्यत्वादेवाऽऽम्नायते । तस्मादनाम्नातविनियोजकत्वादमन्त्रत्वं सूर्यपदादीनाम् ।

नन्वेवं सति प्रवरनामधेययोः प्रत्यक्षोपदेशान्मन्त्रत्वप्रसङ्गः । स्यादेतं यदि तत्स्वरूपमाम्नायेत, वचनार्थं तु ज्ञात्वाऽनाम्नातयोरेव प्रवरनाम्नोः प्रयोगान्न मन्त्रत्वनिरूपणायामन्तर्गतिः । एवं तर्हि यत्रापि सर्वनामयुक्तमन्त्राम्नाने सति तस्य स्थानेऽन्यपदप्रक्षेपः क्रियते तत्राप्यमन्त्रता स्यात् । तथा नामेति केचित् ।

अथ वा विशेषाणामानन्त्यादयुगपत्कालत्वाच्चाऽऽम्नातुमशक्तेः स्वरूपस्य सर्वनामप्रकारेणाऽऽम्नानमस्त्येवेत्यशून्यस्थानत्वान्मन्त्रस्य शक्यमेवं निरूपणं कर्तुं यत्र पदं निवेश्यते तद्वानयं मन्त्र इति । इतरथा हि सर्वनाम्नामप्रयोगार्हत्वाद्यदि विशेषाम्नानमेवैतत्तेनोपायेनेति न गृह्यते, ततस्तदंशान्यूनत्वान्मन्त्रस्वरूपस्य व्यर्थमेव सर्वनामाम्नानं स्यात् । प्रवरनामधेयवदेव तु विधानात्तद्वचनादन्यपदप्रयोगः कल्प्यते । तस्मादेवमादीन्याम्नातान्येवेति मन्त्रधर्मैः संबध्येरन् । न तु प्रवरादीनां मन्त्रपाठकाले कश्चिदपि संस्पर्शः ।

न च ब्राह्मणेन रूपं दर्शितं येन प्रवचनलक्षणत्वान्मन्त्रत्वाध्यवसानं भवेत् । अतश्च विकृतिष्वभिधानार्थचोदकाम्या सकले मन्त्रे प्रापिते यावन्मात्रमर्थाभावाद्व्यावर्त्यान्यत्प्रक्षिप्यते तावन्मात्रमेव लौकिकम् । अवशिष्टं तु तथा प्राप्तमेव कृत्वाकाङ्क्षितप्रत्यभिज्ञायमानमन्त्रत्वं चेति न प्रायश्चित्तच्छान्दसप्रयोगैर्वर्जनीयमिति सिद्धम् ॥ ३४ ॥

## [१०] तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥ सि० ॥

ऋच इत्यस्ति वेदे, अहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रयी विदा विदुः। ऋचः सामानि यजूंषि इति। क्यंलक्षणिकाः ऋचः। तेषामृग्यत्रार्थवशेन पादव्यवस्था। यत्र पादकृता व्यवस्था स मन्त्र ऋङ्नामा। यथा अग्निमीळे इति। एवंजातीयकेषु मन्त्रेष्वभियुक्ता उपदिशन्ति, ऋचोऽधीमहे, ऋचोऽध्यापयामः, ऋचो वर्तन्त इति।

यन्नर्थवशेनेत्युच्यते, यत्र वृत्तवशेन तत्र न प्राप्नोति। अग्निः पूर्वेभिर्ऋषिभिः, इति। यतो नार्थवशेनेति वृत्तादिवशव्यावृत्त्यर्थं, किं तर्हि, अनुवाद एष प्रदर्शनार्थः। अवश्य चैतदेवं विज्ञेयम्। वृत्तादिनिवृत्त्यर्थे सति वाक्यं भिद्येत। तस्माद्यत्र पादकृता व्यवस्था, सा ऋगिति ॥ ३५ ॥

## [११] गीतिषु सामाख्या ॥ ३६ ॥ सि० ॥

अथ साम्नः किं लक्षणम्। विशिष्टा काचिद्गीति सामेत्युच्यते। प्रगीते हि मन्त्रवाक्ये सामशब्दमभियुक्ता उपदिशन्ति। सामान्यधीमहे, सामान्यध्यापयामः, सामानि वर्तन्त इति।

अभियुक्तोपदेशश्च नः प्रमाणम्। यथा अम्लं दधि, मधुरो गुड इति।

---

प्रसक्तानुप्रसक्त्यापतितमृगादिलक्षणाभिधानम्। शब्दार्थस्य वृद्धव्यवहारगम्यत्वात्क्तेऽपि तल्लक्षणे तन्मूलमभियुक्तोपदेशमेव दर्शयति। क्रियापदानुपादानात् 'अग्निः पूर्वेभि' इत्यपर्यवसितेऽर्थे वृत्तवशेन पादव्यवस्था। ननु च 'अग्निमीळे' इत्यपि समस्ताया ऋच एवार्थवत्त्वान्नैव प्रतिपादमर्थं पर्यवस्यतीति न वाच्यम् 'अर्थवशेन पादव्यवस्था' इति।

कथं न वाच्यम् 'अग्निमीळे पुरोहितम्' इति तावत्प्रत्यक्ष समाप्तोऽर्थो दृश्यते। परयो पादयोरसमाप्त इति चेत्। आख्यातानुषङ्गेण समाप्ते सिद्धत्वात्। तस्मात्सार्थकमिहार्थवशेनेति। एतस्य तु प्रदर्शनार्थत्वान्न वृत्तवशाव्यावृत्तिरित्यनिषिद्धं कृत्यम् ॥ ३५ ॥

( इति ऋग्लक्षणाधिकरणम् ॥ १० ॥ )

तेषामित्यनुवर्तते। अत्रापि स एवाभियुक्तोपदेशोपन्यासः। प्रायम्यात्, यथाऽम्लं दधीति। पूर्वत्रैव वाच्य सकृनादशादिहोदाहृतम्। अथ वा यथाऽनेकधर्मसमाहारे सति दधिगुडयो रसविशेषमात्रमम्लमधुरशब्दाभ्युपदिश्यते। तथा सामशब्दो गीतिमात्रमित्यत्रोदाहरणम्।

---

१ ऋ० सं० ( १—२—१ )। २ ऋ० सं० ( १—१—१ )।

गीतिविशिष्टे तावन्मन्त्रे गीतिशब्दः । गीतिसंबन्धान्मन्त्रे संप्रत्यय इत्यवगन्तव्यम् ॥ ३६ ॥

[१२] शेषे यजुःशब्दः ॥ ३७ ॥ सि० ॥

अथ यजुषः किं लक्षणमिति । यजुषो लक्षणं न वक्तव्यम् । ऋग्लक्षणसामलक्षणाभ्यामेव यजुर्विज्ञास्यते वैपरीत्येन । या न गीतिर्न च पादवद्धं, तत् प्रश्लिष्टपठितं यजुरिति ॥ ३७ ॥

अथ निगदो नाम किं यजूंषि, उत यजुषोऽन्य इति ।

[१३] निगदो वा चतुर्थः स्याद्धर्मविशेषात् ॥ ३८ ॥ पू० ॥

निगदा न यजूंषि । कुतः । धर्मविशेषात् । उच्चैर्ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा, उच्चैर्निगदेन इत्येष धर्मविशेषः । उच्चैर्निगदेन इत्यनूद्यते । यदि यजुषो निगदत्वं स्यात्, न च तस्योच्चैस्त्वं धर्मो दृश्येत । दृश्यते तु । तस्माच्चतुर्थं मन्त्रजातं निगदो नाम ॥ ३८ ॥

व्यपदेशाच्च ॥ ३९ ॥

व्यपदेशोऽपि भवति, यजूंषि वर्तन्ते, न निगदाः । निगदा वर्तन्ते, न यजूंषीति । तस्मादपि मन्त्रान्तरम् ॥ ३९ ॥

यजूंषि वा तद्रूपत्वात् ॥ ४० ॥ सि० ॥

---

ननु च प्रत्यक्षगम्यत्वाद्रसविशेषस्याभियुक्तोपदेशोऽनुवादत्वान्नैव प्रमाणम् ।
नैष दोषः । प्रत्यक्षमेवात्र इतिकरणावच्छिन्नं निदर्शनम् । एतदुक्तं भवति । यथाऽम्लं दधि मधुरो गुड इत्येतद्विज्ञानं प्रमाणमेवमभियुक्तोपदेश इति । गीतेर्विशेषणत्वात्पूर्वतरप्रत्यायने सत्याकृतिवदभिधेयत्वं निर्णेतव्यम् । आह च—

एकखण्डेन शब्देन विशिष्टो यत्र गम्यते ।
विशेषणस्य वाच्यत्वं तत्र सर्वत्र जायते ॥ १६ ॥

( इति सामलक्षणाधिकरणम् ॥ ११ ॥ )

शेषे ब्राह्मणशब्द इतिपरसमस्तं व्याख्येयम् ॥ ३७ ॥

( इति यजुर्लक्षणाधिकरणम् ॥ १२ ॥ )

शेषे यजुःशब्द इत्येतद्व्यावर्तनार्थो वाशब्दः । चतुर्थं मन्त्रजातं निगदः स्यात् । धर्मान्यत्वात् । यदि तद्वत् ' उच्चैर्निगदेन ' इति विधिस्ततो यजुर्धर्मबाधो मा भूदित्यर्थान्तरत्वम् । अथानुवादः स नैव प्राप्नोति व्यतिरेकेण विनेति भेदः ॥ ३८ ॥ ३९ ॥

---

१ व्यपदेशाच्च इति सूत्रार्थं भाष्ये स्पष्टत्वान्न व्याख्यातम् ।

यजूंष्येव निगदाः। कुतः। तद्रूपत्वात्। तदेवैषां रूपं, यद् यजुषां प्रश्लिष्टपाठ ऋक्सामलक्षणविलक्षणता च ॥ ४० ॥

वचनाद्धर्मविशेषः ॥ ४१ ॥

वचनात्प्रत्यायनसामर्थ्यात्। अस्ति हि पुरुषान्तरप्रत्यायनसामर्थ्यं केषांचिद् यजुषाम् ॥ ४१ ॥

अर्थाच्च ॥ ४२ ॥

अस्ति च तैः पुरुषान्तरैः प्रत्यायितैः प्रयोजनं, नोपांशूच्यमानाः पुरुषान्तरं प्रत्याययेयुः। तस्माद्धर्मविशेषोऽर्थवान्। यानि च यजूंष्युच्चैरुच्चार्यन्ते ते निगदाः। कुतः। निशब्दः प्रकर्षस्य वक्ता। यथा प्रकर्षेण रक्तं नितरां रक्तमित्युच्यते। गदतिर्गदनार्थः पाठवचनः। एष एव हि प्रकर्षो यदुच्चैस्त्वावच्छिन्नत्वम्।

ननु वाचनिको गुणो यजुषामुपांशुत्वम्। नेति ब्रूमः। गुणो नाम स भवति, यः स्वकार्यं कुर्वतामुपकारे वर्तते। न च परसंबोधनार्थानां यजुषामुपांशुत्वं साहाय्ये वर्तते। तद्धि स्वकार्यक्रियाविघातं करोति। तेन पुरुषान्तरसंबोधनार्थमुच्चैस्त्वं गुणः। इतरार्थं तु वचनं भविष्यति। इतराणि यानि यजूंषि न परसंबोधनार्थानि, तेषूपांशुत्वं निवेक्ष्यते॥४२॥

गुणार्थो[1] व्यपदेशः ॥ ४३ ॥

अथ यदुक्तं व्यपदेश इति स एकत्वेऽपि गुणतो भवति। यथा, इतो ब्राह्मणा भोज्यन्ताम्, इतः परिव्राजका इति। एवमुच्चैस्त्वेन गुणेन तान्येव यजूंषि व्यपदिश्यन्ते निगदा इति ॥ ४३ ॥

---

'अहे बुध्निय मन्त्रं मे गोपाय' इति त्रिष्वेव मन्त्रत्वस्योपसंहारात्। वेदे च मन्त्रसामानाधिकरण्येन निगदशब्दप्रयोगाद्यजुष्ट्वापरित्यागेनैव च धर्मविशेषव्यपदेशभेदसिद्धेः परिशेषसिद्धयजुर्लक्षणयोगाच्च यजूंष्येव निगदाः ॥ ४० ॥

न्यायप्राप्तोच्चैर्धर्मानुवादस्वरूपाच्च विज्ञानादिति व्याख्यातम्। यं ह्येतेऽर्थं वदन्ति तमुपांशुत्वेन शक्नुयुर्वक्तुमिति वचनादित्युच्यते ॥ ४१ ॥

अस्ति च 'अग्नीदग्नीन्विहर' इत्यादिवचनेनार्थोऽन्यथाऽनुष्ठानानुपपत्तेरिति धर्मविशेषप्राप्तिः। तथा च निगदशब्दावयवव्युत्पत्तिसिद्धिः। वाचनिकमपि चोपांशुत्वमनुपकारत्वेनानङ्गत्वान्निगदव्यतिरिक्तयजुर्विषयं विज्ञायते ॥ ४२ ॥

ब्राह्मणपरिव्राजकवद्गुणेन व्यपदेशभेदः ॥ ४३ ॥

---

१ गुणार्थ इत्यत्र गुणार्थेति पाठान्तरम्।

सर्वेषामिति चेत् ॥ ४४ ॥

यदि य उच्चैर्गद्यते स निगदः, ऋगपि निगदः प्राप्नोति ॥ ४४ ॥

न ऋग्व्यपदेशात् ॥ ४५ ॥

न ऋचो निगदा इति व्यपदिश्यन्ते । अयाज्या वै निगदा ऋचैव यजन्तीति पृथक्त्वनिमित्ता हि व्यपदेशा भवन्ति । उच्यते । व्यपदेशो लिङ्गं, प्राप्तिरुच्यतामिति । अपादबद्धे गदतिर्वर्तते, अपादबद्धो हि गद्य इत्युच्यते ॥ ४५ ॥

[१४] अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥४६॥सि०॥

अतिप्रसङ्गद्वारेण गुणस्य व्यपदेशनिमित्ततां व्यभिचारयति ॥ ४४ ॥

न तावदतिप्रसङ्गोऽस्ति निगदं निन्दित्वा ऋचो विधानात् । न हि तमेव निन्दित्वा तस्यैव विधिरवकल्पते । न च व्यभिचारित्वम् । गदतिवशेन अनुष्ठे सति धर्मविशेषस्य व्यपदेशभेदनिमित्तत्वात् ॥ ४५ ॥

( इति निगदाधिकरणम् ॥ १३ ॥ )

केचिदेतत्सूत्रं वाक्यलक्षणपरत्वेन व्याचक्षते । तत्रापि किल लौकिकवैदिकवाक्यलक्षणसंभवे हेतुप्रसिद्धिवशेन लौकिकानामेवैतल्लक्षणम् । कुतः—

अन्यतोऽवगतेऽर्थे हि लोके वाक्यं प्रवर्तते ।
तत्रैकार्थत्वविज्ञानात्सुखबोधैकवाक्यता ॥

लौकिकानां हि वाक्यानां प्रमाणान्तरेणार्थस्तदेकत्वं चावधार्यते । तत्र प्रसिद्धेन हेतुना शक्यमेकवाक्यत्वमवगन्तुम् । वैदिकानां पुनरनन्यप्रमाणगम्यत्वात्प्राग्वाक्यात्तदेकत्वाज्ञानादज्ञातेऽर्थे तदेकत्वसिद्धिर्नास्तीत्येतल्लक्षणानुपपत्तेरर्थापत्त्या विपरीतं लक्षणं द्रष्टव्यम् ।

वाक्यैकत्वादर्थैकत्वमिति । यथैव हि धर्मिणा वाक्येन धर्म्यन्तरमर्थः प्रतिपाद्यते तथैकवाक्यधर्मेणैकत्वेनार्थैकत्वम् । आह च—

नित्यवाक्याधिगम्यत्वाद्यथावाक्यं प्रवर्तते ।
वेदार्थस्तदसिद्धेस्तु न वाक्यस्यार्थवश्यता ॥

अत्राभिधीयते । वेदव्याख्यानप्रवृत्तस्य जैमिनेः कः प्रसङ्गो लौकिकवाक्यलक्षणाभिधाने । वैदिकवाक्यलक्षणस्यापि भेदलक्षणे कः प्रस्तावः । किमर्थं प्रमाणलक्षण एव नोक्तम् । एकशब्दश्च न वक्तव्यः, अर्थैकत्वाद्वाक्यमित्येतावतैव सिद्धत्वात् । कथं च

१ द्वितीयाध्याय इत्यर्थः । २ प्रथमाध्याय एवेत्यर्थः ।

(... mantra, but it is not so easy in the case of Yaju where the determining factor of the metres is not available.)

× अथ प्रश्लिष्टपठितेषु यजुःषु कथमवगम्येत, इयदेकं यजुरिति ।
(which are of mixed character)

---

मन्त्राधिकारे तत्सम्बद्धोऽर्थोऽभिधीयते । भाष्यकृतश्च प्रश्लिष्टपठितेषु यजुःष्विष्टत्वात् प्रमाणवानपि विना कारणेनातिक्रान्तः । किं च—

यजुर्भेदं च मुक्त्वैतद्वाक्यैकत्वस्य लक्षणम् ।
मन्त्रब्राह्मणयोरेषु यत्तच्च क्वोपयुज्यते ॥

ऋक्सामयोस्तावत्परिमाणं प्रयोगसमर्थं प्रसिद्धमिति न कश्चिद्वाक्यलक्षणादेकवाक्यतालक्षणाद्वोपकारो भवति ।

तथा ब्राह्मणेऽपि ह्यादिवाक्यैः साध्यसाधनेतिकर्तव्यतावत्या भावनया नियुक्तेषु पुरुषेष्वेकानेकवाक्यज्ञानं क्वोपयुज्यते । नन्वयमुपयोगः एकवाक्यतालक्षणज्ञो वाक्यभेदं परिहरिष्यति । नायमुपयोगः । कुतः—

वाक्यभेदो ह्यसामर्थ्यं शब्दावृत्त्यादि दोषतः ।
एकनानात्वविज्ञाननिरपेक्षोऽवधार्यते ॥

यदुतदेकदेशतन्मभूहावृत्तिप्रसङ्गात्मकस्ताद्विभागलक्षणो वा वाक्यैकत्वनानात्वज्ञाननिरपेक्षैरेव दोषत्वेनावधार्यते । विभागलक्षणे गम्यमानसम्बन्धपरित्यागोऽनेकादृष्टकल्पना च दोषः । इतरत्राऽऽवृत्तेरवेदत्वादप्रामाण्यमिति नैकवाक्यलक्षणेनार्थः । पौरुषेयवाक्ये तु लक्षणनिरपेक्षस्य लोकस्य व्यवहारसिद्धेरत्यन्तानौपयिकत्वम् ।

यदि चार्थैकत्वेन वाक्यैकत्वमवधार्यते वाक्यस्यार्थप्रत्यायनार्थत्वात्तत्स्वरूपैकत्वज्ञानोत्तरकालभाविना किं वाक्यैकत्वज्ञानेन । वक्तृणां च परप्रत्यायनार्थो वाक्यप्रयोग इति नाऽऽत्मार्थं लक्षणज्ञानापेक्षा । श्रोतृणां पुनरत्यन्ताज्ञानवशतोऽर्थे प्रवर्तमानः पुरुषवाक्यमपि न वेदवाक्याद्विद्यते । अवगतार्थं त्वनुवादत्वात्तदल्पमेवेति नैकानेकज्ञानमपेक्ष्यते ।

किमर्थं च वैदिकानां लक्षणं नोक्तम् । यदि स्वर्थापत्त्योक्तमेवेति । नव । श्रुत्या तल्लक्षणमभिधायार्थापत्त्या लौकिकवाक्यसिद्धिराश्रयितव्या । न त्वर्थापत्तिः सम्भवति । न ह्येतल्लौकिकवाक्यलक्षणज्ञानमीदृशेन वैदिकवाक्यलक्षणज्ञानेन विना नोपपद्यते ।

न चैतस्यापि वाक्यलक्षणता सिद्धा, वाक्यैकत्ववशेनार्थैकत्वलक्षणार्थोपन्यासात् । अपि च क्वाचित्कैर्वैदिकवाक्यानामप्येतल्लक्षणम् । अत्यन्तविप्रकृष्टं वा किंचिद्वैदिक्याशङ्कितत्वात् नियोगतोऽर्थापत्तिः । न च परिसंख्या, सामान्यविशेषभेदानुपादानात् ।

यदि हि सामान्येनेदं लक्षणं कश्चिदभिधाय पुनः केवलार्थस्यैतल्लक्षणमुच्येत ततः परिसंख्यावशेन वैदिकानामिदं तावन्न भवतीत्येतावन्मात्रं गम्येत । न तु लक्षणविशेषोऽन्येषामवकल्पते । एवमपि हि विपर्ययकल्पनं सम्भवति, अर्थानेकत्वादेकं वाक्यं निराकाङ्क्षं चेद्विभागे स्यादिति ।

अथ वाऽर्थैकत्वान्नानावाक्यत्वमिति । तस्मादकल्पनेयम् । किं च–

कथं चार्थानपेक्षत्वे वाक्यैकत्वं प्रसिध्यति ।
न हि वर्णस्वरूपेण ज्ञातेनैतन्निरूप्यते ॥

वाक्यैकत्वाद्यार्थैकत्वेऽवधार्यमाणेऽवश्यमर्थनिरपेक्षं वाक्यैकत्वमवधान्तव्यम् । न च तस्यावधित्वेन किंचित्पश्यामो वर्णशतं वर्णसहस्रं वा । तथा हि—

अज्ञातार्थेषु वर्णेषु बहुवाक्यैकवर्तिषु ।
न कदाचिन्मतिर्दृष्टा वाक्यैकत्वावधारणे ॥
तस्मात्पदेषु यावत्सु श्रूयमाणेषु दृश्यते ।
विस्पष्टमैक्यमर्थस्य तावतामेकवाक्यता ॥

लोके मन्त्रब्राह्मणेष्वव्यभिचार्येतदेव वाक्यलक्षणमिति स्थितम् । यत्तु न प्रागवाक्यादर्थसंदेकत्वावधारणमस्तीति । अत्र ब्रूमः —

पदार्थैः पदविज्ञातैर्वाक्यार्थे प्रतिपादिते ।
लोकसिद्धैर्न तत्रास्ति वाक्यैकत्वनिमित्तता ॥

यदि हि वाक्यं पदवद्वाचकं भवेत्ततस्तदेकत्वानेकत्वानुवर्तिना वाक्यार्थेनाभ्युपगम्येत कदाचित् ।

यदा तु पृथग्भूतैरेव पदैरितरेतरनिरपेक्षैः स्वेषु पदार्थेषूक्तेषु तत्संसर्गादेव पदव्यापारानपेक्षो वाक्यार्थप्रत्ययो भवति, तद्वशेन च तावन्ति पदान्येकं वाक्यमित्यवधार्यते, न तदा वाक्यस्यैकत्वयोर्व्यापारं पश्यामः । तस्माद्विरोधः ।

भावनैव च वाक्यार्थे स्वकारकविशेषिता ।
तस्याश्च ज्ञायते नित्यं भेदः शब्दान्तरादिभिः ॥

यस्मिन्पदसमूहे शब्दान्तरादिभिर्न भावनान्तरं प्रतिपाद्यते तस्यैकवाक्यत्वं भावनान्तरापेक्षया तु नानात्वम् । तच्चैतदुभयमप्यन्यत एव ज्ञायत इत्यनिमित्तं वाक्यैकत्वमर्थैकत्वस्य । तस्माद्यथाभाष्यमेव व्याख्यातव्यम् ।

भेदलक्षणे मन्त्रप्रस्तावे च तद्भेदस्यावश्यपृथक्त्वं सामान्यतोऽभिहितं । तदवान्तरभेदाकाङ्क्षायामृक्सामानामप्यैकृसिद्धे भेदे लक्षणं न क्रियते । यजुषा तु प्रश्लिष्टपठितत्वान्न लक्षणाद्विना भेदज्ञानमित्यारभ्यते ।

ननु भिन्नप्रतीकविनियोगात्तद्भेदः सेत्स्यतीति । न तावत्सर्वेषामेव ब्राह्मणे विनियोगोऽस्ति । न च 'उत्तरादि पूर्वान्तलक्षणम्' इत्येतद्वेदवचनम् । न्यायेन तु सूत्रकारैर्वाऽऽदतीयत्राह्मणविनियोगेष्वेतदुक्तमिति न्यायस्य लक्षणमुच्यते ।

(among the things denoted by several words) or correlation (of the things denoted by the several words)

यावता पदसमूहेनेज्यते तावान् पदसमूह एवं यजुः । कियत चेज्यते । (The reply is as follows) यावता क्रियाया उपकारः प्रकाश्यते तावद्वक्तव्यत्वाद् वाक्यमित्युच्यते तेनाभिधीयते—अर्थैकत्वादेकं वाक्यमिति । एतस्मा चेत्कारणादेकवाक्यता भवति तस्मादेकार्थः पदसमूहो वाक्यम् । यदि च विभज्यमानं साकाङ्क्षं पदं भवति । किमुदाहरणं देवस्य त्वा सवितुः प्रसव इति । (The words here express a single action & are so closely connected that if any word is taken out, ...)

ननु पदं पदमन्येनार्थम् । सत्यं, न तु तद्विभागे साकाङ्क्षम् । न तर्ह्यर्थैकत्वमुपपद्यते बहुत्वात्पदार्थानाम् । पदसमुदायस्य च पृथगर्थो नास्तीत्युक्तम् । भेदः (among) संसर्गो वा वाक्यार्थ इति यद्युच्यते ।

But in any case the mantra that quoted cannot be said to express a single idea ... apart from what is expressed by the ... words ...

प्रथ[illegible] ॥मनेन यजेतेति ।हि [illegible] सम्बन्धासंभवात्तदुप-कारिप्रकाशनेन तैरिष्ट भवतीति कल्प्यते । तेनोच्यते—

> यावता पदसंघेन स्मार्यते यागसाधनम् ।
> तावद्यजुश्च वाक्यं च वक्तव्यत्वान्निरूप्यते ॥

वचनार्हं हि वाक्यं कार्ये समर्थं च तदर्हं भवति न न्यूनमधिकं वा, तावतैव चेज्यते । तत्तु कीदृशमित्येकार्थं साकाङ्क्षावयवं चेति लक्षणम् । ईदृशं चेदेकं यजुर्यत्ततोऽधिकं तद्वाक्यान्तरं यजुरन्तरं चेत्युक्तं भवति ।

एवं सर्वत्र पुरस्तात्परस्ताद्वैकार्थत्वसमर्थपदपरिग्रहणादसमर्थपदविमोकेन च भिन्नानि यजूंषि कल्प्यन्ते । तेनैकवाक्यलक्षणोक्तौ चार्थाद्यजुर्भेदवाक्यभेदलक्षणयोः सिद्धिरिति, एतस्माच्चेत्कारणादित्याह । किमुदाहरणमिति । अभिधेयवाचिनमर्थशब्दं गृहीत्वा लक्षणद्वयसमावेशासंभावनया पृच्छति । तथा हि—

> एकार्थत्वं पदस्य स्यात्साकाङ्क्षावयवं न तत् ।
> साकाङ्क्षावयवं सर्वत्रस्यैकोऽर्थो न विद्यते ॥

पदस्य ह्याकृतिर्नामैकोऽर्थो भवेन्न तु तदवयवानां वर्णानां प्रकृतिप्रत्यययोर्वा विभागे साकाङ्क्षत्वम्, अर्थप्रत्यायनशक्त्यभावात्, समूहावयवास्तु पदानि विभागे परस्परमाकाङ्क्षन्ति, न त्वेषामेकार्थत्वं, प्रतिपदमर्थभेदात्, समूहस्य च पृथगर्थान्तराप्रसिद्धेः । अतो लक्ष्याभावादलक्षणमेतदिति ।

प्रयोजनवाक्यमभिप्रायेण देवस्य त्वेत्युदाहृतम् । नन्विति परः स्वाभिप्रायं प्रकटयति । यदा पदार्थव्यतिरिक्तः कश्चिदेको निर्भागो वाक्यार्थो नास्ति तदा तत्तत्पदार्थ-

तथाऽप्येकार्थता न स्यात् । बहुपदे भेदानां संसर्गाणां च बहुत्वात् ।
उत्तरं एकप्रयोजनत्वादुपपन्नम् । यथा तावद्देवस्य त्वेति निर्वापप्रकाशनम् । तस्य विशिष्टस्य वाचक एतावान्पदसमूहस्तद्वाक्यम् ।

---

धर्मावेव सामीप्यवशात्तेषां गम्यमानौ भेदसंसर्गौ स्याताम्। अत आह—तथाऽप्येकार्थता न स्यात् । कथम्—

भेदो नाम पदार्थानां व्यवच्छेदः परस्परम् ।
स च प्रतिपदार्थत्वान्नैकत्वं प्रतिपद्यते ॥

व्यक्तिपदार्थपक्षे सर्वव्यक्तीनां गवादिपदेनैवोपात्तत्वाद्विषयशब्दैः शुक्लादिभिः कृष्णादिव्यवच्छेदमात्रं वक्तव्यम् । तत्संसर्गः पदार्थान्तर्गतत्वान्न वाक्यार्थो भवतीति तदुपसर्जनस्तेषां भेदो गृह्यते ।

स च यथा शुक्लशब्देन गोशब्दस्य कृष्णादिभ्यो भिद्यमानत्वाद्भवति, एवं शुक्लशब्दस्यापि गोशब्देनाश्वादिभ्यो निवर्तितस्य भवति, व्यवच्छेद्यनानात्वाच्च नास्त्येकत्वे प्रमाणम् । भेदसामान्यग्रहणे वा सर्ववाक्यार्थैकत्वप्रसङ्गः । यदा तु भेदवन्तः पदार्था एव वाक्यार्थस्तदा सिद्धमेव नानात्वम् । तथा—

संसर्गोऽपि पदार्थानामन्योन्येनानुरञ्जनम् ।
एकैकत्र तदप्यस्तीत्येकत्वं न प्रतीयते ॥

आकृतिपदार्थपक्षे शुक्लत्वगोत्वयोः स्वरूपेणाभिहितयोः संनिधानादितरेतरानुरञ्जनमर्थसिद्धभेदं वाक्यार्थः । स च गोत्वे शुक्लत्वसंसर्गः शुक्लत्वे वा गोत्वसंसर्गः सामर्थ्येनैकैकव्यक्त्युपसंहारादुपलभ्यत इति नाना ।

यद्यपि च कथंचिद्द्विपदे स एवोभयत्रापि संसर्ग इत्येकत्वं गम्येत, तथाऽपि बहुपदे येन येन प्रदेशेन पदद्वयं संसृज्यते तेन तेन संसर्गरूपेणोपलब्धेरनेकत्वम् । किं च—

स्वप्राधान्यात्पदार्थानां धर्मिताबुभावपि ।
धर्मिभेदेन भिद्येते न ह्येकत्वमुपाश्रितम् ॥

यावद्धि प्रयोजनैकत्वं नाऽऽश्रीयते तावत्स्वतन्त्राः पदार्था नैकतामापादयितुं शक्यन्त इति पृथगेव भेदसंसर्गावनुभवन्ति । तस्मादपि नाना । यद्यपि चास्माकमाकृतिपदार्थकत्वान्नैव भेदो वाक्यार्थत्वेनाभिप्रेतस्तथाऽपि पूर्वपक्षवादिना विकल्पमात्रेणोपन्यस्तः । सिद्धान्ताभिप्रायविवरणं प्रयोजनवानित्यादर्थशब्दस्योपपन्नम् ।

एवं सत्येक एव कश्चित्पदार्थः प्रधानभूतस्तद्विशेषणत्वेनेतरोपादानमिति सर्वेषां च

---

१ तै० सं० ( १-१-४ )।

नन्वत्र देवस्य त्वा सवितुः प्रसवे निर्वपामीत्येकं वाक्यम्, अश्विनोर्बाहुभ्यां निर्वपामीत्यपरम्। एवं बहूनि वाक्यानि। यदि निर्वपामीत्यनुषङ्गस्ततो बहूनि वाक्यानि। न त्वेवमनुषङ्गो भवति।

यदि गुणभूतो निर्वपामीति, तदा प्रतिप्रधानं भिद्येत। न च निर्वापो देवस्य त्वेत्येवमादीनामर्थेनोच्यते। साधनप्राधान्ये ह्यदृष्टार्थता वचनस्य स्यात्। निर्वापे पुनः प्रधाने दृष्टं कार्यं निर्वापप्रकाशनम्। तत्सर्वैर्विशेषणैर्विशिष्टमुच्यते। तस्मादविरोधः। यथा च पटं पदेन विशेष्यते तथोक्तं तद्भूतानामिति। तस्मादेकं वाक्यम्॥

अथ किमर्थमुभयं सूत्रितं, अर्थैकत्वादिति च विभागे साकाङ्क्षमिति च। उच्यते। भवति किंचिदेकार्थं, न तु विभागे साकाङ्क्षम्। यथा भगो वा विभजतु, अर्यमा वा विभजत्वित्येकार्थाः सर्वे विभागमभिदधाति। ननु भगविशिष्टाद्विभागादर्यमविशिष्टोऽन्यो विभागः। नेत्युच्यते। विभागसामान्येनास्य प्रयोजनं, न विशेषेण। सामान्ये हि दृष्टोऽर्थो भवति न विशेषे। विभागे तु न साकाङ्क्षम्। तस्माद्भिन्नमिदं वाक्यं विभागे विकल्प्यते। तथा स्योनं ते सदनं कृणोमि घृतस्य

---

तद्भेदात्तत्संसर्गाच्चैको भेदः संसर्गो वेत्यपि शक्यं वदितुम्। तस्मात्कर्मसमवायित्वेन दृष्टार्थत्वादशेषसवित्रादिपदार्थविशिष्टनिर्वापप्रकाशनं समस्तस्य पदसमूहस्यैकं प्रयोजनमिति सिद्धमुदाहरणम्। परस्तु निर्वापप्राधान्यमज्ञात्वा पृच्छति—नन्वत्र देवस्येति। सिद्धान्तवाद्याह—यदि निर्वपामीत्यनुषङ्गस्तत एव, [illegible] चानुषङ्गस्तद्गुणभावेन भवेत्, न चास्य गुणभावः प्रयोजनवत्त्वात्। सवित्रादीनां चाकर्मसमवायादित्येकार्थत्वम्।

अथ किमर्थमुभयं सूत्रितमिति। येषां सहतानामेव प्रयोजनत्वं तेषां तदंशसेऽन्यैस्तानामेकान्तेनैव साकाङ्क्षत्वं भवतीत्यवाच्यं तत्। अथ वा विभज्यमानसाकाङ्क्षत्वं सहतैकप्रयोजनत्वेन विना न भवति प्रत्येकं कार्येषु निरपेक्षप्रवृत्तिसिद्धेः। अतः साकाङ्क्षविभागेनैवेतराक्षेपात्तन्मात्रमेवाभिधातव्यमिति।

प्रत्युदाहरणे दर्शयति—उच्यत इति। पुरोडाशे विभागप्रकाशनमेकं प्रयोजनं निरपेक्षाणां दृष्टम्। निर्वापे दत्तोत्तरोऽपि विभागनानात्वपरिचोदना सहस्य विशेषणानुपादानात्पुनः पुनः प्रयुक्तस्यानुषङ्गदोषाभावादुपन्यस्यते। तत्रोत्तरं न तावन्निरपेक्षसाधनभेदादपि क्रियानानात्वमिति वक्ष्यामः। साधनप्राधान्यं तु प्रत्युक्तमेव। एतत्कृतो

---

१ (अ० १ पा० १ अ० ० पृ० २५) अत्रेति शेषः। २ अनुषङ्गाधिकरणे 'चित्पतिस्त्वा पुनातु' इत्युदाहरणे 'न च तस्य वाक्यभेदप्रसङ्ग' इत्यादिभाष्ये शेषः।

धारया सुशेवं कल्पयामि । तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति विभागे साकाङ्क्षम् । द्वे तु प्रयोजने क्रियेते सदनकरणं पुरोडाशप्रतिष्ठापनं च । तस्माद्भिन्ने वाक्ये, पूर्वं सदनकरणे विनियुज्यते, उत्तरं पुरोडाशप्रतिष्ठापने । तस्मात्सम्यक् सूत्रितं, न सूत्रोपालम्भो भवति ॥ ४६ ॥

[ १५ ] समेषु वाक्यभेदः स्यात् ॥ ४७ ॥ सि० ॥

इषे त्वा, ऊर्जे त्वा इति । तथा आयुर्यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पताम् इति । अत्र संदेहः । किमेवमादिषु भिन्नं वाक्यमुतैकमिति । एकमिति ब्रूमः । इषे त्वा इत्येवमुक्ते, न किंचिद्दृष्टं प्रयोजनं, तथा ऊर्जे त्वा इत्यपि च, वचनसामर्थ्याददृष्टम् । तदुभाभ्यामेकं कल्पयितुं न्याय्यम् । एवमल्पीयस्यदृष्टानुमानकल्पना भविष्यति ।

---

विशेषः कर्मानङ्गत्वादनादरणीय इति सामान्यप्रकाशनादेकार्थत्वम् । ‘ तस्मिन्सीद ’ इत्यस्य पूर्वापेक्षित्वे सत्यपि प्रयोजनभेदाद्वाक्यान्तरत्वम् । तस्मात्संहतयोरेव लक्षणत्वम् ॥ ४६ ॥

( इति यजुःपरिमाणाधिकरणम् ॥ १४ ॥ )

येषामदृश्यमानकर्मसमवेतार्थत्वेन लैङ्गिकविनियोगाभावेन वचनाद्विनियोगस्तेषां प्रागदृष्टार्थमन्त्रावधेरेकमन्त्रत्वं युक्तम् । तथा हि—

कल्प्यस्तेषामदृष्टोऽर्थः स चाल्पः स्यात्प्रमाणवान् ।
कल्पिते च तदेकत्वे साकाङ्क्षाः स्युर्वियोजिताः ॥

यदा हि स्वल्पादृष्टकल्पना निष्प्रमाणिकेत्येकमदृष्टं सर्वेभ्यः कल्पितं भवति तदा प्रत्येकं तत्साधनत्वाभावाद्विभज्यमानसाकाङ्क्षत्वमप्यस्तीत्येकवाक्यता । कथं पुनरस्मिन्पक्षे प्रतीकभेदेन विनियोगः “ इषे त्वेति शाखां छिनत्ति ” “ ऊर्जे त्वेत्यनुमार्ष्टि ” इत्येवमादिः । कथं च ‘ [illegible] ’ इति बहुत्वनिर्देशः । तदुच्यते—

एकोऽपि बहुभिर्मन्त्रः प्रतीकैर्विनियुज्यते ।
पुनः पुनः प्रयोगाच्च बहुशीरित्यभिधीयते ॥

आदिमध्यावसानग्रहणेनैकोऽपि मन्त्रस्तत्र तत्र विनियुज्यमानोऽपि न भिद्यते ।

---

१ तै० ब्रा० ( ३-७-५ ) । २ तै० सं० ( १-१-१ ) । ३ तै० सं० ( १-७-९ ) ।

४ भावना क्रियाया उपकारं प्रकाशयत ' इति भाष्याद् भिन्नप्रतीतिविषयानेकमुख्यविधेयरहितत्वरूपार्थैकत्वस्यैव वाक्यलक्षणत्वप्रतीतेः स्तोत्रशस्त्रमन्त्राणां चैकादृष्टसाधनत्वेऽपि मन्त्रैक्याभावाद्भाष्यस्थार्थैकत्वशब्दः कल्प्यत्वात्तल्लक्षणच्छेदनादिक्रियाभिप्रायो द्रष्टव्यः । एवं सार्थकत्वादृष्टशब्दोऽपि । एवं चादृष्टस्य वाक्यार्थत्वानुमानं यस्यां कल्पनायां साऽल्पीयसीत्येव भाष्यं व्याख्यातव्यम् ।

तस्मादेकं वाक्यम्। एवं प्राप्ते ब्रूमः—समेषु वाक्यभेदः स्यात्। समेषु परस्परानाकाङ्क्षेषु वाक्यं भिद्यते। इषे त्वा इत्यनेनैकोऽर्थः क्रियते, ऊर्जे त्वा इत्यनेनापरः। नन्विदानीमेवोक्तं नात्र दृष्टोऽर्थ इति। यद्यपि प्रत्यक्षादिना प्रमाणेन नोपलभ्यते, श्रुत्या तु गम्यते—इषे त्वेति छिनत्ति, ऊर्जे

---

यावद्विनियोगं हि सकृत् आवर्तिष्यते खण्डस्याप्रयोजनत्वात्। कल्पतां कल्पतामिति च पुनः पुनः प्रयोगादेकवाक्यत्वेऽपि बहुवचनाविरोधः। उच्यते। नैतदेवम्।

रूपादुत्तरकाले हि विनियोगप्रयोजने।
तस्मात्प्रागेव तत्क्लृप्तैर्भेदाभेदपरीक्षणम्॥

तिष्ठतु तावत्प्रयोजनकल्पनं विनियोगवाक्यं वा। न हि तदुत्तरकालं स्वरूपनिरूपणं युक्तम्। अज्ञातरूपस्य विनियोगाशक्तेरविनियुक्तस्य च प्रयोजनकल्पनानुपपत्तेः। तत्तु निरपेक्षं तु रूपं पाठादेवावधार्यते। तत्कालावधृतभेदाभेदानुवर्तित्वं तु प्रयोजनविनियोगयोः। प्रमाणवच्चानेकमपि कल्पनीयमित्युक्तम्। रूपोपलब्धिवेलायां चेषे त्वादिना न परस्परसाकाङ्क्षत्वमेकप्रयोजनत्वं चोपलक्ष्यते। ततश्च निष्प्रतिद्वन्द्वेऽवधारिते भेदे पश्चान्न किंचिदेकत्वापादने कारणं सम्भवति। न च प्रागनुपलब्धं साकाङ्क्षत्वं कल्पयितुं शक्यम्। तेन च विना यद्यप्येकप्रयोजनत्वं भवेत्तथाऽप्येकाङ्गवैकल्यादेकवाक्यत्वाभावः, किमुत यदा रूपभेदाद्विनियोगभेदस्तद्भेदाच्चादृष्टार्थत्वेऽपि प्रयोजनभेदः। स्वपक्षेऽपि चावश्यं यावद्विनियोगं तेन तेन भवितव्यम्। इयांस्तु विशेषः। तव समाम्नातमन्त्रान्मम प्रयत्नेभ्यः। न चैषामदृष्टार्थत्वं, ब्राह्मणोपदिष्टदृष्टार्थसाधनत्वात्। तद्धेन चैषां यावता विना चोदितकरणसामर्थ्यं नास्ति तावदनाम्नातमपि कल्पनीयं छिनद्मीत्यादि। यद्वा यथैव "रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति" इति वचनादवाचकस्यापि विनियोगमात्रानुग्रहेण स्तोत्राभिमुख्यचिह्नत्वं भवति, एवमिषेत्वादीनां छेदनादिस्मरणहेतुत्वम्। उभयमपि चैतत्प्रमाणवदिति सूत्रकारैः कैश्चित्कथंचिदाश्रितम्। सर्वथाऽवश्यं वचनान्तरम्। विरुद्धान्यप्रयोगासम्भवादवाचकप्रयोगानुपपत्तेश्चाध्याहारः। अथ वा यथाम्नातविनियोगानुसारात्तादृशानेव स्मर्तुं संस्काराधाने यतितव्यम्। तत्रानुष्ठात्रभिप्रायाधीनोऽन्यतरपरिग्रह इति दृष्टप्रयोजनभेदादपि सिद्धो वाक्यभेदः। किं च—

अन्योन्यनिरपेक्षाणां कार्यान्यत्वे नियोगतः।
न चैव यागहेतुत्वाद्यनुद्भवमकल्पने॥

यथा 'आयुर्यज्ञेन कल्पताम्' इत्येवमादीनां निराकाङ्क्षाभिन्नरूपोपलब्धैरेकत्वा

स्येत्यनुमार्ष्टि इति । तथा आयुर्यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पताम् इत्यायुःक्लृप्तेरन्या प्राणक्लृप्तिः । ननु सामान्यमात्रमिष्टं तत्र विशेषणभेदाद्भेदमर्हतीति । यथा, अग्नये जुष्टं निर्वपामि इति निर्वाप एकस्तस्य विशेषाः सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् इति, न तेषां भेदान्निर्वापस्य भेद इष्यते । एवमिहापि क्लृप्तिर्नामैकोऽर्थः, नासावायुरादिभिर्विशेषैर्भिन्नो भविष्यतीति । उच्यते । इह क्लृप्तीर्वाचयति इति बह्व्यः क्लृप्तयः श्रूयन्ते । ताश्च वक्तव्याः । तत्रैकामायुःक्लृप्तिम्, आयुर्यज्ञेन कल्पताम् इत्येष मन्त्रः शक्नोति वदितुम् । प्राणो यज्ञेन कल्पताम् इत्ययमपि प्राणक्लृप्तिमपराम् । एवं तु सर्वे क्लृप्तिविशेषवचनाः । तच्च दृष्टं प्रयोजनम् । तस्मादनेकार्थत्वात्तत्रापि वाक्यभेद इति । ननु सामान्यवचनादेकत्वं यथा विभागे । नैतदेवम् । विभागे दृष्टार्थं सामान्यमिह न । अपि च क्लृप्तीर्वाचयति इति विहितम् । आयुप्तिः सत्यप्येकार्थत्वे । न च तदस्ति । आयुःकल्पनादीनां भिन्नत्वात् । निर्वापवदभेद इति चेन्न । क्लृप्तीरिति मन्त्रबहुत्वचोदनायाः प्रत्यक्षत्वात् । इह तावदर्थानामकर्माङ्गत्वादविवक्षायां सत्यां मन्त्रोच्चारणमात्रं प्रयोजनम् । तत्र च बह्व्यः क्लृप्तयः श्रूयन्ते । तद्भेदश्चार्थभेदमन्तरेण न भवतीत्यक्षरोपसर्जनभूतोऽर्थो नानात्वेनाऽऽश्रीयते । क्लृप्तिविशेषवचनं च दृष्टार्थमिति मन्त्रबहुत्वापादनार्थत्वात् । यथा विभाग इति । सकृच्छ्रुतनिर्वापैकलक्षण्यात्तद्धीनम् । पुनः पुनरुच्चारितशब्दोऽपि यथा विभागः साधनभेदे सत्यपि न भिद्यते, तथा क्लृप्तिभेदोऽपि न भविष्यतीति मन्यते । नैतदेवमित्युत्तरम् । इह सामान्यविवक्षानुपयोगात् । अथ वा सिद्धान्तवाद्येव यथा विभागे नैतदेवमिति स्वयमेवैकवाक्यभूतमुत्तरं ददाति । ननु च विभागवाक्यानामपि भेदोऽस्त्वेवेति नोपन्यसनीयम् । एवं तर्हि नेवेदं अभेदप्रतिपत्त्यर्थं, किं तर्हि दृष्टान्तेन सहैकत्वापादनपरत्वात्तदीयविकल्पापादनायोपन्यस्यति । यथा विभागे तथाऽत्र विकल्पः कस्मान्न भवतीति । नैतदेवमिति । समानविषयत्वे हि विकल्पो भवति, न चेह सामान्यविवक्षा येन विभागवदैकार्थ्यं भवेत् । क्लृप्तिविशिष्टायुराद्याशासनपरत्वात् । विभागे हि साधनानामप्रयोजनत्वात्सामान्यभूतक्रियामात्रप्रकाशनपरत्वम् । इह पुनरायुरादीनामाशास्यत्वेन प्राधान्यात्तद्विशेषणत्वेन क्लृप्त्युपादानं न त्वायुरादिविशिष्टा सा प्रकाश्यते, निष्प्रयोजनत्वात् । अथापि क्रियाप्राधान्यं तथाऽपि तद्भेदपरत्वात्तानार्थत्वम् । भेदपरत्वे च पूर्वोक्तमेव दृष्टार्थत्वमुच्यते । अथ वा 'क्लृप्तीर्वाचयति' इति नैव मन्त्रपरः क्लृप्तिशब्दः,

1 अपि चेत्यादि भाष्यम्, इह क्लृप्तीरिति पूर्वभाष्येण पुनरुक्तमिव भासमानं क्लृप्तिशब्दस्य पूर्वाभिप्रेतमन्त्रपरत्वपक्षापेक्षयाऽर्थपरत्वरूपपक्षान्तराभिधानार्थत्वेन व्याकरोति—अथवेत्यादिना ।

यज्ञेन कल्पताम् इति चाऽऽयुःक्लृप्त्यभिधानमभिनिवर्त्यते प्रत्यक्ष, प्राणो यज्ञेन कल्पताम् इति च प्राणक्लृप्ते । तस्माद्वाक्यभेदः ॥ ४७ ॥

(१६) अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥४८॥सि०॥

या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा, या ते अग्ने रजाशया, या ते अग्ने हराशया इति । अत्र संदेहः । तनूर्वर्षिष्ठेति किं सर्वेष्वनुषक्तव्यमुताहोस्वित्प्रतिषिध्यते वाक्य-

कथं तर्हि, किन्न बहुत्वाभिधान एव, शब्दानामर्थतन्त्रत्वात् । अतश्च बहुत्वसंख्यया कर्मभेदाद्विशेषणकृतभेदाश्रयणाच्च मन्त्राणां तत्परत्वे चोदितार्थनिर्वृत्त्या दृष्टार्थत्वात्सिद्धा भिन्नार्थता । अथ पुनरस्मिन्पक्षे वाचयतीत्युच्यते, शब्दपदार्थको ह्यय प्रयुज्यते । नैष दोष । उभयत्र प्रयोगात् । यथैव हि शब्दं श्रुतन्त प्रयुञ्जानो वाचयतीत्युच्यते तथैव च य शब्देनार्थं ब्रवीति तस्यापि प्रयोजको वाचयतीति । तस्मात्कल्पक्रियाशक्तैर्यजमानं वक्तुं प्रवृत्तमध्वर्युर्वाचयतीत्ययमर्थो विज्ञायते, तत्प्रकाशनेन च भिन्ना एव सन्तो मन्त्रा दृष्टार्था भवन्तीति वाक्यभेद ॥ ४७ ॥

( इति वाक्यभेदाधिकरणम् ॥ १९ ॥ )

ज्योतिष्टोमे तिसृणामप्युपसदामादावाग्नेयी विहिता "अग्निमनीक" इति । तत्र प्रथमाया क्रमे "या ते अग्नेऽयाशया" इति निराकाङ्क्षो मन्त्र आम्नायते । उत्तरयोस्तु, साकाङ्क्षौ "या ते अग्ने रजाशया" "या ते अग्ने हराशया" इति । तत्र स्त्रीलिङ्गयच्छब्दनिर्देशस्य स्त्रीपदार्थेन केनचिद्विना परिपूर्णता नास्ति । न चापरिपूर्णेनव्यवहारोऽवकल्पते तत्र तदन्यथानुपपत्त्याऽवश्य परिपूरणसमर्थो वाक्यशेष कल्पनीय । कुत ।

न्यूनवाक्यप्रयोगो हि वेदे नैव समाश्रित ।
तस्मिन्क्वापि स्थित शेष सोऽन्वेष्टव्य प्रयत्नत ॥

न हि वैदिकवाक्यानां प्रत्यक्षमेवैकं प्रमाणं, तद्वदेव ह्यनुमानादीन्यपि प्रमाणानि । सर्वप्रमाणप्रत्यस्तमये च षष्ठेनाभाव परिच्छिद्यते । तदिह प्रत्यक्षानुपलब्धे वाक्यशेषे न तावत्स्येवोपरन्त यम् । यद्यनुमानादीन्यपि निवर्तिष्यन्ते तत एतावानेवाय मन्त्र इति कल्पयिष्याम । अथ तु तै कश्चिदवगम्यते ततस्तत्सहितोऽयं मन्त्र सकल प्राक्तस्मादून इत्यध्यवस्याम । तदिहार्थापत्त्या तावत्सामान्यत कश्चिदस्ति शेष इत्यध्यवसेयम् । तदश्राभावस्यानवसरादूनमिदं वाक्यं न प्रयोगार्हम् । तत्र विशेषाकाङ्क्षायां

१ तै० सं० ( १—२—११ ) । २ तिसृणामिति—पूर्वाह्णापराह्णयोरन्यस्यमानमामेय यो स्यैकैणवयागत्रयमेवोपसद् । तथाविधानां द्वितीयतृतीयचतुर्थाहःसु कर्तव्यतया विहितानां तिसृणामुपसदामित्यर्थ ।

शेषः कर्तव्य इति । किं प्राप्तम् । या ते अग्ने रुद्रायाशया इत्येतस्य तन-
र्वर्षिष्ठा इति न वाक्यशेषः । नेह्ययमस्मात् परः प्रयुज्यते । एवं प्राप्ते
प्राप्ते ब्रूमः—अनुषङ्गो वाक्यसमाप्तिः स्यात्तनूर्वर्षिष्ठेति । यथैव ह्ययं

---

लौकिकः कल्पनीय उत वैदिक एव पूर्वमन्त्रस्थस्तनूर्वर्षिष्ठेत्यादिरनुपक्तव्य इति संशये
लौकिक इत्याह । तथा हि—

नान्यत्रोत्सहते गन्तुं वैदिकं साधिसन्धनम् ।
यथेष्टविनियोगं तु सर्वार्थं वस्तु लौकिकम् ॥

यथैवाऽऽहवनीयादयो वैदिकास्तन्निर्दिष्टकार्यव्यतिरेकेण न प्रवर्तन्ते तथैव वैदिकः
शेषो यत्र वाक्ये समाम्नायेन विनियुक्तः स तन्निबद्धत्वान्नान्यत्र प्रयोगं क्षमते लौकिकः
पुनरनिबद्धत्वात्सर्वैः सर्वाकाङ्क्षापूरणायापि नियुज्यमानो न विरुध्यते । तस्माल्लौ-
किकः । तत्र यदि वैदिकमपि रचितत्वाल्लघुतरप्रयोगं स्वयितव्यादवैदिकाल्लौकिकात्मना
मन्वानः प्रयुङ्क्ते न केन चिद्धार्यते । वैदिकत्वबुद्धिस्तु तत्र न कर्तव्या । तथा हि—

तानेव वैदिकान्वर्णान् भारतादिनिवेशितान् ।
स्वाध्यायनियमं हित्वा लोकबुद्ध्या प्रयुञ्जते ॥

यदि स्थानन्तर्याविशेषादन्नाशायेत्यनेनापि संबन्धोऽभ्युपगम्येत ततो यथानिवेशं प्रयो-
गात्पुरस्तादेवास्य प्रयोगः प्राप्नोति । तस्मादपि न वैदिकः शेष इति प्राप्ते । उच्यते—

निमुक्तव्यापृतौ वेदे लौकिकावसरस्थितिः ।
तद्व्यापारविमोकश्च सकलान्वेषणक्षये ॥

वैदिकस्य वाक्यस्य वैदिक एव शेषः पूरणक्षमो न लौकिकः । चोदनालक्षणधर्मनि-
यमात् । यदा तु वेदः सर्वात्मनाऽन्विष्यमाणोऽपि त्यक्तव्यापारो दृश्यते तदा लौकिक-
मप्यनुमानाति । सा चाऽन्वेषणा यथासंनिकर्षं प्रवर्तते । तत्र ।

अदृष्टः प्रकृतावर्थः प्रत्ययेऽन्विष्यते पुनः ।
पदे स्वस्मिन्नलब्धस्तु प्रार्थनीयः पदान्तरे ॥
स्वस्मिन्वाक्येऽपि न स्याच्चेन्मृग्यो वाक्यान्तरे ततः ।
वाक्यान्तरेऽपि न स्याच्चेन्मृग्यः प्रकरणान्तरे ॥

एकस्मिन्नर्थे साकाङ्क्षेऽभिहिते प्रकृत्या प्रत्ययेन वा तत्संबन्ध्यसमर्पणपर्यन्तरं पा-
वा तत्रैव दृश्यते ततो रमणीयम् । अथ न दृश्यते ततः प्रमादालस्ये परित्यज्य प्रकृतौ
प्रत्यये चान्वेष्टव्यः । तयोरपि चेन्न दृश्यते ततः पुरस्तात्परस्ताद्वाऽनन्तरोच्चरिते पदान्तरे ।
न चेदनन्तरे लभ्येतैकान्तरव्यन्तरादिव्यवहिते । यदि तु स्ववाक्ये न लभ्येत ततस्तेनैव
क्रमेण प्रकृते वाक्यान्तरे । । वाक्यान्तरेऽपि त्वलभ्यमानो . यथोपस्थाप्यमानानुसारेण

* meaning clause) as to apply to all the incomplete clauses.

या ते अग्नेऽयाशया इत्येतस्यानन्तरमेव, या ते अग्ने रजाशया, या ते अग्ने हराशया इत्येतयोरपि। हराशयेत्येतस्य व्यवहित इति चेत्। नन्न। समुदायस्याव्यवधानात्। अव्यवहितो रजाशयेति समुदायः। समुदायेन च वाक्यशेषस्य संबन्धाभावात्। समुदायिभ्यां सबन्धः। समुदायिसंबन्धे च न गम्यते विशेषः। तस्मात्सर्वत्रानुषङ्गः।

अपि च साकाङ्क्षस्य संनिधौ परस्तात्पुरस्ताद्वा परिपूरणसमर्थः

प्रकरणान्तरे। यदा तु तत्रापि न लभ्यते तदा लोके। लोकेऽपि चेन्नोपलभ्येत ततो नास्तीत्येवमवधार्याऽऽकाङ्क्षाबुद्धिं भ्रान्तित्वेन परिकल्प्य निराकाङ्क्षीकर्तव्यम्। सर्वत्र च।

सनिकृष्टो न लभ्यश्चेद्विप्रकृष्टोऽपि वैदिकः।
स एवावैदिकस्तु स्यात्प्राप्त सनिहितो यदा॥

तदिह रजाशयाहराशयावाक्ययो शेष स्वपदस्ववाक्ययोरलभ्यमानत्वाद्वाक्यान्तरे नूनमित्युपसह्रियते। स च यादृगाकाङ्क्षितस्तादृगेवैकान तर पुरस्तादुपलभ्यतेऽन्यस्य व्यवहित। यद्यपि चासौ प्रथममन्त्रे कृतार्थत्वान्न तावाकाङ्क्षति तौ तु तेन विनाऽनुपपद्यमानावात्मसमीपेऽन्यस्यानाम्नानादेव पुरुष प्रयुञ्जाते। सर्वसमीपे सकृत्पठितुमशक्य प्रमाणान्तरलभ्यत्वाच्च पुन पुनरश्रावितोऽयमावयोरप्यर्थेनाऽऽम्नात शेषो नैकस्यैव सनिधिविशेषनिमित्तभ्रान्त्या कल्पयितव्य इति। यद्यपि च पुरस्तादाम्नायते, तथाऽपि यत्प्रदेशवर्तित्वेन ताभ्या काङ्क्षितस्तत्रैव विनियुज्यते। कुत।

प्रतीतिमात्रलाभार्थं तत्प्रदेशे स पठ्यते।
योग्यत्वात्सनिवेशस्तु पूर्वमन्त्रवदिष्यते॥

स हि सकृदाम्नायमान सर्वेषामीप्सिते प्रदेशे न शक्य आम्नातुमित्येकस्य यथा क्रममाम्नात इतरयोश्च यावता बुद्धिविषयतामापद्यते, ततश्च गृहीत सन् स्वयमपि प्रदेशान्तरे स्थातुमसमर्थस्ताभ्यामपि चान्यवृत्तित्वेनानाकाङ्क्षित पूर्वत्र च परस्ताद्भावितया दृष्टसामर्थ्य परस्तादेव निवेक्ष्यते। भाष्यकारेण तु प्रथमद्वितीययोर्मध्ये पाठादगृह्यमाणविशेष शेष उभयोरप्यानन्तर्येणैव सम्बन्धीत्युक्त्वा तृतीयस्य व्यवधानादसंबन्धमाशङ्क्याथित्वाविशेषादुभयो समुदायापादनेनाव्यवधाने साधिते समुदायशेषत्व मेव तर्हि प्राप्नोतीत्याशङ्क्य तस्याप्रयोगार्हत्वात्प्रयोगार्हसमुदायिसबन्ध, तत्रापि तयो प्राधान्यादन्यथा च नैराकाङ्क्ष्यानुपपत्ते प्रत्येक सकलशेषसबन्धप्रसिद्धिरित्यभिधाय पुनर्व्याख्यानान्तरमारब्धम्— अपि च साकाङ्क्षस्य संनिधाविति। तत्र वैश्विष्टतत्

complete the composite whole formed by the 2 Ts & not each of them
ately Then diffe.

श्रूयमाणो वाक्यशेषो भवति । कियांस्तु कालः संनिधिरिति । उच्यते । यावति शक्नोत्युभावप्यपेक्षितुम् । कश्चासौ । आनन्तर्यं संबन्धिपदव्यवायो वा तावति हि शक्नोत्युभावप्यपेक्षितुम् । संबन्धिपदव्यवाये हि व्याख्यानविरहः पूर्वैराश्रितम् । अपरे तु वदन्ति पूर्वत्रापरितोषादुत्तरं कृतम् । कारणम् ।

न तावत्समुदायत्वं केनचिन्निर्मितं तयोः ।
पुनः प्रत्येकनिर्माणे न च हेतुः प्रतीयते ॥

समुदायत्वं ह्येककार्यत्वेनैकशब्दोपादानेन वा भवेत्, न चात्रैकमप्यस्ति । नन्विदमेककार्यत्वमेवावाक्यशेषग्रहणं नाम । अहो नु खलु मन्त्राणां क्वैवं विज्ञातम् । अपेक्षा हि तत्रोभयोः स्यात् । कथं तत्कार्यमित्युच्यते । शेषश्चासौ तयोर्न तद्वशेन समुदायत्वापत्तिर्युक्ता । पश्चादपि वा समुदायिभ्यामेव तस्य संगतिरिष्टेत्यादित एव समुदायत्वं न लभ्यते । यदि च समुदायत्वमापन्नौ ततः पुनः प्रत्येकं संबन्ध इति राजैकपुत्रकादिदोऽऽपद्यते । पुरस्तादेव च प्रयोगः प्राप्नोति । तथाभूतेन समुदायानन्तर्यात् । न चाऽगृह्यमाणविशेषत्वं, देशाभेदनिमित्ततन्त्रभेदात् । प्रथमस्य ह्यसौ यथाकाङ्क्षिते देशे स्थितो नोत्तरयोः । तस्मादिदमेव व्याख्यानम् ।

आकाङ्क्षा संनिधानं च योग्यता चेति च त्रयम् ।
संबन्धकारणत्वेन क्लृप्तं नानन्तरश्रुतिः ॥

यो हि बहूनां संबन्धित्वेन सकृदाम्नायते तस्यावश्यंभाव्येकेनाऽऽनन्तर्यमिति न तदेव तदा संबन्धकारणत्वेनाऽऽश्रीयते । तत्राप्यस्मादेव कारणत्रयात्संबन्धसिद्धेः । संनिधिविशेषात्तु तदाश्रयप्रतिपत्त्या भवति भ्रान्तिः । सा तु साकाङ्क्षयोग्यसंनिहितसंबन्ध्यन्तरदर्शनान्निवर्तते । यथा धात्वर्थादिषु विधिबुद्धिर्गुणाद्युपादानसामर्थ्यात् । एवं हि तत्र ज्ञायते । सर्वार्थोऽयमाम्नायमानः सर्वेषां कारणानन्तर्यासंभवाद्वाक्यैकत्वाच्च कस्यचिदेकस्य समीपे पठ्यते । तस्मादकारणमानन्तर्यमिति । संनिधिरिति—बुद्धौ विपरिवृत्तिः । सा चाऽऽनन्तर्ये संबद्धपदव्यवाये च भवति । संबद्धपदव्यवधिरप्यानन्तर्यप्रकार एव । कथम् ।

अनन्तरेण संबद्धः स्यात्परस्याप्यनन्तरः ।
ततः पुनस्तदारूढः परानन्तर्यमश्नुते ॥

' या ते अग्ने रजाशया ' इत्यनेनापेक्षितः शेषः परस्मादलभ्यमानः पुरस्तात्पराङ्-

---

१ मन्त्राणां भवदुक्तप्रकारेणैकार्थ्यं नास्त्येकशेषग्रहणमित्यर्थः । २ एकपुत्रस्यात्यन्तं प्रियत्वेन पितृस्नानानिवारणदानपुत्रत्वेन चान्यैरप्यनिवारणादसन्तानाप्त्या यथा लोपमपीति दृष्टान्त भावाशयः ।

संबन्धादेव पूर्वसंस्कारो नापैति । यत्राप्यपरेण साकाङ्क्षेण व्यवायस्तत्राप्यस्ति संबन्धः । द्वयोरपि हि कार्यं वक्तव्यमिति परः पूर्वमपेक्षते, अनपेक्षमाणेऽन्यतरः प्रमादपाठः स्यात् । शक्यते चासावपेक्षितुम् । तस्माद्यथैवायमेकस्य संनिधावेवमपरस्य । द्वयोरप्यसंबद्धैः पदैरव्यवहितत्वाद्द्वयोरप्याकाङ्क्षावत्त्वात् । एतावच्च वाक्यशेषसंबन्धे कारणं नाऽऽनन्तर्यम् । अव्यवधाने विच्छेदेऽपि भवति संबन्धः । तस्मादनुषङ्गः ।

अथेह कथं भवितव्यं, यत्र निराकाङ्क्षाणां संनिधौ परिपूरणसमर्थः श्रूयते । यथा, चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु,

---

स्याऽऽलोच्यमानो दृश्यते तनूर्वर्षिष्ठेति । यदा च तत्राऽऽरूढस्तदा हराशयेत्यस्यानन्तरीभूत पुनरेवमेव तृतीयेनापि सह संबध्यते । ततः परं त्वन्यस्यानाम्नानात्तावत्येवोपक्षीयते । सर्वत्रैवमपेक्षा पुरस्तात्परस्ताच्च प्रसृतैकत्राऽऽरूढेतरेषामनन्तरीभवन्ती तावदपेक्ष्यमाणा निगृह्णाति यावत्किंचिन्न योग्यमस्त्ययोग्यं चोपलब्धम् । ततः सर्वमालोचितमुपसंहृत्य निवर्तते । यद्यपि च क्रमेणोच्चारणात्संनिकर्षविप्रकर्षौ प्रतीयेते तथाऽपि नित्यत्वाद्वेदस्यानन्तरे दूरस्थे च युगपदपेक्षा संबन्धश्चेति पश्चादवगमान्न प्रामाण्ये कश्चिद्विशेषः । एवं वाक्ये पदानां प्रकरणे च वाक्यानां संबन्धो यावत्साकाङ्क्षेण तत्संबन्धार्हेण परस्याप्यनन्तरीकर्तुं समर्थेन व्यवधानम् । अव्यवधाने विच्छेदेऽपीति । विरोधिना पदेनाव्यवधाने विप्रकृष्टत्वे भवति संबन्ध इत्यर्थः । तस्मादनुषङ्गः समाप्तिः । अनुषज्यत इत्यनुषङ्गः । स एव समाप्यते तेनेति समाप्तिः ।

यत्र तावच्छेषिणः साकाङ्क्षास्तत्रैवमथ यत्र नैराकाङ्क्ष्ये सर्वेषु शेषिष्वेकः शेषः

---

१ यत्रापीत्यादि संनिधावेवमपरस्य' इत्यन्तभाष्यस्याय पदशोऽर्थः । यत्रापि—हराशये इत्यस्मिन्, अपरेण—रजाशयेत्यनेन शेषाकाङ्क्षेण व्यवायस्तत्रापि शेषान्वयोऽस्ति । यतो द्वयोरपि शेषिणोरपेक्षितशेषान्वयरूपं कार्यं वक्तव्यमित्यतदर्थं पूर्व—शेषिणं, पर—शेषोऽपेक्षते । तच्चोत्तरापक्षायामपि तुल्यं कारणमिति यथैवोभयाकाङ्क्षया पूर्वस्य शेषिणः शेषान्वयस्तथैवोत्तरस्यापि । शेष्यन्तरमनपेक्ष्यमाणे तु शेषेऽन्यतरः शेषी शेषालाभेन शेषसाकाङ्क्षः प्रमादपाठः स्यात् । शक्यते पूर्ववदुत्तरोऽपि शेषी शेषेणापेक्षितुम् । तस्माद्यथैवायं—शेषो रजाशयेत्यस्य पश्चात्पठितोऽपि योग्यत्वादिभिर्यथाकाङ्क्षिते देशे संनिधी भवति, एवमपरस्य—हराशयेत्यस्यापीति ।

द्वयोरप्यसंबद्धैरिति भाष्यं पूर्वभाष्यगतायमिव भासमानं, व्यवहितस्याप्यनुषङ्गाभ्युपगमे सर्वत्र तत्संभवादध्याहारः क्वचित्स्यादित्याशङ्कानिरासार्थत्वेनासंबद्धपदाव्यवाय एवाऽऽकाङ्क्षावत्त्व एव चानुषङ्गो भवति नान्यथेति परिभाष्यार्थं द्रष्टव्यम् ।

देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति। अत्र हि पुनात्वन्तानि परिपूर्णानि न किंचिदाकाङ्क्षन्ति। नन्वच्छिद्रेणेत्येतदाकाङ्क्षति। सत्यमाकाङ्क्षति। आकाङ्क्षदप्येतदेवमाकाङ्क्षेत्। एकेनैव वाक्यैराकाङ्क्षं संपद्यत इति। एतेन हि निराकाङ्क्षीकृतो नेतरानाकाङ्क्षिष्यति। अनर्थकत्वादाकाङ्क्षति। एकेन च सम्बद्धो नानर्थको भवति। तस्मान्नेतरानाकाङ्क्षतीति। इतरथापि परिपूर्णत्वान्न तमाकाङ्क्षन्ति। नन्वेतस्य वाक्यशेषस्यैकमप्याकाङ्क्षतो न गम्यते विशेषः केन निराकाङ्क्षीक्रियते, केन वा नेति, तेनानवगम्यमाने विशेषे सर्वैः सह संभन्त्स्यते। आह। नैतदेवम्। येनास्य प्रत्यक्षमानन्तर्यमुपलभामहे तेन सह संभन्त्स्यत इति गम्यते विशेषः। तस्मात् येनानन्तरेण सह संभन्त्स्यत इति नास्ति सर्वत्रानुषङ्ग इति। आह। नैतदेवम्। पुनातुशब्देनास्य प्रत्यक्षमानन्तर्यमुपलभामहे। पुनातुशब्दस्यापि चित्पतिस्त्वेत्येवमादिभिः। एकश्चासौ पुनातुशब्दः पुनः पुनरुच्चरितः। तेनावगम्यते यत्र पुनातुशब्दः प्रयुक्तस्तत्र तेनैकवाक्यत्वादच्छिद्रेणेत्ययमपि प्रयोक्तव्य। तथा च सति, चित्पतिस्त्वेत्येवमादयो विना पुनातुशब्देन साकाङ्क्षाः। ते च पुनातुशब्दमाकाङ्क्षन्ति,

---

साकाङ्क्षं पठ्यते। यथा 'चित्पतिस्त्वा पुनातु' इत्येतेषामन्ते "अच्छिद्रेण" इत्यादि सत्र कथमिति। किं प्राप्तम्।

अनन्तरेण सम्बन्ध शेषस्येष्टा कृतार्थता।
शेषिणश्च निराकाङ्क्षा निर्निमित्ताऽनुषङ्गधीः॥

उच्यते।

अनन्तरस्य वाक्यस्य यदि शेषो भवेदयम्।
तत एव भवेदेष व्याख्यातार्थेन सर्वभाक्॥

आनन्तर्यविशेषेण ह्यय पुनात्वित्यनेन सम्बध्यते। न पुनः सवितृः पवित्रेणेत्यादिषु, नरैक यथैवाम्याप्येकत्वम्। न च कारणमेतावता येनो भवति। येन चि पदयाद्विनयनामहायानन्यास्य विज्ञायते। न चाच्छिद्रेणेत्येवमर्था क्रिया, येन सङ्गमनेन सम्बन्धेत।

तस्मादस्य क्रियार्थत्वाद्यावत्या प्रयुज्यते।
तावदेव प्रयोगित्वं शास्त्राणां वचने स्थिरम्॥

प्रयोगवचन इत्यस्यैकेऽप्याख्या यदत्रैवविशिष्टाभ्याख्याय करणमन्त्रः। प्रयोगो पाठविशिष्टे तेन योजयितव्याः। यथैकस्यापि ज्योतिष्टोमस्य मैत्रावरुणमहाभाग्यादिविशिष्टस्य प्रयोगः

१ तै० सं० (१—२—१)।

